साo-भाo। हे अग्ने! 'विश्ववेदसं' विश्वं समस्तं वेदो धनं यस्यासौ विश्ववेदाः तम्, सर्वविदं वा। 'हव्यवाहं' देवेभ्यो हविषां वोढारम्। 'अमर्त्यम्' अमरणधर्माणम्। 'यजिष्ठम्' अतिशयेन यष्टारम्। 'दूतम्' देवानाम्। 'वः' त्वाम्। 'गिरा' स्तुतिरूपया वाचा। 'ऋञ्जसे' यजमानोऽहं प्रसाधयामि वर्धयामीत्यर्थः। 'ऋञ्जतिः प्रसाधनकर्मा' इति यास्कः॥ २॥

२। ऋ० सं० ४ मं० ८ सू० १ ऋ०।

दूतम्—Agni is called the envoy or messenger of the gods, as he accepts the oblations of the sacrificers on their behalf and conveys or transmits the same to them, so he is called हव्यवाड्—the oblation-bearer. For further notes *vide*. SV. 1.3.

वः—त्वाम्, rfs to Agni. For gram. notes *vide* SV. 1.5. where occurs the phrase 'प्रेष्ठं वोऽतिथिम्'। *Grfth* has meant by it—'your' ( युष्माकम्—*gen. pl.* ) and has taken it with दूतम् to mean—'your messenger'—which is simply absurd. It is not also supported by the text of the corres. ṚV. mantra (iv. 8. 1) where वः can have no other sense except त्वाम् ( अग्निम् ) in the accus. sg.

विश्ववेदसम्—*Vide* notes on SV. 1.3.

हव्यवाहम्—हव्यं वहति इति हव्यशब्दात् वह्धातोरण् 'कर्म्मण्यण्' इति। For explanatory notes see note on 'दूतम्' above.

अमर्त्यम्—'Immortal'—*Grfth.* न मर्त्यः तम्। As to मर्त्यः—*vide* notes on SV. 1.6.

यजिष्ठम्—यजति इति यजः ( पचाद्यच् )—यष्टा। spv. dg. इष्ठन्—Pāṇ. v. 3. 55. the final अ of यज is elided with the Tad. aff. following—by 'यस्येति च' Pāṇ. vi. 4. 148. mg.—the best performer of sacrifice or the chief sacrificer,—Agni being often called होता or the prime priest.—'Best at sacrifice'—*Grfth.*

ऋञ्जसे—ऋञ्जे—प्रसाधयामि वर्धयामीत्यर्थः—I honour or glorify thee. It is the लट् (pres.) form. **2.** sg. for I. sg.—the subject being अहं यजमानः—Sāy. Such changes of persons in verbs are often found in the Vedas by the dictum 'तिङां तिङो भवन्ति' *vide* gram. notes on स्तुषे SV. 1.5. The rt. ऋञ्जि signifies—प्रसाधन। 'ऋञ्जतिः प्रसाधनकर्मा' *to decorate*—Nir. 6. 21. cf. 'आ व ऋञ्जस ऊर्जां व्युष्टिषु'—thou adornest thy strength at day-breaks—ṚV. X. 76. 1. In ṚV. i. 143.5. वनानि ऋञ्जते Sāy. explains—वनानि वृक्षादीन् न्यृञ्जते—नितरां प्रसाधयति दहतीत्यर्थः (i.e. burns). Again in the 7th verse of the same hymn (i.143.7). 'अग्निं मितं न समिधान ऋञ्जते'—Sāyaṇa simply has ऋञ्जते प्रसाधयति। Perhaps he means,—adorns or makes bright; *Peterson* suggests—rt. ऋञ् means (1) when *Instrans.*—to shine, to beam, to be beautified; (2) when *trans.*—to make bright, to decorate, to honour, to show respect, to pay homage to; here, in the above verse, we are concerned with this latter sense. 'I seek'—*Grfth.*

भार्गवः प्रयोगो बार्हस्पत्योऽग्निर्वा ऋषिः । आभं औष्टीयं च साम, आभः ह्नुष्टर्षिः(क) । गायत्रीच्छन्दः । अग्निर्देवता । विश्वजिति बहिष्पवमानस्य नवस्तोत्रे विनियोगः(ख) ।

१ २ ३ २ ३ २ ३ १ २ ३ १ २
उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।
३ १र २र
वायोरनीके अस्थिरन् ॥ ३ ॥ १३ ॥

उप । त्वा । जामयः । गिरः । देदिशतीः । हविःऽकृतः । वायोः । अनीके । अस्थिरन् ॥ ३ ॥

भाष्यसारः । हे अग्ने, हविष्कृतः—हविःप्रदातुर्यजमानस्य, गिरः—स्तुतयः, जामयः स्वसारः इव, देदिशतीः—पुनःपुनर्दिशन्त्यः तव गुणान्—इति शेषः, त्वा—त्वाम्, उप—उपतिष्ठन्ते—त्वत्सकाशं गच्छन्ति । ताः गिरः वायोः अनीके—समीपे त्वां समेधयन्त्यः अस्थिरन्—अतिष्ठन् तिष्ठन्तीत्यर्थः ॥ ३ ॥

O Agni, the sacrificer's laudatory hymns, like sisters, pointing out thy glories—approach thee and remain close to the wind (kindling thee)—3.

**सा०-भा० ।** हे अग्ने ! 'हविष्कृतः' यजमानार्थम् । 'गिरः' स्तुतयः । 'जामयः' स्वसार इव । 'देदिशतीः' तव गुणान् दिशन्त्यः । 'त्वा' त्वाम् उपतिष्ठन्ते । 'वायोः' 'अनीके' समीपे, त्वां समेधयन्त्यः, 'अस्थिरन्' अतिष्ठंश्च ॥ ३ ॥

३ । ऋ० स० ८ म० १०२ सू० १३ ऋ० । उ० आर्चि०—७, २, १४, १ ।

जामयः—dr. rt. या ( प्रापणे ) इति धातोरुणादि मि प्र०—uṇ. iv. 43. the initial 'या' is changed to 'जा' । 'जामिरन्येऽस्यां जनयन्त्यपत्यम् । जमतेर्वा स्याद् गतिकर्म्मणः'—*Jāmiḥ* (sister) is so called because others beget child in her, or the word is dervd. fr. rt. *jam* to go : she frequently goes to the husband's house.—Nir. 3. 6 ; cf. न जामये तान्वो रिक्थमारैक्—the son leaves no wealth for his sister.—ṚV. iii, 31. 2.

देदिशती;—dr. rt. दिश् to *point*. 6. u. यङ्लुक् pr. pt.—fem. aff. ङीप् । for mg. *see* Sāy.'s explanation. 'Turning to their aim in thee'—*Grfth.*

हविष्कृतः—हविः—rt. कृ—क्विप् = हविष्कृत्—one who offers oblation,—the sacrificer.

वायोरनीके—near the wind.—Sāy. 'Before the wind or in front of the wind which fans the sacrificial fire.'—*Grfth.*

अनीकम्—dr. from rt. अन् ( प्राणने, *to breathe* ) with aff. ईकन् uṇ. 4. 17.

(क) 'आभा औष्टीये द्वे'—आ० ब्रा० ।

(ख) 'उप त्वा जामयो गिर इत्युपवती प्रतिपद् भवति सोमस्य रूपम्'—ता० म० ब्रा १६.५.१ ।

mouth, face—*see* Sāy. on Ṛ V. i. 113. 19 ; v. 2.1 ; x. 7.3, अनीकम् also means multitude or assemblage (of 'splendour') cf. चित्रं देवानाम्···अनीकम् etc. Ṛ V. i. 115. 1.

अस्थिरन्—rt. स्था Aor. 3 pl. *vide* gram. rules Pāṇ. ii. 4.80 (मन्त्रे लुक्); Pāṇ. i. 2.17 (स्था=स्थि); Pāṇ. iii. 4.105 (झस्य रन्).

उप (अ०, Indec.)—Sāy. has explained it separately or independently, in the sense उपतिष्ठन्ते—reach thee. Vedic prefixes, sometimes, supply the verbs suited to the context : उपसर्गश्रुतेर्योग्यक्रियाऽध्याहारः—Sāy. on SV. 1. 283. West. scholars, however, have connected it with the verb अस्थिरन् to mean—'have come to thee'.

---

**वैश्वामित्रो मधुच्छन्दा ऋषिः। 'वैश्वामित्रं' साम, विश्वामित्रर्षिः(क)। गायत्रीच्छन्दः। अग्निर्देवता। प्रातःसायंसवने विनियोगः।**

१ २ ३ १ २ ३ २ ३ २ ३ २

**उप त्वाग्ने दिवे दिवे दोषावस्तर्धिया वयम्।**

२ ३ १ २ ३ १ २

**नमो भरन्त एमसि ॥ ४ ॥ १४ ॥**

उप। त्वा। अग्ने। दिवेऽदिवे। दोषाऽवस्तः। धिया। वयम्। नमः। भरंतः। आ। इमसि ॥ ४ ॥

भाष्यसारः। **हे अग्ने, वयं दिवेऽदिवे प्रतिदिनं, दोषावस्तः रात्रौ अहनि च, धिया—प्रज्ञया ध्यानेन कर्मणा यागाद्यनुष्ठानेन वा नमः नमस्कारं भरन्तः सम्पादयन्तः कुर्वन्त इत्यर्थः, त्वा त्वाम्, उप समीपे, आ-इमसि आगच्छामः—त्वां प्राप्तुम इति भावः ॥ ४ ॥**

To thee, O Agni, day after day,—by night and day, we come with meditation (i, e, devotion)—making thee obeisance—4.

**सा०-भा०।** हे 'अग्ने' 'वयम्' अनुष्ठातारः 'दिवे दिवे' प्रतिदिनं 'दोषावस्तः' रात्रावहनि च 'धिया' बुद्ध्या 'नमो भरन्तः' नमस्कारं सम्पादयन्तः 'उप' समीपे 'त्वा एमसि' त्वामागच्छामः। उपशब्दस्य निपात-स्वरः। 'त्वामौ द्वितीयायाः' [पा० ८,१,२३] इति युष्मच्छब्दस्यानुदात्त-'स्त्वा'देशः। दोषा-शब्दो रात्रिवाची। वस्तः इत्यहर्वाची। द्वन्द्वसमासे कार्तकौजपादित्वादाद्युदात्तः। सावेकाच इति धियो विभक्तिरुदात्ता। नमः इति निपातः, यद्वा नब्विषयस्येत्याद्युदात्तः। भरन्त इत्यत्र शपः पित्त्वात् शतुर्लसार्वधातुकत्वाच्च अनुदात्तत्वे सति धातुस्वरः शिष्यते। एमसीति 'इदन्तो मसि' इत्यनेन इकारः। 'तिङः' इति निघातः ॥ ४ ॥

(क) 'वैश्वामित्रं च'—आ० ब्रा०।

४। ऋ० स० १म० १सू० ७ऋ०।

उप (अ०, Indec.)—समीपे near, to be taken with the verb एमसि. 'The accus. त्वा is most naturally to be taken as governed by the prep. उप, though it might otherwise be quite well dependent on the verb एमसि'—Macdnll: Vedic Reader.

दिवे दिवे—प्रतिदिनम्, day by day. दिवाशब्दस्य वीप्सायां द्वित्वम्। 'सुपां सुलुक् (पा० ७,१,३९) इति शेभावः। यद्वा दिव्-शब्दस्य सप्तम्याः शेभावः। 'दिवे दिवे इत्यहर्नाम'—a synonym of day, Ngh. 1. 9.

दोषावस्तः—दोषा (अ०, Indec.)—रात्रिः, 'दोषा रात्रिनाम'—Ngh. 1. 7; वस्तः (अ०, Indec.) —अहः, 'वस्तः अहर्नाम' Ngh. 1. 9. Sāy. explains this compd. as *'by night and day.'* This compd. occurs only here in the whole vedic literature. 'Illuminer of night or of gloom'—West. scholars—Grfth. Macdnll. etc. They have probably derived it from rt. वस् (to *shine*)—from which विवस्वत् is derived —with affix तृच्, and the stem, so formed, is दोषावस्तृ *(shining in night)*,—in voc. case the above form is obtained. Vivaraṇam—an authentic commentary on the SV. (quoted in Pt. S. Sāmaśramin's edition.—*Bib. Ind.*)—explains— "दोषेति रात्रेर्नाम ( Ngh. 1. 7. ) वस्ता आच्छादयिता—रात्रौ यः स्वेन ज्योतिषा तमांस्याच्छादयति—स दोषावस्ता। तस्य सम्बोधनम्—हे दोषावस्तः" rfs to Agni, who covers or prevails over the darkness of the night, by his own lustre.

धिया—dr. rt. ध्यै to *meditate* 1. p. with aff. क्विप्, सम्प्रसारणम् ( य changed to ई ) —धी, 'धीरिति प्रज्ञानाम' Ngh. 3. 9.

नमः—bow. dr. rt. नम् (प्रह्वत्वे, *to bow*) with aff. असुन्—'सर्व्वधातुभ्योऽसुन्' uṇ. iv. 189.

भरन्तः—fr. rt. हृ pr.pt. हृ changed to भ. *vide* gram. notes on आभर SV. 1. 10. West. scholars derive it from भृ *(to bear)*.

एमसि—आ-इमसि—rt. इण् (*to go*) pres. 1 pl. मस् is changed to मसि by 'इदन्तो मसि' Pāṇ. vii. 1. 46. 'The ending मसि is five times as common as मस् in the Vedas'. —Macdnll.

---

अजीगर्त्तवंश्यः शुनःशेप ऋषिः। जराबोधीयं साम अग्निर्ऋषिः(क)। गायत्रीच्छन्दः। अग्निर्देवता। अन्नादिरक्षणाय तल्लाभाय वाग्निस्तुतौ विनियोगः(ख)।

१ २ ३ १ २ ३ १ २ ३ १ २
जराबोध तद्विविड्ढि विशे विशे यज्ञियाय।
१ २ ३ १ २ ३ २
स्तोमं रुद्राय दृशीकम्॥ ५ ॥ १५ ॥

जराऽबोध। तत्। विविड्ढि। विशेऽविशे। यज्ञियाय। स्तोमं। रुद्राय। दृशीकम् ॥ ५ ॥

---

(क) 'अग्नेर्जराबोधीयम्—आ० ब्रा०। (ख) 'जराबोधीयं भवत्यन्नाद्यस्यावरुद्ध्यै'—ता० म० ब्रा० १४, ५, २७।

भाष्यसारः—हे जराबोध—जरया स्तुत्या बोध्यमान अग्ने, विशे विशे—प्रजानुग्रहार्थं यजमानार्थमित्यर्थः, यज्ञियाय—यज्ञानुष्ठानसिद्ध्यर्थम्, तत् देवयजनम्,—विविड्ढि—प्रविश, यजमानोऽपि रुद्राय—रुद्रस्वरूपाय अग्नये तुभ्यम्, दृशीकं—दर्शनीयम् उत्कृष्टम्, स्तोमं स्तोत्रं करोतीति शेषः ॥ ५ ॥

O thou (Agni), to be inspired with praise, enter into the sacrifice for the accomplishment of the ceremony in favour of all the people (sacrificers). The sacrificer also offers excellent hymn to thee of terrible form.—5.

**सा०-भा०** । हे 'जराबोध'! जरया स्तुत्या बोध्यमानाऽग्ने! 'विशे विशे' तत्तद्यजमानरूपप्रजानुग्रहार्थम्। 'यज्ञियाय' यज्ञसम्बन्ध्यनुष्ठानसिद्ध्यर्थम्। 'तद्' देव-यजनम्। 'विविड्ढि' प्रविश। यजमानोऽपि 'रुद्राय' क्रूरायाऽग्नये तुभ्यम्। दृशीकं दर्शनीयं समीचीनम्, स्तोमं स्तोत्रं करोतीति शेषः। अत्र यास्क एवं व्याख्यातवान्—"जरा स्तुतिः, जरतेः स्तुतिकर्मणः। तां बोध, तया बोधयितरिति वा। तद् विविड्ढि तत् कुरु। मनुष्यस्य—मनुष्यस्य यजनाय। स्तोमं रुद्राय दर्शनीयम्"—नि० १०।८ इति। जराबोध! जॄष् वयोहानौ, अत्र तु स्तुत्यर्थः। 'षिद्भिदादिभ्योऽङ्' इत्यङ्प्रत्ययः, अतष्टाप्। जरया स्तुत्या बोधो यस्यासौ जराबोधः। यद्वा—जरया बोध्यते इति जराबोधः, कर्मणि घञ्, आमन्त्रिताद्युदात्तत्वम्। विविड्ढि—विश् प्रवेशने, लोटो हिः। 'बहुलं छन्दसि' इति शपः श्लुः, अभ्यास-हलादिशेषौ, 'हुझल्भ्यो हेर्धिः' इति हेर्धिरादेशः। षत्वष्टुत्वे। यद्वा विष्लृ व्याप्तावित्यस्य लोणमध्यमैकवचनेऽभ्यासस्य गुणाभावः। विशे विशे, सावेकाच इति चतुर्थ्या उदात्तत्वम्, 'अनुदात्तञ्च' इत्याम्रेडितानुदात्तत्वम्। यज्ञियाय 'यज्ञर्त्विग्भ्यां घखञौ' [पा० ५.१.७१] इति घः। दृशीकम्—'अनिदृशीभ्याञ्चेति कीकन्-प्रत्ययः। नित्त्वादाद्युदात्तः ॥ ५ ॥

५। ऋ० सं० १ म० २७ सू० १० ऋ०। उ० आर्चि० ८,२,३,१।

जराबोध—*voc.*—(1) 'जरया' स्तुत्या 'बोधः' यस्य, or (2) जरया बोध्यते इति ; for mg. *see* our translation. 'Thou who knowest lauds'—*Grfth.* Yaska's explanation, as quoted in Sāy.'s com. above,—is—'*Jarā* means praise, it is dervd. fr. rt. *Jṛ.* to praise. The compd. means—he who receives praise or awakens another by praise ; तद्विविड्ढि etc.—do so, as every man may be able to sacrifice. Nir. 10. 8.

विविड्ढि—(1) rt. विश् (प्रवेशने, *to enter* 1.p.) Imp. 2. sg. शपः श्लुः i.e. cl.1. is conjugated as cl. 3—by 'बहुलं छन्दसि' Pāṇ. ii. 4. 76. cf. पूर्णा विविष्ट्यासिचम्। The verb is redoubled, हि is changed to धि Pāṇ. vi. 4. 101. श् is changed to ष् and that again to ड्. (2) विष्लृ (व्याप्तौ, *to pervade*). Imp. 2. sg. for other gram.

notes *vide* Sāy.'s com. above.—'Enter into the sacrificial place'—Sāy. 'तत् कुरु'—*do so*—*Yāska* ; 'help this work'—*Grfth.*

विशे विशे—for the good of men i.e. the sacrificers—Sāy. 'In every house'—*Grfth.* वीप्सायां द्विरुक्तिः—'नित्यवीप्सयोः' Pāṇ. viii. 1. 4.

विश्—मनुष्यनाम—Nir. 3. 8. cf. 'तस्मै विशः स्वयमेव नमन्ते'—ṚV. iv. 50. 8. In ṚV. viii 63. 7 'यत् पाञ्चजन्यया विशा'—Yāska explains विशा as 'people'. Again, as to विश् in the sense of *abode*, *house*—cf. ṚV. vii. 61. 2 ; x. 15. 2 ; x. 135. 2.

यज्ञियाय—यज्ञ with aff. घ ( इय )—by 'यज्ञर्त्विग्भ्यां घखञौ' Pāṇ. v. 1. 71. *Grifth* construes this word with विशे विशे and means 'adorable in every house' ; for Sāy.'s exp. see above.

• स्तोमम्—rt. स्तु ( *to praise* )—aff. मन्. uṇ. i. 140.

रुद्राय—क्रूराय, Agni is here called रुद्र for his terrible form.—Sāy. Agni is sometimes identified with Rudra cf. 'यो वै रुद्रः सोऽग्निः' Ś.Br. 5. 2. 3. 13. Fr. rt. रुद् (*to weep* 2.p.) caus. aff. रक् uṇ. ii. 22. 'रोदयति सर्वम् अन्तकाले'—makes everybody weep at the time of death.—Sāy. on ṚV. i.85.1. 'Rudra—the roaring or more probably the bright red god,—is in this place a name of Agni'—*Grifth.* For the etymology of the word *Rudra*, *vide* Macdnll's Ved. Myth.—P. 77.

दृशीकम्—rt. दृश् ( *to see* 1. p. ) aff. कीकन् uṇ. iv. 25.—समीचीनम्, excellent, lovely, (lit.) beautiful to look at.

---

**काण्वो मेधातिथिर्ऋषिः । 'मारुतं' साम, अग्निश्चर्षिः(क) । गायत्रीच्छन्दः । अग्निर्देवता । उक्थ-स्तुतौ विनियोगः ।**

२ ३ १ २र ३ १ २ ३ २ ३ १ २

**प्रति त्यं चारुमध्वरं गोपीथाय प्रहूयसे ।**

३ १ २ ३ १ २

**मरुद्भिरग्न आ गहि ॥ ६ ॥ १६ ॥**

प्रति । त्यम् । चारुम् । अध्वरम् । गोऽपीथाय । प्र । हूयसे । मरुत्ऽभिः । अग्ने । आ । गहि ॥ ६ ॥

भाष्यसारः । **हे अग्ने, त्यं—तं चारुं यथाविधि अनुष्ठीयमानं पूर्णाङ्गम् अध्वरं यज्ञं प्रति, अस्मिन् यज्ञे इत्यर्थः । गोपीथाय—गोक्षीरादिमिश्रितसोमपानाय, प्रहूयसे—प्रकर्षेण त्वं हूयसे । अतस्त्वमस्मिन् अध्वरे मरुद्भिः—तन्नामकैर्देवैः सह आ गहि आगच्छ ॥ ६ ॥**

---

( क ) 'मारुतं च' आ० ब्रा० ।

To this nicely (duly) performed sacrifice, thou art invoked, for the drinking of Soma (juice); come, Agni, with the Maruts.—6.

**सा०-भा० ।** त्यच्छब्दः सर्वनामस्तच्छब्दपर्य्यायः। हे 'अग्ने!' यो यज्ञः चारुः अङ्गवैकल्यरहितः। 'त्यं' तथाविधम्, 'चारुम् अध्वरं प्रति'लक्ष्य। 'गोपीथाय' सोमपानाय। 'प्रहूयसे' प्रकर्षेण त्वं हूयसे। तस्मादस्मिन्नध्वरे त्वं 'मरुद्भि'र्देवविशेषैः सह, 'आ गहि' आगच्छ। सेयमृग् यास्केनैवं व्याख्याता—'तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे, सोऽग्निर्मरुद्भिः सहागच्छ' [ नि० १०, ३, १६ ] इति ॥ ६ ॥

६ । ऋ० स० १ म० १६ सू० १ ऋ० ।

Sāy.'s addl. notes in his com. on the Ṛ̣V. verse—'त्यं 'त्यदादीनामः' ( Pāṇ. vii. 2. 102 ).—चारुम्—'दृसनिजनिचरीत्यादिना ञुण्' ( चर्—ञुण् ) uṇ. i. 3. अत उपधाया वृद्धिः। गोपीथाय—'निशीथगोपीथावगाथा' इति (uṇ. 2. 9) थक्-प्रत्ययान्तो निपातितः ( गो-पा-थक् )'।

त्यम्—orig. सर्व्वनाम stem is त्यत्—synonym of तत्।

चारुम्—सर्व्वाङ्गसुन्दरं यथाविध्यनुष्ठीयमानत्वात्—exquisite in every part, being properly performed.--Sāy. 'Fair'—Grfth. 'Pleasant'—Peterson. 'Perfect'—Wils. 'चारु चरतेः'—*cāru* (charming) is dervd. fr. rt. *car* (to be diffused)—Nir. 8. 15. 'चारु रुचेर्विपरीतस्य' *cāru* is dervd. fr. rt. *ruc (to shine)* reversed. Nir. 11. 5. For gram. *see* ऋ० भा० quoted above in our notes.

अध्वरम्—यज्ञम्। 'अध्वरम्' इति यज्ञनाम, 'ध्वरतिः हिंसाकर्म्मा तत्प्रतिषेधः' rt. *dhvar* means to kill; *a-dhvara*, being its contradictory term, means—not killing. Nir. 1. 8. cf. 'अध्वरं हिंसारहितम्, न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति'—*Adhvaram* is free from injury, inasmuch as the demons or other evil spirits cannot injure the sacrifice well-guarded by Agni.—Sāy.'s com. on Ṛ̣V. i. 1. 4.

गोपीथाय—गो often means *milk* in the Vedas, here rfs to the soma-juice mixed with milk. For dr. see Sāy.'s addl. notes on the Ṛ̣V. stanza, quoted by us. Mg. is सोमपानाय—for drinking soma-juice offered as libation in the sacrifice—Sāy. and Yāska. 'to drink this milk'—*Peterson*. 'To drink the milky draught: milk being mingled with Soma-juice'—*Grfth. Prof. Maxmüller* translates—'for a draught of milk', with the following note—'the libation offered to Agni and the Maruts is said to consist of Soma, but Soma was commonly mixed with milk. The other meaning assigned to गोपीथ is 'protection'. But पीथ has clearly the sense of drinking in सोमपीथ Ṛ̣V. i.51.7. and may, therefore, be taken in the same sense in गोपीथ'—Vedic Hymns, Part 1. P. 54.

प्रहूयसे—प्र—ह्वे ( आह्वे, *to call* ) pres. pass. voice. 2. sg. 'Thou art invoked. summoned.'

मरुद्भिः—The gods of wind and storm—'the special friends and allies of Indra'. For the characteristic features of the Maruts, *Vide* Macdnll's Vedic Mythology—PP. 77-81. 'मरुतो मितराविणो वा, मितरोचिनो वा महद्द्रवन्तीति वा'—The

called, because they are of measured sound (rt. *ru*), or of measured brilliancy (rt. *ruc*), or they run very much (*mahat*—rt. *dru*)—L. S. Nir. 11. 13.

आ-गहि—dr. rt. गाङ् (गतौ, *to go* 2. Ā.) imp. 2. sg. व्यत्ययेन परस्मैपदं ह्रस्वश्च। आगच्छ, come.—Sāy. explains the formation thus—'गहि—गम्‌ऌ सृप्‌ॡ गतौ लोटः सेर्हिः, बहुलं छन्दसीति शपो लुक्। अनुदात्तोपदेशेत्यादिनाऽनुनासिकलोपः, Pāṇ. vi. 4. 37. तस्यासिद्धवदत्राभादित्यसिद्धत्वात् (Pāṇ. vi. 4. 22.) अतो हेरिति लुक् न भवति।'—com. on R̥V. i.19.3.

---

अजीगर्त्तवंश्यः शुनःशेप ऋषिः। त्रीणि सामानि,—प्रथमतृतीययोः 'भार्गवं' नाम भृगुश्चर्षिः। द्वितीयं 'वारवन्तीयम्' इन्द्रश्चर्षिः(क)। गायत्रीच्छन्दः। अग्निर्देवता। अग्निष्टोमयागे विनियोगः।

२ ३ २ ३ १ २ ३ १ २ ३ १ २र

**अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः।**

३ १ २ ३ १ २

**सम्राजं तमध्वराणाम्॥ ७॥ १७॥**

अश्वम्। न। त्वा। वारऽवन्तम्। वन्दध्यै। अग्निम्। नमःऽभिः। सम्ऽराजम्। तम्। अध्वराणाम्॥ ७॥

भाष्यसारः—अध्वराणां—यज्ञानाम्, सम्राजं स्वामिनं वारवन्तं—बालयुक्तं—स्कन्धकेशरपुच्छलोमादियुक्तम्, अश्वं न—अश्वमिव,—अश्वो यथा केशरपुच्छलोमादिभिः दंश-मशकादीन् परिहरति, हे अग्ने त्वमपि तथा ज्वालाभिरस्मच्छत्रून् परिहरसि—इत्यर्थः। एवम्भूतम् अग्निं त्वां नमोभिः स्तुतिभिः, अन्नैर्वा, वन्दध्यै—वन्दितुं प्रवृत्ताः वयमिति शेषः॥ ७॥

With obeisance—or with oblations, we proceed to adore thee, Agni, like a long-haired horse,—the paramount lord of sacrifices.—7.

**सा०-भा०।** 'अध्वराणां' यज्ञानाम्, 'सम्राजम्' 'तं' सम्राट्स्वरूपं स्वामिनम् 'अग्निम्' त्वाम्, 'नमोभिः स्तुतिभिः' 'वन्दध्यै' वन्दितुं प्रवृत्ताः इति शेषः। अत्रोदृष्टान्तः—'वारवन्तं' बालयुक्तम् 'अश्वं न' अश्वमिव। अश्वो यथा बालैर्दंशकान् मशकमक्षिकादीन् परिहरति, तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः॥ ७॥

७। ऋ० स० १म० २७सू० १ऋ०। R̥V. reads **'सम्राजन्तम्'** ( pr. pt. with aff. शत ) instead of **'सम्राजं तम्'** (two separate words), the SV. text. **उ० आर्चि० ८,१,७,१।**

अश्वं न—*Vide* : notes on particle न,—in र ं न—SV. 1. 5.

---

(क) वारवन्तीयम् अग्निष्टोमसाम कार्य्यम्—ता० म० ब्रा० ५,३,८।

वारवन्तम्—वारयन्ति आच्छादयन्ति (cover)—इति वाराः ( rt. वृञ् caus. घञ् )—बालाः—केशाः hairs. वाराः सन्ति अस्य—स वारवान्। 'Like a long-tailed steed. Agni is likened to a horse, probably on account of his impetuosity. His long flames driven by the wind are compared to the horse's flowing tail'—*Grith.* Sayaṇ explains the simile thus:—'scaring away or warding off our enemies with the flames as a horse drives away, with long hairs on the neck and in the tail, the gnats and flies that disturb him' (see com. above). 'For thou dost disperse our enemies like a horse, who brushes off flies with his tail'—*Wils.*

वन्दध्यै—वन्दितुम्—*to adore,*—an instance of Vedic Inf. fr. rt. वदि (अभिवादन-स्तुत्योः—*to salute, to praise* ) with aff. अध्यै ( तुमर्थे—in the inf. sense ). नुम् is added ( वदि—वन्द् ) by 'इदितोनुम्धातोः' Pāṇ. vii. 1. 58. 'तुमर्थे से-सेनसे०' Pāṇ. iii. 4. 9. The sentence is incomplete without a finite verb; in order to make it complete प्रवृत्ताः is to be supplied. Hence, 'we proceed to adore'—is the reasonable meaning.

नमोभिः—नमस् (Instr. pl.) *vide* SV. 1. 11; 1. 14; (1) नमस्कारैः, स्तुतिभिः—with homage; (2) अन्नैर्वा—with oblations. 'नम इति अन्ननाम'—Ngh. 2. 7.

सम्राजम्—Agni is very often called the Sovereign Lord of sacrifice, as he takes the principal part in it, which can not be performed without him; *Vide* : Macdnll's Vedic Mythology, Para 35. P. 98.

अध्वराणाम्—For etymology, nirukta etc. *Vide* : notes on अध्वरम्—SV. 1. 16.

---

**काण्वो मेधातिथिर्ऋषिः(क) 'सामुद्रं' साम, और्ववंश्यो वैधारय ऋषिः(ख)। गायत्रीच्छन्दः। अग्निर्देवता। अग्न्याह्वाने विनियोगः।**

३ १ २र ३ १ २र
**और्वभृगुवच्छुचिमप्नवानवदा हुवे।**
३ १ २ ३ १ २
**अग्निं समुद्रवाससम्॥ ८॥ १८॥**

और्वभृगुऽवत्। शुचिम्। अप्नवानऽवत्। आ। हुवे। अग्निम्। समुद्रऽवाससम्॥ ८॥

भाष्यसारः—**समुद्रवाससं—समुद्रस्यान्तरधिवसन्तम् वाडवानलरूपेण, वैद्युताग्निरूपेण वाऽन्तरिक्षेऽवतिष्ठमानम्, शुचिं समुज्ज्वलम् अग्निम् और्वभृगुवत् और्वभृगुरिव, अप्नवानवत् अप्नवान इव, आ-हुवे अहम् आह्वयामि॥ ८॥**

I invoke radiant Agni, dwelling in the sea ( or in the sky ), like Aurva ( the descendant of ) Bhṛgu and (like) Apnavana.—8.

(क) और्वः प्रयोग ऋषिः—सा०।

(ख) 'और्वस्य'—आ० ब्रा० १, ३।

**सा०-भा०।** 'समुद्रवाससं' समुद्रमध्यवर्त्तिनं वाडवं 'शुचिं' शुद्धम् अग्निम् 'और्वभृगुवत्' यथा और्वभृगुः, 'अप्नवानवत्' यथा अप्नवानस्तथा 'आ-हुवे' अहमाह्वयामि ॥ ८ ॥

८। ऋ० स० ८म० १०२सू० ४ऋ०।

और्वभृगुवत्—और्वो यो भृगुः ( भृगुवंशीयः ), स और्वभृगुः, ततः 'तेन तुल्यं' etc. Pāṇ. v. 1. 115. इति वति प्र०। Aurva was the son of Cyavana and the grandson of 'Bhṛgu'—the ancient sage or primeval patriarch. 'और्वो वै जमदग्निः। जमदग्नयः प्रजमिताग्नयो वा, प्रज्वलिताग्नयो वा तैरग्निरभिहुतो भवति' Nir. 7. 24.

Aurva is the subject of a story narrated in Mbh. i , there it is told that the sons of Kṛtavīrya wanted to destroy the descendants of Bhṛgu, even the children in the womb ; a woman of the family of Bhṛgu, in order to preserve her embryo, concealed it in her thigh (ūru), hence the child was named Aurva.

Bhṛgu--a sage, regarded as the ancestor of the Bhṛgus,--who were closely connected with Agni, which they find (ṚV. x. 46. 2.) and bring to men (i. 58. 6 ; 195. 2), and who are mentioned together with the Aṅgirasas, Atharvans, Ṛbhus, (Ngh. v. 5). Bhṛgu's name is enumerated among the Prajāpatis produced from Brahmā's skin and among Saptarṣis (7 sages), he is described as the father of Cyavana.--*Harivaṁśa*. For Bhṛgu's birth see also our notes on *Angiras* SV. 1. 29.

As regards the Bhṛgus and their further connection with Agni, *Vide* : Macdnll's Vedic Mythology, P. 140.

शुचिम्—शुद्धम्, radiant.

अप्नवानवत्—वतिप्र० as in और्वभृगुवत्. Apnavāna: an ancient sage mentioned with the Bhṛgus in ṚV. iv. 7. 1. in connection with Agni.

आ-हुवे—I invoke, I call on. dr. rt. ह्वेञ् ( शब्दे, *to call.* 1. u. ) pres. 1. sg. व्यत्ययेन सम्प्रसारणम् (व=उ), ततः उवङादेशः।

समुद्रवाससम्—समुद्रे वासः यस्य तम्—'dwelling in the sea.'—Sāy. 'Robed with sea i.e. surrounded, in the form of lightning, by the firmament or the sea of air—*Grfth.* समुद्र is also a synonym of अन्तरिक्ष Ngh. 1. 3. dr. सम्-उन्द् ( क्लेदने, *to moisten* ) with aff. रक्—'स्फायितञ्चि०' uṇ. ii. 13.

---

मेधातिथिऋर्षिः(क)। 'असङ्गं' साम, अत्रिश्चर्षिः(ख)। गायत्रीच्छन्दः। अग्निर्देवता। प्रातःसवनेऽग्निसन्दीपने विनियोगः।

३ १ २ ३ १ २र ३ १ २ ३ १ २
अग्निमिन्धानो मनसा धियं सचेत मर्त्यः।
३ १ २ ३ १ २
अग्निमिन्धे विवस्वभिः ॥ ९ ॥ १९ ॥

(क) प्रयोगः ऋषिः—Sāy. Grfth follows Sāyaṇa in ascribing this *Ṛk* to Prayoga.

(ख) अतेय—आ० ब्रा० १, ३।

अग्निम् । इन्धानः । मनसा । धियम् । सचेत । मर्त्यः । अग्निम् । इन्धे । विवस्वऽभिः ॥ ९ ॥

भाष्यसारः—**मर्त्यः—मनुष्यः यजमानः, अग्निम् इन्धानः प्रज्वलयन् मनसा हार्दिकश्रद्धया धियं कर्म यज्ञादिकम्, सचेत भजेत कुर्वीत, विवस्वभिः—ऋत्विग्भिश्च अग्निम् इन्धे प्रज्वलयति ॥ ६ ॥**

The mortal (i.e. sacrificer) kindling Agni, duly attends or observes the holy ceremony with heart ( i.e. hearty devotion ) and keeps Agni burning, with the priests.—9.

**सा०-भा० । मर्त्यः मनुष्योऽग्निमिन्धानः काष्ठैः प्रज्वलयन् मनसा एव श्रद्धानः धियं कर्म सचेत काले भजेत । विवस्वभिः ऋत्विग्भिश्च अग्निम् एव इन्धे प्रज्वलयति ॥ ६ ॥**

**६ । ऋ० सं० ८ म० १०२ सू० २२ ऋ० ।** RV reads **ईधे** instead of **इन्धे ।**

**इन्धानः**—fr. rt. **इन्ध्** (*to kindle*). pr. pt.—'while enkindling Agni with fuel'.

**मनसा**—with heart, i. e. with devotion.

**धियम्—कर्म, यज्ञादिकम्**—ceremony.—Sāy. after Ngh. 2. 1. 'the song'.—*Grfth.* for dr. *vide* SV. 1. 14.

**सचेत**—rt. **सच्** ( सेवने, *to attend* 1. Ā. ), pot. ( विधिलिङ् ) 3. sg.—should attend in time. pot. used here for pres. as in धियो यो नः प्रचोदयात् in the famous *Gayatri* Mantra.

**इन्धे**—3. sg. enkindles.—West. scholars have taken it to mean 'I kindle', I. sg.

**विवस्वभिः**—for etymology *vide* : notes on SV. 1. 10. द् is elided by व्यत्यय or Vedic anomaly. So the form is विवस्वभिः instead of विवस्वद्भिः ।—with the priests—Sāy. As to how this word may mean 'a priest' *vide* : notes on देवेभिः SV. 1. 2. Grfth—translates it as 'till he glows' and comments—'used, in the 'adverbial sense,' this is simply absurd. Stevenson's translation seems to be rather rational—'with offerings dispelling darkness'. He has apparently adopted vivaraṇa's explanation, e.g. 'तमसां विवासयितृभिर्हविभिः ।'

---

**काण्वो वत्स ऋषिः । 'निधनकामं' साम, प्रजापतिर्ऋषिः(क) । गायत्रीच्छन्दः । अग्निर्देवता । वीर्य्यप्राप्तयेऽग्निस्तुतौ विनियोगः(ख) ।**

२उ ३ २ ३ १ २ ३ १ २ ३ २
आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्
३ २उ ३ १ २ ३ २
परो यदिध्यते दिवि ॥ १० ॥ २० ॥

( क ) प्रजापतेश्च 'निधनकामम्'—आ० ब्रा० १, ३ ।

( ख ) 'निधनवता स्तुवन्ति वीर्य्यं वै गायत्री वीर्य्यं निधनं वीर्य्येणैव तद्वीर्य्यं संवर्धयति' ( समर्द्धयति *Bib. Ind.* ) ता० म० ब्रा० ७,३,१३ ।

आत् । इत् । प्रत्नस्य । रेतसः । ज्योतिः । पश्यन्ति । वासरम् । परः । यत् । इध्यते । दिवि ॥ १० ॥

भाष्यसारः—परो दिवि—द्युलोकस्य उपरि, यत्—यदा, अग्निः सूर्यरूपेण इध्यते दीप्यते, आत् इत्—तदैव, प्रत्नस्य—चिरन्तनस्य रेतसः गन्तुः गमनशीलस्य,—उदकवतो वा सूर्यस्य वासरं—नियामकम्, निवासहेतुभूतं वा, ज्योतिः तेजः, पश्यन्ति—सर्वे जनाः, अथवा वासरं सर्वदिनं व्याप्य उदयात् अस्तपर्य्यन्तं ज्योतिः पश्यन्ति ॥१०॥

When Agni burns above in heaven (in the form of the sun), it is then that all men see the glowing lustre of the eternal and ever-moving (sun)—or see the light all day long.—10.

**सा०-भा०** । 'परो दिवि' दिवः परस्तात् । व्यत्ययेन सप्तमी [पा० ३, ४, ८८], बह्वृचानां दिवेति तृतीयान्तेन व्यत्ययः । दिवि द्युलोकस्योपरि । 'यद्' यदा अयं वैश्वानरोऽग्निः सूर्यात्मना 'इध्यते' दीप्यते 'आदित्' अनन्तरमेव 'प्रत्नस्य' चिरन्तनस्य । 'रेतसः' गन्तुः—'री गतिरेषणयोः', अस्मात् 'स्रुरीभ्यां तुड् वे'त्यसुन् तुडागमश्च । यद्वा रेतस इत्युदकनाम—नि० १,१२,१६ । रेतस्विन उदकवतः । सामर्थ्यान्मत्वर्थो लक्ष्यते । ईदृशस्येन्द्रस्य सूर्यात्मनः 'वासरं' नियामकम्, निवासहेतुभूतं वा 'ज्योतिः' द्योतमानं तेजः 'पश्यन्ति' सर्वे जनाः । यद्वा वासरमित्यत्यन्तसंयोगे द्वितीया—[पा० २, १, २९], कृत्स्नमहः उदयप्रभृत्यास्तमयात् ज्योतिः पश्यन्तीत्यर्थः । 'इसुसोः सामर्थ्ये' [पा० ८,३,४४] इति विसर्जनीयस्य षत्वम् ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमाध्यायस्य द्वितीयः खण्डः ॥

१० । ऋ० स० ८ म० ६ सू० ३० ऋ० । ṚV. reads **दिवा** instead of **दिवि** ।

आत्—( अ०, Indec. ) अनन्तरम् then. इत्—( अ०, Indec. ) verily.

प्रत्नस्य—प्रशब्दः पुराणवाची ततो 'न'-प्रत्ययः । 'नश्च पुराणे प्रात्' Pāṇ. v. 4. 25. 'प्रत्नमिति पुराणनाम'—Ngh. 3. 29. 'primeval'—*Grfth.*

रेतसः—for. dr. *see* Sāy.'s com. above. rt. री ( *to go* )—असुन्, तुट् च uṇ. iv. 202. Ever-moving—rfs to the sun, or (2) रेतस इति उदकनाम—a synonym of water, Ngh. 1. 12 ; here rfs to 'Indra', the god of water, or the rain-god who is here identified with the sun.—Sāy.

प्रत्नस्य रेतसः ज्योतिः—'the light of primeval seed'—*Grfth*; 'the light of the ancient shedder of water' ( i. e. Indra, the sun )—*Wils.*

ज्योतिः—dr. rt. द्युत् ( दीप्तौ, *to glow* ) with aff. इसिन्, द changed to ज uṇ. ii. 110.

वासरम्—dr. rt. वस्—अरः uṇ. iii. 132. Sāy. explains it in three different ways, viz. (1) The light necessary for the convenience of living, i. e. without

which living is impossible, (2) guiding (नियामकम्), (3) Adv. of time:—all day long, from daybreak to sunset.

'वासराणि वेसराणि विवासनानि गमनानीति वा'—Days are so called because they are of different courses—cold by night and warm by day, or they are bright, or they pass away.—Nir. 4. 7. द्वाभ्यां शीतोष्णाभ्यां रात्रिन्दिवमनारतं सरन्ति गच्छन्ति इति वेसराणि सन्ति वासराणि। द्विशब्दस्य 'वे'भावो 'वा'भावो वा—पृषोदरादित्वात्। सर्त्तेः पचाद्यच्, पा० ३, १, १३४।

इध्यते—rt. इन्ध् pass. voice. pres. 3. sg. is kindled, burns,—here shines.

परो दिवि—दिवः परस्तात्, द्युलोकस्य उपरि। षष्ठीस्थाने व्यत्ययेन ७मी Pāṇ. iii. 4. 88. 'On yonder side of heaven'—*Grfth.*

Prof. Wilson comments—'Indra is identified with the Sun. '*Vasaram*' as an epithet of *Jyotis*, is variously explained as '*Nirvasakam*' clothing, enveloping, or '*Nivāsa-hetu-bhūtam*'—the cause of abiding or as an adverbial accusative of time,—'during the day'. The light that lasts throughout the day from sunrise to sunset; '*retasaḥ*' is also differently explained as (1) गन्तुः—the goer, or (2) उदकवतः—water-having.'

---

**अथ प्रथमप्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः।**

**भार्गवः प्रयोग ऋषिः बार्हस्पत्योऽग्निर्ऋषिर्वा। पञ्च सामानि, तेषां त्रयाणां गेयमानानां सिन्धुक्षित् ऋषिः, सैन्धुक्षितं च नाम (क)। गायत्रीच्छन्दः। अग्निर्देवता। वृद्धिकाम-यज्ञेऽग्निस्तुतौ विनियोगः (ख)।**

३ १ २ ३ १ २ ३ १ २ ३ २
**अग्निं वो वृधन्तमध्वराणां पुरूतमम्।**
२ ३ २ ३ १ २
**अच्छा नप्त्रे सहस्वते ॥१॥२१॥**

अग्निम्। वः। वृधंतम्। अध्वराणाम्। पुरुऽतमम्। अच्छ। नप्त्रे। सहस्ऽवते॥ १॥

भाष्यसारः। **हे ऋत्विजः वः यूयम्—अध्वराणाम् अहिंस्यानाम् बलिनाम् यज्ञानां वा नप्त्रे बन्धुम्, सहस्वते बलवन्तम्, वृधन्तं शिखाभिर्वर्धमानम्, पुरुतमम् अतिशयेन बहुम् अग्निम् अच्छ अभि गच्छत॥ १॥**

(O priests), make up to Agni,—the friend of sacrifices or of the powerful,—(himself) powerful,—waxing (with flames), most magnified or manifold (in forms).—1.

(क) "सैन्धुक्षितानि त्रीणि"—आ० ब्रा० १, ४।

(ख) "अग्निं वो वृधन्तमिति। अवर्धन्त ह्येतर्हि यजमानमेव तया वर्धयन्ति"। ता० म० ब्रा० १२, १२, १—२।

**सा०-भा० । 'अध्वराणां' अहिंस्यानां बलिनाम् । 'नप्त्रे' बन्धुम् । 'सहस्वते' बलवन्तम् । विभक्तिव्यत्ययः— पा० १,४,९८ । 'वृधन्तं' ज्वालाभिर्वर्धमानम् । 'पुरुतमम्' अतिशयेन बहुमग्निम् , हे ऋत्विजः ! 'वः' यूयम् । 'अच्छ' अभि गच्छत ॥ १ ॥**

**१ । ऋ० स० ८ म० १०२ सू० ७ ऋ० । उ० आर्चि० ३,१,२०,१ ।**

अच्छा—In Mantra or Saṁhitā Text, the final vowel of an indeclinable ( अव्यय ) is lengthened. 'निपातस्य च' Pāṇ. vi. 3.136. mg.--अभि ( *to* )—अच्छाभेराप्तुमिति शाकपूणिः—*Accha* is used in the sense of अभि, 'it means to obtain', acc. to Śākapūṇi, Nir. 5. 28.

पुरु—बहुनाम, a synonym of many. Ngh. 3. 1. In Saṁhitā text पुरुतमम् is read with long vowel by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137.

वः =यूयम्—rfs to the sacrificers or the priests. विभक्तिव्यत्ययः—here वः is used in the sense of १मा instead of २या, ४र्थी and षष्ठी ।

वः वृधन्तम्—(Agni) who prospers you—*Grfth.* वृध् pr. pt. व्यत्ययेन शानच्-स्थाने शतृ प्र० ।

नप्त्रे—न---पत् + तृच् 'नप्तृनेष्टृ'—uṇ. ii. 95. विभक्तिव्यत्ययः—४र्थी in the place of २या—adj. qualifying अग्निम्,—'the friend of sacrifices'—Sāy. 'For powerful kinship' —*Grfth.* He further observes—'I follow Prof. Ludwig in taking '*Naptre*' to be the loc. case of '*Naptram*' with a dative signification. This is untenable. Stevenson translates differently—'that thou mayest strengthen our children.'—this is also absurd.

सहस्वते—सह् ( मर्षणे,—to bear ) + असुन्—'सर्वधातुभ्योऽसुन्' uṇ. iv. 189.—सहः—बलम् । 'सह इति बलनाम' Ngh. 2. 9. सहस्—मतुप् , मतुपो मस्य वः Pāṇ. viii. 2. 9. सहस्वते—विभक्ति-व्यत्ययः—dat. used for accus.—बलवन्तम्—adj. qual. अग्निम् । cf. 'इन्द्रस्य यस्य सहो महि' to Indra whose great power.... Ṛ̣V. x. 50. 1 ; 'एता विश्वा···सूनो सहसः' ( O son of strength ). Ṛ̣V. X. 50. 6. Agni is often called सहसस्पुत्रः, सहसः सूनुः, सहसो यहुः son or child of strength. Nir. 8. 2. Bṛh D. iii. 64.

---

**बार्हस्पत्यो भरद्वाज ऋषिः । त्रीणि सामानि गेयमानानि । द्वयोरग्निर्ऋषिः, हर इति नाम च (क) । गायत्रीच्छन्दः । अग्निर्देवता । सतपूर्णफलायतनप्रजालाभे विनियोगः (ख) ।**

२ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ १ २
**अग्निस्तिग्मेन शोचिषा यंसद्विश्वं न्य३त्रिणम् ।**
३ १ २ ३ २
**अग्निर्नो वंसते रयिम् ॥२॥२२॥**

अग्निः । तिग्मेन । शोचिषा । यंसत् । विश्वम् । नि । अत्रिणम् । अग्निः । नः । वंसते । रयिम् ॥ २ ॥

---

(क) 'तृतीयस्य वामदेव ऋषिर्वामदेव्यमिति नाम च—'अग्रेर्हरसी द्वे इहवद् वामदेव्यं तृतीयम्— आ० ब्रा० १, ४ ।

(ख) 'ये वामदेव्येन स्तुत्वोत्तिष्ठन्ति ते सतः सदभ्युत्तिष्ठन्ति, पूर्णात् पूर्णमायतनादायतनमन्तरित्यायतना हि प्रजाः'—ता० म० ब्रा० ४, ८, १३ ।

भाष्यसारः। **अग्निः तिग्मेन तीव्रेण शोचिषा तेजसा विश्वं सर्वम्, अत्रिणम् अत्तारम् भक्षकम्—राक्षसादिकम् नियंसत् निहन्तु, अपि च नः अस्मभ्यम् रयिं धनं वंसते ददातु ॥ २ ॥**

May Agni consume, with his terrible flame, all the devouring foes. (And) May Agni give us wealth.—2.

**सा०-भा०।** अयम् 'अग्निः', 'तिग्मेन' तीक्ष्णेन 'शोचिषा' तेजसा। 'विश्वं' सर्वम्। 'अत्रिणम्' अत्तारम् राक्षसादिकम्। 'नियंसत्' निहन्तु। बह्वृचा अनुस्वार-स्थाने आकारं कृत्वा 'यासत्' इति पठन्ति। अपि च 'नः' अस्मभ्यमग्निः 'रयिं' धनं 'वंसते' ददातु ॥ २ ॥

२। ऋृ० सं० ६ म० १६ सू० २८ ऋ०। In the R̥V. **'यासत्'** is read instead of **'यंसत्'**, and **'वनते'** *instead of* **'वंसते'**।

नि-यंसत्—यम् (उपरमे, *to die* I. p.)—लेट् 3. sg. लेटि सिप्, सिब्बहुलं०—वा०, इत्लोपश्च इ of ति is elided, Pāṇ. iii. 4. 97. May (Agni) put to death—Sāy.; cast down—*Grfth.*

अत्रिणम्—अद (भक्षणे, *to eat*) + त्रिनि, 'अर्दस्त्रिनिश्च' uṇ. 4. 68. devourer, demon or Rakṣas.

वंसते—वन् (संभक्तौ, *to give* 8. Ā.) + लेट्, सिप् by सिब्बहुलं० वा०। May Agni give us wealth.

रयिम्—धनम्, wealth. अष्टाविंशतिधननामसु रयिशब्दः पठितः Ngh. 2. 10. cf. "नू च पुरा च सदनं रयीणाम्"---the present and past place of treasures. R̥V. i. 96. 7. 'वयं स्याम पतयो रयीणाम्'—may we be lords of treasures. x. 121. 10. The word रयि is dervd. fr. rt. रा *to give.*

शोचिषा—तेजसा, with flame. शोचिरिति ज्वलतो नाम Ngh. 1. 17.

---

**गोतमवंश्यो वामदेव ऋषिः। द्वयोः साम्नोः अग्निऋर्षिः याममिति नाम (क)। गायत्री-च्छन्दः। अग्निर्देवता। अनपजय्यममुष्य लोकस्याधिपत्यप्राप्तौ अग्निस्तुतौ विनियोगः (ख)।**

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ १र २र

**अग्ने मृड महाँ अस्यय आ देवयुं जनम्।**

३ १ २ ३ २ ३ १ २

**इयेथ बर्हिरासदम्॥३॥२३॥**

(क) 'यामे द्वे'—आ० ब्रा० १, ४।

(ख) "यामं भवति। एतेन वै यमोऽनपजय्यममुष्य लोकस्याधिपत्यमाश्नुतानपजय्यममुष्य लोकस्याधिपत्य-मश्नुते यामेन तुष्टुवानः। एतेन वै यमी यमं स्वर्गं लोकमगमयत स्वर्गस्य लोकस्यानुख्यात्यै स्वर्गात् लोकान्न च्यवते तुष्टुवानः स्तोमः।" ता० म० ब्रा० ११।१०।२०, २१, २२।

अग्ने । मृड । महान् । असि । अयः । आ । देवयुम् । जनम् । इयेथ । बर्हिः । आऽसदम् ॥३॥

भाष्यसारः । **हे अग्ने ! मृड सुखय—अस्मान् इत्यर्थः । त्वं महान् भवसि । अयः स्वयं गच्छन् त्वं देवयुं देवान् आत्मन इच्छन्तं जनं भक्तयजमानमित्यर्थः बर्हिः आसदम् यज्ञे उपवेष्टुम् आ इयेथ आगच्छसि ॥ ३ ॥**

O Agni, make us happy, thou art sublime ; thou, stirring (thyself), approachest the man, who is devoted to the gods,—to sit on Kuśa grass.—3.

**सा०-भा० ।** हे 'अग्ने' ! 'मृड' अस्मान् सुखय । स त्वं 'महान्' असि प्रभूतो भवसि । यः त्वम् 'अयः' गन्ता 'देवयुम्' देवानां कामयितारं 'जनं' यजमानं 'बर्हिः' दर्भम् आसदम् यज्ञे आसत्तुम् 'आ इयेथ' आगच्छसि ॥३॥

३ । ऋ० सं० ४म० ६ सू० १ ऋ० ।

Instead of **'अयः',—'य ईम्'** is read in the Ṛ̣V. where the construction is, according to Sāy.—यत्त्वम् अग्निः ईम्—इमं देवयुमित्यादि ।

मृड—fr. rt. मृड ( सुखने, *to make happy*. 6. u. ) Imp. 2. sg. make us happy. 'Be gracious'—*Grfth.*

अय.—(1) rt. इण् (गमने, *to go* 2. u.) with aff. घ:—'पुंसि संज्ञायां घः', Pāṇ iii. 3. 118. एति—गच्छतीति—अयः । or (2) rt. अय् ( गतौ 1. Ā. )—अच्—पचाद्यच् । अयते—गतिकर्मा Ngh. 2.14.

देवयुम्—देव + या ( प्रापणे ) + कु:—uṇ i. 37.—'seeking to reach or come in contact with the gods' or देव—क्यच्—उ । *Vide* the rules 'सुप आत्मनः क्यच्' pāṇ. iii. 1. 8. क्याच्छन्दसि. ib. iii. 2. 170. 'न च्छन्दस्यपुत्रस्य' ib. vii. 4. 35. One who desires the gods i. e. dovout or pious man. 'देवयवः' is read among the synonyms of priests. Ngh. 3. 18. They are so named, as they desire to be with the gods.

आसदम्—आ + सद् + कमुल् ( in the sense of तुम् or inf. )—to sit.

आ-इयेथ—'आ' is to be taken with इयेथ, आ—इण्—perf. ( लिट् ) 2. sg ; perf. is here used in the sense of pres.—'छन्दसि लुङ्लङ्लिटः' Pāṇ. iii. 4.6.

---

**मित्रावरुणवंश्यो वसिष्ठ ऋषिः । राक्षोघ्नं साम, ऋषिश्चाग्निः (क) । गायत्रीच्छन्दः । अग्निर्देवता । स्वस्त्ययनेष्टेः प्रथमाज्यभागस्यानुवाक्यायां विनियोगः ।**

२ ३ १ २ ३ १ २ ३ १ २ ३ २
अग्ने रक्षा णो अंहसः प्रति स्म देव रीषतः ।
१ २ ३ १ २
तपिष्ठैरजरो दह ॥४॥२४॥

(क) 'अग्ने राक्षोघ्नं'—आ० ब्रा० ।

अग्ने । रक्ष । नः । अंहसः । प्रति । स्म । देव । रिषतः । तपिष्ठैः । अजरः । दह ॥४॥

भाष्यसारः । हे अग्ने, त्वम् अस्मान् अंहसः पापात् रक्ष त्रायस्व । अपि च देव अग्ने अजरः त्वं रिषतः हिंसतः शत्रून् तपिष्ठैः अतिशयतापकैस्तेजोभिः प्रति दह स्म भस्मीकुरु ॥ ४ ॥

O Agni, deliver us from sin, O glorious one, ever young, consume the injuring (enemies), with thy extremely hot rays—4.

**सा०-भा० ।** हे अग्ने ! त्वं नः अस्मान् 'अंहसः' पापात् 'रक्ष' पाहि । संहितायां दीर्घश्छान्दसः । अपिच हे 'देव' द्योतमानाऽग्ने ! 'अजरः' जरारहितस्त्वं 'रिषतः' हिंसतः शत्रून् । संहितायां दीर्घश्छान्दसः । 'तपिष्ठैः' अतिशयेन तापकैस्तेजोभिः 'प्रति दह स्म' भस्मीकुरु । स्मेति सकारस्य संहितायां 'प्रति ष्म' इति षत्वं बह्वृचाः कुर्वन्ति ॥ ४ ॥

४ । ऋ० सं० ७म० १५ सू० १३ ऋ० ।

In the R̥V. **'प्रति ष्म'** is read with cerebral ष, instead of **'प्रति स्म'** ।

रक्षा—for रक्ष ; the final अ of a double-vowelled verb is lengthened in the Saṁhitā Text by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135.

अंहसः abl. sg.—अम् + असुन्—'अमेर्हुक् च' uṇ. 4. 216. अमन्ति प्राप्नुवन्ति दुःखानि अनेन तत् अंहः—पापम् । 'अंहोहन्तेर्निरूढोपधाद्विपरीतात्—*aṁhaḥ* is dervd. fr. rt. *han* to injure ---by metathesis, the penultimate forming the initial part ( *han—ahn—anh---aṃhah* ) Nir. 4.25.—'from sin'—Sāy ; 'from distress'—*Grfth.*

अजरः—नास्ति जरा यस्य—undecaying, ever-young, eternal. Agni is frequently called अमृत, अमर्त्य,—immortal, *vide* : SV. I. 12, 35, 40, 45.

रीषतः—accus. pl. ; dr.—rt. रिष् (हिंसायां, to *injure* 1.p.) pr. pt. In pronunciation in the Mantra text—रि is read with long vowel ( री ) by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3.137. 'The Injurers,'—Sāy ; 'the enemies'—*Grfth.*

तपिष्ठैः—rt. तप् ( सन्तापे, *to heat* 1. u. ) अच्—पचाद्यच्, तपति इति तपः । spr. dg. इष्ठन् extremely hot—rfs. to the rays or flames. cf. 'कृणुष्व पाजः······विध्य रक्षसस्तपिष्ठैः,···' pierce the Rākṣas with the hottest arrows ( i. e. which burn most fiercely ) R̥V. iv. 4. 1.

प्रति and स्म—*Indecs.*---these two indeclinables have no meaning here,—are only used for the sake of the metre.

---

भरद्वाज ऋषिः। राक्षोघ्नं साम ऋषिश्चाग्निः (क)। गायत्रीच्छन्दः। अग्निर्देवता। पूर्ववत् विनियोगः।

१ २ ३ १र २र ३ १ २ ३ १ २
अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः।
२ ३ १ २ ३ १ २
अरं वहन्त्याशवः ॥५॥२५॥

अग्ने। युङ्क्ष्व। हि। ये। तव। अश्वासः। देव। साधवः। अरम्। वहन्ति। आशवः॥ ५॥

भाष्यसारः। हे देव अग्ने, ये तव साधवः कर्मपटवः अश्वासः अश्वाः आशवः क्षिप्रगतयः अरम् अलं द्रुतं रथं वहन्ति, तान् अश्वान् युङ्क्ष्व निजरथे योजय॥ ५॥

O glowing god Agni, yoke (to thy car) thy efficient and swift horses, who carry (thee) quickly—5.

**सा०-भा०।** हे देव द्योतमान! अग्ने! तानश्वान् 'युङ्क्ष्व' आत्मीये रथे योजय। बह्वृचास्तैत्तिरीयाश्च विकरणप्रत्ययस्य लोपं कृत्वा 'युक्ष्व' इति पठन्ति। ये तव त्वदीयाः 'साधवः' साधकाः सुशीला वा 'अश्वासः' अश्वाः 'आशवः' क्षिप्रगामिनः 'अरम्' अलं पर्याप्तं त्वदीयं रथं 'वहन्ति'॥ ५॥

५। ऋ० सं० ६म० १६ सू० ४३ ऋ०। उ० आर्चि० ६,२,२,१। यजुः १३,३६।

Ṛ̣V. has the reading **'मन्यवे'** instead of **'आशवः'** (swift);—the sense, there, is—'they carry you swiftly to the sacrifice. *Manyave* (stem *manyu*. dat. sg.) meaning *Yajñāya*—to the sacrifice. Grfth. has, here, followed the ṚV. reading, and translates—they carry you like mental wills; this is apparently inaccurate.

'युङ्क्ष्वा'—the final vowel is prolonged by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135. *See* note on 'रक्षा' SV. I. 24. dr. युजिर (योगे, *to join*. 7. u.) Imp. 2. sg. ṚV. and TS. read 'युक्ष्व' instead of 'युङ्क्ष्व' in which case the विकरण 'श्न'---the root युजिर् being of the रुधादि (8) class---is dropped.

'अश्वासः'—अश्वाः, nom. pl. असुगागमः by 'आज्जसेरसुक्' Pāṇ. vii. 1. 50.

'अरम्'—*indec.* अलम्, rapidly.

'आशवः'—*stem* आशु. nom. pl. 'swift'—Sāy. The fleet ones—*Grfth.*

---

(क) 'अग्नेः राक्षोघ्नं'—आ० ब्रा०।

वशिष्ठ ऋषिः । वैश्वमनसं साम । ऋषिश्च विश्वमनाः(क) । गायत्रीच्छन्दः । अग्निर्देवता । अग्निन्दूतमितिवत् विनियोगः (ख) ।

१ २ ३ १ २ ३ २
नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम् ।
३ १ २
सुवीरमग्न आहुत ॥६॥२६॥

नि । त्वा । नक्ष्य । विश्ऽपते । द्युऽमन्तं । धीमहे । वयम् । सुऽवीरम् । अग्ने । आऽहुत ॥ ६ ॥

भाष्यसारः । **हे नक्ष्य उपास्य, विश्पते प्रजापते, आहुत सर्वैर्यजमानैरभिहुत, अग्ने, द्युमन्तं ज्योतिर्मयं सुवीरं शोभनकर्मभिर्ऋत्विग्भिरन्वितं त्वाम् वयं नि-धीमहे वेद्याम् आहवनीयस्थाने स्थापयामः ॥ ६ ॥**

O Agni, the lord of men, to be sought (by all), served with oblation or invoked by all, we establish thee, (on the sacrificial altar) —the radiant,—attended by the best workers (i.e. the priests).—6.

**सा०-भा० । 'नक्ष्य' उपगन्तव्य ! नक्षतिर्व्याप्तिकर्मा । 'विश्पते' विशाम्पते, 'आहुत' सर्वैर्यजमानैरभिहुत ! हे अग्ने ! 'द्युमन्तं' दीप्तिमन्तं 'सुवीरं' कल्याणस्तोतृकं त्वा त्वां वयं नि-धीमहे निहितवन्तः ॥ ६ ॥**

**६ । ऋ० सं० ७म १५ सू० ७ ऋ० ।**

Ṛ.V. reads **'देव धीमहि'** instead of **'धीमहे वयम्'** ।

'नक्ष्य'—*voc.* dr. rt. नक्ष (गतौ, *to go.* 1. p.)--यत्--'whom all must seek'.—*Grfth.* the approachable—*Wils.* नक्षतिर्गतिकर्मा Ngh. 2. 14. to pervade. ib. 2. 18. The word नक्षत्र is dervd. from this rt. *Vide* : notes on नक्षत्रम् SV. 1. 47.

विश्पते—*voc*—विशां प्रजानां पते ; for विश् in the sense of man, *vide* : notes on विशे विशे SV.1.15. 'सर्वस्य पातारं वा पालयितारं वा विश्पतिम्' Nir. 4. 26. cf. अत्रापश्यं विश्पतिं सप्तपुत्रम्—here I saw the lord of the universe…Ṛ.V. i.164.1.

'नि-धीमहे' = निदधीमहि ( धा + लिङ् ) व्यत्ययेन अभ्यासलोपः, इस्थाने एकारश्च---the root is not re-doubled as is the case with rts. of cl. 3. and ईमहि is read ईमहे by Vedic anomaly.

'सुवीरम्'—possessed of blessed heroes i. e, devoted worshippers—Say. ; 'rich in valiant men'—*Grifth.* शोभनाः वीराः पुरुषाः ऋत्विजः परिचारकत्वेन सम्बन्धिनो यस्य स सुवीरः तम्—Viv. cf. 'बृहद्वदेम विदथे सुवीराः'—may we praise loudly, in the sacrifice, with good heroes Ṛ.V. ii. 11. 21. सुवीरा वीरवन्तः कल्याणवीराः वा—having blessed heroes.—Nir. 1. 7.

(क) "वैश्वमनसं च"—आ० ब्रा० ।

(ख) *See* SV. 1. 3.

वीर (विक्रान्तौ, *to show valour* 10. Ā.)+कः, or (2) अज् (गतौ, *to go*)+रक् un. ii. 13 अज् is changed to 'वी'। 'वीरो वीरयत्यमित्रान् वेतेर्वागति कर्मणः वीरयतेर्वा *vira* is so named, because he disperses the enemies ( वि+ईरयति, fr. rt. ईर् क्षेपे, *to drive away* ) or it may be dervd fr. rt. वी ( to go ) or fr. rt. वीर to be powerful. ---Nir. 1. 7.

---

**आङ्गिरसो विरूप ऋषिः। आर्षेयं साम, अग्निश्चर्षिः (क)। गायत्रीच्छन्दः। अग्निर्देवता। उदीच्यकर्मणि नवग्रहहोमप्रकरणे मङ्गलहोमे विनियोगः(ख)।**

३ २ ३ २ ३ २ ३ १र २र ३ २ ३ २
**अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम्।**
३ १ २र
**अपां रेतांसि जिन्वति ॥७॥२७॥**

अग्नि। मूर्धा। दिवः। ककुत्। पतिः। पृथिव्याः। अयम्। अपाम्। रेतांसि। जिन्वति॥ ७॥

भाष्यसारः। **मूर्धा शिरोवच्छ्रेष्ठः—देवानां प्रधानभूतः, दिवः द्युलोकस्य ककुत् ककुदिव उच्छ्रितः, पृथिव्याः अपां च पतिः। अयम् अग्निः रेतांसि निखिलानि भूतजातानि जिन्वति—प्रीणयति॥ ७॥**

This Agni,—the head (of the gods), the hump of heaven, the lord of the earth and waters,—entertains all the animate and inanimate beings.—7.

**सा०-भा०। 'मूर्धा' देवानां श्रेष्ठः, 'दिवः' द्युलोकस्य 'ककुत्' उच्छ्रितः 'पृथिव्याः' च 'पतिः' अयम् अग्निः 'अपां रेतांसि' स्थावरजङ्गमात्मकानि भूतानि जिन्वति प्रीणयति॥ ७॥**

**७। ऋ० सं० ८म० ४४ सू० १६ ऋ०। उ० आर्चि० ७, १, १६, १।**

'मूर्धा—Sāyan has taken मूर्धा as a separate epithet meaning 'the head of the gods'. But Grfth connects it as well as 'ककुत्' with दिवः—and means to say—'the head and height of heaven.'

ककुत्—ककुहः महान्—'ककुह इति महन्नाम' Ngh. 3. 3.

पृथिव्याः पतिः—The lord or master of the earth. But it is better to interpret 'पति' as पालक—the protector of the earth, by causing rain.

अपां रेतांसि जिन्वति—'quickeneth the waters' seed :—Agni, in the form of lightning, impregnates the watery clouds and so causes the rain to flow —*Grifth* ; this explanation appears to be more plausible. Sāyaṇ has, here, meant 'animate and inanimate beings' by 'अपां रेतांसि' ; this is not supported

(क) 'अग्नेश्चार्षेयम्—आ० ब्रा०।
(ख) छान्दोग्य-मन्त्र-भाष्यम्, २, १२।

by any other authority. He has taken 'जिन्वति' to mean '*pleases*'—from the rt. जिवि ( प्रीणने, *to please* )—जिन्वति: प्रीतिकर्मा Nir. 6. 22. But there जिन्वति has also the sense of motion—'जिन्वतिर्गतिकर्मा' Ngh. 2. 14. Nir. 3. 9. So it is fair and proper to mean—'Agni···moves or causes to flow the waters' seed i.e. the rain, which is the source of all waters on the earth.' cf. भूमिं पर्जन्या जिन्वन्ति, दिवं जिन्वन्त्यग्नय:,—clouds entertain the earth, fires the sky.---ṚV. i. 164. 51.

Guṇa-Viṣṇu comments in Ch.M.bh. 'मूर्धा अत्यन्ततेजोरूपतया प्रधानभूत:। तथा 'दिव.' आकाशस्य 'ककुत्'—भूषणम्। वृष्टिकर्तृकत्वात् 'अपां' जलानां पतिः। अतएव 'पृथिव्या: रेतांसि' बीजानि 'जिन्वति' प्रीणाति सफलीकरोतीत्यर्थ:---Agni is the head i.e. most sublime, being extremely luminous ; the ornament of heaven ; the lord of waters, being the cause of rain ; so gratifies i. e. fructifies the seeds of the earth.'

---

शुनःशेप ऋषिः। सोम साम ऋषिस्तु नोक्तः(क)। गायत्रीच्छन्दः। अग्निर्देवता। राज्याधिपत्य-यशोलाभे विनियोगः (ख)।

३ २ ३ २उ ३ १ २ ३ १ २ ३ १र २र
इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम्।
१ २ ३ २ ३ १ २
अग्ने देवेषु प्र वोचः ॥८॥२८॥

इमम्। उ। सु। त्वम्। अस्माकम्। सनिम्। गायत्रम्। नव्यांसम्। अग्ने। देवेषु। प्रवोचः॥ ८॥

भाष्यसारः। हे अग्ने! त्वम् अस्माकम् इमम् अग्रतोऽनुष्ठीयमानम् सनिं हविर्दानम् उ अपि च, नव्यासं नवतरम्, गायत्रं स्तुतिरूपम् वचः, देवेषु देवानाम् पुरतः समीप इत्यर्थः, सु सुष्ठु प्रवोचः—प्रब्रूहि निवेदय॥ ८॥

O Agni, kindly communicate to the gods (about) this our oblation and the latest hymn (prepared for them).—8.

**सा०-भा०।** हे अग्ने! त्वम् 'अस्माकम्' अस्मत्सम्बन्धिनम्। 'अस्मभ्यम्' इति तैत्तिरीयाः। 'इमम् उ सु' पुरोदेशेऽनुष्ठीयमानमपि 'सनिं' हविर्दानं 'नव्यासं' नवतरम्। 'नवीयांसम्' इति तैत्तिरीयाः। 'गायत्रं' स्तुतिरूपं वचोऽपि 'देवेषु' देवानाम् अग्रे 'प्रवोचः' प्रब्रूहि॥ ८॥

---

(क) 'सोम साम'—आ० ब्रा०।

(ख) 'यथा वा इमा अन्या ओषधय एवं सोम आसीत्, स तपोऽतप्यत स एतत् 'सोम सामा'ऽपश्यत्, तेन राज्यमाधिपत्यमगच्छत्। यशोऽभवत्, राज्यमाधिपत्यं गच्छति यशो भवति सोम-साम्ना तुष्टुवान:'—ता० म० ब्रा० ११.३.९।

८। ऋ० सं० १ म० २७ सू० ४ ऋ०। उ० आर्चि० ७, १, ४, १।

Sāy's addl. notes in his com. on the Ṛ V. verse—ऊ षु 'निपातस्य चे'ति संहितायां दीर्घत्वम् (the final vowel of an indec. is long in Saṁhitā)। 'सुञ' (Pāṇ. viii. 3.107.) इति षत्वम्। नव्यांसम्—नवशब्दादीयसुनीकारलोपश्छान्दसः ( नव com.dg.ईयस् )। वोचः—छन्दसि लुङ्लङ्लिट इति लोडर्थे प्रार्थनायां लुङ्यस्यतिवक्तीति च्लेरङादेशः पा० ३. १. ५२। 'वच उम्' पा० ७. ४. २०।

ऊ for उ—Ind. = also ; for long vowel in Saṁhitā *see* Sāy's addl. notes above. 'सु' = Ind. सुष्ठु—well, adv. modifiing 'प्रवोचः'।

सनिम्—सन् ( षण दाने, *to give, to win.* 8.u. ) aff. इन् uṇ iv. 140 ) = सनि, accus. sg. दानम् offering, here, oblation. Pt. S. Sāmaśramī erroneously refers to the rule 'छन्दसि वनसनरक्षिमथाम्' Pāṇ. iii. 2. 27. in the formation of this word. SV. *Bib. Ind.* P. 137. गोषाता, गोषणि (the giver of cows), साति are drvd. from this rt (सन्)। cf. अभ्रातेव पुंस एति······सनये धनानाम्······उषा······Uṣā ( Dawn )......appears......for the acquisition of wealth. Ṛ V. i. 124. 7. *Grifth* meant by this—'good fortune'.

नव्यांसम्—laudable, praiseworthy ; dr. rt. नु (स्तुतौ, *to praise* 2. p.) + अप् ( ऋदोरप्, पा० ३.३.५७ )—नव—com. dg. ईयस्, ईकारलोपश्छान्दसः। That which is new, is ever praised.

गायत्रम्—rt. गै ( *to sing.* 1. p. )—शतृ—गायत्, तं त्रायते (त्रै + कः)—the hymn which guards the singer. 'गायत्रं गायतेः स्तुतिकर्मणः'—Nir. 1. 8. Durga derives it—स्तुत्यर्थस्य गैधातोः ( Ngh. 3. 14. ) करणे ष्ट्रन्, गायत्यनेनेति गायत्रम्।

प्र वोचः—प्र + वच् ( परिभाषणे, *to speak* 2.p. )—लुङ् (Aor)—2. sg ; aug. अ is not placed before the verb in लुङ् by 'बहुलं छन्दस्यमाङ्योगेऽपि' Pāṇ. vi. 4. 76. Aor. is here in imperative sense—छन्दसि लुङ्लङ्लिटः Pāṇ. iii. 4. 6. *Vide* : extract from Sāy's com. quoted above.

———

अग्निवंश्यो गोपवन ऋषिः। एकं साम गौपवनम्, गोपवनश्चर्षिः (क)।

१ २ ३ १ २ ३ १र २र
तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः।
१ २ ३ १ २
स पावक श्रुधी हवम् ॥६॥२६॥

तम्। त्वा। गोपवनः। गिरा। जनिष्ठत्। अग्ने। अङ्गिरः। सः। पावकः। श्रुधि। हवम् ॥९॥

(क) 'गौपवनस्य'—आ० ब्रा०।

भाष्यसारः । हे अग्ने ! तं त्वाम् गोपवनः एतन्नामक ऋषिः, गिरा स्तुत्या जनिष्टत् जनयति । हे अङ्गिरः पावक, सः त्वम्—हवम् आह्वानम् श्रुधि शृणु ॥ ६ ॥

O Agni, 'Gopabana' (the sage) has generated thee, with the song of praise ; O purifier, Angiras (*lit.* going or present everywhere)—listen to (his) invocation.—9.

**सा०-भा० ।** हे 'अग्ने ! 'तं' 'त्वा' त्वां 'गोपवनः' ऋषिः 'गिरा' स्तुत्या 'जनिष्टत्' जनयति वर्धयति । स्तूयमाना हि देवता वर्धन्ते । तादृशाऽग्ने 'अङ्गिरः' सर्वत्र गन्तः, अङ्गिरसां पुत्र वा हे 'पावक' शोधक ! गोपवनस्य हवम् आह्वानं, 'श्रुधि' शृणु ॥ ६ ॥

६ । ऋ० सं० ८ म० ७४ सू० ११ ऋ० ।

ṚV. reads **'यं त्वा'** instead of **'तं त्वा'** and **'चनिष्ठत्'** instead of **'जनिष्टत्'** । There the meaning is—'Gopavana has made thee, the best bestower of food ( चनिष्ठत्—अतिशयेनान्नप्रदातारमकरोत्—सा० ) by prayer.

जनिष्टत्—अजनिष्ट । rt. जन् *to generate*, Aor. 3 sg. अडभावो वर्णव्यत्ययश्च—aug. अ is not prefixed to the verb, which is the general case with लुङ् ; also addition ( त् ) and alteration of letters ( ष्ठ for ष्ट )—peculiar to the Vedas.

अङ्गिरः *voc.*—'अङ्गति' गच्छति इति अगिधातोर्निष्पन्नं पदम्, 'अङ्गतेरसिरिकडागमश्च' uṇ. iv. 236. 'अङ्गारेष्वङ्गिराः, अङ्गारा अङ्कना अञ्चनाः'—इति यास्कः, Angiras was born in charcoals, Nir. 3. 17. Durgācārya, in his *Nirukta Vivṛti*, records a story, viz : यजतः प्रजापतेः काश्चिदभिरूपां वधूमप्सरसो वा पश्यतः सहसा रेतश्चस्कन्द, तामनुधावतस्तदग्नौ पपात, ततो भृगुरभवदिति पुराणेष्वाख्यायते । तथा च ब्राह्मे---'देवस्य वितते यज्ञे महतो वरुणस्य च । ब्रह्मणोऽप्सरसो दृष्ट्वा रेतश्चस्कन्द कर्हिचित् । तत् प्रतीत्य समर्थेन स जुहाव विभावसौ । ततो भृगुः समभवदङ्गारेष्वङ्गिरास्तथा' ॥ the legend is that Prajāpati took his own seminal fluid, and sacrificed. From the blazing fire, Bhṛgu was born and *Angiras* rose from the ashes. "ऐतरेयिणोऽपि प्रजापतिदुहितृच्यानोपाख्याने समामनन्ति—ये अङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति, तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम् ।"---the sage *Aṅgiras* sprang from the burning charcoal, which is identical with fire (Agni), thus Agni, in the form of live coal, being the origin of him is called after him and has got the epithet *Aṅgiras.*—Sāy.'s com. on ṚV. i. 1. 6.

पावक *voc.*—पूञ्+ण्वुल् ( अक ) Pāṇ. iii. 1. 133. sanctifier, purifier ; 'refulgent' —*Grfth.*

हवम्—हु or ह्वे + अप्—call, invocation.

श्रुधि—rt. श्रु imp 2. sg. हि is changed to धि by 'श्रु-शृणु-पॄ-कृ-वृभ्यश्छन्दसि' Pāṇ. vi. 4. 102. शप् is added by 'व्यत्ययो बहुलम् ib. iii. 1. 85. शप् drops by बहुलं छन्दसि ii. 4. 73.—**काशिका ।** In Saṁhitā Text 'श्रुधी'—the final इ has been lengthened by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137.

---

गौतमो वामदेव ऋषिः। एकं सूर्य-साम, वसुरोचिः सूर्यवर्चा ऋषिः। गायत्रीच्छन्दः। अग्निर्देवता। पशुपर्यग्निकरणे, प्रातरनुवाके आग्नेयक्रतोराश्विनशस्त्रे विनियोगः।

२ ३ १ २ ३ २ ३ २ ३ १ २
परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्।
२ ३ १ २ ३ १ २
दधद्रत्नानि दाशुषे ॥१०॥३०॥

परि। वाजऽपतिः। कविः। अग्निः। हव्यानि। अक्रमीत्। दधत्। रत्नानि। दाशुषे ॥१०॥

भाष्यसारः। **वाजपतिः अन्नपतिः, कविः क्रान्तदर्शी मेधावी वा, अग्निः दाशुषे हवि-र्दत्तवते यजमानाय, रत्नानि—रमणीयानि धनानि, दधत्—प्रयच्छन्, हव्यानि पर्यक्रमीत् व्याप्नोति साकल्येनाङ्गीकरोति ॥ १० ॥**

Agni,—the lord of food or strength, wise (or having insight into things beyond senses), holding out the best riches to the offerer of oblations i.e. the sacrificer;—accepts, in full, the offerings (for conveyance to the gods).—10.

**सा०-भा०।** 'वाजपतिः' वाजानामन्नानां पतिः पालकः। "'परि वाजपतिः कवि'रित्येष हि वाजानां पति''रिति ब्राह्मणम्—ऐ० ब्रा० २-५। 'कविः' क्रान्तदर्शी मेधावी वा। 'दाशुषे' हवि-र्दत्तवते यजमानाय 'रत्नानि' रमणीयानि धनानि 'दधत्' प्रयच्छन् 'अग्निः' 'हव्यानि' हवींषि 'पर्यक्रमीत्' परि-क्रामति व्याप्नोतीत्यर्थः ॥ १० ॥

**१०। ऋ० स० ४ म० १५ सू ३ ऋ०।**

'वाज-पतिः'—'वज्यते निगम्यते सर्वैरिति वाजोऽन्नम्', it is sought by all. वज् ( गतौ, *to go* )—घञ्। कुत्वप्रतिषेधः ( ज is not changed to ग ) Pāṇ. vii. 3. 60. 'वाज इत्यन्ननाम' Ngh. 2. 7. or fr. rt. वज्, *to be strong*. वाजयतीति वाजः—*Vāja* means food, because it strengthens. 'The lord of strength'—*Grfth.*

'कविः'—rt. कु (शब्दे, *to sound*)—इ uṇ. 4. 139.—मेधावी, wise—Ngh. 3. 15.—'The sage'—*Grfth*. 'कविर्मेधावी क्रान्तदर्शनो भवति कवतेर्वा'—*Kavi* (wise) is so called because his presence is desired ( rt. *Kam* )—L. S. (This is apparently an inaccurate rendering, based on no authority) ;—having insight or knowledge of things beyond the reach of senses or it is dervd. fr. rt. *Kav* ( to praise ). Nir. 12. 13. cf. विश्वा रूपाणि प्रतिमुञ्चते कविः—the wise one puts on all forms. ṚV. V. 81. 2. VS. 12. 3.

'दाशुषे'—*stem* दाश्वस् dat. sg. dr. rt. दाश् ( दाने, *to give* ) with aff. क्वसु—anomalously formed. 'दाश्वान् साह्वान् मीढ्वांश्च' Pāṇ. vi. 1. 12. अद्वित्वम्, अनिट्त्वञ्च।—The sacrificer or the offerer of oblation, चतुर्थ्येकवचने 'वसोः सम्प्रसारणम्' ( पा० ६।४।१३१ )।

'रत्नानि'—'रत्नमिति धननाम—Ngh. 2. 10. rt. रम्+णिच्+न, 'रमेस्त च' uṇ. iii. 14. म of the rt. changed to त। रमयति हर्षयतीति रत्नम्; wealth is called *ratna*, because it gladdens.

'पर्य्यक्रमीत्'—occupies, fully feasts upon परि—rt. क्रम्—*aor.* 3. sg.—in pres. sense. 'छन्दसि लुङ्लङ्लिटः' Pāṇ. iii. 4.6.

---

काण्वः प्रस्कण्व ऋषिः। एकं सूर्य-साम, वस्रोचिः सूर्यवर्चा वा ऋषिः। गायत्रीच्छन्दः। सूर्यो देवता। आश्विनशस्त्रे सौर्यक्रतौ सूर्योपस्थाने च विनियोगः।

२ ३ २ ३ १ २ ३ १ २ ३ १ २
उदु त्यं जातवेदसं देवं वहन्ति केतवः।
३ १२ २२ ३ १ २
दृशे विश्वाय सूर्यम्॥११॥३१॥

उत्। ऊम्इति। त्यम्। जातऽवेदसम्। देवम्। वहन्ति। केतवः। दृशे। विश्वाय। सूर्यम्॥११॥

भाष्यसारः। केतवः—प्रज्ञापकाः सूर्याश्वाः सूर्यरश्मयो वा, त्यं—तं प्रसिद्धम्, जातवेदसम् देवं सूर्यम्, विश्वाय—निखिलभूतानां कृते, दृशे—द्रष्टुं सन्दर्शनार्थं,—यथा सर्वे जनाः पश्येयुः तथा—उद्वहन्ति ऊर्ध्वं वहन्ति इत्यर्थः॥ ११॥

His harbingers (the horses or the rays) carry the resplendent sun overhead,—who knows all the living beings,—that all may have him in sight.—11.

**सा०-भा०।** इयं सौरी। आग्नेयसमाख्यानं छत्रिणो गच्छन्तीतिवत् प्राणभृत उपदधातीतिवच्च द्रष्टव्यम्। 'केतवः' प्रज्ञापकाः सूर्याश्वाः यद्वा सूर्यरश्मयः 'सूर्यम्' सर्वस्य प्रेरकमादित्यम् उद्वहन्ति, ऊर्ध्वं वहन्ति। 'उ' इति पादपूरणः। उक्तञ्च—'मिताक्षरेष्वनर्थकाः कमीमिद्विति'—नि० १,९। किमर्थम्? 'विश्वाय' विश्वस्मै सर्वस्मै भुवनाय 'दृशे' द्रष्टुम्। यथा सर्वे जनाः सूर्यं पश्यन्ति तथोर्ध्वं वहन्तीत्यर्थः। कीदृशं सूर्यम्? 'त्यं' तं प्रसिद्धम्, 'जातवेदसं' जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा, 'देवं' द्योतमानम्। अत्र निरुक्तम्—'उद्वहन्ति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां सन्दर्शनाय सूर्यम्' इति—नि० १२,१५॥ ११॥

११। ऋ० स० १म० ५० सू० १ ऋ०।

Sāy.'s addl. notes in his com. on the Ṛ V. mantra—जातवेदसं—जातानि वेत्तीति जातवेदाः। असुन्। 'दृशे'—'दृशे विख्ये च' पा० ३.४.११. तुमर्थे निपातितः। 'सूर्यम्'—राजसूयसूर्येत्यादिना षू प्रेरणे इत्यस्मात् क्यपि रुडागमसहितो निपातितः।

'उ'—*Indec.* has no sense, only used to fill up the metrical deficit (पादपूरणे)। Sāy. has quoted from Nir. 1. 9. in support of his statement. It means—in metrical verses, कम्, ईम्, इत्, उ have generally no meaning but are used in पादपूरण।

'जातवेदसम्'—जात—विद्+असुन्। "जातवेदाः कस्मात्? जातानि वेद ; जातानि वैनं विदुः ; जाते जाते विद्यत इति वा,—जातवित्तो वा" ;—he who knows all created beings, is known to all beings, or pervades every being etc. Nir. 7. 19. As to the word वेदस् in the sense of wealth, *vide* : notes on विश्ववेदसम्, SV. 1. 3. and वेद्यम् ib. 1. 5.

'त्यम्'—pron. 'त्यत्' masc. accus. sg. *Vide* note on 1. 16.

'केतवः'—rt. चाय् ( निशामने, *to note, to observe*, 1. u. ) with aff. तु, चायस्थाने 'की'-भावः uṇ. 1. 74.—केतुः ; nom. pl.—heralds, harbingers : *refers to* the rays that announce the sun's rise.

'विश्वाय'—dat. sg. for विश्वस्मै ; see Sāy.'s addl. notes quoted above. व्यत्ययेन असर्वनामता—not declined like pron. Guṇ. takes विश्वाय for विश्वस्य ( षष्ठ्यर्थे चतुर्थी ) and connects with दृशे, mg. विश्वस्य दर्शनाय, विश्वप्रकाशनाय—Ch.M.bh. 5. 13. 'दृशे'—*see* Sāy.'s addl. notes quoted above, also note on SV. 1. 10. rt. दृश्—aff. के ( तुमर्थे ) by 'दृशे विख्ये च' Pāṇ. iii. 4. 11.

'सूर्यम्'—The sun, here, is identified with Agni ; dr. rt. सृ *to go* or सू *to send*—क्यप्, 'राजसूयसूर्य'० Pāṇ. iii. 1. 114. निपातनात् साधुः। सूर्यः सर्त्तेर्वा, सुवतेर्वा स्वीर्यतेर्वा—*Sūrya* is dervd fr *Sṛ* to move, fr *Sū* to impel, or fr. *svīr* to promote well. Nir. 12. 14. cf. Bṛh. D. vii. 128. 'सूर्यः सरति भूतेषु, सुवीरयति तानि वा, again Patañjali's Mahābhāṣya. vol II. P. 86. 'सूसर्तिभ्यां सर्तेरुत्वं सुवतेर्वा रुडागमः। सरणाद्वा सुवतेर्वा कर्मणीति सूर्यः।

---

**काण्वो मेधातिथिर्ऋषिः। कावं साम, वसुरोचिर्ऋषिः (क)। गायत्रीच्छन्दः। अग्निर्देवता। अभिलषितलोकप्राप्तौ विनियोगः (ख)।**

३ २ ३ १र २र ३ १ २ ३ २
# कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे।
३ १ २ ३ १ २
# देवममीवचातनम् ॥१२॥३२॥

कविम्। अग्निम्। उप। स्तुहि। सत्यऽधर्माणम्। अध्वरे। देवम्। अमीवऽचातनम् ॥१२॥

भाष्यसारः। **हे स्तोतृ-गण ! अध्वरे—यज्ञे, कविं—मेधाविनम्, सत्यधर्माणम्—सत्यस्वरूपम्, देवम् अमीव-चातनम्—अमीवानां हिंसकानां शत्रूणां रोगाणां वा नाशकम्, अग्निम् उप-स्तुहि—उपेत्य स्तुतिं कुरु ॥१२॥**

(क) 'कावञ्च वसुरोचिषः'—आ० ब्रा०।

(ख) 'कावं भवति लोकविन्दु साम, विन्दते लोकं कावेन तुष्टुवानः'—ता० म० ब्रा० ११।५।२४, २५।

(O singers)—glorify, in the sacrifice,—Agni, the wise, resplendent,—ever true to his law, the destroyer of all diseases or the injuring enemies.—12.

**सा०-भा० । हे स्तोतृ-सङ्घ ! 'अध्वरे' क्रतौ 'अग्निम्' 'उप-स्तुहि' उपेत्य स्तुतिं कुरु । कीदृशम् ? 'कविं' मेधाविनं 'सत्यधर्माणम्' सत्यवचनरूपेण धर्मेणापेतं 'देवं' द्योतमानम् 'अमीव-चातनम्' अमीवानां हिंसकानां शत्रूणां रोगाणां वा घातकम् ॥ १२ ॥**

**१२। ऋ० सं १ म० १२ सू० ७ ऋ० ।**

Say's addl. notes in his com. on the RV. Mantra rfd. to above—'सत्यं धर्मो यस्येति सत्यधर्म्मा 'धर्मादनिच् केवलात्' पा० ५।४।१२४ इत्यनिच् समासान्तः। अमीव-शब्दोऽम रोग इत्यस्मात्—'शेव-यह्व-जिह्वा-ग्रीवाप्वामीवाः' उ० १।१५४ इति वन्-प्रत्यये ईडागमो निपातितः (rt. अम्—aff. वन्)। चातनं—चते चदे याचने चेत्यस्माद्धिंसार्थात् णिजन्तात् नन्द्यादित्वात् ल्युः पा० ३।१।१३४, अनादेशः पा० ७।१।१। णेरनिटीति णिलोपः। अमीवानां चातनमिति समासः।'

'कविम्'—See note on SV. I. 30.

'सत्यधर्म्माणम्'—accus. sg.—an epithet referring to Agni ; for gram. *see* Say.'s addl. notes ; Agni is so called. as he is true in rewarding the worshippers. *Vide* also the verse SV. I.42. where Agni is called ऋतः (true).

'अमीव-चातनम्'—rt. अम् (रोगे, *to ail* 3. u. *Vide*: notes on अमः SV. I. 11.) —with aff. वन् uṇ. I. 154. For dr. see Say.'s addl. notes above. चातनम्—rt. चत्—णिच् ल्यु (अन)—णिलोपः, Pāṇ. vi. 4.51. अमीवं रोगं चातयति नाशयति इति,—one who removes or cures all diseases.

---

**अम्बरीषनृपतेः पुत्रः 'सिन्धुद्वीप'स्त्वष्टृपुत्रस्त्रिशिरा वा ऋषिः, त्रित आप्त्यो वा । द्वे सामनी, काशीते कापोते, वासुमन्दे वा नाम । सूर्यवर्चाः पारावतः पुत्रो वसुरोचिः काशीतः कापोतः वसुमन्दो वा ऋषिः (क) । गायत्रीच्छन्दः । आपो देवताः । प्रातरनुवाके आश्विनशस्त्रे विनियोगः । पुनश्च उदीच्यकर्मणि ग्रह-होमप्रकरणे शनैश्चरस्य होमे, स्नानप्रकरणे मार्जने, श्राद्धप्रकरणे पवित्रासेचने च विनियोगः(ख) ।**

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शं नो देवीरभिष्टये शं नो भवन्तु पीतये ।
२उ ३ १ २
शंयोरभिस्रवन्तु नः ॥१३॥३३॥

---

(क) 'सूर्यवर्चसः सामनी द्वे, वसुरोचिषो वा, पारावते, काशीते वा कापोते वा वासुमन्दे वा'—आ० ब्रा० ।

(ख) छा०म०भा०—२, १६, ६, १९, ४८ ; ८, २२ ।

शम् । नः । देवीः । अभिष्टये । शम् । नः । भवन्तु । पीतये । शंऽयोः । अभि । स्रवन्तु । नः ॥१३॥

भाष्यसारः । **देवीः—देव्यः आपः, अस्माकम् अभिष्टये—यज्ञाय, शं—सुखकरा भवन्तु । अपि च अस्माकं पीतये—पानाय, शं—सुखकरा भवन्तु, तथा शं—रोगाणां प्रशमनं, योः यावनम्—रोगाणां शरीरात् पृथक्-करणम् अपनोदनं च कुर्वन्तु, आरोग्यं विधाय शान्तिं विदधतु, अपि च अस्माकम् अभि—उपरि, स्रवन्तु—सिञ्चन्तु ॥ १३ ॥**

May the deities—(the waters) be gracious for our sacrifice, be gracious for our drinking,—be sprinkled on us to our health and happiness.—13.

**सा०-भा० । 'नः' अस्माकं पापाऽपनोदद्वारेण 'शं' सुखं भवन्तु । 'देवीः' देव्यः आपः 'अभिष्टये' अस्मद्यज्ञाय भवन्तु यज्ञाङ्गभावाय च भवन्तु इत्यर्थः । अपि च न अस्मत्सम्बन्धिने 'पीतये' पानाय च 'शं' सुखं भवन्तु । तथा—'शंयोः' उत्पन्नानां रोगाणां शमनम्, यावनम् अनुत्पन्नानां पृथक्करणं च कुर्वन्तु । अपि च 'नः' अस्माकम् 'अभि' उपरि 'स्रवन्तु' शुद्ध्यर्थं सिञ्चन्तु ॥ १३ ॥**

**१३ । ऋ० सं १० म० ६ सू० ४ ऋ० ।** R̥V. reads **'आपो भवन्तु'** instead of **शन्नो भवन्तु ।**

Guṇa-viṣṇu explains this verse somewhat differently, viz.—'देवीः' देव्यः स्तुत्यादिविषयाः, आपः 'अभिष्टये' उपचयार्थं, 'पीतये' पानाय च, 'नः' अस्माकम्, 'शं' कल्याण्यो भवन्तु, किंच, 'शंयोः' कल्याणयोगाय च भवन्तु'—may the waters, worthy of praise or worship,—be full of blessings,—for our drink, for our growth or prosperity and for general welfare.—Ch.M.Bh. 2. 16.

'देवीः'—for देव्यः, rfs to the deified Waters, the deities to whom the original hymn is addressed. 'वा छन्दसि' (Pāṇ. vi. 1. 106.) इति जसि दीर्घस्वरस्य पूर्व-सवर्णो वा, पक्षे देव्यः ।

'अभिष्टये'—अभि—rt. यज् (to sacrifice)—भावे क्ति = अभि + इष्टि, शकन्ध्वादित्वात् सवर्णदीर्घाभावः । इष्टिरिति यज्ञनाम—Ngh. 3. 17 or it may be dervd as अभि—स्त्यै (शब्द-सङ्घातयोः *to speak or to swell*)—क्विप्, 'स्त्यः प्रपूर्वस्य' ( पा० ६।१।२३ ) इति योगविभागात् सम्प्रसारणम् = अभिष्टि, ४र्थी तादर्थ्ये, mg.—उपचयार्थम्—**गुण०** का०म०भा० २।१६ । '*to lend us help*'—*Grfth.* For the word अभिष्टि cf. 'मित्राय पञ्च येमिरे जनाः अभिष्टिशवसे' R̥V. iii. 59.8. Sāy. derives it, there, fr. rt. इष् + क्तिन्, by 'मन्त्रे वृषेष०' Pāṇ. iii. 3.96. अभिष्टि, elsewhere, means desired object cf. शतेन नो अभिष्टिभिः···(addressed to Vāyu).—Come with hundred-fold desired objects. R̥V. iv. 46. 2.

'शम्' ( अव्ययम् ) 'शमिति सुखनाम'—Nir. 3. 13.
'पीतये' = पा० (*to drink*) क्तिन्—आ-स्थाने ई—Pāṇ. vi. 4 66.

'शंयोः'—शं+युम्, by 'कंशंभ्याम्' (पा० ५।२।१३८) षष्ठी चतुर्थ्यर्थे,—कल्याणयोगाय,—for welfare—Guṇ. Ch.M.bh. 'शंयु.—सुखयु.',—coming-in of peace or bliss, Nir. 4. 21; also शमनं च रोगाणां यावनं च भयानाम्—removal of diseases and elimination of fears or dangers. *ibid.* cf. 'अथा नः शंयोररपो दधात—now bestow on us bliss and sinlessness. ṚV. X. 15. 4; Vs. 19. 55.

---

कविपुत्र उशना ऋषिः। द्वे सामनी मनाज्यमिति नाम, आङ्गिरसोगौतर्षिर्गौतमो वा (क)। गायत्रीच्छन्दः। अग्निर्देवता। प्रातरनुवाके आग्नेयक्रतोराश्विनशस्त्रे विनियोगः।

१ २ ३ १र २र ३ १ २
**कस्य नूनं परीणसि धियो जिन्वसि सत्पते।**
१ २ ३ १ २ ३ १ २
**गोषाता यस्य ते गिरः॥ १४॥ ३४॥**

कस्य। नूनम्। परीणसि। धियः। जिन्वसि। सत्पते। गोषाता। यस्य। ते। गिरः॥ १४॥

भाष्यसारः। हे सतां पालक अग्ने, यस्य तव गिरः—स्तुतयः, गोषाता—गोषातौ गवां लाभे भवन्ति। स त्वम् नूनम्—इदानीं, कस्य—कीदृशस्य जनस्य, परीणसि—परीणसः—बह्वीः, धियः—कर्माणि, जिन्वसि—प्रीणयसि॥ १४॥

O lord of the good,—prayers to whom are conducive to the gain of cows (cattle),—whose liberal ceremonies dost thou now entertain or with whose sacrificial performances art thou now pleased?—14.

**सा०-भा०।** हे 'सत्पते' सतां पते, अग्ने, 'नूनम्' इदानीं 'कस्य' कीदृशस्य जनस्य 'परीणसि' बहूनि 'धियः' कर्माणि 'जिन्वसि' प्रीणयसि। 'यस्य' 'ते' तव सम्बन्धिन्यः 'गिरः' स्तुतयः 'गोषाता' गोषातौ गवां लाभे भवन्तु खलु। तस्मात्त्वं कुत्र तिष्ठसि? अस्माकमिदानीं गवेच्छा प्रवर्त्तते। यद्वा हे अग्ने, त्वमिदानीं कस्य कर्माणि प्रीणयसि? न कस्यापीत्यर्थः। अस्माकमेव कर्माणि प्रीणयेति भावः॥ १४॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमस्याध्यायस्य तृतीयः खण्डः।

१४। ऋ० सं० ८ म० ८४ सू० ७ ऋ०। ṚV. reads 'परीणसः' instead of 'परीणसि' and 'दम्पते' (the lord of the house) instead of सत्पते।

'परीणसि'—व्यत्ययेन रया-स्थाने ङ्गी, परीणसेति बहुनाम Ngh. 3. 1. here means abundant or liberal.

---

(क)। 'गोराङ्गिरसस्य सामनी द्वे गौतमस्य वा मनाज्ये—का० बा०।

'जिन्वसि'—*Vide* note on जिन्वति SV. 1. 27.

'गोषाता' loc. sg.—for गोषातौ, *stem* गोषाति ; fr. षण् (संभक्तौ—to distribute. 1.), or षणु ( दाने to give 8. u. ) + क्ति, आकारोऽन्तादेशः—'जनसनखनां सन्-झलोः' Pāṇ. vi. 4. 42. —सातिः दानम्। गवां सातिः—गोषातिः, ( स *becomes* ष ) by 'सनोतेरनः' Pāṇ. viii. 3. 108. गोषातौ इति ७मीविभक्ति-स्थाने 'सुपां सुलुक्०' पा० ७।१।३९ इति डा। For the rt. *vide* : notes on सनिम् SV. 1. 28.

---

अथ प्रथमप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः।

बार्हस्पत्यंस्तृणपाणिः शंयुर्ऋषिः। चत्वारि सामानि। द्वे सामनी भरद्वाजस्य सम्बन्धिनी 'उपहवौ' एतन्नामके, तृतीयं साम श्नौष्टीगवं श्नुष्टिगुर्नाम ऋषिः, चतुर्थं साम वैश्वानराख्यस्याग्नेः स्वभूतं यज्ञायज्ञीयं, भरद्वाजस्य ऋषेः सम्बन्धि वा (क)। बृहतीच्छन्दः (ख)। अग्निर्देवता। यज्ञे यज्ञे संस्तुतेऽग्नौ यज्ञस्य प्रतिष्ठायां विनियोगः(ग)।

२ १ २ ३ १ २ ३ १ २ ३ १ २
**यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे।**
१ २ २ २ ३ १ २ ३ १ २ ३ २ ३ १र २र
**प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥१॥३५॥**

यज्ञा। यज्ञा। वः। अग्नये। गिरा। च। दक्षसे। प्र। प्र। वयम्। अमृतम्। जातऽवेदसम्। प्रियम्। मित्रम्। न। शंसिषम् ॥ १ ॥

भाष्यसारः। हे स्तोतारः, वः--यूयम् विभक्तिव्यत्ययः, यज्ञा यज्ञा—यज्ञे यज्ञे, प्रतियज्ञं दक्षसे—प्रवृद्धाय अग्नये, गिरा गिरा—स्तुत्या, संभजत। वयम् अपि अमृतं--मरण-रहितम्, जातवेदसं—जातानां वेदितारम् वा, मित्रं न—सखि-स्वरूपं प्रियम् अग्निम्, प्र प्र पादपूरणे, शंसिषम्—प्रशंसामः ॥ १ ॥

(O praisers)—adore, with songs of praise, mighty Agni, in every sacrifice and let us glorify immortal Agni,—the knower of all the born beings,—like an affectionate friend.—1.

---

(क) 'भरद्वाजस्योपहवौ द्वौ श्नौष्टीगवं तृतीयमग्नेर्वैश्वानरस्य यज्ञायज्ञीयं भरद्वाजस्य वा'—आ० ब्रा०।

(ख)। 'बृहती जागतस्त्रयश्च गायत्राः'—पि० छ० सू० ३अ० २६सू०। The *Bṛhatī* metre has, in the first half,—two lines each having 8 syllables ; the 3rd pāda or foot has 12 syllables, and 4th pāda has, again, 8 syllables,—altogether 36 syllables (8 + 8 + 12 + 8) in four pādas.

(ग) "यज्ञा यज्ञा वो अग्नय इत्यग्निर्वै यज्ञो यज्ञ एव तद् यज्ञं प्रतिष्ठापयति"—ता० म० ब्रा० ११।५।२।

**सा०-भा० ।** हे स्तोतारः ! 'वः' यूयं 'यज्ञा यज्ञा' यज्ञे यज्ञे सर्वेषु यागेषु 'दक्षसे' प्रवृद्धाय 'अग्नये' 'गिरा गिरा' स्तुतिरूपया वाचा स्तोत्रं कुरुतेति शेषः । 'च'-शब्दो भिन्नक्रमो 'वः' इत्यस्मात्परो द्रष्टव्यः । यूयं च स्तोत्रं कुरुत, वयमपि तमग्निं 'प्र प्र शंसिषम्' 'प्रसमुपोदः पादपूरणे' ( पा० ८,१,६ ) इति प्र-शब्दस्य द्विरुक्तिः पादपूरणार्था । व्यत्ययेनैकवचनम् (पा० ३,४,९८)। छान्दसो लुङ्—प्रशंसामः । कीदृशम् ? 'अमृतं' मरण-रहितम् । 'जातवेदसं' जातानां वेदितारं जात-प्रज्ञानं जात-धनं वा । 'मित्रं न' सखि-भूतमिव प्रियमनुकूलम् । यद्वा व्यत्ययेन त्वमित्यस्य वसादेशः ( पा०३,४,९८ ) । 'अग्नये' इति च कर्मणि चतुर्थी—'क्रियाग्रहणमपि कर्त्तव्यम्' इति कर्मणः सम्प्रदानत्वात् । च-शब्दश्च णिति निपातश्चेदर्थे वर्त्तते । दक्षस इति दक्षेर्वृद्धिकर्मणः अन्तर्भावित-ण्यर्थाल्लटि रूपम् । 'चण्योगान्निपातैर्यद्‌युयदिहन्त' इति निघातप्रतिषेधः । तत्रायमर्थः—हे स्तोतस्त्वं यज्ञे इममग्निं गिरा स्तुत्या दक्षसे च वर्धयसि चेत्, वयमपि अमृतत्वादि-गुणकं तं प्रशंसामः ॥ १ ॥

१ । ऋ० स० ६म० ४८ सू० १ऋ० । उ० आर्चि० १, १, २०, १ ।

'यज्ञा यज्ञा'—यज्ञे यज्ञे, 'सुपां सुलुक्' पा ७।१।३९ इति ७मी-विभक्तिस्थाने डाऽऽदेशः । वीप्सायाम् द्वित्वम् by 'नित्यवीप्सयोः' Pāṇ. viii. 1. 4.

'वः'—यूयम् *vide* note on SV. 1. 21.

'दक्षसे'—दक्ष् ( वृद्धौ, *to rise* ) + असुन् = दक्षस्, dat. sg. 'दक्षतेः समर्धयतिकर्मणः' Nir. 1. 7. to cause to accomplish. दक्षिणा is a derivative of this rt. दक्षो बलनाम Ngh. 2. 9. Sāy. assigns another explanation to this verse, in which case he takes दक्षसे as a finite verb, in pres. tense. 2. sg. instead of as an epithet of अग्नये ; the mg. in that case, is—'O worshipper, if thou dost magnify i. e. kindle ( दक्षसे—वर्धयसि ) Agni, then we shall laud him'.

'प्र प्र'—the double use of प्र is for filling up the metrical deficit (see Sāy. above). For double use of प्र, सम्, उप, उद् in making up metrical deficit, *Vide* : examples—प्र प्रायमग्निर्भरतस्य शृण्वे । उपोप मे परामृश । किं नोदुदु हर्षसे दातवा उ । —काशिका ।

'शंसिषम्'—प्रशंसामः, rt. शंस् ( स्तुतौ, *to praise* ) + लुङ्, (aor.) 1. sg. Singular use in plural sense by व्यत्यय or Vedic anomaly, so also लुङ् (aor.) for लट् (pres.). Pāṇ. iii. 4. 6.

'जातवेदसम्'—*vide*. note on SV. 1. 31.

प्रगाथपुत्रो भर्ग ऋषिः । सामत्रयम्, 'कार्त्तयश'-नामकं 'कार्त्तवेश'-नामकं वा, द्वितीयं नार्मेधं नृमेधो नाम ऋषिस्तत्सम्बन्धि, तृतीयं साम कार्त्तवेशनामकमेव (क)। बृहतीच्छन्दः। अग्निर्देवता।

३ १ २ ३ १२ ३ २ २ ३ १ २
**पाहि नो अग्न एकया पाह्यू३त द्वितीयया।**
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
**पाहि गीर्भिस्तिसृभिरूर्जांपते पाहि चतसृभिर्वसो ॥२॥३६॥**

पाहि । नः । अग्ने । एकया । पाहि । उत । द्वितीयया । पाहि गीर्भिः । तिसृभिः । ऊर्जाम्ऽपते । पाहि । चतसृभिः । वसो ॥ २ ॥

भाष्यसारः । **हे ऊर्जाम्पते—अन्नस्वामिन् बलाधिपते वा, वसो—धन-स्वरूप, धनप्रद अग्ने! अस्मान् एकया ऋग्रूपया गिरा, पाहि—रक्ष, द्वितीयया ऋचा—यजुर्लक्षणया गिरा,—पाहि। तिसृभिः गीर्भिः—स्तुतिभिः ऋग्-यजुः-सामलक्षणाभिः, अभिष्टुतः सन् पाहि। चतसृभिः गीर्भि—ऋग्-यजुः-सामाथर्व-लक्षणाभिरिति केचित्, अभिष्टुतस्त्वम् नः अस्मान् पाहि ॥ २ ॥**

O Agni, protect us by one (Ṛk or song of praise), protect us by the second; O lord of might or food, protect us by three hymns, O (source of) wealth, protect us by four-fold prayers.—2.

**सा०-भा०। हे 'अग्ने'! 'नः' अस्मान् 'एकया' ऋचा गिरा 'पाहि' रक्ष। 'उत' अपि च। 'द्वितीयया' ऋचा 'पाहि' पालय। 'तिसृभिः' 'गीर्भिः' स्तुतिभिः 'ऊर्जाम्' अन्नानां बलानां वा हे 'पते' स्वामिन्, तथा 'पाहि'। हे 'वसो!' वासक (निवास-हेतु-भूत) अग्ने! 'चतसृभिः' गीर्भिः 'पाहि' ॥ २ ॥**

**२। ऋ० स० ८म० ६० सू० ९ऋ०। उ० आर्चि० ७, २, ४, १। यजुः २७, ४३।**

'एकया'—'ऋचा'—'by one *Ṛk* or prayer'—Sāy. 'by one song'—*Grfth*, by the Ṛg-veda (according to Viv).

'द्वितीयया'—by the second '*Ṛk*'—prayer or song—Sāy. by the Yajur-Veda (according to Vivaraṇa).

'तिसृभिः'—'by the three songs or hymns'—by the three Vedas—the Ṛg-Veda, Yajur-Veda and Sāma-Veda (according to Viv.).

'चतसृभिः'—'by four hymns or prayers'—by the four Vedas—the Ṛg-Veda, Yajur-Veda, Sāma-Veda and Atharva-Veda. Mahīdhar explains the four as the Ṛk, Yajus, Sāman and Nigada.

(क) 'कार्त्तयशं च कार्त्तवेशं च नार्मेधं च कार्त्तवेशं चैव'—आ० ब्रा०।

'वसो'—*Voc.*—वसु धननाम—Ngh. 2. 10. वर्स आच्छादयति दुःखमिति—वस् + उः, uṇ. 1. 10; here rfs. to 'Agni', who is the source of wealth, so identified with it. *Vide*: note on 'विश्ववेदसम्' SV. 1. 3. Sāy. explains the word as *Vāsaka* i.e. the cause of living; without Agni, living being impossible (fr. rt. वस् *to live*); giver of dwellings—*Wils.*

ऊर्जाम्पते—*Voc.*—*stem* ऊर्जांपति। rt. ऊर्ज् (बल-प्राणनयोः, *to give strength or to make one live*) + क्विप् = ऊर्क् अन्नम्, ऊर्जयति प्राणयति बलं ददाति इति वा। 'ऊर्गिति अन्ननाम' Ngh. 2. 7. ऊर्जे—अन्नाय Nir. 9. 27. cf. आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन,—ye waters are indeed beneficent, as such yield us food ṚV. x. 9. 1. also ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्,—the nectarine food consisting of ghee, milk and boiled rice is offered. Ch.M.bh. 8. 48; चतस्र ऊर्जं दुदुहे पयांसि—she yields food and waters for the four quarters. ib. viii. 100. 10.

---

**बार्हस्पत्यस्तृणपाणिः शंयुऋ॑षिः। द्वे सामनी—भरद्वाजस्य पृश्निनी एतन्नामके (क)। बृहतीच्छन्दः। अग्निर्देवता।**

३ १ २ ३ १ २ ३ १ २ ३ १ २
## बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा।
३ १ २ ३ १ २ ३ १ २
## भरद्वाजे समिधानो यविष्ठ रेवत्पावक दीदिहि ॥ ३ ॥ ३७ ॥

बृहत्ऽभिः। अग्ने। अर्चिऽभिः। शुक्रेण। देव। शोचिषा। भरत्ऽवाजे। सम्ऽइधानः। यविष्ठ। रेवत्। पावक। दीदिहि ॥ ३ ॥

भाष्यसारः। **हे देव, यविष्ठ—युवतम, पावक अग्ने! त्वं शुक्रेण—समुज्वलेन, शोचिषा—तेजसा, भरद्वाजे एतन्नामके मुनौ, अन्नस्य विधातरि यजमाने वा—इति केचित्। समिधानः—समिध्यमानः सन्, बृहद्भिः—महद्भिः, अर्चिभिः—शिखाभिः, नः—अस्मदर्थं, रेवत्—धनयुक्तं यथा तथा, दीदिहि—दीप्यस्व ॥ ३ ॥**

O glowing, sanctifying, most juvenile Agni, with thy far-reaching flames,—being kindled to 'Bharadvāja' (the sage of that name or the sacrificer who offers food or oblation), shine with bright (pure) effulgence—putting forth riches to us.—3.

**सा०-भा०। हे 'देव!' दानादि-गुण-युक्त! 'यविष्ठ' युवतम! 'पावक' शोधक! अग्ने! 'शुक्रेण' निर्मलेन 'शोचिषा' तेजसा 'भरद्वाजे' अस्मद्भ्रातरि 'समिधानः' समिध्यमानस्त्वं 'बृहद्भिः' महद्भिः 'अर्चिभिः' तेजोभिः 'नः' अस्मदर्थं 'रेवत्' धनयुक्तं यथा भवति तथा 'दीदिहि' दीप्यस्व ॥ ३ ॥**

(क)। 'भरद्वाजस्य पृश्निनी द्वे—बा० ब्रा०।

३। ऋ० स० ६ म० ४८ सू० ७ ऋ०। ṚV. reads **'रेवन्नः शुक्र दीदिहि द्युमत् पावक'** instead of **'रेवत् पावक दीदिहि'**।

'बृहद्भिः'—rt. बृह् (वृद्धौ) or वृध् + अत्-प्रत्ययः, निपातनात् साधुः—'वर्त्तमाने पृषद्बृहन्महत्०' uṇ. ii. 81. बर्हति वर्धते वाऽसौ इति बृहत् = महत्। बृहदिति महतो नामधेयम्, Ngh. 3. 3.

'अर्चिभिः'—अर्च् (पूजायाम्, *to worship* 1. p.)—इसि, 'अर्चिशुचि०' uṇ. 2. 106.—'अर्चिरिति ज्वलतो नाम'—Ngh. 1. 17. Nir. 2. 28.

'शोचिषा'—rt. शुच् *to gleam* 1. u.—aff. इसि, 'अर्चिशुचि०' *Vide* note on SV. 1. 12. and अर्चि above.

'भरद्वाजे'—with regard to sage Bharadvāja, or भरद्वाज may mean यजमान (sacrificer), in that case the derivative sense is—'वाजम् अन्नं (Ngh. 2. 7.) भरति यः'। a sacrificer may be called भरद्वाज, as he offers oblation to gods through Agni.

'यविष्ठ'—*voc.*—यु + कनिन् uṇ. 1. 156.--युवन्, spv. dg. इष्ठन्, युव becomes यव by 'स्थूलदूरयुव०' Pāṇ. vi. 4. 156. Agni is often called अजरः—undecaying (SV. 1.24.), ever young.

'रेवत्'--रयि + मतुप्—रेवत्। रयि-स्थाने 'रे' by 'रयेर्मतौ बहुलम्'—कात्यायनः। मतोर्मस्य वः by छन्दसीरः Pāṇ. viii. 2. 15.

'दीदिहि'—rt. दिव् (*to shine*), imp. (लोट्) हि ; शपः श्लुः—बहुलं छन्दसि ii. 4. 76 ; तुजादीनाम् अभ्यासदीर्घः—Pāṇ. vi. 1. 7.

---

**मैत्रावरुणो वसिष्ठ ऋषिः। एकम् अङ्गिरसः पुत्रस्य उरोः साम (क)। बृहतीच्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे विनियोगः।**

१ २ ३ १ २ ३ १ २
**त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः।**
३ २ ३ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
**यन्तारो ये मघवानो जनानामूर्वं दयन्त गोनाम्॥४॥३८॥**

त्वे। अग्ने। सुऽआहुत। प्रियासः। सन्तु। सूरयः। यन्तारः। ये। मघऽवानः। जनानाम्। ऊर्वम्। दयन्त। गोनाम्॥ ४॥

भाष्यसारः। **हे अग्ने, स्वाहुत—सुष्ठु अभिहुत, त्वे—तव, सूरयः—स्तोतारः, ये च मघवानः—धनवन्तः, जनानां—प्राकृतानां मनुष्याणाम्, यन्तारः—नेतारो, गोनां—गवां उर्वं—समूहं, दयन्त (दयन्ते)—ददति वितरन्ति, ते तव प्रियासः प्रियाः भवन्तु॥ ४॥**

O Agni, well served with oblation or well addressed (by the sacrificers), may the singers of thy praise, who are also the rich leaders of men and who distribute multitude of cows as gifts,—be dear to thee.—4.

---

(क) 'उरोराङ्गिरसस्य साम'—आ० ब्रा०।

**सा०-भा०।** हे 'अग्ने'! 'स्वाहुत' यजमानैः सुष्ठु आहुत! 'त्वे' तव 'सूरयः' प्रेरकाः स्तोतारः 'प्रियासः' प्रियाः 'सन्तु' भवन्तु। किञ्च, 'ये' 'मघवानः' धनवन्तः 'यन्तारः' प्रदातारः जनानाम् अस्मदीयानाम्—'ऊर्वम्' समूहम् 'गोनां' गवां च ऊर्वं समूहं 'दयन्त' प्रयच्छन्ति, ते च तव प्रियाः सन्तु इति पूर्वेणान्वयः ॥ ४ ॥

४। ऋ० स० ७मः १६ सू० ७ ऋ०। Ṛ V. reads **'ऊर्वान्'** instead of **'ऊर्वम्'**।

'त्वे' = तव, युष्मत् *gen. sg.* 'सुपां सुलुक्' पा० ७।१।३९ इति विभक्तेः शेभावः।

'स्वाहुत'—*Voc.*—सुष्ठ आहुत। *Vide* : notes on SV. 1. 4 ; 1. 26. सु + आ + हु or ह्वे + क्त।

'प्रियासः' = प्रियाः—'आज्जसेरसुक्' Pāṇ. vii. 1. 50.

'सूरयः'—rt. सू (प्राणिप्रसवे, *to give birth*) + क्रिः uṇ. 4. 64. 'सूरिरिति स्तोतृनाम' Ngh. 3.16. cf. 'तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः'।

'यन्तारः'—fr. rt. इ. *to go*, —तृच् leaders,—or यम् *to give*,--donors.

'मघवानः'—धनवन्तः, lords of wealth.—rt. महि (वृद्धौ, *to increase*) or rt. मंह् *to give* ( मंहतेर्दानकर्मणः Nir. 1. 7. )---कः घञर्थे. Vār. iii. 3. 58. पृषोदरादित्वात् हस्य घः। मह्यते दीयते इति मघं—धनम्। मघ + मतुप्। मस्य वः। अष्टाविंशतिधननामसु मघशब्दः पठितः— Ngh. 2. 10.

'जनानाम्'—either to be taken with जनानां यन्तारः or जनानां दयन्ते—in the latter case 6th case is used in connection with दय by अधीगर्थदयेशां कर्मणि। Pāṇ. ii. 3. 52.

'ऊर्वम्—उरु इति बहुनाम Ngh. 3. 1. उरु accus. sg. वा छन्दसीति 'अमि पूर्वः' ( पा० ६, १, १०७ ) इत्यस्यापवादः, 'अन्येषामपि दृश्यते' इति संहितायामुकारदीर्घः।

'दयन्त'—दयन्ते fr. rt. दय ( दाने, *to give* 1. Ā. ) pres. 3. pl.

'गोनाम्'—*gen. pl.* the alternative form is गवाम् by 'गोः पादान्ते' Pāṇ. vii. 1. 57.

---

**बार्हस्पत्यो भरद्वाज ऋषिः। द्वे सामनी पौरुमद्गे, गौतमऋषिः आङ्गिरसः पुरुमद्गो वा (क)। बृहतीच्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे विनियोगः।**

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
**अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः।**
१ २ ३ १ २ ३ २ ३ १ २ ३ २
**अप्रोषिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः ॥ ५ ॥ ३९**

अग्ने। जरितः। विश्पतिः। तपानः। देव। रक्षसः। अप्रोषिऽवान्। गृहऽपते। महान्। असि। दिवः। पायुः। दुरोणऽयुः ॥ ५ ॥

(क) 'गौतमस्य पौरुमद्गं द्वे पुरुमद्गस्य वाङ्गिरसस्य'—ब्रा० ब्रा०।

भाष्यसारः। **हे देव जरितः—स्तोतः स्तुत्य अग्ने, विश्पतिः—प्रजापतिः, रक्षसः—रक्षसाम्, तपानः—सन्तापकः असि। हे गृहपते अग्ने, त्वं अप्रोषिवान्—यजमानगृहं न जातु त्यजन्, सततं तत्र स्थितो महान् पूज्यः भवसि। दिवः—द्युलोकस्य, पायुः—पाता रक्षकः। दुरोणयुः दुरोणं—गृहं यजमानगृहमित्यर्थः यौति मिश्रयति—सदा तत्र तिष्ठन् इत्यर्थः—अग्निशालायां स्थापितः असि ॥ ५ ॥**

O glowing, laudable Agni, the lord of men, the consumer of the Rakṣasas, the tutelary deity of the homestead (of the sacrificer), the protector of heaven, never leaving but being ever present in the house (of the worshipper),—thou art great or adorable.—5.

**सा०-भा०। हे 'अग्ने देव', 'जरितः' स्तोतः, स्तुत्य इत्यर्थः। 'विश्पतिः' प्रजानां पालकः 'रक्षसः' राक्षसानां 'तपानः' सन्तापकः 'असि'। हे 'गृहपते'! यजमानगृहस्य पालकाग्ने! त्वम् 'अप्रोषिवान्' यजमानस्य गृहमत्यजन् 'महान्' अतिशयेन पूज्योऽसि। 'दिवः' द्युलोकस्य 'पायुः' पाता। 'दुरोणयुः' यजमानगृहस्य मिश्रयिता सर्वदा वर्त्तमानः इत्यर्थः। तादृशस्त्वं महानसीत्यर्थः ॥ ५ ॥**

५। ऋ० स० ८म० ६० सू० १९ ऋ०। ṚV. reads **गृहपतिः** ( nom. sg. ) instead of **गृहपते** (voc.) the SV. reading ; also **'तपान'** (voc.) instead of **'तपानः'** ( nom. ).

'जरितः'—*voc.* of जरितृ,—rt. जॄ ( वयोहानौ, *to grow old* ; स्तुतौ वा, or *to praise.*) + तृच्—the old are venerable, so it conveys the sense 'स्तुत्यः, laudable—praiseworthy ; 'स्तोतः—स्तुत्य,'—Sāy. and 'praise-singer'—*Grfth.* 'जरिता स्तोतृनाम' Ngh. 3. 16. 'जरते: स्तुतिकर्मणः' *vide* notes on जराबोध SV. 1. 15. cf. 'इन्धान एनं जरते स्वाधीः' while kindling, the man of noble wisdom praises him. ṚV. x. 45. 1. VS. 12. 18.

'विश्पतिः'—*Vide* : note on SV. 26.

'तपानः'—fr. rt. तप् ( सन्तापे, *to burn, to torture* )—Prof. Max Muller's edition of the ṚV. has तेपानः in Mantra text, Pada text and Sāy.'s commentary. It is perhaps a misprint for तपानः।

'रक्षसः'—gen. sg. जातौ एकवचनम्—singular to denote the whole class.—रक्ष्यते-ऽस्मादिति अपादानवाचे असुन्—Sāy.'s com. on ṚV. i. 35. 10. ; 'रक्षो रक्षितव्यमस्माद् रहसि क्षणोतीति वा, रात्रौ नक्षते इति वा—from him we are to save ourselves ( rt. रक्ष् ), he attacks ( rt. क्षण् ) secretly, he roams ( rt. नक्ष् ) at night. Nir. 4. 18.

अप्रोषिवान्—not gone away, M.W.S.E. Dict. p. 59, col. 3. top. नञ्—प्र + वस् (*to live*) + क्वनिप्, 'अन्येभ्योऽपि दृश्यन्ते' Pāṇ. iii. 2. 75.

'दिवस्पायुः'—Agni is called the protector or maintainer of heaven, inasmuch as he conveys to the gods the oblations offered by men, thus he protects the divine region.

पायुः—rt. पा (पालने, to protect)—with aff. उण् uṇ. 1. 1. cf. 'भुवनस्य सनता पायुरग्ने'।

दुरोणयुः—दुरोणं गृहं यौति—मिश्रयति—rt. यु + aff. कु। 'दुरोण इति गृहनाम, दुरवा भवन्ति दुस्तर्पा.' *duroṇa* is a synonym of house, they (homes) are difficult to be satisfied (dur + rt. *av* to satisfy) i.e. difficult to be provided for. Nir. 4. 5. cf. 'जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान्'--devoted to the house, welcome guest in dwelling places ; come to this our sacrifice, O wise one. ṚV. v. 4. 5 ; AV. 7.73.9 ; also 'समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजसि जातवेदः' kindled to-day, in the abode of man, O god···thou offerest sacrifice to the gods. ṚV. x. 110. 1 ; AV. 5. 12. 1 ; VS. 29. 25.

---

काण्वः प्रस्कण्व ऋषिः। द्वे सामनी माण्डवे जमदग्निगोत्रस्य मण्डोरितिनामकऋषेः मण्डोर्वा (क)। बृहतीच्छन्दः। अग्निर्देवता। नवस्तोत्रीयात्मकसन्धिस्तोत्रेण स्तोतुं मध्ये व्युष्टिः स्यादिति शङ्का यद्युदियात् तदाऽग्ने विवस्वदुषस इति प्रगाथेऽग्निदेवत्ये सन्धिना स्तोत्रेण त्रिवृत् स्तोमेन स्तुयुः (ख)। नवग्रह-होमे बुध-होमे विनियोगः (ग)।

२ ३ १ २ ३ १ २ ३ १२ २२
**अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य।**

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
**आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥६॥४०॥**

अग्ने। विवस्वत्। उषसः। चित्रम्। राधः। अमर्त्य। आ। दाशुषे। जातऽवेदः। वह। त्वम्। अद्य। देवान्। उषःऽबुधः॥ ६॥

भाष्यसारः। **हे अमर्त्य जातवेदः अग्ने, उषसः सकाशात्, विवस्वत्—विशिष्ट-निवासोपेतम्—ज्योतिर्मयम् वा, चित्रं—विविधम्, राधः—धनम्, दाशुषे—हविर्दत्तवते यजमानाय, आ वह—आनय, किञ्च अद्य उषर्बुधः—उषाकाले प्रबुद्धान् देवान्, आवह॥ ६॥**

O immortal, omniscient Agni, bring to the offerer (of oblations) i.e. the sacrificer, from Uṣas (the Deity of the dawn), various, refulgent treasures, with excellent habitable dwellings ; bring (also) hither, to-day, the gods, who awake with the dawn.—6.

**सा०-भा०।** हे 'अग्ने', त्वम् 'उषसः' उषोदेवतायाः सकाशात् 'राधः' धनं 'दाशुषे' हविर्दत्तवते यजमानाय 'आवह' आनीय प्रापय। साऽग्निर्विशिष्यते।

(क) 'मण्डोर्जामदग्न्यस्य सामनी द्वे माण्डवे वा'—आ० ब्रा०।

(ख) 'अग्ने विवस्वदुषस इति सन्धिना स्तुयुः प्राणा वै त्रिवृत् स्तोमानां प्रतिष्ठा रथन्तरं साम्नां प्राणांश्चैवोपयन्ति प्रतिष्ठाञ्च।'—ता० म० ब्रा० ९,२,४।

(ग) छा० म० भा०, २, १३।

**'अमर्त्य' मरणरहित ! हे 'जातवेदः' जातानां वेदितः ! कीदृशं राधः ? 'विवस्वत्' विशिष्टनिवासोपेतम् । 'चित्रं' नानाविधम् । किञ्च 'अद्य' अस्मिन् दिने 'उषर्बुधः' उषःकाले प्रबुद्धान् देवानावह ॥ ६ ॥**

**६ । ऋ० सं० १म० ४४ सू० १ ऋ० । उ० आर्चि० ६, १, ६, १ ।**

Sāyaṇ's addl. notes in his com. on Ṛ̣V. Stanza—जातवेदशब्दं यास्को व्याचष्टे, जातवेदाः कस्मात्—जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविंदतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम् । तस्मात् सर्वान् ऋतून् पशवोऽग्निमभिसर्पन्तीति च—नि ७.१९ इति । विवस्वत्—विशिष्टनिवासोपेतं विवासनं विवः,—तद्युक्तम् । वस् निवासे । विपूर्वादन्तर्भावितण्यर्थात् संपदादिलक्षणो भावे क्विप् तदस्यास्तीति मतुप् । मादुपधाया इति वत्वम् । 'राधः'—राध संसिद्धौ । राध्नोत्यनेनेति राधो धनम् । करणेऽसुन् । जातवेदः—जातानि वेत्तीति जातवेदाः—असुन् प्रत्ययः । वेद इति धननाम । जातं धनं यस्य च तादृशः ।

'विवस्वत्'—वि वस् ( निवासे, *to dwell* ) क्विप्—विवस् + मतुप् = together with dwellings Sāy. or from the rt. वस् to shine—refulgent, shining.—*Grfth.*

'राधः'—'राधः' इति धननाम Ngh. 2. 10. fr. rt. राध ( संसिद्धौ, to succeed ) + असुन् राध्नोति कार्य्याणि इति राधो धनम् ।

'दाशुषे'—*Vide* : note on SV. I. 30.

'जातवेदः'—*Vide* : SV. I. 31. and Sāy.'s addl. notes quoted above.

'वहा'—rt. वह् (प्रापणे, to bring), imp. 2. sg. 'द्व्यचोऽतस्तिङः'—पा० ६।३।१३५ इति दीर्घः ।

'अद्या'—सद्यःपरुत्'—पा० ५।३।२२ इति निपातनात् सिद्धम् । ततः 'निपातस्य च' पा० ६।३।१३७ इति दीर्घः । cf. 'अद्या देवा उदिता सूर्यस्य' ।

'उषर्बुधः—waking at dawn, referring to the gods. rt. उष (to render hot)—aff. असि uṇ. 4. 234. ओषति उष्णीकरोति इति उषः—प्रातःसमयः, उषसि बुध्यन्ते ये इति—उषः + बुध् + क्विप् , पृषोदरादित्वात् सकारस्य रेफः ।

'उषर्बुधः' is a word esp. applied to 'Agni' (*vide* Ṛ̣V. vi. 15. I.), as Agni is kindled in the early morning ; sometimes the gods collectively receive this epithet, as in this verse. Guṇ., unlike Sāy. has taken the word as an epithet of अग्नि ( हे अग्ने त्वम् उषर्बुधः असि—उषसि बुध्यसे, प्रातराहुतिग्रहणाय जागर्षि—इत्यर्थः ), instead of taking it as an adj. qualifying देवान् । **गुणविष्णुः** का० म० भा० २, १३ ।

देवाँ उषर्बुधः—"दीर्घादटि समानपादे" ( पा० ८।३।९ ) इति संहितायां नकारस्य रुत्वम् , आतोऽटि नित्यम् ( पा० ८।३।३ ) सानुनासिक आकारः । रेफस्य यत्वम् , यलोपश्च । cf- महाँ असि SV. I. 23 ; I. 39.

---

बार्हस्पत्यस्तृणपाणिः शंयुर्ऋषिः। 'गाधं' साम। भरद्वाज ऋषिः (क)। बृहतीच्छन्दः। अग्निर्देवता।

१ २ ३ २ ३ २उ ३ १ २
त्वं नश्चित्र ऊत्या वसो राधांसि चोदय।
३ २ ३ १र २र ३ १ २ ३ २ ३ २ ३ १र २र
अस्य रायस्त्वमग्नेरथीरसि विदा गाधं तुचे तु नः ॥७॥४१॥

त्वम्। नः। चित्रः। ऊत्या। वसो इति। राधांसि। चोदय। अस्य। रायः। त्वम्। अग्ने। रथीः। असि। विद। गाधम्। तुचे। तु। नः॥ ७॥

भाष्यसारः। हे वसो—निवासहेतुभूत धन-स्वरूप वा अग्ने, चित्रः—विचित्र-श्चायनीयो वा त्वम् ऊत्या रक्षया सह, राधांसि—धनानि, अस्मभ्यं चोदय—प्रेरय आनय इत्यर्थः। अस्य रायः—जगति विद्यमानस्य निखिलस्य धनस्य, त्वम् रथीः—नेता प्रेरयिता भवसि। अपि च अस्माकम् तुचे—अपत्याय पुत्राय, गाधं—प्रतिष्ठां, तु—शीघ्रम्, विद—वेत्थ, विधेहि देहीत्यर्थः॥ ७॥

Wondrous Agni (cherished by all)—the source of wealth, (or the prime cause of habitation)—send to us riches, with (proper) protection; thou art the director of all this wealth (spread on the earth); give a permanent social status to our progeny.—7.

**सा०-भा०।** हे 'वसो' वासक अग्ने, 'चित्रः' दर्शनीयस्त्वम् 'ऊत्या' रक्षया सह 'राधांसि' धनानि 'नः' अस्मभ्यं 'चोदय' प्रेरय। 'अस्य लोके परिदृश्य-मानस्य 'रायः' धनस्य त्वं 'रथीः' 'असि' रंहिता नेता भवसि। अतः कारणात् अस्मभ्यं धनानि प्रेरयेत्यर्थः। अपि च 'नः' अस्माकं 'तुचे'—अपत्यनामैतत् (नै० २,२,१) अपत्याय अपतनहेतुभूताय पुत्राय 'गाधं' प्रतिष्ठां 'तु' क्षिप्रं 'विद' लम्भय॥ ७॥

७। ऋ० स० ६ म० ४८ सू० ६ ऋ०। उ० आर्चिक० ८,१,३,१।

चित्रः—dr. rt. चायृ (पूजानिशामनयोः, I. u.)—aff. क्रप्, चाय् is changed to चि and त (तुक्) is added. cf. चित्रं देवानामुदगात्—RV. i. 115. I.

'ऊत्या'—Instr. sg. of the stem. ऊति,—for dr. *vide*: note on SV. I. 10—with protection,—Sāy., with favouring help—*Grfth.*

'वसो'—*voc.* dr. rt. वस् (आच्छादने, *to cover*) उः—शृस्वृस्निहि ·····वसि० un. I. 10. वसो—आच्छादयति दुःखमिति वसु—धनम्, वसु धननामसु पठितम् Ngh. 2. 10; here rfs. to Agni.

(क) 'भरद्वाजस्य गाधम्'—आ० ब्रा०।

who is the lord or dispenser of wealth, so identical with it. Wils. translates after Sāy.—giver of dwelling ; *see* note on SV. I. 36.

राधांसि—riches ; dr. rt. राध् ( संसिद्धौ, *to, accomplish*)—aff. असुन्,—राध्नोति कार्याणीति। without wealth no work succeeds, it is therefore so called.

'रायः' ( stem रै *gen. sg.* )—dr. fr. rt. रा ( दाने, *to give.* 2. p. ) डैः—'रातेर्डैः' uṇ. 2. 64. 'रायो' धननाम—Ngh. 2. 10.

'रथीः'—dr. रथोऽस्यास्ति = रथ + ई, 'छन्दसीवनिपौ'—वा०,—Charioteer ; here, director or conveyer.

विदा—dr. rt. विद् ( लाभे, *to gain* ). caus. suppressed. Imp. 2. sg.—लम्भय, प्रापय, देहि—give. The last vowel is long by द्व्यचोऽतस्तिङः Pāṇ. vi. 3. 135.

गाधम्—dr. rt. गाधृ ( प्रतिष्ठायाम्, *to stand firmly.* I. Ā. ) + अच् = गाधः—प्रतिष्ठा, यशः—social status,—fame.—Sāy. Rest and safety—*Grfth.* This word is come across in Pāṇ's rule vi. 2. 4.—'गाधलवणयोः प्रमाणे' ; it means firm standing ; the expression अगाधमुदकम् means groundless or unfathomed water.

तुचे—dat. sg. 'तुक् इत्यपत्यनाम' Ngh. 2. 2.

---

प्रगाथपुत्रो भर्ग ऋषिः ( ऋग्वेदीयानुक्रमणिकायां ), विरूपऋषिः ( सामवेदभाष्ये सायणः ) सामद्वयं 'गौतमं' नाम (क)। बृहतीच्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

२उ ३ १ २ ३ १ २ ३ २ ३ २
त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतस्कविः।
१र २र ३ १ २ ३ १ २
त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः॥८॥४२॥

त्वम्। इत्। सऽप्रथाः। असि। अग्ने। त्रातः। ऋतः। कविः। त्वाम्। विप्रासः। समऽइधान। दीदिऽवः। आ। विवासन्ति। वेधसः॥ ८॥

भाष्यसारः। हे त्रातः—रक्षक अग्ने, ऋतः—सत्यस्वरूपः, कविः—मेधावी प्राज्ञः, त्वम् इत्—एव, सप्रथाः—सर्वत्र प्रथितो भवसि, हे समिधान—समिध्यमान, दीदिवः देदीप्यमानाग्ने! विप्रासः—विप्राः, वेधसः—यज्ञ-विधातारः—स्तोतारः, त्वाम् आ विवासन्ति—सेवन्ते॥ ८॥

(क) 'गौतमे द्वे'—आ ब्रा०

O Saviour Agni, ever true and wise, thou art pervading everywhere. O resplendent one, kindled with fuel, the Brāhmin priests wait upon (adore) thee.—8.

**सा०-भा० ।** हे 'अग्ने', 'त्रातः' रक्षक, 'ऋतः' सत्यभूतः 'कविः' क्रान्तप्रज्ञः 'त्वमित्' त्वमेव 'सप्रथाः' सर्वतः पृथुः 'असि' भवसि । हे 'समिधान' समिध्यमान ! हे 'दीदिवः' दीप्ताग्ने, 'त्वां' 'विप्रासः' विप्राः मेधाविनः 'वेधसः' विधातारः स्तोतारः 'आ-विवासन्ति परिचरन्ति ॥ ८ ॥

८ । ऋ० स० ८ म० ६० सू० ५ ऋ० ।

इत्—*Indec.* = एव, assuredly.

सप्रथाः—'सप्रथाः सर्वतः पृथुः', Nir. 6. 7. cf. 'त्वमग्ने सप्रथा असि'—O Agni thou art all-pervading. rt. प्रथ (*to pervade*) असुन्; वोपसर्जनस्येति सहस्य स-भावः—cf. अभि यो-महिना...मित्रो बभूव सप्रथाः RV. iii. 59. 7;—'famed'—*Grfth.*

त्रातः—*voc.* rt. त्रैङ् ( पालने, *to protect* ) तृच्—protector, 'preserver'—*Grfth.*

ऋतः—'ऋतं सत्यं वा यज्ञं वा' Nir. 4. 19. True, true in law and order.—Sāy. 'Righteous'—*Grfth.* *Vide* notes on 'सत्यधर्माणम्' SV. 32.

कविः—*Vide* note on SV. 1. 30, 32.

समिधान—*voc.* dr. सम + इन्ध् ( to kindle ) + pr. pt. Pass. व्यत्ययेन कर्म्मणि कर्तृप्रत्ययः ।

दीदिवः—dr. rt. दिव् *to glow* + क्वसु । द्विर्भावः, अभ्यासस्य दीर्घः 'तुजादीनां दीर्घः' Pāṇ. vi. 1. 7. ( दीदिव्—वस् ) वसोरिट्प्रतिषेधः, 'वस्वेकाजाद्घसाम्'-Pāṇ. vii. 2. 67. वलोप (दीदि + वस्) 'लोपो व्योर्वलि' Pāṇ. vi. 1. 66. Radiant, resplendent; or acc. to Viv. 'दीदिदानं तद् विद्यते यस्य इति मतुपि 'छन्दसीरः' ( पा० ८,२,१५ ) इति वत्वे दीदिवत्, तस्य सम्बोधने 'मतुवसोरुः सम्बुद्धौ छन्दसि' ( ८,३,१) इति रुत्वे रूपम्' । mg.—दानवत् donor ।

विप्रासः—विप्राः । nom. pl. 'आज्जसेरसुक्' Pāṇ. vii. 1. 50. like 'जनासः' (RV. 2. 12). 'अश्वासः' SV. 1. 25. 'प्रियासः' ( SV. 1. 38. ) । 'विप्रासो मेधाविनः' Nir. 10. 19. cf. 'यं विप्रास ईळते अध्वरेषु'—whom wise men ( priests ) adore in sacrifices—RV. x. 30. 4.

वेधसः—dr. from the rt. धा ( वि-धाञ् + असि ) – वि-धाञ् is changed into वेध. ( उ० ४।२२५ ) = स्तोतारः. singers of praise, worshippers, the priests.—*Sāy.* 'ordainers, arrangers of sacrifice'.—*Grfth.*

आ विवासन्ति--विवासतीति परिचरणकर्म्मा—to serve, to attend. Ngh. 3. 5. cf. 'राजाना मित्रावरुणा विवाससि' thou attendest Mitra and Varuṇa...RV. x. 64. 5. सरस्वतीमा विवासेम धीतिभिः—let us attend upon Sarasvatī with hymns—ib. vi. 61. 2.

---

प्रगाथपुत्रो भर्ग ऋषिः ( अनुक्रमणिकायां ), शुनःशेप ऋषिः ( सामवेद-भाष्ये सायणः )। एकं साम 'आयु'र्नाम अग्निर्ऋषिः (क)। बृहतीच्छन्दः। अग्निर्देवता। आयुराख्ये सोमयागे विनियोगः (ख)।

१ २ ३ १ २ ३ १ २ ३ १ २
आ नो अग्ने वयोवृधं रयिं पावक शंस्यम्।
१ २ ३ २ ३ १ २ ३ १ २
रास्वा च न उपमाते पुरुस्पृहं सुनीती सुयशस्तरम् ॥६॥४३॥

आ। नः। अग्ने। वयःऽवृधम्। रयिम्। पावक। शंस्यम्। रास्व। च। नः। उपऽमाते। पुरुऽस्पृहम्। सुऽनीती। सुयशःऽतरम् ॥ ९ ॥

भाष्यसारः। हे पावक अग्ने, वयोवृधम्—आयोरन्नस्य व वर्धकम्, शंस्यं प्रशंसनीयम्, रयिं—धनम् अस्मभ्यम् आ हर इति शेषः। हे उपमाते--उप--अस्मत् समीपे माति धनं ददाति यः सः अग्निः, तस्य सम्बोधनम्, अस्मभ्यं सुनीती--सुनीत्या सुमार्गेण धर्म्योपायेन, पुरुस्पृहं—बहुभिः स्पृहणीयं, सुयशस्तरम् अतिशयशोभनकीर्त्ति-धनम्, रास्व—देहि ॥ ६ ॥

O sanctifying Agni, bestow on us commendable wealth extending or prolonging life (or increasing food); O awarder of wealth, give us excellent fame solicited by many, through honest ways.—9.

**सा०-भा०।** हे 'अग्ने'! 'पावक' शोधक! 'वयोवृधम्' अन्नस्य वर्धकं 'शंस्यं' शंसनीयं स्तूयमानं 'रयिं' धनं 'नः' अस्मभ्यम् आभरेति शेषः। आहृत्य च हे 'उपमाते' उप अस्मत्समीपे माति यो धनमित्युपमातिः, हे तादृश अग्ने, 'नः' अस्मभ्यं 'सुनीती' सुनीत्या शोभन-नयनेन 'पुरुस्पृहं' बहुभिः स्पृहणीयं 'सुयशस्तरम्' अत्यन्त-शोभनं कीर्त्ति-धनं 'रास्व' देहि ॥ ६ ॥

६। ऋ० स० ८म० ६०सू० ११ऋ० R̥V. has **'स्वयशस्तरम्'** instead of **'सुयशस्तरम्'** as here.

वयोवृधम्—adj. qual. रयिम्; increasing food or life. 'वय: (food or age) is drvd. from the rt. वी, *vide* note on वीतये SV. 1.1. वय इत्यन्ननाम Ngh. 2.7. वयांसि वर्धयतीति—वृध: क्विप्।—'Strengthening life'—*Grfth.* For वय: in the sense of food,—cf. परिव्रं समोमना वां वयोऽगात्—R̥V. vii. 69. 4.

---

(क) 'अग्नेरायुः'—आ० ब्रा०।

(ख) 'अथैष आयुः। आयुषा वै देवा असुरानायुवतायुसे भ्रातृव्यं य एवं वेद। स्वर्गकामो यजेत'—ता० म० ब्रा—१६.३.१,२,३।

रयिम्—dr. rt. री (गतौ, *to go* 9.)—इः, 'अच इः' uṇ. iv. 139—रिणाति गच्छति जनाज्जनमिति रयिर्धनम, *vide*: note also on SV. 1.22. 'रेतम्' is drvd. from the same rt. *Vide* SV. 1.20. and 1. 27.

रास्वा—Give, bestow on us,—dr. rt. रा *to give*, Imp. 2 sg. rt. रा is naturally परस्मैपदी ( राति ), here used in आत्मनेपद by व्यत्यय or Vedic deviation from ordinary gram. rules ; the final vowel is lengthened in Mantra Text, by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135.

पुरु-स्पृहम्—dr. पुरु-स्पृह् + क्विप्—बहुभिः स्पृहणीयम्, 'solicited by many'—Say. 'that which many crave'—*Grfth.*

सुनीती—*Instr. sg.* for—सुनीत्या—सुपां सुलुक् Pāṇ. vii. 1.39. पूर्वसवर्णदीर्घः, like दृष्टुती, ( for दृष्टुत्या ), सहती ( for सहत्या—ṚV. ii. 33.4. ) etc.

उपमाते *voc*—stem उपमाति—mg.—'assigning or granting wealth. Name of Agni. fr. उप—rt.मन् – M.W's S.E.Dict. p. 203, col.3. Thou art near and dispenser of wealth ; or acc. to Viv. उपमातिः means निर्माता, creator – fr. rt. मा, from which निर्माण is dervd.

---

काण्वः सौभरिर्ऋषिः। सामचतुष्टयम्, द्वे हरसी अग्निर्ऋषिः, द्वे दैर्घश्रवसे दीर्घश्रवा ऋषिः (क)। बृहतीच्छन्दः। अग्निर्देवता। आग्नेय-क्रतोः प्रातरनुवाकप्रकरणे विनियोगः।

२उ  ३ १ २ ३ २ ३ १ २ ३र  २र
**योविश्वा दयते वसु होता मन्द्रो जनानाम्।**
३ १र  २र  ३ १ २ ३ १र  २र ३ ३ १ २
**मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥१०॥४४॥**

यः। विश्वा। दयते। वसु। होता। मन्द्रः। जनानाम्। मधोः। न। पात्रा। प्रथमानि। अस्मै। प्र। स्तोमाः। यन्तु। अग्नये॥ १०॥

भाष्यसारः १ यः होता—देवानाम् आह्वाता होमनिष्पादको वा, मन्द्रः—हर्षकरः अग्निः विश्वा—सर्वाणि, वसु—वसूनि धनानि, जनानां—जनेभ्यः, दयते—ददाति, अस्मै अग्नये, मधोः—सोमस्य, प्रथमानि—मुख्यानि, पात्रा—पात्राणि, न—इव, स्तोमाः—स्तोत्राणि, प्रयन्तु गच्छन्तु। यथा सोमरसपात्रेण देवाः हृष्यन्ति, तथा अग्निरस्माकं स्तोत्रैः प्रसीदतु॥ १०॥

To (that) Agni, the invoker of gods (or the principal priest), the delighter of men, who gives away all riches (to men), let the

---

(क) 'अग्नेर्हरसी द्वे दैर्घश्रवसी द्वे'—आ० ब्रा०।

songs of praise go forth, like the best vessels full of exhilarating Soma-juice.—10.

**सा०-भा०।** होता देवानामाह्वाता 'मन्द्रः' मोदमानः यः अग्निः 'विश्वा' सर्वाणि 'वसु' वसूनि धनानि 'जनानां' जनेभ्यः 'दयते' प्रयच्छति। तस्मै 'अस्मै' अग्नये 'मधोः न' मदकरस्य सोमस्येव 'प्रथमानि' मुख्यानि 'पात्रा' पात्राणि 'स्तोमाः' स्तोत्राणि 'प्रयन्तु' गच्छन्तु ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोग्याख्याने प्रथमाध्यायस्य चतुर्थः खण्डः ॥

१०। ऋ० सं०, ८म० १०३ सू० ६ ऋ०। ṚV. reads **'यान्ति'** instead of **'यन्तु'**। उ० आर्चि० ७,३,५,१।

विश्वा—accus. pl.—विश्वानि, all.—'शेश्छन्दसि बहुलम्' Pāṇ. vi. 1.70.

वसु—वसूनि ; for dr. and mg. *vide* note on SV. 1.41. सुलोप: (elision of case-term.) by 'सुपां सुलुक्॰' Pāṇ. vii. 1.39.

दयते—fr. rt. दय् ( दान-गति-रक्षण-हिंसाऽदानेषु, *to give etc.* I.Ā ).

जनानाम्—*gen. pl.* in connection with rt. दय, अधीगर्थदयेशां कर्मणि Pāṇ. ii. 3.52 *vide:* जनानाम् दयन्ते SV. 1.38.

मन्द्रः—rt. मद (तर्पणे, *to please*)—रक्, स्फायितञ्चि॰ uṇ. ii. 13. मदयति तृप्तिं करोति इति ; delighter, pleasing ; 'मन्द्रा मदना'—gladdening, Nir. 11.29. in explaining the verse देवीं वाचम्···सा नो मन्द्रेषमूर्जं दुहाना···ṚV. viii. 100. 11.

पात्रा—पात्राणि—for gram. *vide* विश्वा above.

मधोः—gen.sg.—for मधुनः ; मध्वः is the frequent form in the Vedas ;—of intoxicating Soma juice. cf. 'आसिञ्च स्व जठरे मध्व ऊर्मिम्' ṚV. iii. 47. 1. VS. 7. 38. Nir. 4. 8.

प्रथमानि—प्रथम इति मुख्यनाम, प्रतमो भवति ( प्रतमः—प्रकृष्टतमः )—*prathama* means the first, the foremost, the best or most excellent. Nir. 2.22. cf. 'देवानां माने प्रथमा अतिष्ठन्—( spoken of clouds )—in the creation of gods, they were the first—ṚV. x. 27. 23.

स्तोमाः—स्तोमो नाम सोमसाध्येषु यागेषु छन्दोगैः क्रियमाणा पृष्ठादिसंज्ञिका स्तुतिः—(tech.)—a particular kind of hymn or praise, sung by the Chandogas ( the followers of the Sāma-Veda ) in the Soma-sacrifices. cf. 'नान्येन स्तोमो वसिष्ठा अन्वेतवे वः'—O Vasiṣṭhas, your hymn cannot be imitated by any one else—ṚV. vii. 33. 8.

---

अथ प्रथमप्रपाठकस्य प्रथमार्द्धे पञ्चमी दशतिः ।

वामदेव ऋषिः । चत्वारि सामानि, द्वे अग्नेः स्वभूते आग्नेये, द्वे च गोतमस्य सम्बन्धिनी मनाज्ये (क) । बृहतीच्छन्दः । अग्निर्देवता । प्रातरनुवाके आश्विनशस्त्रे विनियोगः ।

३ १ २ ३ १र २र ३ १र २र ३ १ २
एना वो अग्निं नमसोर्जो नपातमाहुवे ।
३ १र २र ३ १ २ ३ १र १र ३ २ ३ १ २
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥१॥४५॥

एना । वः । अग्निम् । नमसा । ऊर्जः । नपातम् । आ । हुवे । प्रियम् । चेतिष्ठम् । अरतिम् । सुऽध्वरम् । विश्वस्य । दूतम् । अमृतम् ॥ १ ॥

भाष्यसारः । **हे स्तोतारः, ऊर्जः – बलस्य, नपातं—पुत्रम्, प्रियम्, चेतिष्ठम्—अतिशय-प्रज्ञम्, अरतिम्—सर्वत्र गन्तारं स्वामिनं वा, स्वध्वरं —सुयज्ञम्, विश्वस्य—सर्वस्य यजमानस्य, दूतम्, अमृतम्—मरणरहितं नित्यम्, अग्निम्, एना—एनेन अनेन, नमसा—स्तोत्रेण, युस्माकं कृते आह्वयामि ॥ १ ॥**

For you, (O praisers,) with this my hymn, I invoke Agni, the son of force, the dear, the most wise, the all-pervading, the best performer of sacrifice, the eternal, the envoy of all (sacrificers).—1.

**सा०-भा० ।** 'ऊर्जः' बलस्य 'नपातं' पुत्रं 'प्रियम्' अस्माकम्, 'चेतिष्ठम्' अतिशयेन ज्ञातारं प्रज्ञातारं प्रज्ञापकं वा । 'अरतिं' गन्तारं स्वामिनं वा 'स्वध्वरं' सुयज्ञम्, 'विश्वस्य' सर्वस्य यजमानस्य 'दूतम्' 'अमृतं' नित्यम् 'अग्निम्' 'एना' एनेन 'नमसा' स्तोत्रेण । यद्यप्यत्रान्वादेशो नास्ति तथापि छान्दसत्वादिदं-शब्दस्यैनादेशः । हे स्तोतारः ! 'वः' युष्मदर्थम् 'आ-हुवे' आह्वयामि ॥ १ ॥

१ । ऋ० सं० ७ म० १६ सू०, १ ऋ० । उ० आर्चि १, २, १३, १ ।

Say.'s addl. notes in his com. on ṚV. Mantra (1) मनर्नपादित्यपत्यनामसु पाठात् । (2) एना एनमित्यग्नेर्विशेषणम् ।

एना—Although there is no अन्वादेश,* इदम् has, here, taken the form 'एन' ;

(क) 'अग्नेराग्नेये द्वे गोतमस्य मनाज्ये द्वे'—आ० ब्रा० ।

* 'द्वितीयाटौस्स्वेनः' Pāṇ. ii. 4. 34. एन is optionally substituted for इदम् and एतद् in the accus. and instr. sg. also in gen. and loc. duals in the case of अन्वादेश (the subsequent mention of the words इदम् and एतद् already mentioned in a previous clause—'किञ्चित् कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः'—Sid. Kau).

by व्यत्यय or Vedic anomaly ; next एना stands for एनेन ( नमसा ), the case-termination being changed into आ, by 'सुपां सुलुक्'० Pāṇ. vii. 1. 39. एना vide Nir. 3. 21.

नमसा—*Vide* SV. 1.11. (नमः) ; 1. 17 (नमोभिः).

ऊर्जः—gen. sg. बलस्य, of strength. rt. ऊर्ज् ( बल-प्राणनयोः,—*to strengthen* etc.) with aff. क्विप्—ऊर्ज् the stem.

नपातम्—न पातयति इति नञ्पूर्वात् पतेर्ण्यन्तात् क्विपि णिलोपः, in negative Tat-compd., न is not changed to अ by नभ्राण्नपात्० Pāṇ. vi. 3. 75.

ऊर्जः नपातम्—the son of strength. Agni is often called the son of strength. cf. 'ओजसो जातमुत मन्य एनम्'—I know him to be born of strength ṚV. x. 73. 10.

अयमप्यग्निरोजसा बलेन मथ्यमानो जायते, तस्मादेनमाह सहस्पुत्रं सहसः सूनुं सहसो यहम्—Agni is so called, as it is produced being churned with energetic strength. Nir. 8. 2. cf. द्रन्वः सर्पिरासुतिः प्रत्नो होता...सहसस्पुत्रो अद्भुतः—the wondrous son of strength ṚV. 'त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत—O most youthful son of strength...ṚV.

ऊर्ज्—is found elsewhere in the sense of food ( अन्नम् ), *Vide*—आपो हि ष्ठा मयोभुवः···ऊर्जे दधातन (O waters)—make us fit for earning food. ṚV. x. 9. 1. ऊर्जमस्मा अधत्तम्—(addressed to Aświns)—offer to him (Agni) the food (or oblation)—ṚV. i. 116. 8. *Vide* : notes on ऊर्जाम्पते।

आ-हुवे—*vide*. SV. 1.18. I call, आह्वयामि। प्रियं—See SV. 1.5. ( प्रियम् , प्रेष्ठम् )।

चेतिष्ठम्—drvd. from rt. चित् ( संज्ञाने, *to know* 1.p),—अच् by पचाद्यच्, चेत—spv. dg. इष्ठन्,—wisest, most sapient.

अरतिम्—rt. ऋ ( गतौ, *to go* 1.p or 3.p ) with aff. अति uṇ. iv. 60 ; Sāyaṇ means by this word, the goer or lord ; Mahidhar, in Yajur-Veda, xv. 32, explains it—'either having sufficient understanding ( पर्याप्तमतिम् ) or one never desisting from activity' ( उपरमरहितम् सदोद्यमयुतम् )

स्वध्वरम्—सु शोभनः अध्वरः यस्य, *vide* explanatory notes on सुक्रतुम, skilled in sacrifice ; skilled performer of holy rites ; as to अध्वरः vide notes on SV. 1. 16.

दूतम्—*Vide* : notes on SV. 1. 3 ; 1. 12.

अमृतम्—the same as अमर्त्यम्—vide : SV. 1. 12 ; 1. 35 ; 1. 40 ; Agni is frequently called Immortal or Eternal—a term much more commonly applied to Agni than to any other god—Macdnll. Ved. Myth. p. 96.

---

भर्ग ऋषिः। 'दैवराजं' साम, देवराजऋषिश्च (क)। बृहतीच्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे विनियोगः।

२ ३ १ २ ३ २ ३ २ ३ १ २
**शेपे वनेषु मातृषु सं त्वा मर्तास इन्धते।**
१ २ ३ १ २ ३ २ ३ २उ ३ १ २
**अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि ॥२॥४६॥**

शेषे। वनेषु। मातृषु। सम्। त्वा। मर्त्तासः। इन्धते। अतन्द्रः। हव्यम्। वहसि। हविःऽकृतः। आत्। इत्। देवेषु। राजसि ॥ २ ॥

भाष्यसारः। **हे अग्ने! त्वं मातृषु—मातृभूतेषु वनेषु, शेषे—वर्त्तसे, त्वां मर्त्तासः—मनुष्याः ऋत्विजः, समिन्धते—प्रज्वालयन्ति, एवं समिद्धस्त्वम् अतन्द्रः—तन्द्रारहितो निरलसः, हविष्कृतः—हविःप्रदातुः यजमानस्य, हव्यं—हविः, वहसि—देवेभ्यः प्रापयसि, आत् इत्—तदैव देवेषु मध्ये, राजसि—विराजसे, दीप्यसे ॥ २ ॥**

O Agni, thou liest in the woods, thy mothers; mortals (the priests) kindle thee; thou, without sleep or rest, conveyest the sacrificer's oblation (to the gods); verily then, thou shinest amidst the gods.—2.

**सा०-भा०।** हे 'अग्ने'! 'शेषे' 'वनेषु' 'मातृषु' 'स्वपिषि' वर्त्तसे। तथाभूतं 'त्वा' त्वां 'मर्त्तासः' मनुष्याः अध्वर्य्वादयः मन्थनेनोत्पाद्य 'समिन्धते'। पश्चात्-प्रवृद्धस्त्वम् 'अतन्द्रः' अनलसः सन् 'हविष्कृतः' यजमानस्य 'हव्यं' हविः 'वहसि' देवान् प्रति। 'आदिद्' अनन्तरमेव 'देवेषु' मध्ये 'राजसि' दीप्यसे ॥ २ ॥

२। ऋ० सं० ८म० ६०सू० १५ऋ०। ṚV. has **'मात्रोः'** instead of **'मातृषु'** as here, and **'हव्या'** ( हव्यानि—हवींषि pl.) instead of **'हव्यम्'** sg.

शेषे—rt. शीङ् *to lie*. pres. 2. sg.

वनेषु मातृषु—In woods; trees are easily combustible, and fire is generated there, in the form of conflagration: so forests are said to be the mothers or origins of Agni. Viv. explains—'मातृषु जगतो निर्मातृभूतेषु वनेषु उदकेषु'—thou liest within waters—the origins of the universe. According to the ṚV. text where मात्रोः is read, the mg. is 'Thou liest in the forests; from thy twain mothers (*the Araṇis*), mortals kindle thee. मात्रोः rfs. to the two *araṇis* or pieces of wood from which the sacrificial fire is produced by attrition cf. ṚV. iii. 29. 2, 3.

'सम्-इन्धते'—the prefix is separated from the verb and intervened by the

(क) 'दैवराजम्'—ब्रा० ब्रा०।

words त्वा मर्त्तासः, *Vide :* rules on vedic prefixes Pāṇ. i. 4. 81,—82 ; see notes on नि-षत्सि, SV. I. I. इन्धते—rt. इन्ध् *to ignite*, pres. 3. pl.

मर्त्तासः--(nom. pl.)—In nom. pl. असुक् ( अस्) is added to the stems ending in अ, 'आज्जसेरसुक्' Pāṇ. vii. I. 50.

हविष्कृतः—sacrificer's, *vide* SV. I. 13.

आत् इत्—These two indeclinables are frequently used together meaning —'verily then', अनन्तरमेव SV. I.20 ; I. 55.

---

**सौभरिर्ऋषिः। एकं साम कुशिकपुत्रस्य गाथिनः (क)। बृहतीच्छन्दः। अग्निर्देवता। एतेन साम्ना तुष्टुवानो गातुं लौकिकवैदिकविधेयं मार्गं विन्दते इति विनियोगः (ख)। यद्वा प्रज्वलितेऽग्नौ एतत् साम गायेत (ग)।**

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
## अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः।
२ ३ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
## उपोषु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥३॥४७॥

अदर्शि। गातुवित्ऽतमः। यस्मिन्। व्रतानि। आऽदधुः। उपो इति। सु। जातम्। आर्यस्य। वर्धनम्। अग्निम्। नक्षन्तु। नः। गिरः ॥ ३ ॥

भाष्यसारः। **यस्मिन् अग्नौ, व्रतानि—कर्माणि, आदधुः—सम्पादितवन्तः यजमानाः, गातुवित्तमः—अतिशयेन मार्गाणां ज्ञाता कल्याणपथप्रवर्त्तक इत्यर्थः। सोऽग्निः, अदर्शि—आविर्भवति। अपि च सुजातं—सम्यक् समिद्धम्, आर्यस्य—सामान्यत आर्यजातेः, वर्धनम्—वर्धकम्, अग्निम्, अस्माकम् गिरः—स्तुतयः, उपो नक्षन्तु—उप गच्छन्तु सन्निहिता भवन्तु ॥ ३ ॥**

Agni, wherein the sacrificers perform rites, the best knower of ways, appears before our eyes ; let our holy hymns reach him, the well born, the promoter of the cause of the Aryan.—3.

**सा०-भा०—'यस्मिन्' अग्नौ 'व्रतानि' कर्माणि 'आदधुः' यजमानाः आहितवन्तः। 'गातुवित्तमः' अतिशयेन मार्गाणां ज्ञाता, सोऽग्निः 'अदर्शि' प्रादुरभूत्। किञ्च, 'सुजातं' सम्यक् प्रादुर्भूतम् अस्य 'आर्यस्य' उत्तमवर्णस्य 'वर्धनं' वर्धयितारम्**

---

(क) 'गाथिनस्य कौशिकस्य साम'—आ० ब्रा०।

(ख) 'विन्दते गातुं प्रतितिष्ठत्येतेन तुष्टुवानः'—ता० म० ब्रा० ८।५।१०।

(ग) 'प्रज्वलितेऽदर्शि गात्विति—लाट्या० श्रौ० सू०।

'अग्निं' 'नः' अस्माकं 'गिरः' स्तुतिरूपाः वाचः 'उपो नक्षन्तु' उपगच्छन्तु। नक्ष गताविति धातुः॥ ३॥

३। ऋ० सं० ८म० १०३ सू० १ ऋ० ṚV. reads 'नक्षन्त (Ind. mood) नो गिरः' instead of 'नक्षन्तु ( imp. mood ) नो गिरः।' उ० आग्नि०, ७,१,११,१।

अदर्शि—rt. दृश् Aor. Pass. 3. sg ;—has been visible, has appeared.

गातुवित्तम—गच्छतीति rt. गाङ् *to go*—aff. तु, कमिमनि···गा० un. i. 70. गातुं वेत्ति—क्विप्—गातुवित् spv. dg.—aff. तम ; 'गातुं—गमनम्' going,—Nir. 4. 21. cf. 'तच्छं योवावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये', we pray for going to the sacrifice...TS. ii. 6. 10. 2 ; Ś.B. i. 9. 1. 26. Again गातुं कृणवन्नुषसो जनाय the dawns give to man the ability to perform the acts such as going or the like.—ṚV. iv. 51. 1. *See* Say.'s com. thereon ;—'the master of all means.' M. N. Dutt ;—'he who knows all ways'—*Wils.* *Vide* : M. W. S. E. Dict. p. 352. col. 1.—Clearing the way for unimpeded motion or progress, finding or opening a way, promoting welfare. ṚV. iii. 62. 13 ; we prefer this meaning.

व्रतानि—ceremonies ; holy acts—*Grfth.* व्रत means कर्म or holy rite. Ngh. 2. 1.

आदधुः—rt. धा in लिट् perf. 3. pl. in the pres. sense—Perform.

सुजातम्—auspiciously born—*Wils.*

आर्यस्य—rfs to the Aryan community as opposed to the non-Aryan—i. e. members of the higher castes who worship Agni. आर्यस्य वर्धनम्—the helper of the *Ārya.*—*Wils.*

नक्षन्तु—rise to—*Wils.* rt. नक्ष ( गतौ, *to move* 1.p. ) imp. 3 pl. The word नक्षत्रम् is dervd from this root , in giving the etymology of the word नक्षत्र—Yāska states—'रात्रौ नक्षति'—wanders about by night—Nir. 4. 18. Again in Ngh.—this rt. ( नक्ष् ) is met with, in the sense 'to go'—Ngh. 2. 14.

'गिरः'—*Vide* SV. 1. 7, 1. 13, 1. 68,

---

विवस्वत्पुत्रो मनुर्ऋषिः। द्वे सामनी बार्हदुक्थे, बृहदुक्थ ऋषिः (क)। बृहतीच्छन्दः। विश्वेदेवाः देवताः।

३ २३ २ ३१ २ ३ १ २ ३ १ २ ३ २
अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे।
३ १ २ ३ २ ३ २ ३ १ २
ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम्॥४॥४८॥

अग्निः। उक्थे। पुरःऽहितः। ग्रावाणः। बर्हिः। अध्वरे। ऋचा। यामि। मरुतः। ब्रह्मणःऽपते। देवाः। अवः। वरेण्यम्॥ ४॥

(क) 'बार्हदुक्थे द्वे'—आ० ब्रा०।

भाष्यसारः। उक्थे स्तोत्रे तन्मयत्वादत्र अध्वरे यज्ञे अग्निः पुरोहितः अग्रतः पूर्वस्यां दिशि उत्तर-वेद्याम् आहवनीय-देशे ऋत्विग्भिर्निहितः संस्थापितः, तथा ग्रावाणः—प्रस्तराः सोमाभिषवार्थं पुरतो रक्षिताः, बर्हिः च पुरतो निहितम्। अतः हे मरुतः, हे ब्रह्मणस्पते, हे देवाः इन्द्रादयः! वरेण्यं—वरणीयम्, अवः—रक्षणम्, ऋचा—स्तुत्या, युष्मान् यामि—याचे ॥ ४ ॥

Agni is placed in front, in the sacrifice (mainly consisting in songs and recitations, or where songs are recited); so also the stones are kept ready (for pressing out Soma-juice), and kuśa grass is spread in front (for holy seats). O Maruts, O Brahmaṇaspati, O resplendent ones (gods, e.g. Indra etc.) I pray you, with hymn, for the best or most desired protection.—4.

**सा०-भा०**—मनुः प्रार्थयते—'उक्थे' स्तोत्रशस्त्रात्मके 'अध्वरे' हिंसारहिते अस्मिन् यज्ञे 'अग्निः' 'पुरोहितः' यज्ञार्थं पुरतः उत्तरवेद्याम् ऋत्विग्भिर्निहितोऽभूत्। तथा 'ग्रावाणः' सोमाभिषवार्थं पुरतो निहिताः। 'बर्हिः' च पुरतो निहितम् आसादितम्। एवं सामग्र्यां सत्यां हे 'मरुतः' एकोनपञ्चाशन्मरुद्गणाः! हे 'ब्रह्मणस्पते' स्तोत्रस्य पालक, एतन्नामक देव! हे 'देवाः' द्योतनादि-गुणयुक्ताः इन्द्रादयः! 'वरेण्यं' वरणीयं भजनीयम् 'अवः' रक्षणम् 'ऋचा' सूक्तरूपया स्तुत्या 'वः' युष्मान् 'यामि' मनुरहं याचामि। याचतेर्लटि रूपम्। वर्णलोपश्छान्दसः ॥ ४ ॥

४। ऋ० सं० ८ म० २७ सू० १ ऋ० R̥V. has "मरुतो ब्रह्मणस्पतिं देवान्"। (all in the accus.) for "मरुतो ब्रह्मणस्पते देवाः" (in the voc.)—the SV. text.

उक्थे—dr. rt. वच् (परिभाषणे, *to speak.*) with aff. थक्, 'पातृतुदि वचि०' uṇ. ii. 6. —in praise, prayer or hymn, here rfs to the sacrifice which chiefly consists in prayer or recitation or where hymns are recited. cf. अवज्रामुक्थैरहिं गृणीषे—with hymns, thou singest the praise of Ahi......R̥V. vii. 34. 16. 'बृहदुक्' हवामहे—we invoke him to whom sublime hymns are addressed—ib. viii. 32. 10.

पुरोहितः—Sāy. explains this word in its literal sense, as—'placed in front, (or on the east), on the *uttara vedi.*'

मरुतः—the wind-gods, 49 in number, *Vide:* Macdnll's Vedic Mythology. Para. 29.

ब्रह्मणस्पते—*voc.* ब्रह्मणस्पतिर्ब्रह्मणः पाता वा पालयिता वा—Brahmaṇaspati is the protector or supporter of *Brahma* or prayer, *Vide* notes on SV. 1. 56.

ऋचा instr. sg.—'ऋक् अर्चनी'—a song or prayer by which a god is adored or praised Nir. 1. 8. rt. ऋच् (स्तुतौ, *to praise* I.p.)—with क्विप्; ऋचन्ति स्तुवन्ति यया सा ऋच् cf. 'ऋचां त्वः पोषमास्ते पुपुष्वान्' one (the Hotr̥) is engaged in repeating the R̥ks.—R̥V. x. 71. 11.

अवः—rt. अव् (रक्षणे, *to protect*)—with असुन्।

आङ्गिरसः सुदीतिर्ऋषिः, पुरुमीढो वा, उभौ वा। एकं पौरुमीढं साम। पुरुमीढ ऋषिः (क)। बृहतीच्छन्दः। अग्निर्देवता।

२ १ २ ३ १ २ ३ १ २ ३ १ २
अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम्।
२ २ ३ १ २ ३ २उ ३ १ २ २ ३१ ३ २
अग्निं राये पुरुमीढ श्रुतं नरोऽग्निः सुदीतये छर्दिः॥५॥४९॥

अग्निम्। ईडिष्व। अवसे। गाथाभिः। शीरऽशोचिषम्। अग्निम्। राये। पुरुऽमीढ। श्रुतम्। नरः। अग्निः। सुऽदीतये। छर्दिः॥ ५॥

भाष्यसारः। हे पुरुमीढ, त्वं शीरशोचिषम्—शयितं व्याप्तं शोचिस्तेजो यस्य सर्वस्मिन् भूतेऽन्तर्लीनतेजःस्वरूपं सर्वव्यापिनमित्यर्थः, अग्निम् अवसे—रक्षणाय, गाथाभिः—स्तुतिभिः, ईडिष्व—स्तुहि, तथा राये—धनाय, स्तुहि। श्रुतं—प्रसिद्धं श्रुतिसिद्धं, नरः (नृ-शब्दस्य प्रथमा-बहुवचने रूपम्)—यज्ञ-नेतारो यजमानाः स्तुवन्ति। यतः सः अग्निः सुदीतये—शोभनदानाय यजमानाय, तन्नामकाय ऋषये वा, छर्दिः—गृहं यच्छति, यद्वा गृहवदाश्रयो भवति॥ ५॥

O Purumiḍha, glorify Agni with the lustre lying within (every creature), with hymns, for protection and wealth. (Other) men (also) praise renowned Agni, as Agni is the shelter to the good offerer of oblation (sacrificer); or may Agni give me (sage Sudīti, the Seer of this Mantra) a dwelling.—5.

**सा०-भा०**—हे 'पुरुमीढ' त्वम् 'अग्निम्' 'अवसे' रक्षणाय 'ईडिष्व' स्तुहि 'गाथाभिः' गाथेति वाङ्नाम [निघ० १,११,] मन्त्ररूपाभिः वाग्भिः। कीदृशम्? 'शीर-शोचिषं' शयन-स्वभाव-रोचिषम्। तथा 'राये' धनाय ईडिष्व। 'श्रुतम्' एनं 'नरः' अन्येऽपि यजमानाः स्तुवन्ति स्वार्थम्। तस्मात् 'सुदीतये' मह्यम् 'अग्निः' त्वयाभिष्टुतः सन् 'छर्दिः' गृहं याचस्वेत्येवं सुदीतिः पुरुमीढं ब्रूते॥ ५॥

५। ऋ०, सं०, ८म० ७१सू १४ऋ०। R̥V. reads 'अग्निं (accus.) सुदीतये छर्दिः' instead of 'अग्निः' (nom) etc.

This verse is supposed to be addressed by Sudīti to Purumiḍha, acc. to Sāv.

ईडिष्व—rt. ईड (स्तुतौ, *to praise*. 2. Ā.) imp. sg. cf. 'अग्निमीडे पुरोहितम्'—R̥V. i.1.1.

अवसे—अवितुं, रक्षणाय, for protection: *Vide* inf. with aff. असे in the place of तुम्, तुमर्थे से-सेन्-असे—Pāṇ. iii.4.9.

(क) 'पौरुमीढञ्च'—आ० ब्रा०।

गाथाभिः—a song, R̥V. i. 167. 6 ; ix, 11. 4. fr. rt. गै ( गा ) *to sing.*

शीरशोचिषम्—of pervading flame ; whose splendours lie outspread—*Wils.* शेते इति शीरम्—rt. शी (*to lie*)—aff. रक्—by स्फायितञ्चि० uṇ. ii.12. for शोचिः *see* notes on शोचिषा—SV. 1. 22. dr. fr. rt. शुच् (*to gleam*, 1. u.)—with aff. इसि, 'अर्चिशुचि०' uṇ. 2.108, शुक्र is dervd. from this root *see* SV. 1. 4.—शीरं (pervading) शोचिः (flame) यस्य—for mg. *see* भाष्यसार above ; शीरम्—also rfs. to Agni—Ngh. 4.1 ; शोचिः is flame, Ngh. 1.17. cf. 'शीरं पावकशोचिषम्'— (I laud) Agni (शीरम्) of purifying flames (पावकशोचिषम्) i.e., of pure light. R̥V. शीरम् अनुशायिनमिति वा आशिनमिति वा—*Śiram* means lying in all ( अनु प्रविश्य सर्वभूतानि शेते इति 'अनुशायी' तम् ) or pervading all (आप्नोति व्याप्नोति सर्वभूतानीति 'आशी'—तम्) ; शीरम् is dervd. from rt. शी or अश्—Nir. 4.14.

राये—dat. sg. from the rt. रा ( दाने *to give.* 2.p.) ङे-स्थाने शे-आदेशः by सुपां सुलुक्—Pāṇ. vii.1.39.

पुरुमीढ—Name of a sage with the patr. Aṅgirasa or Sauhotra, to whom the hymns—R̥V. iv. 43 ; 44—were revealed.

श्रुतम्—far-famed—*Wils.*

नरः—nom. pl. of 'नृ'—rfs. to sacrificers, (lit.) leaders of sacrifice.

सुदीतये—शोभना दीतिर्दानं यस्य तस्मै। दीतिः—dr. दा *to give*—with aff. क्तिन्, दा becomes दी by घुमास्था०—Pāṇ. vi. iv. 66.—here, acc. to Sāy. the name of the sage to whom this mantra was revealed.

छर्दिः—गृहम्—a house, a dwelling, a residence—Ngh. 3. 4. *vide* 'छर्दिष्पा' —protecting a house, R̥V. viii. 9. 11.

Wils, after Sāy., translates—'solicit of Agni a house for (me) Sudīti'.

---

**प्रस्कण्व ऋषिः। 'कार्णश्रवसं' साम कर्णश्रवा नाम ऋषिः, यद्वा 'प्रास्कण्वं साम' प्रस्कण्वेन दृष्टम् (क)। बृहतीच्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे विनियोगः।**

३ १ २ ३ १ २ ३१ २ ३ १ २
**श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः।**
३ २ ३ १ २ ३ १ २३ १ २ ३ १२ ३२
**आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे॥ ६ ॥५०॥**

श्रुधि। श्रुत्ऽकर्ण। वह्निभिः। देवैः। अग्ने। सयावऽभिः। आ। सीदतु। बर्हिषि। मित्रः। अर्यमा। प्रातःऽयावभिः। अध्वरे॥ ६ ॥

भाष्यसारः। **हे श्रुत्कर्ण—यजमानान् प्रति सदयबुद्ध्या श्रवणशीलकर्णयुक्त, तेषां स्तुतौ दत्तावधान, हे अग्ने, श्रुधि—अस्माकं प्रार्थनं शृणु, मित्रः, अर्यमा, तदादिभिः**

(क) 'कार्णश्रवसं च प्रास्कण्वं वा'—आ० ब्रा०।

अन्यैः प्रातर्यावभिः प्रातःकाले यज्ञ-स्थानं गच्छद्भिः देवैः सयावभिः त्वया सहगामिभि-रन्यैः वह्निभिः हविर्वाहकैः देवैः सह अध्वरे बर्हिषि—आस्तीर्णकुशे आसीदतु—उपविशतु ॥ ६ ॥

Listen (to our prayers), O Agni, with listening ears, with all thy associate gods—Mitra, Aryaman and others, who come at dawn carrying oblation; mayest thou sit on the holy grass, at the sacrifice.—6.

**सा०-भा०**—अग्निः देवता। हे 'श्रुत्कर्ण' ! श्रवणसमर्थाभ्यां कर्णाभ्यां युत ! 'अग्ने' ! अस्मदीयं वचनं 'श्रुधि' शृणु। यः 'मित्रः' देवः 'अर्यमा' देवश्च 'अन्यैः' 'प्रातर्यावभिः' प्रातःकाले देवयजनं गच्छद्भिः 'देवैः' सर्वैः 'सयावभिः' आहवनीयाग्निना त्वया समानगतिभिः अन्यैः 'वह्निभिः' देवैः सह 'अध्वरे' क्रतुनिमित्ते 'बर्हिषि' दर्भे 'आ सीदतु' उप-विशतु ॥ ६ ॥

६। ऋ०, सं०, १म० ४४सू० १३ऋ०। In the place of the second half of the Sāma-vedic stanza above, the Ṛ V. reads—'आसीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम्'।

Sāy.'s addl. notes in his com. on the Ṛ V. Stanza—

श्रुधि—श्रु श्रवणे श्रु शृणुवित्यादिना हे र्धिरादेशः। बहुलं छन्दसीति विकरणस्य लुक्। श्रुत्कर्ण—शृणोतीति श्रुत्। क्विपि तुगागमः। श्रुतौ कर्णौ यस्यासौ श्रुत्कर्णः। वह्निभिः—वह् प्रापणे 'वहिश्रियु०' इति नि प्रत्ययः। सयावभिः—समानं यान्ति इति सयावानः, या प्रापणे 'आतो मनिन्' इति वनिप्।

श्रुत्कर्ण—*voc.* शृणोतीति श्रुत्—rt. श्रु—क्विप्, 'ह्रस्वस्य पिति कृति तुक्' Pāṇ. vi. 1.71. श्रुतौ कर्णौ यस्य—the mg. probably is that Agni graciously listens to the prayers of the devoted worshippers; 'who has ears to hear'—*Grfth.* 'Agni, with sharp ears'.—*Wils.*

श्रुधि—शृणु, hear, rt. श्रु *to hear* imp. 2. sg. *Vide* : SV. 1. 29.

वह्निभिः—oblation-bearing goods. rt. वह्—नि (see Say.'s addl. notes quoted here above).

सयावभिः—with all thy train of escort gods—*Grfth.* See also our trans. above. सह यान्ति इति या धातोः वनिप् 'आतो मनिन्' etc. Pāṇ. iii. 2. 74.—going along with, associated with, accompanying.

मित्रः—one of the sun-gods;—*vide* Mcdnll's Ved. Myth. Para 13. p. 29.

अर्यमा—(*Aryaman*)—is one of the group of gods called Ādityas; mentioned about 100 times in the Ṛ V. in association with Mitra and Varuṇa, he has no individual characteristics, so in the Naighaṇṭuka he is passed over in the list of gods.—Mcdnll's Ved. Myth. para 10. p. 45.

यावभिः—for dr. see notes on सयावभिः ( या—वनिप् )। प्रातर्यावभिः—early-stirring deities.—*Wils.*

सौभरिर्ऋषिः। एकं 'दैवोदासं' साम दिवोदास ऋषिश्च (क)। बृहतीच्छन्दः। अग्निर्देवता।

१र २र ३ २ ३ २उ ३ २ ३ १ २
प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना।
१ २ ३ १ २ ३ १र २र ३ १र २र ३ १ २
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥७॥५१॥

प्र। दैवःऽदासः। अग्निः। देवः। इन्द्रः। न। मज्मना। अनु। मातरम्। पृथिवीम्। वि। ववृते। तस्थौ। नाकस्य। शर्मणि ॥ ७ ॥

भाष्यसारः। देवः, मज्मना—बलेन हेतुभूतेन, इन्द्रो न—इन्द्रसदृशः, दैवोदासः—दिवोदास-नाम्ना राज्ञाऽऽहूयमानः अग्निः मातरं मातृभूतां पृथिवीम् अनु प्र वि ववृते—देवान् प्रति हविर्वोढुं विशेषेण प्रवर्त्तयति, अयम् अग्निः नाकस्य—स्वर्गस्य, शर्मणि—गृहे, स्वर्ग एव इत्यर्थः, तस्थौ—तिष्ठति ॥ ७ ॥

Agni of Divodāsa—resplendent, like Indra in strength (or kindled with force) urges the mother Earth (to the offering of oblation to the gods); he dwells in heaven's high abode.—7.

सा०-भा०। 'देवः' द्योतमानः इन्द्रः परमैश्वर्ययुक्तः 'दैवोदासः' दिवोदासेनाहूयमानः 'अग्निः' 'मातरं' सर्वस्य लोकस्य धारणात् पृथिवी माता ताम्, पृथिवीम् 'अनु प्र वि ववृते' देवान् प्रति हविर्वोढुं विशेषेण प्रवर्त्तयति। यस्मादेनमग्निं दिवोदासः 'मज्मना' बलेन आजुहाव तस्मादयम् अग्निः 'नाकस्य' स्वर्गस्य 'शर्मणि' गृहे स्वायतने एव 'तस्थौ' अतिष्ठत् ॥ ७ ॥

७। ऋ० सं० ८ म० १०३ सू० २ ऋ० ṚV. reads 'अग्निर्देवाँ अच्छ न' (as towards the gods), instead of 'देव इन्द्रो न' (resplendent like Indra), and 'नाकस्य सानवि' instead of 'नाकस्य शर्मणि'। उ० आर्चि० ७, १, ११, ३।

Prof. Wilson remarks—'this is an obscure verse' : he has followed the translation suggested by the St. Peters. Dict.—e.g. 'Agni when invoked by Divodāsa, ran along the mother Earth as with might, towards the gods ; he took his place in the height of heaven.'

दैवोदासः—दिवोदास + tad. aff. अण्, by तस्येदम्—'of Divodāsa' :—Agni who was especially worshipped by the liberal prince Divodāsa and was claimed as his tutelary deity. Divodāsa was the son of Vadhryaśva, said to have been given to him by Sarasvatī (ṚV. vi. 61.1). 'Agni of Divodāsa'—is mentioned

(क) 'दैवोदासश्च'—आ० ब्रा०।

here. Mention of this prince is found in ( ii. 19.6 ), where Indra is said to have vanquished Śambara—the demon for his sake.

मज्मना—बलेन, in strength. Ngh. 2. 9 ; rt. मस्ज (*to merge* 6.p.) with aff. मनिन्, 'सर्वधातुभ्यो मनिन्' uṇ. iv. 145. Sāy. explains—'Divodāsa, the prince, invoked Agni with force', to get this mg. he has to supply the words 'एनमग्निमाजुहाव', this is rather far-fetched. Our construction is 'इन्द्रो न मज्मना' which conveys a very simple and perhaps the right sense, viz.—'like Indra in strength.' *Grfth* translates this—'comes forth like Indra in his might' :—this is also not right as additional words 'comes forth' are to be supplied.

मातरं पृथिवीम्—Pṛthivī frequently receives the epithet 'Mother' in combination with '*Dyaus*' as father. These two gods together are often called universal parents. Agni is sometimes represented as the son of Heaven and Earth.

शर्मणि—loc. sg. शृधातोर्मनिन्, for gram. rule see above in notes on 'मज्मना'। शर्मेति गृह-नाम—नि० ३.१३.८. शर्म is found, elsewhere, in the sense of happiness or bliss.

अनु प्र वि वव्रते—'spreads along'—Macdnll : Ved. Myth. P. 90.

---

मेधातिथिर्ऋषिः मेध्यातिथिर्वा । एकं सौक्रतवं साम, सुक्रतुर्ऋषिश्च । बृहतीच्छन्दः। इन्द्रो देवता । महाव्रतयागे निष्केवल्यशंसने विनियोगः ।

२ ३ १र २र ३ १ २ ३ १ २ ३ १र २र
अध ज्मो अध वा दिवो बृहतो रोचनादधि ।
३ १ २ क २र ३ २उ ३ १ २
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥८॥५२॥

अधः । ज्मः । अध । वा । दिवः । बृहतः । रोचनात् । अधि । अया । वर्धस्व । तन्वा । गिरा । मम । आ । जाता । सुक्रतो इति सुऽक्रतो । पृण ॥८॥

भाष्यसारः । हे इन्द्र, अध—अधुना, ज्मः पृथिव्याः सकाशात् अध वा अपि वा दिवः अन्तरिक्षात्, बृहतः—महतः, रोचनात्—ज्योतिर्मयात् स्वर्गात् आगत्य, अधि पञ्चम्यर्थद्योतकमव्ययम्। अया—अनया, तन्वा—विस्तृतया, मम गिरा—स्तुत्या, वर्धस्व—वर्धितो भव। हे सुक्रतो--शुभकर्मन्, जाता—जातान्, पृण--ईप्सितफलैः आपूरय ॥ ८ ॥

O Indra, of excellent deed or wisdom, coming from earth or from high luminous heaven, mayest thou wax great, with this my prolonged prayer ; mayest thou fulfil (the desires of) all creatures.--8.

**सा०-भा० ।** हे इन्द्र ! 'अध' अधुना। 'ज्मः' जमन्ति गच्छन्त्यस्यामिति ज्मा पृथिवी तस्याः सकाशात्। 'अध वा' अपि वा 'दिवः' अन्तरिक्षात् 'बृहतः' महतः रोचनात् नक्षत्रैर्दीप्यमानात् स्वर्गाद्वा आगत्य। 'अधिः' पञ्चम्यर्थानुवादी। 'अया' अनया 'तन्वा' ततया विस्तृतया 'मम' मदीयया 'गिरा' स्तुत्या 'वर्द्धस्व' वृद्धो भव। हे 'सुक्रतो' शोभनकर्मवन्निन्द्र ! 'जाता' जातान् अस्मदीयान् जनान् अभिलषितैः फलैः आपूरय ॥ ८ ॥

८। ऋ० सं० ८म० १सू० १८ ऋ०।

अध, अधवा ( अथवा )—*Indecs.* mark the mgs. above in भाष्यसार and our trans.

अधि—also an *Indec.* with the sense of the fifth case i.e. *from.*

अया—अनया—the न after अ is dropped,—this is peculiar only in the Vedas. छान्दसाऽन्वादेशाभावः। 'अयैनेत्युपदेशस्य'—अया एना इति उपदेशस्य नामनी भवतः *Ayā* and *Enā* are synonyms used in referring to something Nir. 3. 21. cf. 'अया ते अग्ने समिधा विधेम'—with this fuel we worship thee, O Agni—Ṛ̣V. iv. 4.15. as for एना see SV. 1. 45.

ज्मः—gen. sg.—for ज्मायाः ( class. form )—of the earth ; ज्मा the earth, Ngh. 1. 1. cf. 'ज्मया अत्र वसवो रन्त देवाः', the radiant Vasus rejoice, on this accasion, on the earth ṚV. vii. 39. 3. Sāy. gives the etymology of the word in his com. above ; fr. rt. जम् *to go.*

तन्वा—*stem* तनू. fem. epithet of गिरा ; 'diffusive praise'—*Wils.*

सुक्रतो—*voc.*—vide : notes on सुक्रतुम् SV. 1. 3.

पृण—rt. पृ (पूरणे, *to fill* 9. p.)—here, satisfy or gratify, imp. 2. sg. cf. 'इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति' the gods fill thee with strength like Indra or Vāyu.

जाता—जातान् , the case term. is changed to आ, by सुपां सुलुक्०—Pāṇ. vii. 1. 3.

---

विश्वामित्र ऋषिः। द्वे सामनी काण्वे। कण्व ऋषिः(क)। बृहतीच्छन्दः अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

१ २ ३ २उ ३ १र २र ३ २
**कायमानो वना त्वं यन्मातॄरजगन्नपः।**
१र २र ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
**न तत्ते अग्ने प्र मृषे निवर्त्तनं यद्दूरे सन्निहा भुवः ॥९॥५३॥**

कायमानः । वना । त्वम् । यत् । मातॄः । अजगन् । अपः । न । तत् । ते । अग्ने । प्रऽमृषे । निऽवर्त्तनम् । यत् । दूरे । सन् । इह । आ । भुवः ॥९॥

भाष्यसारः। हे अग्ने ! वना—वनानि, भक्षितुं कायमानः—कामयमानः इच्छन्,

(क) 'काण्वे द्वे'—आ० ब्रा०।

त्वम् यत्—यस्मात्, तानि विहाय, मातॄः—मातृभूताः, अपः—जलानि, आपो वा अग्नेर्योनिरिति आम्नातत्वात्, अजगन्—गतवानसि, तत्—तस्मात्, तव निवर्त्तनं—नितरां तत्रैव वर्त्तनं भवति। तत् च तव अदर्शनं न प्रमृषे—सह्यते, यत्—यतः दूरे सन् वर्त्तमानस्त्वम् अदृश्योऽपि भूत्वा इह अस्माकम् अरणीरूपेषु काष्ठेषु आ—समन्तात्, भुवः—भवसि—अरण्योर्मथ्यमानो जायसे ॥ ६ ॥

O Agni, thou, though loving woods, retirest to (thy) mothers—the waters. (There thou art lost i.e. liest extinguished), that thy submersion is not endured (is keenly felt); though staying afar, thou art here i.e. art produced by the friction of two Araṇis.—9.

**सा०-भा० ।** हे 'अग्ने'! 'वना' वनानि काननानि भक्षितुं 'कायमानः' कामयमानः त्वं 'यत्' यस्मात् कारणात् तानि विहाय 'मातॄः' मातृभूताः 'अपः' 'अजगन्' अगमः गतवानसि। अप्सु प्रविष्टत्वाच्छान्तो वर्त्तसे। 'तत्' तस्मात् 'ते' तव निवर्त्तनं नितरां तत्रैव वर्त्तनं, तेन च विनाशो लक्ष्यते। सः विनाशो 'न प्रमृषे' कृत्यार्थे केन् प्रत्ययः न प्रमृष्यते न सह्यते। कुतः?—इत्यत आह, 'यत्' यस्मात् कारणात् 'दूरे सन्' दूरे अदृश्यतया वर्त्तमानस्त्वम् 'इह' अस्मत्सम्बन्धिष्वरणीरूपेषु काष्ठेषु 'आभुवः' समन्तात् भवेः। मन्थनात् क्षणमात्रेणास्माकं समीपे भवसि, तस्मात् तव दूरतो वर्त्तनम् अस्मभ्यं न रोचते ॥ ६ ॥

६। ऋ० सं०, ३म० ६सू०, २ऋ०। ṚV. reads **अभवः** instead of **आभुवः**।
Sāyaṇ's addl. notes in his com. on the ṚV. stanza :—

अस्मिन्नर्थे यास्कः—कायमानश्चायमानः कामयमान इति वा। वनानि त्वं यन्मातॄरपोऽगम उपाशाम्यन्। न तत्ते अग्ने प्रमृष्यते निवर्त्तनं दूरे यत् सन्निह भवसि जायमानः—नि० ४, १४। कायमानः—कमु कान्तौ कर्मणिङ्। लटः शानच्। मकारलोपश्छान्दसः। अजगन्—गम्लृ गतावित्यस्य लङि बहुलं छन्दसीति शपः श्लुः। हल्ङ्यादिना सि-लोपः। मो नो धातोरिति नकारः। प्रमृषे—मृष् तितिक्षायां व्यत्ययेन कर्मणि त-प्रत्ययः। लोपस्त आत्मनेपदेष्विति त-लोपः।

Yāska explains this verse in Nirukta 4.14.

कायमानः—desiring—dr. rt. कम् (कान्तौ, *to desire, to love*) caus. कमेर्णिङ् Pāṇ. iii. 1. 30. शानच्—कामयमानः (the class. sans. form). म is dropped—by Vedic anomaly. So the above form is obtained. Or कायमानः = rt. चाय् (पूजा निशामनयोः, to worship, to observe 1.)—pr. pt. (शानच्). च changed to क।

वना—वनानि—शि (the neuter nom. and accus. pl. term.) i. e. नि-portion is dropped by—'शेश्छन्दसि बहुलम्' Pāṇ. vi.1.70.

मातॄः अपः—waters are conceived to be the mothers of Agni. Agni's origin in the aerial waters is frequently referred to. Agni, as the 'son of waters' (अपां नपात्) is often mentioned as a distinct deity; Agni is also the embryo of the

waters RV. iii. 1. 12, 13 ; he is kindled in the waters : he is described as grown up in the lap of the waters—RV. x. 8. 1.

अजगन्—अगच्छः dr. rt. गम् *to go* imperf. ( लङ् ) 2. sg. शप्—becomes श्लु by बहुलं छन्दसि Pāṇ. ii. 4. 76. i. e. cl. 1. is conjugated like cl. 3, गम् not changed to गच्छ ; so the root gets reduplicated. सि—(imperf. 2. sg. term.) drops by हल्ङ्या० Pāṇ. vi. 1. 68. the final म of the verbal root is changed to न by 'मो नोधातोः' Pāṇ. viii. 2. 64.

प्र-मृषे = प्रमृष्यते ; dr. rt. प्र-मृष् ( तितिक्षायां, *to bear, to endure* 4. u. ) कर्मणि ते, त is dropped by 'लोपस्त आत्मनेपदेषु' Pāṇ. vii.1.41. cf. शये for शेते।

आ-भुवः—आ—भू + लेट् (subj.) 2. sg.—अ ( अट् ) is added to the root by लेटोऽडाटौ Pāṇ. iii. 4. 94. भू becomes भुव् ( उवङ् )—before अट् following. cf. कया नश्चित्र आभुवद् ऊती।

Prof. Wilson translates—'thy tarrying so far away is not to be endured ; (in a moment) thou art here with us,' and comments—'although not yet kindled, yet as soon as the attrition of the touch-wood takes place, Agni appears.

---

कण्व ऋषिः । द्वे मानवे सामनी मनुऋर्षिः(क) । बृहतीच्छन्दः । अग्निर्देवता । प्रातरनुवाके विनियोगः ।

१ २ ३२ ३ १ २ ३ २ ३ १ २ ३ १ २
नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
३ २ ३ १ २ ३ ३ १२ २२ ३ १ २ ३ १ २
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥ १० ॥५४॥

नि । त्वाम् । अग्ने । मनुः । दधे । ज्योतिः । जनाय । शश्वते । दीदेथ । कण्वे । ऋतऽजातः । उक्षितः । यम् । नमस्यन्ति । कृष्टयः ॥१०॥

भाष्यसारः । हे अग्ने, ज्योतिः—प्रकाश-स्वरूपम्, त्वां शश्वते जनाय—बहुनां सर्वेषामित्यर्थः जनानां कृते, मनुः निदधे—यज्ञार्थं प्रतिष्ठापितवान्, यस्त्वम् ऋतेन—यज्ञेन सह जातः उत्पन्नः, उक्षितः—हविर्भिस्तृप्तः वर्धितो वा सन् कण्वे एतन्नामके महर्षौ मयि दीदेथ दीप्तवानसि, यम् अग्निं कृष्टयः—मनुष्याः, नमस्यन्ति—नमस्कुर्वन्ति, नमसा हवीरूपान्नदानादिना तर्पयन्ति वा ॥ १० ॥

O Agni, Manu established thee, the illumining light for all men ; on thou, Agni, born with sacrifice, fed and fostered with oblations, to whom people pay homage, hast burnt ablaze for Kanva.—10.

---

(क) 'मानवे द्वे'—आ० ब्रा० ।

**सा०-भा० ।** 'अग्ने' 'ज्योतिः' प्रकाशरूपं 'त्वां' 'शश्वते' बहुविधाय यजमानाय 'मनुः' प्रजापतिः 'निदधे' देवयजनदेशे स्थापितवान्। हे 'अग्ने'! त्वम् 'ऋतजातः' ऋतेन यज्ञेन निमित्तभूतेनोत्पन्नः 'उक्षितः' हविर्भिस्तर्पितः सन् 'कण्वे' एतन्नामके महर्षौ मयि 'दीदेथ' दीप्तवानसि। 'यम्' अग्निं 'कृष्टयः' मनुष्याः 'नमस्यन्ति' नमस्कुर्वन्ति स त्वमिति पूर्वत्रान्वयः ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमस्याध्यायस्य पञ्चमः खण्डः।

इति प्रथमप्रपाठकस्य प्रथमार्द्धं समाप्तम्।

**१० । ऋ० सं० १ म० ३६ सू० १९ ऋ० ।**

Say.'s addl. notes in his com. on the ṚV. mantra—

कृष्टयश्चर्षणय इति मनुष्यनामसु पठितत्वात्. दीदेथ—दीदेतिश्छान्दसो दीप्तिकर्मा। थलि द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यम् का० ६.१.८.१. इति द्विर्वचनाभावः। अनित्यमागमशासनमिति वचनादिडभावः। ऋतजातः—ऋते जायते इति ऋतजातः। श्वीदितो निष्ठायामितीट्-प्रतिषेधः। नमस्यन्ति—'नमोवरिव'० पा० ३.१.१९ इति पूजार्थे क्यच्। कृष्टयः—कृष् विलेखने क्तिच् क्तौ च संज्ञायामिति क्तिच्।

मनुः—Manu was the first institutor of sacrifice, he having kindled Agni, he presented the first offering with the seven ministrant priests to the gods.—ṚV. x. 63.7. He established Agni as a light for all people ṚV.i.36. 19.—( the stanza above ).

नि-दधे—the उपसर्ग ( prefix नि ) is widely apart from the verb. *Vide* : notes on नि-षत्सि SV. 1. 1.

शश्वते—( dat. sg. ). शश्वदिति बहुनाम. Ngh. 3.1. शश्वते जनाय—'for various races of man'—*Wils.*

दीदेथ—(thou) hast blazed ; dr. दिद to shine. लिट् थल् perf. 2. sg ; no reduplication by 'छन्दसि वा' Pāṇ. vi. 1. 1 ; no इट् by the maxim "अनित्यमागमशासनम्।" cf. 'यो विड्भ्योदीदेत्'—who shone for the tribes of men. Nir. 7.24.

ऋत-जातः—ऋत means law or order. Grfth. translates it—as 'law-born', this is, though literal, meaningless ; but ऋत has another sense namely 'sacrifice'. Nir. 4.19 ; we have followed Sāyaṇ in translating it as above. See the reference to Manu, who first kindled fire and offered, there, the first sacrifice to the gods *Vide* : mythical notes on Manu above.—'Born for the sake of sacrifice'—*Wils.*

उक्षितः—rt. उक्ष् (सेचने, *to sprinkle*. 1.p) with aff. क्तः,—तृप्तः, 'pleased, satiated with oblations'—*Wils.* or better—grown great fr. rt. उक्ष् ( *to grow* ) उक्षते र्वृद्धिकर्मणः Nir. 12. 9.

कृष्टयः—*Vide* : notes on SV. 1. 11. नमस्यन्ति—'whom men reverence'.—*Wils.*

अथ प्रथमप्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः ।

वशिष्ठ ऋषिः । एकं साम अग्नेः स्वभूतं द्रविणशब्दोपेतम्(क) । बृहतीच्छन्दः । अग्निर्देवता । अग्निष्टोमसामकर्मणि देवताप्रतिष्ठापने विनियोगः(क) ।

३ १ २ ३ २ ३ १ २ ३ १ २
देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
१ २ ३ २ ३ १ २ ३ १र २र ३ १ २
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ १ ॥५५॥

देवः । वः । द्रविणःऽदाः । पूर्णाम् । विवष्टु । आऽसिचम् । उत् । वा । सिञ्चध्वम् । उप । वा । पृणध्वम् । आत् । इत् । वः । देवः । ओहते ॥१॥

भाष्यसारः । द्रविणोदाः—धनदाता, देवः अग्निः युष्माकम् पूर्णां—हविषा पूर्णाम्, आसिचं—घृतेनासिक्तां स्रुचम्, विवष्टु—कामयताम् । हे ऋत्विग्यजमानाः उत्सिञ्चध्वं वा—सोमेन पात्रं सिञ्चत, उपपृणध्वं वा—सोमेन चमसं पूरयत, तदग्नये प्रयच्छत च । आत् इत्—तदैव, देवः अग्निः युष्मान् ओहते—धनं वहति ॥ १ ॥

May the god (Agni), the giver of wealth, covet your ladle full of libation (ghee or Soma-juice); O sacrificers, pour libation on the vessel, fill it up (and offer it to Agni); presently the god (Agni) carries to you wealth.—1.

**सा०-भा० ।** 'द्रविणोदाः' धनानां दाता 'देवः' अग्निः 'वः' युष्मदीयां 'पूर्णाम्' हविषा 'आसिचम्' आसिक्तां स्रुचं 'विवष्टु' कामयताम् । अतः 'उत्सिञ्चध्वं वा' सोमेन पात्रम् । 'उपपृणध्वं वा' सोमम् । वा-शब्दौ समुच्चयार्थौ । ध्रुव-ग्रहेण होतृ-चमसं पूरयत च, अग्नये सोमं प्रयच्छत चेत्यर्थः । 'आदिद्' अनन्तरमेव 'देवः' अग्निः 'वः' युष्मान् 'ओहते' वहति ॥ १ ॥

१ । ऋ० सं० ७म० १६ सू० ११ ऋ० । ṚV. has **'विवष्टि'** ( Indi. mood, longs for, craves ) instead of **'विवष्टु'** ( Imp. md ) as here.

द्रविणोदाः—*Nom. sg.* of the *stem* द्रविणोदस्,—dr. द्रविण-rt. दा+असुन् ( uṇ. iv. 188 ); स् (:) is added anomalously to द्रविण making the form द्रविणोदस् mg. granting wealth. तत् को द्रविणोदाः ? इन्द्र इति क्रौष्टुकिः ।······अयाप्यग्निं द्रविणोदसमाह ।

(क) 'देवो वो द्रविणोदा इत्यग्निष्टोमसाम कार्यं देवतास्वेवैनान् प्रतिष्ठापयति । ता० म० ब्रा० १७।१।१० ।

स उत्तमे स्तोत्रे देवो वो द्रविणोदा इति देवानभिपर्यावर्त्तत । ता० म० ब्रा० १८।१।४ ।

एष पुनरेतस्माज्जायते'--the epithet *dravinodah* is applied to Indra. ( acc. to Acārya Krauṣṭuki )--also to Agni—being Indra's son. ( Agni is said to have been generated by Indra,—'यो अश्मनोरन्तरग्निं जजान' Ṛ.V. ii. 12. 3. )—Nir. 8.2. Agni is so called because he is the giver of wealth, or strength. cf. 'द्रविणोदा द्रविणसो अध्वरं यज्ञेषु देवमीलते'--the priests laud divine (Agni), the giver of wealth in sacrifices.— Ṛ.V. i. 57.7. as for etymology of the word द्रविण *vide* : notes on SV. 1. 4.

पूर्णाम्—refers to the ladle full of libation.

विवष्टु—rt. वश् (कान्तौ, *to wish, to covet* 2. p.). Ngh. 2.6. Imp. (लोट्) 3. sg.—शप. लु, द्वित्वम्, 'बहुलं छन्दसि' पा० ७।४।७८ इत्यभ्यासस्य इकारः। श-स्थाने ष्। ( व्रश्चभ्रस्ज० पा० ८।२।३६ इति ) त-स्थाने टः।

आसिचम्--आ-सिच् ( क्षरणे, *to pour, to besprinkle* 6. u ) + क्विप् : आसिञ्चन्ति अनया इति,--rfs. to स्रुक्—a sort of wooden ladle or spoon used in sacrifice for pouring ghee or other liquid libations e.g. soma-juice etc., on a sacrificial fire, properly made of Palāśa or Khadira wood. Three are enumerated, viz. जुहू, उपभृत्, ध्रुवा।

उत्सिञ्चध्वम्—उत्-सिच् Imp. 2.pl. उपपृणध्वम्—similarly drvd ; rt. पॄ पूरणे, *to fill*, 9p. is परस्मैपदी—here used as आत्मनेपदी by व्यत्यय।

आत् इत्—these two *Indecs* combined, give the sense 'immediately after'.

ओहते—आ-वह् + लट् ते।

---

कण्व ऋषिः। बार्हस्पत्यं साम बृहस्पतिर्ऋषिः(क)। बृहतीच्छन्दः। अग्निर्देवता। अग्नीषोमीयप्रणयने विनियोगः।

२ ३ १ २ ३ २ २ २ क २र ३ १ २
**प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता।**
१ २ ३ १र २ २र ३ १ २ ३ २ ३ १ २
**अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥२॥५६॥**

प्र। एतु। ब्रह्मणःऽपतिः। प्र। देवी। एतु। सूनृता। अच्छ। वीरम्। नर्यम्। पङ्क्तिऽराधसम्। देवाः। यज्ञम्। नयन्तु। नः ॥२॥

भाष्यसारः। ब्रह्मणस्पतिः प्रैतु—आगच्छतु, सूनृता देवी प्रैतु. देवाः—ब्रह्मणस्पत्यादयो देवताः, वीरं—शत्रुं निःशेषेण विनाशयन्तु। नर्यं—नराणां हितम्, पङ्क्तिराधसं हविष्पञ्चकसमृद्धं पञ्चोपलक्षितैर्बहुभिर्हविर्भिर्युक्तम्, यज्ञम् अच्छ—प्रति अस्मान् नयन्तु ॥ २ ॥

(क) 'बार्हस्पत्यञ्च' आ० ब्रा०।

May Brahmaṇaspati come (to us), may Goddess Sūnṛtā approach us, may gods drive away the strong enemy and lead us to the sacrifice, which is benevolent to men and which is rich in five-fold (i.e. numerous) oblations.—2.

**सा०-भा०।** 'ब्रह्मणस्पतिः' देवः 'प्रैतु' अस्मान् प्राप्नोतु। 'सूनृता' देवी प्रियसत्यभूता वाग्देवता 'प्रैतु' अस्मान् प्राप्नोतु। 'देवाः' ब्रह्मणस्पत्यादयो देवताः 'वीरं' शत्रुं निःशेषेण 'दूरे' प्रेरयन्तु। तं 'नर्यं' मनुष्येभ्यो हितम्। 'पङ्क्तिराधसं' ब्राह्मणोक्तहविषा पङ्क्त्यादिभिः समृद्धं यज्ञं प्रति नः अस्मान् 'अच्छ' आभिमुख्येन 'नयन्तु' प्रापयन्तु ॥ २ ॥

२। ऋ० सं० १म० ४०सू० ३ऋ०।

Say.'s addl. notes in his com. on the Ṛ̣V. stanza :—

प्रैतु—एङि पररूपम् पा० ६.१.९४. इति। एत्येधत्यूठ्सु पा० ६.१.८९ इति वृद्धिः। नर्यं—नरेभ्यो हितं यत्-प्रत्ययः—पा० ५,१,२। पंक्तिराधसं पंक्तिभीराध्नोति पंक्तिराधाः उ० ४,२२६ इति असुन्। यज्ञं यज्ञ याचेत्यादिना यजतेर्नङ्।

ब्रह्मणस्पतिः—ब्रह्म प्रार्थना स्तुतिः मन्त्रो वा तस्य पतिः, स्तुत्यात्मको देवः। Acc. to Max-müller, बृहः and ब्रह्मण् are drvd. from the same root बृह् *to speak* ; so बृहस्पति, ब्रह्मणस्पति and वाचस्पति mean the same god. 'Lord of Prayer'—*Grfth.* rt. बृह् (शब्दे, *to speak* I.p) + मनिन् = ब्रह्मण् ; तस्य पतिः 'षष्ठ्याः पति'० Pāṇ. viii. 3.53. इति विसर्गस्य सः। Or from the rt. बृह्—वृद्धौ, to *grow*.

सूनृता—the goddess of true and pleasant speech—Sāy. West. scholars have followed Sāyaṇ. Vāgdevatā,—a form of Sarasvatī—*Wils.*

वीरम्—*vide* : notes on 'सुवीरम्' SV. I.26.mg. शत्रुम्—the strong enemy—Sāy. 'the hero—i. e. Agni'—*Grfth.* He construes differently, viz. 'gods bring to our rite, which yields a five-fold gift, the hero (i. e. Agni—lover of mankind').

नर्यम्—नर्यो नृभ्यो हितः—Nir. II. 36. हितार्थे यत्—Pāṇ. v. I. 5.

पंक्तिराधसम्—an epithet of यज्ञम् ; drvd. from the rt. पचि (व्यक्तीकरणे, *to make clear* I.Ā.) पंक्तिः is the same as पञ्चन् which is drvd. from the same root ; the metre पंक्ति is so called because it has five pādas (पंक्तिः पञ्चपदा) ; पंक्तिराधसं = हविष्पञ्चक-समृद्धम्, पञ्चोपलक्षितैः बहुभिर्हविर्भिर्युक्तम्—वेदार्थयत्नः ; 'which yields five-fold gift : oblations of grain, gruel, curdled milk, rice-cake and curds'—*Grfth.* 'abounding with respectfully presented offerings'—*Wils.* 'containing five-fold (or numerous) gifts'—M. W. S, E. Dict p. 574. col. 3. राधम्—is a synonym of wealth—Ngh. 2.10. *Vide* : SV. I. 40.

---

कण्व ऋषिः। वसिष्ठस्य स्वभूतं वीङ्कं साम(क)। बृहतीच्छन्दः। विनियोगस्तु—वीङ्कं भवति च्यवनो वै दाधीचोऽश्विनोः प्रिय आसीत्, सोऽजीर्यत् तमेतेन साम्नाप्लु वैङ्कयतां तं पुनर्युवानमकुरुतां···तौ तर्ह्यकामयेतां कामसनि साम वीङ्कं काममेवैतेनावरुन्धे॥ ता० म० ब्रा० १४,६,९—१०। एतेन तुष्टुवानो यौवनबलं लभेत।

३ २ ३ १ २ ३ २ ३ १ २ २ १र २र ३ १

**ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।**

३ १र २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २

**ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे॥३॥५७॥**

ऊर्ध्वः। ऊम् इति। सु। नः। ऊतये। तिष्ठ। देवः। न। सविता। ऊर्ध्वः। वाजस्य। सनिता। यत्। अञ्जिभिः। वाघत्ऽभिः। विऽह्वयामहे॥३॥

भाष्यसारः। **हे अग्ने, अस्माकम् ऊतये—रक्षणाय, ऊर्ध्वः—उन्नतः तिष्ठ, देवः सविता, न—इव,—यथा सूर्यो दिवि उन्नतस्तिष्ठति तथा ऊर्ध्वः—उन्नतः सन्, वाजस्य—अन्नस्य, सनिता—दाता, भव। यत्—यतः, अञ्जिभिः यज्ञेन यूपम् अलङ्कुर्वद्भिः वाघद्भिः यज्ञस्य वाहकैः सम्पादकैः ऋत्विग्भिः सह त्वां विह्वयामहे—विशेषेण आह्वयामः। अतस्त्वम् अन्नस्य दाता भव॥ ७॥**

Rise up (O Agni) for our protection; rising high like the sun, be the bestower of food, as we invoke thee in company with the priests, who carry on sacrifice and who adorn the *Yūpa* (the sacrificial post) with the performance of the same.—3.

**सा०-भा०।** हे यूप! यद्वा, यूपात्मक-दारु-निष्ठाग्ने! 'नः' अस्माकम् 'ऊतये' रक्षणाय 'ऊर्ध्वः' उन्नतः 'तिष्ठ' तिष्ठ। 'सविता' देवः 'न' यथा सूर्यो देव उन्नतस्तिष्ठति, तद्वत् ऊर्ध्वः उन्नतः सन् 'वाजस्य' अन्नस्य 'सनिता' दाता भविष्यसि। 'यद्' यस्मात् कारणात् 'अञ्जिभिः' आज्येन यूपमञ्जद्भिः 'वाघद्भिः' यज्ञं वहद्भिः ऋत्विग्भिः सह 'विह्वयामहे'। अन्नस्य दानाय त्वां विशेषेणाह्वयामः तस्मादन्नस्य दाता भवेति पूर्वत्रान्वयः॥ ३॥

३। ऋ०, सं०, १म०, ३६सू० १३ऋ०।

*Agni*, as erect, is here said to be identified with the yūpa or post to which the victims, at a sacrifice of animals, are bound; and according to Āśvalāyana, this and the next verse are to be recited, on such occasions, at the time of setting up the post.

(क) 'वसिष्ठस्य च वीङ्कम्'—ब्रा० ब्रा०।

Sāy.'s addl. notes in his com. on the Ṛ̣V. mantra :—

उ-षु-ण:—इक: सुञि पा० ६,३,१३४. इति संहितायां दीर्घ:। 'सुञ:' पा० ८,३,१०७ इति षत्वम्। नश्च धातुस्थोरुषुभ्य: पा० ८,४,२७ इति णत्वम्। ऊतये—अवते: क्तिनि ज्वरत्वरेत्यादिना ऊट्। ऊतियूती-त्यादिना क्तिन उदात्तत्वम्। वाजस्य—क्रियाग्रहणं कर्त्तव्यम् (पा० १,४,३२) इति कर्मण: सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी। सनिता—षण दाने लुटि तासि:। इट्—पा० ७,२,३५। तिपो डादेश: पा० २,४,८५ टि-लोप:। अञ्जिभि:—अञ्ज् व्यक्तिम्रक्षणगतिषु उणादि: इ-प्रत्यय:—उ ४,१३९। विह्वयामहे—'नि समुपविभ्यो ह्व:'—पा० १,३,३० इत्यकर्त्तृभिप्राये आत्मनेपदम्।

ऊ—षु—These two indeclinables are often used together, they convey but no meaning, but are used in the case of the shortage of syllables in a metre. उ—(short vowel) *Indec.*—in Mantra or Saṃhitā text, is lengthened by 'निपातस्य च' Pāṇ. vi. 3.136. ऊषु—'सुञ' इति षत्वम्, *vide* SV. 1.28.

ऊतये—( *stem* ऊति dat. sg. ), dr. rt. अव् + क्तिन्, the whole rt. अव् is changed to ऊ ( ऊट् ) by 'ज्वरत्वर०' Pāṇ. vi. 4.20.

तिष्ठा—the final vowel of a verb having two syllables ending in अ gets lengthened by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3.135.

सविता—refers to the sun. Savitṛ is differently extolled in eleven separate hymns in the whole Ṛgveda. Besides there are numerous mentions of his name. Sāy. (on ṚV. 5.81.4.) remarks that before his rising the sun is called Savitṛ and from his rising to setting—Sūrya. But this interpretation does not hold good always, as Savitṛ is sometimes connected with evening as well as morning. However, Savitṛ being one of the Sun-gods (1. Mitra, 2. Sūrya, 3. Pūṣan, 4. Viṣṇu, 5. Savitṛ. etc.) is commonly identified with the sun—*vide :* Macdnll's Ved. Myth. p.32. Para 15.

वाजस्य—अन्नस्य ; वाज is a synonym of अन्न—Ngh. 2. 10. सनिता—rt. सन् ( दाने, *to give*, 8.u. ) with aff. तृच्। Grfth. translates वाजस्य सनिता—as 'strength-bestower'.

अञ्जिभि:—rt. अञ्ज् ( व्यक्ति-म्रक्षण-कान्ति-गतिषु, *here, to decorate*, 7.p. ) with affix इन् 'सर्वधातुभ्य इन्' uṇ. iv. 117. cf. 'अञ्जन्ति त्वामध्वरे'—They anoint thee in the sacrifice ṚV. iii. 8.1,

वाघद्भि:—*vide* note on वाघत: SV. 1.9.—By our oblation-bearing priests.

वि-ह्वयामहे—वि—ह्वे (here शब्दे, to call on, to invoke—1.u.) pres. ( लट् ) 1. pl.

---

**सौभरिऋ॑षि:। एकं साम—अङ्गिर:पुत्रस्य विस्पर्द्धस: ऋषे: (क)। बृहतीच्छन्द:। अग्निर्देवता। प्रातरनुवाके आग्नेयक्रतौ विनियोग:।**

२उ ३ १र २र ३ २ ३ १ २ ३ १ २
**प्र यो राये निनीषति मर्त्तो यस्ते वसो दाशत्।**
३ १ २ ३ २ ३ १ २ ३ १ २
**स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम्॥ ४ ॥५८॥**

(क) 'विस्पर्धसश्चाङ्गिरसस्य साम'—आ० ब्रा०

प्र। यः। राये। निनीषति। मर्त्तः। यः। ते। वसो इति। दाशत्। सः। वीरम्। धत्ते। अग्ने। उक्थऽशंसिनम्। त्मना। सहस्रऽपोषिणम्॥ ४॥

भाष्यसारः। हे वसो—धनात्मक अग्ने, त्वां यः तव स्तोता राये—धनाय, प्रणिनीषति—प्रणेतुमिच्छति, यश्च मर्त्तः तुभ्यं दाशत्—हवींषि प्रयच्छति, सः जनः त्मना—आत्मना एव, उक्थशंसिनं—स्तोत्रकारिणं स्वाध्यायपरम्, सहस्रपोषिणं—बहुजनपालकम्, बहुधनं वीरं पुत्रं धत्ते—धारयति॥ ४॥

(O Agni) the ordainer of wealth,—the mortal, who wants to establish thee for (gaining) wealth and who offers thee oblations,—begets a gallant son, the singer of vedic hymns, and himself (alone) the maintainer of thousands of men.—4.

**सा०-भा०।** हे 'वसो' वासकाग्ने! त्वां 'यः' तव स्तोता 'राये' धनार्थं 'प्रणिनीषति' प्रणेतुमिच्छति। 'यः' 'मर्त्तः' मनुष्यः 'ते' तुभ्यं 'दाशत्' हवींषि प्रयच्छति। 'सः' मनुष्यः 'उक्थशंसिनम्' उक्थानां शस्त्राणां शंसितारम् 'त्मना' आत्मनैव 'सहस्रपोषिणं' बहुधनम् 'वीरं' पुत्रं 'धत्ते' धारयति॥ ४॥

४। ऋ०, सं०, ८म०, १०३सू०, ४ऋ०। ṚV. reads **'प्र यं राये निनीषसि'** instead of **'प्र यो राये निनीषति'** the mg. there is—'The man, whom thou wouldst lead to wealth.'

राये—*Vide* : SV.1.49. stem रायः—dat. sg. रायः is dervd. from rt. रा *to give*.

प्र-निनीषति—the prefix stands at a distance from the verb,—other words intervening. This is peculiar to the Vedas. *Vide* : rules concerning vedic upasargas—'छन्दसि परेऽपि' Pāṇ. i.4.81. and 'व्यवहिताश्च' 1.4.82. निनीषति is the desiderative ( सन् ) of the rt. नी ( प्रापणे, *to lead*. 1.u ). प्र—नी has a separate sense, viz : to establish, cf. अग्निप्रणयनम्।

वसो—*voc.* see SV.1. 36. Vasu is a synonym of wealth, Agni is here called by this name, inasmuch as he abundantly commands riches (ṚV. i.1.3;—31.10) All treasures are collected in him (ṚV. x.6.6) and he opens the door of riches (ṚV. i.68.10) etc. etc.

दाशत्—gives, offers ; rt. दाशृ ( दाने, *to give*, 1.u. ) लेट् तिप् 3. sg. 'लेटोऽडाटौ' Pāṇ. iii. 4. 94.

उक्थ-शंसिनम्—उक्थैः शंसति कीर्त्तति यः तम्। For उक्थ vide : notes on उक्थे, SV. 1.48. शंसिन् is drvd. from rt. शंस् ( स्तुतौ, to praise 1.p ) + इन।

त्मना—himself ; *stands for* आत्मना, the initial आ of आत्मन् is dropped, in

the Vedas, by 'मन्त्रेष्वाङ्यादेरात्मनः' Pāṇ. vi. 4.141. cf. 'नु मित्रो वरुणो अर्यमा नस् त्मने तोकाय वरिवो दधातु'—R̥V. vii.63.6. 'विश्वं त्मना बिभृतः' they (heaven and earth) support themselves all—R̥V. i. 185. 1. Nir. 3. 22.

सहस्र-पोषिणम्—सहस्रं पुष्णाति यः तम्; from rt. पुष् *to maintain*; सहस्रम् stands for many, सहस्रमिति बहुनाम—Ngh. 3.1.

---

कण्व ऋषिः। ऐतवाह्यं साम, इतवभिर्ऋषिः (क)। बृहतीच्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे विनियोगः।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
**प्र वो यह्वं पुरूणां विशां देवयतीनाम्।**
२ २ ३ २ ३ १ २ ३ २उ ३ २ ३ १ २
**अग्निं सूक्तेभिर्वचोभिर्वृणीमहे यं समिदन्य इन्धते ॥ ५ ॥ ५६ ॥**

प्र। वः। यह्वम्। पुरूणाम्। विशाम्। देवऽयतीनाम्। अग्निम्। सुऽउक्तेभिः। वचःऽभिः। वृणीमहे। यम्। सम्। इत्। अन्ये। इन्धते ॥ ५ ॥

भाष्यसारः। हे ऋत्विजः यजमानाश्च, देवयतीनां—देवान् यष्टुमिच्छन्तीनां देव-भक्तानामित्यर्थः, पुरूणां—बहूनाम्, विशां—प्रजानाम्, युष्माकम् अनुग्रहाय यह्वं—महान्तम्, तम् अग्निं सूक्तेभिः—सूक्तैः स्तुतिभिः, प्र वृणीमहे—उपास्महे। अन्ये इत्—अन्येऽपि ऋषयः यम् अग्निं सम्-इन्धते—सम्यक् दीपयन्ति ॥ ५ ॥

(O priests and sacrificers), for the benefit of you—people, good many in number, who are devoted to gods,—we pray to great Agni, with holy hymns, whom others too ignite (for sacrificial purposes).—5.

**सा०-भा०।** हे ऋत्विग्यजमानाः! 'देवयतीनां' देवान् कामयमानानां 'पुरूणां' बहूनां 'विशां' प्रजारूपाणां 'वः' युष्माकमनुग्रहाय 'यह्वं' महान्तम् 'अग्निं' 'सूक्तेभिः,' सूक्तरूपैः 'वचोभिः' वाक्यैः 'प्र वृणीमहे'। 'अन्ये इत्' अन्येऽप्यृषयः 'यम्' एनमग्निं 'समिन्धते' सम्यग्दीपयन्ति तमग्निमिति पूर्वत्रान्वयः ॥ ५ ॥

५। ऋ०, सं०, १म०, ३६सू० १ऋ०। R̥V. reads **'वचोभिरीमहे'** (we approach with eulogies) instead of **'वचोभिर्वृणीमहे'** the SV. text above, and **सीमिदन्य ईलते** (others adore him) instead of **'समिदन्य इन्धते'** as here above. **उ० आर्चि० १,२,५,१।**

Sāy.'s addl. notes in his com. on the R̥V. stanza—

(१) 'यह्वो ववक्षिथः' इति महन्नामसु पाठात्। (२) देवयतीनां—देवानात्मन इच्छन्त्यो देवयन्त्यः

---

(क) 'ऐतवाभ्राह्य'—आ० ब्रा०।

सुप: आत्मन: क्यच्। न छन्दस्यपुत्रस्येतीत्वस्येव दीर्घस्यापि प्रतिषेध:। अश्वाघस्यादिति पुनरात्वविधानाज्ज्ञापकात्। क्यजन्तात् लट: शतृ। उगितश्चेति ङीप्। अनित्यमागमशासनमिति वचनान्नुमभाव:। सूक्तेभि:—वचे: क्तिच्क्तौ च संज्ञायामिति क्त:।

यह्वम्—'यह्व इति महतो नामधेयम्, यातश्च हूतश्च'—a synonym of great, combination of two rts या and ह्वे with aff. क, Nir. 8.8. Ngh. 3. 3. cf. 'त्वं देवानामसि यह्व होता'—O great one, thou art the sacrificer of the gods—ṚV. X. 110. 3.

पुरूणाम्—पुरु बहुनाम—Ngh. 3.1.

विशाम्—प्रजानाम्, *vide :* note on विशे विशे SV. 1. 15.

व:—Sāy. explains 'for your good or benefit', and has supplied अनुग्रहाय after it, in order to get a sensible meaning. West. scholars, however, always fond of literal sense have meant 'your Agni'—they have connected व: in possessive case with 'अग्निम्'; it conveys no meaning.

देवयतीनाम्—देवान् आत्मन: इच्छन्त्य:, तासाम्—an epithet referring to विशाम्। dr. देव + क्यच् by 'सुप आत्मन: क्यच्' Pāṇ. iii.1.8. 'देवयन्तो देवान् कामयमाना:' lovers of god—Nir. 8.18. cf. 'अञ्जन्ति त्वामध्वरे देवयन्त:'—the lovers of gods anoint in thee the sacrifice.—ṚV. iii. 8.1.

सूक्तेभि:—सूक्तै:, स्तोत्रै:। भिस् not changed to ऐस् by 'बहुलं छन्दसि' Pāṇ. vii. 1. 10.

वृणीमहे—rt. वृ (to *choose*, 9Ā) pres. 1.pl. acc. to Viv. धनं याचामहे।

इत्—*Indec* means एव (verily).

सम्-इन्धते—rt. इन्ध् (to *kindle*) 7.Ā. pres. 3. pl.

---

आत्कील वा उत्कील ऋषिः। एकं साम 'मनसोदोह'-नामधेयकं (क)। बृहतीच्छन्दः। अग्निर्देवता प्रातरनुवाके आश्विनशस्त्रे विनियोगः।

२ २ ३ २ ३ २ ३ २ ३ १र २र

अयमग्निः सुवीर्यस्येशे हि सौभगस्य।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम्॥ ६॥ ६०॥

अयम्। अग्निः। सुऽवीर्यस्य। ईशे। हि। सौभगस्य। रायः। ईशे। सुऽअपत्यस्य। गोऽमतः। ईशे। वृत्रऽहथानाम्॥ ६॥

भाष्यसारः। अयम् अग्निः हि सुवीर्यस्य—सदोद्यमवतः कर्मिणः सौभाग्यस्य ईशे ईष्टे—ईश्वरो भवति। तथा गोमतः—गवादिपशुयुक्तस्य, स्वपत्यस्य—सुपुत्रादियुक्तस्य, रायः—धनस्य, ईशे—ईष्टे स्वामी भवति। तथा वृत्रहथानां—वृत्राणाम् आवरकाणां शत्रुस्वरूप-पाप-विघ्न-रोगादीनाम्, हथाः—हननानि विनाशनानि, तेषामपि ईशे—ईष्टे, निवारको भवतीत्यर्थः॥ ६॥

(क) 'मनसश्च दोहः'—आ० ब्रा०। मना ऋषिः, दोहः SV. *Bib. Ind.*

This Agni ordains the good luck of one, possessed of heroism or ( is the lord of valour, and of good luck ); he is the lord of wealth consisting in offsprings and cows (cattle); he is the foremost of the slayers of *Vṛtras* (all obstructing evils e.g. sins, diseases, enemies, iniquities or the like.)—6.

**सा०-भा०।** अनेनोत्कीलः स्तौति 'अयम्' यजनीयत्वेनाङ्गुल्या निर्दिश्यमानोऽग्निः 'सुवीर्यस्य' शोभनसामर्थ्योपेतस्य 'सौभगस्य', 'ईशे हि' ईष्टे खलु, ईश्वरो भवति—सर्वस्य बलारोग्यहेतुतया सौभाग्यकारित्वात्। तथा 'गोमतः' गवादि-पशुयुक्तस्य 'स्वपत्यस्य' शोभनापत्यस्य 'रायः' धनस्य 'ईशे' ईष्टे, पुत्रपश्वाद्युद्देशेन क्रियमाणकर्मफलसम्पादकत्वेन तत्स्वामित्वात्। तथा एवम्भूतोऽग्निः 'वृत्रहथानां' हननं हथः शत्रुभूतपापविनाशानामपि 'ईशे'। त्वयि समर्पितकर्मणामस्माकं त्वत्प्रसादात् पापक्षयो भवतीति तस्यापि स्वामी ॥ ६ ॥

६। ऋ०, सं०, ३म०, १६सू०, १ऋ०। ṚV. has **'ईशे महः'** instead of **'ईशे हि'** in the first line.

Sāy.'s addl. notes in his com. on the ṚV. stanza :—

ईशे—ईश ऐश्वर्य्ये अदादित्वात् शपो लुक्। लोपस्त आत्मनेपदेष्विति त-लोपः। सौभगस्य—सुभगस्य भावः—सौभगम्—उद्गातादित्वादञ्। सर्वविधीनां छन्दसि विकल्पितत्वादत्र हृद्भगेत्यादिना प्राप्ताया उत्तरपदवृद्धेरभावः। वृत्रहथानां—वृत् वर्त्तने। अस्मात् स्फायितंचिवंचीत्यादिना रक्-प्रत्ययः। कित्त्वादगुणः। हन् हिंसागत्योरित्यस्मात् हनिकुषि० इति क्थन्। कित्त्वादनुनासिकलोपः। ( वृत्र—हन् + क्थन् )।

ईशे—for ईष्टे, pres. 3. sg.

सुवीर्य्यस्य, सौभाग्यस्य etc.—*gen.* (षष्ठी) by अधीगर्थदयेशां कर्मणि Pāṇ. ii. 3. 52.

Sāy.'s last line in his com. above—त्वयि समर्पितकर्मणाम् etc. means—through thy favour is the destruction of the sins of us, whose good works have been delivered or renounced to thee.

---

वसिष्ठ ऋषिः। त्रीणि सामानि समन्त-नामधेयानि, तेषामेकस्य साम्नोऽग्निर्वसिष्ठो वा ऋषिर्वरुणो वा···ऋषिः। आग्नेयक्रतौ प्रातरनुवाके आश्विनशस्त्रे विनियोगः।

१ २ ३ १ २ ३ १र २र ३ २
त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे।
१र २र ३ १ २ ३ २ ३ १ २ ३ १ २
त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्यम् ॥ ७ ॥ ६१ ॥

त्वम् । अग्ने । गृहऽपतिः । त्वम् । होता । नः । अध्वरे । त्वम् । पोता । विश्वऽवार । प्रऽचेताः । यक्षि । यासि । च । वार्यम् ॥ ७ ॥

भाष्यसारः । हे अग्नेः, अस्माकम् अध्वरे त्वं गृहपतिरसि । त्वं होता असि । हे विश्ववार—सर्वैर्वरणीय अग्ने, त्वं पोता असि । अतः प्रचेताः—प्राज्ञस्त्वं वार्यं—वरणीयं हविः, यक्षि—देवेभ्यः यज, यासि च—अस्माकं धनं प्रापय देहीत्यर्थः ॥ ७ ॥

Thou, Agni, art the lord of the homestead, thou art the Hotṛ at our sacrifice, O (Agni) cherished by all, thou art the Potṛ, thou of exalted mind (or profoundly wise), offer the longed-for oblation ( to the gods ) and bring to us wealth.—7.

**सा०-भा० । हे 'अग्ने' ! 'नः' अस्माकम् 'अध्वरे' यज्ञे 'त्वं' 'गृहपतिः' यजमानोऽसि । 'त्वं' 'होता' देवानामाह्वातासि । हे 'विश्ववार' ! सर्वैर्वरणीयाग्ने ! 'त्वं' 'पोता' एतन्नामक ऋत्विगसि । अतः 'प्रचेताः' प्रकृष्टमतिस्त्वं 'वार्यं' वरणीयं हविः 'यक्षि' यज । 'यासि च' अस्माकं धनं प्रापय ॥ ७ ॥**

**७ । ऋ०, सं०, ७म०, १६सू०, ५ऋ० ।** ṚV. has **'यक्षि वेषि च'** in the place of **'यक्षि यासि च' ।**

गृहपति—Agni is more closely connected with human life than any other god ; his association with the dwellings of men is peculiarly intimate ; he is the only god, to whom the epithet *gṛhapati* 'lord of the house' is frequently applied ; he dwells in every abode ṚV. vii. 15. 2. never leaving his home (viii. 40.10). The attribute 'domestic' (*damunas*) is generally connected with him (i, 60. 4). This household deity probably represents an older order of ideas ; for in the later elaborate ritual of the three sacrificial fires, the one, from which the other two (the *Āhavaniya* or eastern and the *Dakṣiṇa* or southern) were taken,—is called the *gārhapatya* or that which belongs to *gṛhapati*. Again he, though immortal, is described as having taken up his abode among mortals (viii. 60. 1). He has been established or settled among human habitations (iii. 5. 3 ; iv. 6. 2). It is the domestic Agni, who caused mortals to settle (iii. 1. 17). He is a leader (iii. 2. 5) and a protector of settlers (i. 96. 4) and the epithet *Viśpati*—lord of settlers, is mainly connected with him—*Vide* : Macddll's Ved. Myth. Para. 35.

होता—fr. rt. हु.—an offerer of oblation, the principal priest or the invoker of gods. (esp.) a priest who, at sacrifice, invokes the gods or recites the Ṛg-Veda ;—a Ṛg-Veda priest. Four principal priests are enumerated, viz. Hotṛ, Adhvaryu, Brahman and Udgatṛ ; each of them has three assistants, so the

total number is sixteen, viz. Hotṛ—his assistants Maitrāvaruṇa, Acchāvāka, Grāva-stut etc. (Aśv. Śr. iv. 1. 4-6).

पोता—(stem पोतृ)—One of the 16 officiating priests at a sacrifice (an assistant of the Brahman, who is one of the 4 principal priests). *Yajñasya śodhayitā*—Sāy. ; fr. rt. पू *to purify* ; Brahman's assistants are—Brāhmaṇāc-chaṃśin, Agnīdhra and Potṛ. (Aśv. Śr.) for further reference, see notes on होता above.

विश्ववार—*Voc.*—adored or cherished by all,—all-desired—Sāy.

प्रचेता:—from rt. चित् *to know*,—wise (said of the gods esp. of Agni and the Āditya. 'Thou art wise'—*Wils.* प्रचेता: 'प्रवृद्धचेता:'—of profound knowledge, Nir. 8. 5.

यक्षि—(fr. rt. यज्—*to sacrifice* 1. u.), mg.—यज, offer the oblation (to the gods),—imp. 2. sg. ;—*vide* gram. rules 'सेर्ह्यपिच्च', 'वा छन्दसि' Pāṇ. iii. 4. 88. ( हि does not take place here) 'बहुलं छन्दसि' Pāṇ. ii. 4. 73. (शप् of cl.1. is elided), ज् is changed to क् and after it स् of सिप् becomes ष्, thus the form यक्षि is obtained ; or in लेट् (subj) in the imp. sense 'सिब्बहुलं लेटि' Pāṇ. ii. 1. 34. cf. 'ताँ अध्वर उशतो यक्ष्यग्ने'—O Agni, offer oblation to them (Viśve-devāḥ—all the gods) desiring shares in our sacrifice—ṚV. vii. 39. 4.

यासि—rt. या, प्रापणे,—*to convey, to bring* ,—bring to us or bestow on us wealth.

---

**विश्वामित्र ऋषिः। एकं साम वैखानस ऋषिः दनुपुत्र आङ्गिरो वा। बृहतीच्छन्दः, अग्निर्देवता। आग्नेयक्रतौ प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।**

१ २ ३ १ २र ३ १ २
**सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये।**
३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
**अपां नपातं सुभगं सुदंससं सुप्रतूर्त्तिमनेहसम्॥ ८॥ ६२॥**

सखायः। त्वा। ववृमहे। देवम्। मर्त्तासः। ऊतये। अपांऽनपातम्। सुऽभगम्। सुऽदंससम्। सुऽप्रतूर्त्तिम्। अनेहसम्॥ ८॥

भाष्यसारः। **हे अग्ने, सखायः—हविर्दानादिकर्मणा दातृ-सम्प्रदानसम्बन्धेन मित्रभूताः, मर्त्तासः—मनुष्याः ऋत्विजो वयम्, अपां नपातम्—अपां नप्तारम्, सुभगं—शोभनधनम्, सुदंससं—सुकर्माणम्, सुप्रतूर्त्तिं—सत्वरगतिम्, कर्मिभिः सुखेन गन्तव्यम्, अनेहसम्—उपद्रवरहितं त्वाम् ऊतये—अस्माकं रक्षणाय, ववृमहे—वृणीमहे॥ ८॥**

We, mortals (the priests), thy friends, seek thee, for protection, —thee, the water's grand-child, blessed, the efficient accomplisher of mighty or splendid actions, swift and unobstructed.—8.

**सा०-भा० ।** विश्वामित्रः स्तौति । हे अग्ने ! 'सखायः' सोमाज्यादि-हविः-प्रदानेनोपकारकत्वात् मित्राणि 'मर्त्तासः' मनुष्याः ऋत्विजो वयम् 'अपां नपातम्' अपां नप्तारं 'सुभगं' शोभनधनयुक्तम् । 'सुदंससं' सुकर्माणं 'सुप्रतूर्त्तिं' शोभनप्रतरणं कर्मानुष्ठातृभिः सुखेन गन्तव्यम् 'अनेहसम्' उपद्रवरहितम् । एतादृशन्त्वाम् 'ऊतये' रक्षणाय 'ववृमहे' वृणीमहे वृङ् संभक्तौ 'छन्दसि लुङ्लङ्लिटः' इति वर्त्तमाने लिट् । क्रादित्वादिडभावः ॥ ८ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने

प्रथमस्याध्यायस्य षष्ठः खण्डः ।

इति प्रथमप्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः ।

८ । ऋ०, सं०, ३म०, ९सू०, १ऋ० ।

ऊतये—(dat. sg.) rt. अव् + क्तिन् Pāṇ. iii. 3. 94. also 'ज्वरत्वर०' Pāṇ. vi. 4. 20. vide—SV. 1. 10.

अपां नपातम्, नपात्—is a grandson ; etymological sense is न पातयति न पतत्यनेनेति वा, नञ्—पत् + णिच् + क्विप्, णिलोपः बहुलमन्यत्रापि संज्ञाच्छन्दसोः Pāṇ. vi. 4. 51. नञ् is not changed to अ, by 'नभ्राण्नपात्' Pāṇ. vi. iii. 75.

Yāska explains नपात्—as 'नपादित्यननन्तरायाः प्रजाया नामधेयम्, पितुरनन्तरा प्रजा पुत्राख्या भवति, अननन्तरा प्रजा पौत्राख्या'। napāt is a syn. of offspring which does not immediately succeed a person (i.e. a grandson)—Nir. 8. 5. cf. Bṛh. D. ii. 27.

Agni is the grand-child of waters inasmuch as from waters herbs and trees grow, from them Agni is begotten. 'ताभ्यः (अद्भ्यः) ओषधिवनस्पतयो जायन्ते ओषधिवनस्पतिभ्य एष जायते । तस्मादग्निरपां पौत्रः'।

सु-दंससम्—accomplishing mighty or splendid actions. दंसस् means action, Ngh. 2. 1. —*vide* notes on पुरुदंससम् SV. 1. 76. Prof. Wils. renders this term by 'resplendent' ; this is apparently not correct.

सुप्रतूर्त्तिम्—प्रतूर्त्ति—means rapid or violent motion, speed ; the compd. here, means—swift, rapid, violent, see under प्रत्वर् M. Wilm's S.E. Dict. p. 678. col. 2. तूर्त्ति is drvd. fr. rt. त्वर् ; 'accessible' -*Wils.* this mg. is taken from Sāy.'s interpretation (कर्मानुष्ठातृभिः सुखेन गन्तव्यम्)।

अनेहसम्—without a rival, unmenaced, unobstructed. Mon. W's S.E. Dict. p. 42. col. 3. dr. fr. rt. ईह् ; Prof. Wils. translates this term as 'sinless' ; perhaps he had in mind एनस् or अंहस् and confounded अनेहस with them.

---

प्रथमप्रपाठकस्य द्वितीयार्द्धे द्वितीया दशतिः ।

आत्रेयः श्यावाश्वः गौतमो वामदेव ऋषिर्वा । 'श्यावाश्वं' साम(क) । त्रिष्टुप्छन्दः(ख) । अग्निर्देवता । उत्तरवेद्यामग्निस्थापनादौ विनियोगः ।

१ २ ३ १ २ ३ १ २र ३ १ २
**आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम् ।**
३ २ ३ १ २र ३ १ २ ३ १ २ ३ २ ३क २र
**इडस्पदे नमसा रातहव्यं सपर्यता यजतं पस्त्यानाम् ॥१॥६३॥**

आ । जुहोत । हविषा । मर्जयध्वम् । नि । होतारम् । गृहपतिम् । दधिध्वम् । इडः । पदे । नमसा । रातहव्यम् । सपर्यत । यजतम् । पस्त्यानाम् ॥ १ ॥

भाष्यसारः । हे ऋत्विजः, यूयम् आजुहोत—अग्निम् आह्वयत,—तथा हविषा मर्जयध्वम्—मृड़यध्वम् सुखयत, इडः—इलायाः—पूजायाः पृथिव्याः वा पदे—स्थाने उत्तरवेद्यामित्यर्थः । होतारं गृहपतिम् अग्निं निदधिध्वम्—सम्यक् स्थापयत । नमसा—नमस्कारेण, हविषा वा सह । रात-हव्यं—रातं दत्तं हव्यं हविर्यस्मै तं दत्तहविष्कम्, पस्त्यानां—यज्ञगृहाणां मध्ये, यजतं—यज्ञार्हम्, अग्निम्, सपर्यत—परिचरत ॥ १ ॥

(O priests), invoke (Agni); make him blithe with oblation; establish him, the lord of the house, the Hotṛ (principal priest) in the site of 'Ilā' (worship or earth) i, e, on the northern altar; in the holy houses meant for sacrifice, with homage or offerings, serve him, worthy of adoration,—to whom offerings are presented.—1.

**सा०-भा० ।** हे ऋत्विजः ! 'आ जुहोत' अग्निमाह्वयत । किञ्च, 'हविषा मर्जयध्वं' मृडयध्वं सुखयध्वम् । डकारस्य जकारश्छान्दसः । अपि च 'इडः' इलायाः पदे उत्तरवेद्यामित्यर्थः । 'होतारं' देवानामाह्वातारम् । 'गृहपतिं' गृहपालकम् अग्निम् । 'निदधिध्वं' निःशेषेण धारयध्वम् । किञ्च, 'नमसा' नमस्कारेण हविषा वा युक्तम् । 'अतएव 'रातहव्यं' दत्तहविष्कम् । 'पस्त्यानां' यज्ञगृहाणां मध्ये । 'यजतं' यजनीयं पूजनीयमग्निम् । 'सपर्यत' परिचरत ॥ १ ॥

---

(क) 'श्यावाश्वञ्च'—आ० ब्रा० ।
(ख) 'त्रिष्टुभो रुद्राः' (११)—पि०,छ०,सू० ३।६ त्रैष्टुभः पादः सर्वत्रैकादशाक्षरः । The Triṣṭup metre consists of four Pādas of 11 syllables each.

१। इयम् ऋक् ऋग्वेदे नास्ति।

जुहोता—जुहुत (class. form.) rt. हु *to sacrifice* imp. 2. pl. the last vowel is long by 'ऋचि तुनुघमक्षुत०' Pāṇ. vi. 3. 133.

मर्जयध्वम्—rt. 'मृज्' (शुद्धौ, *to cleanse*)+caus. imp. 2. pl.—'मृजेर्वृद्धिः' Pāṇ. vii. 2. 114. व्यत्ययेन वृद्ध्यभावः।

नि·दधिध्वम्—निदद्ध्वम्; नि·धा, (*to place, to set up* 3. u.) Imp. 2. sg. व्यत्ययेन इडागमः। 'Home's Lord'—*Grfth.*

इडस्पदे—in the place of sacred libation i. e. at the sacrificial altar or place of offering. rt. ईड् (स्तुतौ, *to worship*) क्विप् ह्रस्वश्च, ई of the rt. is changed to इ; stem इड् gen. sg.=इडः। इडः पदे=इडस्पदे, विसर्गस्य सः 'इडाया वा' Pāṇ. viii. 3. 54. 'fr. rt. इष्, a refreshing draught or libation offered to the gods':—M. W. इड्—अन्नम्—Ngh. 2.7.

रात·हव्यम्—referring to अग्निम्; rt. रा (दाने, *to give* 2. p) क्त। 'रातं' (दत्तं) 'हव्यं' (हविः) यस्मै तम्,—to whom oblation is presented.

पस्त्यानाम्—गृहाणाम्, यज्ञ-गृहाणाम्। पस्त्यं—गृहम्—Ngh. 3. 4; in this sense the word is found in class. Sans. cf. पस्त्यं प्रयातुमथ तं प्रभुरापप्रच्छे—कीर्त्ति कौ० ८, ७४।

यजतम्—यष्टव्यम्, worthy of reverence. rt. यज्+कर्मणि अतच् by 'भृमृदृशियजि०' uṇ. 3. 110. cf. 'हिरण्यशम्यं यजतो बृहन्तम्'—ṚV. i. 35. 4.

सपर्यता—rt. सपर् (पूजायाम्, *to worship*) यक् कण्ड्वादित्वात्+लोट् त, imp. 2. pl. the last vowel is prolonged by 'ऋचि तुनु०' Pāṇ. vi. 3. 133.

---

**वार्हद्व्य उपस्तुत ऋषिः। द्वे सामनी 'ऋतु'नामके(क)। जगतीच्छन्दः(ख)। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।**

३ २उ ३ १ २ ३ २ ३ २उ ३ १ २३ २ ३ १ २
**चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे।**
३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २र ३ २ १ २
**अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि दूत्यं चरन्॥२॥६४॥**

चित्रः। इत्। शिशोः। तरुणस्य। वक्षथः। न। यः। मातरौ। अनुऽएति। धातवे। अनूधाः। यत्। अजीजनत्। अध। चित्। आ। ववक्षत्। सद्यः। महि। दूत्यम्। चरन्॥ २॥

भाष्यसारः। **शिशोः—शिशुभूतस्य तरुणस्य अग्नेः वक्षथः—हविर्वहनम्, चित्र इत् आश्चर्य एव। यः जातोऽग्निः मातरौ—सर्वस्य निर्मात्र्यौ द्यावापृथिव्यौ, मातृभूतम् अरणीद्वयं वा, धातवे—स्तन-पानाय, न अन्वेति—नानुगच्छति, यथा शिशुर्जात एव**

(क) ऋतुसामनी च—आ० ब्रा०।

(ख) 'जगत्या आदित्याः'—पि० छ० ३।१२। The Jagatī metre consists of four Pādas of 12 syllables each, two Pādas forming a hemistich.

स्तन्यपानाय मातरमपेक्षते नायं तथेति भावः। यत् चित्—यदैव, अजीजनत्—ऋत्विक् अरणीभ्यामेनमग्निमुत्पादितवान्, अध—अथ, उत्पत्त्यनन्तरम् सद्य एव, अनूधाः—स्तनमनपेक्षमाणः स्वयमेव प्रज्वलन्, महि—महत्, दूत्यं—दूतकर्म, चरन्—कुर्वन् आ-ववक्षत्—देवान् प्रति हवींष्यावहति ॥ २ ॥

Strange, indeed, is the transmission (of oblation to gods) by the young child (Agni), who does not require the parents (Heaven and Earth) or the twain mothers the *Araṇīs*—the two fire-sticks) to drink; no sooner is he generated than he, doing without the udder, accepting the noble embassy (bt. sacrificers and gods)—conveys the oblations to the gods.—2.

**सा०-भा०।** 'शिशोः' शिशुभूतस्य। अतएव 'तरुणस्य' अग्नेः। 'वक्षथः' वक्षेरौणादिकोऽथप्रत्ययः। हविर्वहनं 'चित्रइत्' आश्चर्यभूतमेव। 'यः' जातोऽग्निः। 'मातरौ' सर्वस्य निर्मात्र्यौ, सर्वस्य मातृभूते द्यावापृथिव्यावरण्यौ वा। 'धातवे' धेट् पाने 'तुमर्थे०' इति (पा० ३,४,९) तवेन्-प्रत्ययः। स्तनपानाय 'न अन्वेति' न गच्छति। इण् गतौ लटि उपसर्गेण समासः। तिङि चोदात्तवतीति (पा० ८,१,७१) गतेर्निघातः। 'अनूधाः' नञा बहुव्रीहिसमासः, तस्मिन् अनङ्स्त्रियामिष्टत्वात् अत्रानङ्भावः, प्रत्येक-विवक्षया एकवचनम्, ऊधोरहितः सन् अयं लोकोऽसौ लोकश्च। 'यत्' यदि। एनमग्निम्। 'अजीजनत्' जनयेत्, तर्हि स्तनपानाय न गच्छतीति युक्तम्, तथा न भवति, किन्तु द्यावापृथिव्यौ हि सर्वेषां कामदुघे खलु। तथापि न याति। तस्मा-दस्य हविर्वहनं विचित्रम्। 'अध चित्' उत्पत्त्यनन्तरमेव। 'सद्यः' तदानीमेव। शीघ्रं, 'महि' महत्। 'दूत्यं'—'दूतस्य भागकर्मणी' (पा० ४,४, १२०) इति कर्मणि यत्-प्रत्ययः,—दूतकर्म 'चरन्' आचरन्। 'आ-ववक्षत्' देवान् प्रति हवींष्यावहति ॥ २ ॥

२। ऋ० सं० १०म० ११५सू० १ऋ०।

'चित्रः'—*vide* notes on SV. I. 40. cf. स चित्रचित्रं चितयन्तमस्मे चित्रक्षत्र चित्रतमम् ṚV. vi. 6. 7. here the word *chitra* is alliteratively repeated.

शिशोः तरुणस्य—of the tender youngling or infant, rfs. to Agni.

वक्षथः—carrying, conveyance; dr. वह्+अथ-प्रत्ययः 'शीङ्शपि'० uṇ. iii. 113. M. W. has dervd. the word from rt. 'वक्ष्' to grow, and meant invigoration, growth. cf. S.E. Dict. p. 911. vol. 3. Grfth. has adopted this sense and translated—'the growth'. cf. 'सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः'—Nir. 11. 20.

मातरौ—drvd. from rt. 'मा', du. father and mother (ṚV. 3. 3. 33.) also *vide:* Ved.Myth. Macdonell, p. 98. para 3.

मातरा-पितरा (Ṛ.V. 4. 6. 7)—Heaven and Earth. Or two pieces of wood used in kindling fire. M. W's S.E. Dict. p. 807. col. 1.

धातवे—धातुम्, पातुम्; to drink, to suck; dr. rt. धेट् (पाने, *to suck* 1.p.) तुमर्थे तवेन् Ved. Inf.—'तुमर्थे से-सेन०' Pāṇ. iii. 4. 9.

अनुधाः—नास्ति ऊधो यस्य, an epithet of अग्निः, without the udder i.e. independent of the parents; in *Bahu.* compd. अनङ् is added to ऊधस् in fem. Pāṇ. V. 3. 131. here it is masc.—as it refers to Agni, so अनङ् is not allowed. Grfth's rendering—'She who hath no udder'—is, therefore, grammatically erroneous; more over, it is not clear whom does 'She' mean. Wils. translates—'although the udderless world gave him birth etc.', this interpretation though adopted from Sāy. seems not to be right. Yaska derives udhas from ud + rt. हन् or from upa + rt. नह्, उद्धततरं भवति उपोन्नद्धमिति वा; 'the udder of a cow is so called, because it is more raised than the other limbs or it is fastened near the abdomen'—Nir. 6.19.

अजीजनत्—rt. जन् (प्रादुर्भावे, *to be born* 4. p.) caus. Aor. subject ऋत्विक्, Sāyaṇ is ambiguous in point of subject. *Grfth* has 'she'—as subject, this is not tenable.

महि—dr. from rt. मह पूजायाम् महि, महत्—Nir. 11.9.

आ-ववक्षत्—आ—वह् + लेट् तिप्—व्यत्ययेन शपः श्लुः—लेटि सिप्—सिब् बहुलम्—Pāṇ. iii. 1. 34. अडागमश्च—लेटोऽडाटौ Pāṇ. iii. 4. 94.

---

वामदेवपुत्रो बृहदुक्थ ऋषिः। यामं साम, यम ऋषिः(क)। त्रिष्टुप्छन्दः। अग्निर्देवता।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २३ १ २ ३ १ २
इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व।
३ १ २ ३ २ १ २ ३ २ ३ १ २ ३ २ ३ १ २
संवेशनस्तन्वे३ चारुरेधि प्रियो देवानां परमे जनित्रे ॥३॥६५॥

इदम्। ते। एकम्। परः। ऊम् इति। ते। एकम्। तृतीयेन। ज्योतिषा। सम्। विशस्व। संऽवेशनः। तन्वे। चारुः। एधि। प्रियः। देवानाम्। परमे। जनित्रे॥ ३॥

भाष्यसारः। मन्त्रद्रष्टा बृहदुक्थ ऋषिर्वाजिनं नाम मृतं स्वपुत्रमुद्दिश्य वदति—हे मृतपुत्र, तव इदम्—अग्न्याख्यं ज्योतिः, एकम्—एकोऽंशः। तथा पर उ—अपरोऽपि, तव एकं वाय्वाख्योऽंशः, तृतीयेन ज्योतिषा—आदित्याख्येन तेजसा—तवात्मना इत्यर्थः, संविशस्व—सङ्गच्छस्व, देहस्थितेनाग्निना बाह्याग्निं, देहस्थित-प्राणवायुना बाह्यवायुम् आत्मना च सूर्यं प्रविश। तन्वे—तनवे पुनः शरीर-ग्रहणाय,

(क) 'यामे च'—ना० ब्रा०।

चारुः—कल्याणमयः प्रियश्च भूत्वा देवानां परमे उत्कृष्टे जनित्रे—जनके सूर्ये संवेशनः—सम्यक् प्रवेष्टा, एधि—भव ॥ ३ ॥

(O deceased one)—This is one (light) for thee—(the funeral fire), that is another (the wind) enter into the third light (the sun); for thy (obtaining new) body i.e. re-birth, becoming beautiful and beloved, enter into the premier origin of the gods (the sun).—3.

**सा०-भा०।** एतया बृहदुक्थो वाजिनं नाम स्वपुत्रं मृतं वदति। हे मृतपुत्र! 'ते' तव। 'इदम्' उपरि ज्योतिषेति वक्ष्यमाणत्वात् अत्रेदंशब्देन ज्योतिरभिधीयते, इदं ज्योतिरग्न्याख्यम्, 'एकम्' एकोऽंशः। अतः 'ते' तव देहगताग्न्यंशेन बाह्यमग्निं 'संविशस्व' सङ्गच्छस्व। तथापरः 'उ' अन्योऽपि 'ते' तव 'एकं' वाय्वाख्योऽंशः, तेन च प्राणवाय्वाख्येनांशेन बाह्यं वायुं संविशस्व,—शरीराग्निप्राणवाय्वोः बाह्याग्निवाय्वोश्चैकत्वादंशत्वमिति भावः। तथा, 'तृतीयेन ज्योतिषा' आदित्याख्येन तेजसा तवात्मना संविशस्व—सूर्यगतात्मचैतन्ययोरभेदादंशत्वम्, "योऽहं सोऽसौ" "योऽसौ सोऽहम्"। "सूर्य आत्मा जगतः" इत्यादिश्रुतेः आत्मनः सूर्यप्रवेशो युक्तः। 'तन्वे' तनवे पुनः शरीरग्रहणाय, 'चारुः' कल्याणो भूत्वा तस्मिन् सूर्ये संवेशनः' सम्यक् प्रवेष्टा। 'एधि' भव। कीदृशस्त्वम्? 'प्रियः' तेन सह प्रीयमाणः। कीदृशि तस्मिन्? 'देवानां परमे' उत्तमे। 'जनित्रे' जनके। "देवानां ह्येतत् परमं जनित्रं यत् सूर्यः" इति हि श्रुतिः ॥ ३ ॥

३। ऋ० सं० १०म०, ५६सू० १ऋ०। Ṛ̣V. reads **'संवेशने'** instead of **'संवेशनः'** as here. 'The stanza in the Ṛ̣V. is the beginning of a funeral hymn in which the Ṛṣi bids the deceased man unite himself with the beams of the heavenly light'—*Grfth.*

इदं ते एकम्—rfs. to the funeral fire. Sāyaṇ explains:—'there is fire within the body of every creature. With this internal fire enter into the outer fire—i. e. funeral fire'.

पर उ ते एकम्—rfs. to the wind: 'let thyself, with the internal wind (प्राणवायु), be united with the outer wind,—one of the five principal elements'. —Sāy.

तृतीयेन ज्योतिषा—rfs. to the soul within and the sun outside. The sun and the soul are identical; quotations in the commentary support this argument. 'Let thy soul enter into the sun.'—Sāyaṇ. cf. 'सूर्यमात्मा चक्षुर्गच्छतु'—Ṛ̣V. X. 126. 5.

संविशस्व—enter, be united. सम्—विश् imp. 2. sg. rt. विश् is परस्मैपदी, here, by व्यत्यय, used in आत्मनेपद।

तन्वे—dat. sg.—( तनवे )—for the body i. e. 'for the new body after cremation'—*Grfth.*

सविशस्व—rt. विश् with prefix सम्, with aff. लुट् कर्त्तरि (Act. voice)—get united—Say. Grfth has meant 'union' and has taken चारुः and प्रियः as adjs. qualifying it. So he has—'Beautiful be thy union with the body, beloved etc'.

एधि—be, become ; rt. अस् *to be*, imp. 2. sg.

जनित्रे—dat. sg. rt. जन् + इत्र् . सर्वधातुभ्य: इत्र् un. 4. 150. Or जन् + णिच् + तृच् anomalously formed by 'जनिता मन्त्रे' Pāṇ. vi. 4. 53.—for जनयित्रे (class. form) ; परमे जनित्रे —supreme or sublimest birth-place—*Wils.*

Prof. Wils. comments on this verse :—'literally, 'This (is) one of thee, the other (is) one,' with the third light enter.'—as *Jyotis* occurs in the third place, the Scholiast concludes it is required in the two preceding, understanding, however by *Jyotis* first, *agni*, fire or vital warmth ; second *Vāyu*, air or vital breath ; and third *chaitanya*, intelligence or soul. The verse is addressed by the *Ṛṣi* to his deceased son *Vajin*, and the purport is to enjoin the re-union of the vital with the external elements,—vital warmth with fire, vital breath with air, the soul animating the body with that animating the sun. Sāyaṇ cites a passage of *Śruti* declaring the sun to be the soul of the animate and inanimate world ; and another declaring the sun to be the supreme birth-place of the gods. His explanation—'on the entrance of the body' i.e. into that sun, may imply the *Vedānta* notion of bodily existence after death by means of *Sūkṣmaśarīra* (the subtle body ).

---

**आङ्गिरसः कुत्स ऋषिः । एकमार्षेयं सामाग्निश्चर्षिः ; 'कौत्सं' साम, कुत्स ऋषिर्वा 'यज्ञसारथि' नाम वा साम (क)। जगतीच्छन्दः। अग्निर्देवता। पृष्ठ्यस्य षडहस्य षष्ठेऽहनि आग्निमारुते शस्त्रे परिसमूहने च विनियोगः (ख)।**

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
**इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।**
३ १उ ३ १ २ ३ १ २र ३ १र २ २ ३ १ २
**भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव॥४॥६६**

(क) 'अग्नेरार्षेयं कौत्सं वा यज्ञसारथि वा'—आ० ब्रा० ।

(ख) तथा च गृह्यम्—'इमम्,—भराम,—शकेमेति तृचेन परिसमूहेत' ( गो० ४.५.५ ) ।

पुनश्च—'इमं स्तोममर्हते जातवेदस इत्याग्नेयमाज्यं भवति सोऽर्कमिन्द्रियस्य वीर्यस्य रसस्यान्नाद्यस्यावरुन्ध्यै यत्र वै देवा इन्द्रियं वीर्यं रसमपश्यंस्तदनुव्यतुदन्'—ता० म० ब्रा० १३।८।१ इति बहिष्पवमानस्य षष्ठेऽहनि ।

इमम् । स्तोमम् । अर्हते । जातऽवेदसे । रथम् । इव । सम् । महेम । मनीषया । भद्रा । हि । नः । प्रऽमतिः । अस्य । संऽसदि । अग्ने । सख्ये । मा । रिषाम । वयम् । तव ॥ ४ ॥

भाष्यसारः । **अर्हते—स्तुत्याय, जातवेदसे अग्नये, मनीषया—प्रज्ञया, इमम् स्तोमम्—इदं स्तोत्रम्, रथमिव—यथा तक्षा रथम् संस्करोति तथा सम्महेम—सम्यक् पूजितं कुर्मः। अस्य अग्नेः संसदि—सम्भजने, अस्माकम्, प्रमतिः—प्रकृष्टा बुद्धिः भद्रा हि—कल्याणी समर्था खलु। हे अग्ने, तव सख्ये मित्रत्वे स्थिता वयं मा रिषाम—केनचित् दुरात्मना न हिंसिता भवेम—इत्याशास्महे ॥ ४ ॥**

To (Agni) the knower of all creatures, worthy of adoration, may we conduct this prayer, like a chariot, with our mind which, indeed, is devotedly inclined towards his (Agni's) company. O Agni, in thy friendship, may we not be injured.—4.

**सा० भा० । 'अर्हते' पूज्याय । 'जातवेदसे' जातानामुत्पन्नानां वेदित्रे जातप्रज्ञाय जातधनाय वा अग्नये । 'मनीषया' निशितया बुद्ध्या । 'इमं स्तोमम्' एतत् स्तोत्रम् । 'रथमिव' यथा तक्षा रथं संस्करोति तथा । 'सम्महेम' सम्यक् पूजितं कुर्मः । 'अस्य' अग्नेः 'संसदि' सम्भजने । 'नः' अस्माकम् । 'प्रमतिः' प्रकृष्टा बुद्धिः । 'भद्रा हि' कल्याणी समर्था खलु । अतस्तया बुद्ध्या कुर्म इत्यर्थः । हे 'अग्ने' ! 'तव सख्ये' अस्माकं त्वया सह सखित्वे सति । वयं 'मा रिषाम' हिंसिता न भवाम । अस्मान् रक्षेत्यर्थः ॥ ४ ॥**

**४ । ऋ० सं० १म० ६४ सू० १ ऋ० । उ० आर्चि० ४, १, ७, १ ।**

Sāy.'s addl. notes—अर्ह पूजायाम् । अर्ह प्रशंसायां पा० ३.२.१३३ इति लटः शत्रादेशः । महेम—मह पूजायाम् । रिषाम—रिष् हिंसायाम् । व्यत्ययेन शः ।

स्तोमम्—*Vide* notes on स्तोमाः SV. 1.44.

अर्हते—dat. sg.—worthy of adoration or praise.—rt. अर्ह (पूजायाम्, *to adore* 1. p.) pr. pt.

जातवेदसे—*Vide* note on SV. 1. 31, 35, 40.

रथमिव—The hymn is compared to a chariot, as it travels to the gods—*Grfth*; 'as a carpenter makes a car so we construct this hymn'—*Wils.*

सम्महेमा—सम्-मह (पूजायाम्, *to adore*) + लिङ् (याम) 1. pl. The final vowel is lengthened—by "अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137.

मनीषया—मनस ईषा—anomalously formed by 'शकन्ध्वादिषु वा' ।—'with our mind'—*Grfth.* and *Wils.*

संसदि—loc. sg. dr. सम्-सद् + क्विप्। 'भद्रा हि नः प्रमतिः अस्य संसदि'—Our mind is devotedly inclined towards Agni's company,—this is the only rational explanation. 'Happy is our understanding, when engaged in his adoration'—*Wils.* Sāyaṇ has meant संसत् in the sense of सम्भजन—adoration, which is rarely found.

रिषामा—rt. रिष् (हिंसायाम्, *to be injured*)—Imp. 1. pl. Pass. sense in Act. form by व्यत्यय ;—'Let us not suffer injury.'—Wils. 'do thou preserve us'—is the import—Sāy. The final vowel (अ) is lengthened by 'अन्येषामपि दृश्यते' as in सम्महेमा above. cf. 'पूषा चक्रं न रिष्यति'; 'पूषन्, तव व्रते वयं न रिष्येम कदाचन' may be never suffer injury. vi. 54. 3.9.

---

**बार्हस्पत्यो भरद्वाज ऋषिः। द्वे सामनी वैश्वानराख्योऽग्निर्ऋषिः (क)। त्रिष्टुप्छन्दः। वैश्वानरोऽग्निर्देवता। विषुवन्नामकयज्ञादेऽग्निमरुद्देवसम्बन्धे शास्त्ररूपेण विनियोगः।**

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २उ ३ २ ३ २
**मूर्द्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्।**
३ २ ३ २ ३ १ २ ३ १२ ३ २ ३ १ २ ३ २
**कविं सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥५॥६७॥**

मूर्द्धानम्। दिवः। अरतिम्। पृथिव्याः। वैश्वानरम्। ऋते। आऽजातम्। अग्निम्। कविम्। सम्राजम्। अतिथिम्। जनानाम्। आ। आसन्। नः। पात्रम्। जनयन्त। देवाः ॥ ५ ॥

भाष्यसारः। **दिवः—द्युलोकस्य, मूर्द्धानं—शिरःस्वरूपम्, पृथिव्याः अरतिं—स्वामिनम्, वैश्वानरं—विश्वेषां नराणां सम्बन्धिनम्, ऋते—यज्ञार्थम्, निमित्तार्थे सप्तमी। आ जातम्—सृष्ट्यादौ समुत्पन्नम्, कविं—प्रज्ञम्, सम्राजं सम्यक् राजमानम्, जनानाम्—यजमानानाम्, अतिथिम्—अतिथिवत्पूज्यम्, आसन्—आसनि आस्यम् देवानां मुख-स्वरूपम्, 'अग्निमुखा वै देवाः' इति श्रुतेः [ 'पद्दन्नो०' (पा० ६.१.६३)—इति आस्य-शब्दस्य आसन्,—'सुपां सुलुक्' इति सप्तम्या लुक्,—व्यत्ययेन पुनः द्वितीया-स्थाने सप्तमी, अग्निविशेषणमेतत् ]। पात्रं—पातारम् अग्निं—नः अस्माकं यज्ञे, देवाः—स्तोतार ऋत्विजः, देवा एव वा आ जनयन्त—आभिमुख्येनाजनयन् ॥ ५ ॥**

The gods (or the priests) have generated Agni, 'Vaiśvānara' (benevolent to all men), the wise, the head of heaven, the lord of earth, born for sacrifice, the supreme lord, the guest of men, the mouth (of gods), our protector.—5.

**सा०-भा०।** 'मूर्द्धानं' शिरोभूतम्। कस्य? 'दिवः' द्युलोकस्य। 'पृथिव्याः' प्रथिताया भूमेः। 'अरतिं' गन्तारम्, यद्वा गन्तव्यं स्वामिनम्। 'वैश्वानरं' विश्वेषां सर्वेषां

(क) 'अग्नेर्वैश्वानरस्य सामनी द्वे' आ० ब्रा०।

नराणां सम्बन्धिनम्। 'ऋते' ऋतमिति सत्यस्य यज्ञस्य वा नाम। निमित्तसप्तम्येषा ऋत-निमित्तम्। 'आ' अभिमुख्येन जातम् सृष्ट्यादावुत्पन्नम्। 'कविं' क्रान्तदर्शिनम्। 'सम्राजं' सम्यग्राजमानम्। यजमानानाम् 'अतिथिं' हविर्वहनाय सततं गन्तारम्, यद्वा, अतिथिवत्पूज्यम्। 'आसन्' आसनि आस्यं, द्वितीयार्थे सप्तमी, आस्यभूतम्। 'अग्निलक्षणेनास्येन हि देवा हवींषि भुञ्जते'। 'पात्रं' पातारं रक्षकम्। यद्वा, आस्येन धारकम्। एवंगुणविशिष्टं वैश्वानराग्निम्। 'नः' अस्माकं सम्बन्धिनि यज्ञे। 'देवाः' स्तोतार ऋत्विजः, देवा एव वा। 'आ जनयन्त' अभिमुख्येनाजनयन्। अरण्योः सकाशाद् उदपादयन्॥ ५॥

५। ऋ० सं० ६म० ७सू० १ऋ०। यजुः ७,२४। उ० आर्चि० ४,२,३,१, (४६०)।

मूर्द्धानं दिवः—*Vide* SV. I. 27. 'अग्निर्मूर्द्धा दिवः' etc.

अरतिम्—'The unceasing pervader of earth—*Wils.* Vide notes on SV. I. 45; acc. to Durga अरतिम्—is the shortened form of अलंमतिम् (पर्याप्तमतिम्) like पृषोदर।

वैश्वानरम्—common to, dear to, dwelling with all Aryan men—*Grfth.* 'Vaiśvānara is variously explained, but it most usually implies, what or who is beneficial to all (*Viśve*)—men (*narāḥ*)—वैश्वानरः कस्मात्? विश्वान् नरान् नयति, विश्व एनं नरा नयन्तीति वा, he leads all men, or all men lead him or he pervades all created beings. Nir. 7. 21 अयमेवाग्निर्वैश्वानर इति शाकपूणिः 'This very (i.e. terrestrial) fire is *Vaiśvānara*, says Śākapūṇi.

ऋते—यज्ञानुष्ठानार्थम्, for sacrifice;—निमित्तार्थे ७मी—Sāy.—'In accordance with the eternal law, by which the whole universe is regulated'—*Grfth.* ऋतम् means (1) truth, (2) sacrifice.

कविम्—*Vide* notes on SV. I. 30, 32. etc. अतिथि vide SV. I. 5. सम्राजम् vide I. 17.

सम्राजम्—Agni is a divine monarch (Ved. Myth. p. 92) अतिथिम्—Agni is often designated a 'guest' in human abodes; he is the guest in every house ṚV. X. 91. 2. Ved. Myth. p. 92, 95.

आसन्—for आसनि (loc. for accus.) आस्यम्,—the mouth. Agni is so called because the gods receive oblations through Agni; 'अग्निमुखा वै देवाः';—'अग्निर्मुखं प्रथमो देवतानामिति मन्त्रः' quoted by Sāy. in his com. on ṚV. i. 1. 1. For gram. see the भाष्यसार above.

जनयन्त—जनयन्ति, generate. इ is dropped as a Vedic peculiarity.

पात्रम्—पातारम्, protector—Sāy. Grfth. has taken 'आसन् नः पात्रम्'—to mean 'our vessel fit for their mouth'. Wils. renders—'in mouth is the vessel (that conveys the oblation to the gods)'.

---

अथ प्रथमप्रपाठकस्य द्वितीयार्द्धे तृतीया दशतिः ।

भरद्वाज ऋषिः । सामनी द्वे आश्वे, इटतो नाम ऋषिः (क)। त्रिष्टुप्छन्दः । अग्नि-देवता । विषुवन्नामयज्ञाहे निष्कैवल्ये विनियोगः ।

२उ ३ १ २र ३ २ ३ १ २ ३ २
वि त्वदापो न पर्वतस्य पृष्ठादुकथेभिरग्ने जनयन्त देवाः ।
२ ३ १ २ ३ १ २ ३ १ २र ३ २ ३ १ २
तं त्वा गिरः सुष्टुतयो वाजयन्त्याजिं न गिर्ववाहो जिग्युरश्वाः ॥६॥६८

वि । त्वत् । आपः । न । पर्वतस्य । पृष्ठात् । उक्थेभिः । अग्ने । जनयन्त । देवाः । तम् । त्वा । गिरः । सुऽस्तुतयः । वाजयन्ति । आजिम् । न । गिर्ववाहः । जिग्युः । अश्वाः ॥ ६ ॥

भाष्यसारः । हे अग्ने, पर्वतस्य पृष्ठात्—मेघस्य उपरिभागात्, आपः—उदकानि, न—इव, देवाः—स्तोतारः, उक्थेभिः—उक्थैः स्तोत्रैः, त्वत्—त्वत्तः तव सकाशात्, आत्मनः कामान्, वि जनयन्त—विविधं जनयन्ति । हे गिर्ववाहः—गीर्भिः स्तुतिभिः वहनीय—प्रापणीय, अग्ने ! तं प्रसिद्धं त्वां वाजयन्ति—बलिनं कुर्वन्ति, स्तुवन्ति अन्नमिच्छन्ति वा, अपि च सुष्टुतयः—शोभनस्तुतिरूपाः गिरः—वाचः, अश्वाः आजिं न —अश्वाः संग्राममिव त्वां जिग्युः—जयन्ति, वशीकुर्वन्ति ॥ ६ ॥

From thee, Agni, like waters from the cloud, the singers of praise, through eulogies, obtain variously the desired objects. O one attainable by laudations, they add to thy strength (or beg food of thee); the excellent songs of praise win thee as horses win battle.—6.

**सा०-भा०** । हे 'अग्ने'! 'त्वत्' त्वत्सकाशात् । 'उक्थेभिः' उक्थैः स्तोत्रैः यज्ञैर्हविर्भिश्च । 'देवाः' स्तोतारः । कामान् आत्मनः 'व्यजनयन्त' विविधं जनयन्ति । तत्र दृष्टान्तः,—'पर्वतस्य' मेघस्य 'पृष्ठात्' उपरिभागात् 'आपो न' आपः उदकानि यथा तद्वत् । अपि च, हे 'गिर्ववाहः!' गीर्भिः स्तुतिरूपाभिः वाग्भि-र्वहनीयाग्ने ! भरद्वाजाः स्तोतारः । 'तं' प्रसिद्धम् । 'त्वा' त्वाम् । 'वाजयन्ति' बलिनं कुर्वन्ति । यद्वा, वाजमन्नमिच्छन्ति । अपि च त्वां 'सुष्टुतयः' शोभन-स्तुतिरूपाः । 'गिरः' वाचः । 'जिग्युः' जयन्ति वशीकुर्वन्ति । तत्र दृष्टान्तः,— अश्वाः वाहाः 'आजिं न' संग्रामं यथा शीघ्रं जयन्ति तद्वदित्यर्थः ॥ ६ ॥

(क) 'आश्वे द्वे ऐटते वा'—आ० ब्रा० ।

६। ऋ० सं० ६म०, २४सू० ६ऋ०। There are several variations in the ṚV. verse, which is addressed to Indra.

पर्वतस्य—dr. rt. पर्व् (पूरणे, *to fill up*) + अतच्, 'भृमृदृशि' uṇ. iii. 110, or पर्व विद्यतेऽस्येति मत्वर्थीयस्तकारः। 'पर्वत इति मेघ-नाम'—Ngh. 1. 10; cloud—Sāy. From the mountain ridges—*Grfth*; 'from the top of the mountain.'—*Wils*.

उक्थेभिः—उक्थैः; बहुलं छन्दसि, Pāṇ. vii.1.10. भिस् is not changed to ऐस्। *Vide* note on SV. 1. 48.

जनयन्त—जनयन्ति इकारलोपश्छान्दसः। See SV. 1.67. Sāyaṇ has supplied 'आत्मनः कामान्' as obj. to 'जनयन्त';—'the gods sprang from thee the father of gods and yet their son wast thou'. ṚV. 1. 69. 1—*Grfth*.

देवाः—स्तोतारः in this sense see SV. 1.67.

गिर्वाहः—O thou who art accessible by praise;—*Wils*; 'bearing songs of praise'—*Benfey*.

वाजयन्ति—वाज इति अन्ननाम—Ngh. 2.7, बलनाम च—Ngh. 2.9. तस्मात् णिचि नामधातुत्वे रूपम्; strengthen thee, or desire food from thee.

आजिम्—battle, Ngh. 2. 17; dr. rt. अज् (गति-क्षेपणयोः, *to go, to throw.*) अजन्ति—क्षिपन्ति शस्त्राणि अस्त्राणि च यत्र स आजिः अज् + इण् uṇ. iv. 131; in Nirukta it is called the place of conquest or swiftness (आजिः—आजयनस्य वा आजवनस्य वा) Nir. 9. 23.

सुष्टुतयः—'उपसर्गात् सुनोति०'—Pāṇ. iii.3.35 षत्वम्; the good or excellent hymns.

जिग्युः—dr. from rt. जि *(to conquer, to win)*, लिट् form in the pres. sense, by छन्दसि लङ्-लुङ्-लिटः Pāṇ. iv. 4.6.

---

**गौतमो वामदेव ऋषिः। एकं वामदेव्यं साम, वामदेव ऋषिः रौद्रं वा साम (क)। त्रिष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विन-शस्त्रे च विनियोगः।**

२ ३ १ २ ३ १ २ ३ १ २र ३ २ ३ १ २
**आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः।**
३ २ ३१ २ ३ २३ २ ३ १ २ ३ १ २
**अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥७॥६९॥**

आ। वः। राजानम्। अध्वरस्य। रुद्रम्। होतारम्। सत्यऽयजम्। रोदस्योः। अग्निम्। पुरा। तनयित्नोः। अचित्तात्। हिरण्यऽरूपम्। अवसे। कृणुध्वम् ॥ ७ ॥

भाष्यसारः। हे ऋत्विग्यजमानाः, अध्वरस्य—यज्ञस्य, राजानम्—अधिपतिम्, होतारं—देवानामाह्वातारम्, रुद्रं—शत्रून् रोदयन्तम्, रोदस्योः—द्यावापृथिव्योः, सत्य-

(क) 'वामदेव्यञ्च रौद्रं वा'—आ० ब्रा०।

यज्ञं सत्यस्य अन्नस्य दातारम्, सत्येन हविषा देवान् यजन्तं, हिरण्यरूपं—सुवर्ण-प्रभम् अग्निं, वः—युष्माकम्, अवसे—रक्षणाय, तनयित्नोः—स्तनयित्नोः अशनेः अशनिवदाकस्मिकात्, अचित्तात्—संज्ञाराहित्यात् मरणादित्यर्थः, पुरा—प्रागेव आ कृणुध्वम्—यूयं हविर्भिरग्निं भजध्वम् ॥ ७ ॥

Before the collapse of senses (i. e. death), which is (sudden) like thunder, O priests, for your protection, offer worship to Agni, the golden-coloured, the king of sacrifice, the invoker (of the gods), terrible (to enemies), bearer of oblation within heaven and earth.—7.

**सा०-भा० ।** हे ऋत्विग्यजमानाः ! 'अध्वरस्य' यज्ञस्य । 'राजानम्' अधिपतिम् । 'होतारं' देवानामाह्वातारम् । 'रुद्रं' रोरूयमाणं द्रवन्तम्, शत्रून् रोदयन्तं वा । यद्वा, 'एषा वा अग्नेर्घोरा तनूर्यद्रुद्रः' इति रुद्रात्मकम् । 'रोदस्योः' द्यावापृथिव्योः । 'सत्य-यजं' सत्यस्यान्नस्य दातारम् । यद्वा, सत्य-यजं सत्येन हविषा देवान् यजन्तम् । यद्वा, सत्यस्यानन्द-लक्षणस्य सङ्गमयितारं रोदस्योर्व्याप्य वर्त्तमानम् । 'हिरण्य-रूपं' सुवर्ण-प्रभम् । एवंविधम् 'अग्निं' 'वः' युष्माकम् 'अवसे' रक्षणाय 'तनयित्नोः' स्तनयित्नुरशनिः स ह्याकस्मिकः, तत्सदृशाद् 'अचित्तात्' न विद्यते चित्तं यस्मिन् तदचित्तम्, चित्तोपलक्षित-सर्वेन्द्रियोपसंहारो मरणमिति यावत् तस्मान्मरणात् 'पुरा' प्रागेव 'आ कृणुध्वं' यूयं समन्ताद्धविर्भिरग्निं भजध्वम् ॥ ७ ॥

७ । ऋ०, सं०, ४म० ३सू० १ऋ० ।

'अध्वरस्य राजानम्'—Agni is often called the lord of sacrifice. *Vide* the next Sāman 1.70.

रुद्रम्—the afflicter of foes. 'The bright red god Agni'—*Grfth.* 'रुद्रम्—रोदयते रोदेर्णिलुक् च इति रक्-प्रत्यय' uṇ. 2.22. तनयित्नोः—तनिः शब्दार्थः । नुगादिरद्ध्नः । स्तनिहृषि इति णरित्नुच् उ, ३,२९ । कृणुध्वम्—कृवि हिंसाकरणयोः लोटि रूपम्—Say.'s addl. notes on ṚV. verse.

सत्य-यजम्—the offerer of oblation to the gods :—Sāy. ; the distributor of food ;—*Wils.* effectual sacrificer—*Grfth.*

तनयित्नोः पुरा—'स्तनयित्नोः' is the word drvd. from the rt. स्तनि *to roar.* स् of the rt. has been dropped by व्यत्यय ; for Sāyaṇ's explanation which is always rational see above. The West. scholars being always keen about the literal translation, do not care for the congruous sense which the stanza reasonably conveys. 'Before the thunder-strike'—*Grfth.* Prof. Ludwig—in his comment on the verse in the ṚV. refers to Atharva-Veda 12. 2. 9. where Agni (Kravyāda) or Agni—in his most terrific form, is spoken of as the God of Death, who stupefies men with his thunderbolt.

अचित्तात्—absence of sense, a state of unconsciousness i.e. death, as sudden as if the work of the thunderbolt.

हिरण्यरूपम्—golden-hued ; हिरण्य is drvd. as 'हर्यतेः कन्यन् हिर् च'—uṇ. iv.44. golden-coloured—Sāy. ; golden-formed—*Wils* ; with his golden colours—*Grfth.* हिरण्यवर्णस्येव अस्य रूपम्—its form is like the colour of gold—Nir. 3. 16. cf. हिरण्यरूपः स हिरण्यसंदृक् अपां नपात्—ṚV. ii. 35. 10.

अवसे—Ved. Inf.—अवितुम्। 'तुमर्थे सेसेनसे०' Pāṇ. iii.4.9.

---

**वसिष्ठ ऋषिः। द्वे सामनी वैश्वज्योतिर्नामके (क)। त्रिष्टुप्छन्दः। वैश्वानरोऽग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे विनियोगः।**

३ २उ ३ २ ३ १र २र ३ २ ३ १ २ ३ १ २ ३ १ २

# इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २

# नरो हव्येभिरीडते सबाध अग्निरग्रमुषसामशोचि ॥ ८ ॥ ७० ॥

इन्धे। राजा। सम्। अर्यः। नमःऽभिः। यस्य। प्रतीकम्। आऽहुतम्। घृतेन। नरः। हव्येभिः। ईडते। सऽबाधः। आ। अग्निः। अग्रम्। उषसाम्। अशोचि ॥ ८ ॥

भाष्यसारः। **राजा—दीप्यमानः, अर्यः—स्वामी, हविःप्रेरको वा, अग्निः—नमोभिः—स्तुतिभिः हविर्भिः, समिन्धे—समिध्यते सम्यग्दीप्यते। यस्य—अग्नेः, प्रतीकं—स्वरूपम्, घृतेन आहुतं—सम्यग्दीपितं भवति। यं च अग्निं नरः—जनाः, सबाधः—सञ्जातबाधाः, हव्येभि—हव्यैः, ईडते—स्तुवन्ति, सः अग्निः उषसामग्रम्—प्रत्यूषसि ब्राह्मे मुहूर्त्ते, आ समन्तात्, अशोचि—दीप्यते वेद्यामाहवनीयदेशे इति भावः ॥ ८ ॥**

Shines forth with offerings or eulogies—Agni, the glowing lord of the sacrifice, whose self (body) is kindled with ghee, whom men, in distress, worship with oblation ; (that) Agni is ignited before every dawn.—8.

**सा०-भा०।** 'राजा' दीप्तः 'अर्यः' स्वामी हविषां प्रेरको वा 'अग्निः' 'नमोभिः' स्तुतिभिः सह 'समिन्धे' समिध्यते। 'यस्य' अग्नेः 'प्रतीकं' रूपं 'घृतेन आहुतं' भवति। ये च 'नरः' अस्मदीयाः 'सबाधः' संश्लिष्टाः सञ्जातबाधाः 'हव्येभिः'

---

(क) 'वैश्वज्योतिषे द्वे'—आ० ब्रा०।

हव्यैः सार्द्धम् 'ईडते' स्तुवन्ति। 'सः' अग्निः 'उषसाम्' 'अग्रम्' 'आ अशोचि' आ दीप्यते ॥ ८ ॥

८। ऋ० सं० ७म० ८सू० १ऋ०।

इध्ने—इध्यते—is inflamed, lighted *Vide* : note on SV. 1. 19 ; 3. sg. pass. in sense.

अर्यः—dr. from rt. ऋ (गतौ, *to go*) by aff. यत् 'अर्यः स्वामिवैश्ययोः' Pāṇ. iii. 1.103. इति 'अर्य इति ईश्वरनाम'—Ngh. 2.22. cf. प्र तत्ते अद्य शिपिविष्टनामार्य्यः शंसामि—I, the lord of hymns, to day, praise...Ṛ̣V. vii. 100. 5.

नमोभिः—vide SV. 1. 45. ( नमसा ) and 1. 17.

प्रतीकम्—प्रतीयते इति प्रति-पूर्वात् इन्-धातोः रीकन्।—रूपम्, body—Sāy. ; face—*Grfth.*

हव्येभिः—हव्यैः ; भिस् not changed to ऐस् by बहुलं छन्दसि Pāṇ. vii. 1.10.

ईडते—rt. ईड् (स्तुतौ, *to praise* 2.Ā.), pres. ( लट् ) 3. pl.

सबाधः—सबाधाः referring to 'नरः' (nom. pl.),—distressed ; 'associated, together'—*Wils.* 'सुपां सुलुक्०' ७,१,३९ इति जसः स्थाने सुः (nom. sg. for pl.) cf. 'ऋजवः सन्तु पन्थाः'—पन्थाः instead of पन्थानः ; 'ये ते पन्थाः सवितः पूर्व्यासः'—Ṛ̣V. i. 35. 11.

अशोचि—dr. rt. शुच् (*to be pure or bright*) Aor. pass. voice pres. sense छन्दसि लुङ्-लङ्-लिटः Pāṇ. iii. 4.6. cf. शुक्रः (SV. 1.4.), शोचिषा (SV. 1.12.). drvd. from the same root.

उषसाम् अग्रम्—the sacrificial fire is kindled every day before dawn.

---

त्वष्टृपुत्रस्त्रिशिरा ऋषिः। द्वे सामनी यामे (क)। त्रिष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे आग्नेयक्रतौ च विनियोगः।

२ ३ १ २ ३ १ २ ३ १र २र ३ १ २
प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति।
३ २ ३ १ २ ३ १ २र ३ २ ३ १ २ ३ १ २
दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्द्ध ॥९॥७१॥

प्र। केतुना। बृहता। याति। अग्निः। आ। रोदसी इति। वृषभः। रोरवीति। दिवः। चित्। अन्तात्। उपमाम्। उत्। आनट्। अपाम्। उपऽस्थे। महिषः। ववर्द्ध ॥ ९ ॥

भाष्यसारः। अग्निः बृहता—महता, केतुना—ज्वालारूपेण चिह्नेन, आ—इदानीम्

(क) 'यामे द्वे'—भा० ब्रा०।

रोदसी--द्यावापृथिव्यौ, प्रयाति--प्रकर्षेण गच्छति, वृषभः इव रोरवीति--अत्यर्थं शब्दं करोति। दिवः—अन्तरिक्षलोकस्य, चित्—अपि, अन्तात्—पर्यन्तात्, उपमाम्—समीपम्, मेघस्यान्तिकम्, उदानट्--ऊर्ध्वम् अश्नुते, ज्वलनात्मना आदित्यरूपेणावस्थितः सन् व्याप्नोति। अपां—वृष्टिलक्षणानामुदकानाम् उपस्थे—उपस्थाने अन्तरिक्षे, महिषः—महान् सन्, ववर्ध—वर्धते ॥ ९ ॥

Agni proceeds with its high banner (the flame), to spread over heaven and earth, bellows loud like a bull ; from the furthest limit of the sky to the nearest, pervades above (in the form of the sun), in the lap of waters waxes mighty ( in the form of lightning).—9.

**सा०-भा०।** 'अग्निः' 'बृहता' 'केतुना' प्रज्ञानेन युक्तः सन् 'आ' इदानीं 'रोदसी' द्यावापृथिव्यौ 'प्रयाति' प्रकर्षेण गच्छति। किञ्च, देवानामाह्वानकाले 'वृषभः' इव 'रोरवीति' अत्यर्थं शब्दं करोति। 'दिवश्चित्' अन्तरिक्षलोकस्यापि 'अन्तात्' पर्यन्तात् 'उपमाम्' उपमेत्यन्तिक-नाम, मेघस्य समीपम्। 'उदानट्' उदश्नुते ज्वलनात्मनाऽऽदित्यात्मनावस्थितः सन् ऊर्ध्वं व्याप्नोति। अश्नोतेर्व्यत्ययेन परस्मैपदम्। तिपोहल्ङ्यादिलोपः। 'अपां' वृष्टिलक्षणानामुदकानाम् 'उपस्थे' उपस्थाने अन्तरिक्षे वैद्युतात्मना 'महिषः' महान् 'ववर्ध' वर्धते ॥ ९ ॥

९। ऋ० सं० १० म० ८ सू० १ ऋ०।

रोदसी—du. रोदितीति rt. रुद् + असुन् + ङीष् fem. 'रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक्, सहप्रयोगेऽप्यनयो रोदः स्यादपि रोदसी'—विश्वः। 'द्यावापृथिव्यौ रोदस्यौ द्यावाभूमी च रोदसी'—अमरः। रोदसी इत्यव्ययमस्ति। cf. 'स्तोतारं ते शतक्रतो वित्तं मेऽस्य रोदसी'। रोदसी—द्यावापृथिव्यौ—Nir. 4. 7.

वृषभः—वृषभो वर्षिता अपाम्—Nir. 4. 8. प्रजां वर्षतीति वा वर्षति रेत इति वा तद् वृषकर्मा। वर्षणाद् वृषभः। Agni is here compared to a bull, on account of the noise of his flames, resembling a bull's bellowing.

रोरवीति—rt. रु यङ्लुक्, roars loudly.

उपमाम्—'उपमेत्यन्तिक-नाम' Near, Ngh 2. 16.

उदानट्—rt. नश् ( व्याप्तौ, *to pervade* ), लङ् ( imperf. ) 3. sg. 'आनट् व्याप्तिकर्मा' Ngh. 2. 18. Sāy. derives it from अश्।

उपस्थे—in the lap, in the bosom ; 'उपस्थ उपस्थाने, यत उपगम्य तिष्ठन्ति आपस्तस्मिन् महति अन्तरिक्षलोके' Nir. 7. 26. cf. अपामुपस्थे etc. Ṛ V. vi. 8. 4.

महिषः—dr. rt. मह् ( पूजायां, *to adore* ) + टिषच्—'अविमह्योः टिषच्' uṇ. 1. 45. महिष इति महन्नाम great, Ngh. 3.3. cf. अपामुपस्थे महिषा अगृभ्णत—Ṛ V. vi. 8. 4.

ववर्ध—वर्धते, लिट् (perf.) in the pres. sense, छन्दसि लुङ्०—Pāṇ. iii. 4. 6.

वसिष्ठ ऋषिः। द्वे वैराजे सामनी, इन्द्र ऋषिः वसिष्ठः प्रजापति र्वा,—च्यावने, शैखण्डिने, ऐन्वके वा, च्यवनः शिखण्डी इन्वको वा ऋषिः (क)। त्रिष्टुप्छन्दः। अग्निर्देवता। अग्नि-समिन्धने विनियोगः।

३ २उ ३ १ २ ३ २ ३ १ २ १ ९
**अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयन्त प्रशस्तम्।**
३ १ २ ३१ २ ३ २
**दूरेदृशं गृहपतिमथव्युम् ॥१०॥७२॥**

अग्निम्। नरः। दीधितिऽभिः। अरण्योः। हस्तऽच्युतम्। जनयन्त। प्रऽशस्तम्। दूरेऽदृशम्। गृहऽपतिम्। अथव्युम्॥ १०॥

भाष्यसारः। **नरः—नेतारः ऋत्विजः, प्रशस्तं—प्रकर्षेण स्तुतम्, दूरेदृशं—दूरे दृश्यमानम्, गृहपतिं—गृहाणां पालकम्, अथव्युम्—सर्वत्र गमनशीलं सर्वव्यापिन-मित्यर्थः, दीधितिभिः—अङ्गुलिभिः, अरण्योः—अरणीद्वयसकाशात्, हस्तच्युतं—हस्ताभ्यां जातम् अग्निम्, जनयन्त—जनयन्ति॥ १०॥**

Men (priests) with fingers, generate Agni, the lord of the house, highly eulogised, seen from afar, pervading everywhere, produced by hands from two Araṇīs.—10.

**सा०-भा०।** 'नरः' नेतार ऋत्विजः 'प्रशस्तं' प्रकर्षेण स्तुतं 'दूरेदृशं' दूरे दृश्यमानं दूरे पश्यन्तं वा 'गृहपतिं' गृहाणां पालकम् 'अथव्युम्' अथर्वतिर्गत्यर्थः आगम्यम् अतनवन्तं वा 'हस्तच्युतं' हस्तेन जातम्, अरण्योः विद्यमानम् अग्निं 'दीधितिभिः' अङ्गुलिभिः 'जनयन्त' 'जनयन्ति। अत्र यास्कः—"दीधितयोऽङ्गुलयो भवन्ति, धीयन्ते कर्मसु अरणी प्रत्यृत एने अग्निः समरणाज्जायत इति वा, हस्तच्युती हस्तप्रच्युत्या जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम् ( नि० ५,१० )" इति॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमस्याध्यायस्य सप्तमः खण्डः।

इति प्रथमप्रपाठकस्य द्वितीयार्द्धे द्वितीया दशतिः।

१०। ऋ० सं० ७म० १सू० १ऋ०। Ṛ.V. reads **हस्तच्युती** for '**हस्तच्युतम्**' as here.—the Ṛ.V. reading '**हस्तच्युती**' has the sense of Instr. case **हस्तप्रच्युत्या** (vide यास्क Nir. 5.10.)—with the swift movement of hands. **उ० आर्चि० ६.१.१०.१।**

(क) 'इन्द्रस्य वैराजे द्वे, वसिष्ठस्य वा प्रजापतेर्वा च्यावने वा शैखण्डिने वा ऐन्वके वा'—आ० ब्रा०।

नरः—nom. pl.—men, priests ; for this sense vide SV. 1. 70.

दीधितिभिः—'with fingers'—Yāska, Sāy. दीधितय इति अङ्गुलिनाम—Ngh. 2. 5. दीधितय अङ्गुलयो भवन्ति धीयन्ते कर्मसु—fingers are so called (*Didhitayaḥ*), because they are employed in (the performance of) actions. 'With thoughts i. e. with religious attention and devotional thoughts'—*Grfth.* Grfth's rendering, being not based on Nirukta or any other ancient authority, is not acceptable.

हस्त-च्युतम्—'produced by hands'—Sāy. 'Urged by the hand'—*Grfth.*

दूरेदृशम्—दूरे दृश्यतेऽसौ। दृशेः क्विप् ; seen from far ; 'far-seen'—*Grfth.* 'far-gleaming'—*Wils.*

गृहपतिम्—vide notes on SV. 1. 61.

अथर्युम्—dr. rt. अत् (*to go*) युम्। धातोरथादेशः वकारागमश्च। All-pervading. West. scholars are vague on this point ; perhaps, they are not sure about the sense. Yāska follows ṚV. reading अथर्युम्, *vide* : अथर्वति (अथर्यति)—Ngh. 2. 14.

The last two lines of Sāy.'s Com. cited from Nirukta, mean 'Fire sticks are so called because fire rests in them or fire is produced from them by attrition......They produced fire, glorious, visible at a distance, the lord of house and swift'—Nir. 5. 10.

---

अथ प्रथमप्रपाठकस्य द्वितीयार्द्धे तृतीया दशतिः।

बुध-गविष्ठिरौ द्वौ ऋषी। श्यैनं साम श्येनश्चर्षिः,—श्वैतं, शायनं, दीर्घायुष्यं वा साम प्रजापतिश्चर्षिः (क)। त्रिष्टुप्छन्दः। अग्निर्देवता। आग्नेयक्रतौ आश्विनशस्त्रे विनियोगः।

१ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
**अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम्।**
३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
**यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥१॥७३**

अबोधि। अग्निः। सम्ऽइधा। जनानाम्। प्रति। धेनुम्। इव। आऽयतीम्। उषसम्। यह्वाःऽइव। प्र। वयाम्। उत्ऽजिहानाः। प्र। भानवः। सस्रते। नाकम्। अच्छ ॥ १ ॥

भाष्यसारः। अयम् अग्निः, जनानाम्—ऋत्विजां यजमानानां वा, समिधा—समिद्भिः अबोधि—प्रबुद्धो भवति। उषसं प्रति—उषःकाले, आयतीम्—आगच्छन्तीम्, धेनुमिव यथा धेनुः प्रत्यूषसि अग्निहोत्रार्थं दुग्धदानाय प्रबुध्यते तथाऽग्निर्ब्राह्ममुहूर्त्ते समिध्यते। तस्य समिद्धस्याग्नेः भानवः—रश्मयः, वयां—शाखाम्, प्रोज्जिहानाः—ऊर्ध्वं विस्तारयन्तः, यह्वाः—महान्तः वृक्षा इव, नाकम् अच्छ—अन्तरिक्षस्य अभि-

(क) 'श्येनस्य श्यैनं वा श्वैतं वा शायनं वा प्रजापतेर्वा दीर्घायुष्यम्'—आ० ब्रा०।

मुखम्, प्र सस्रते—प्रसरन्ति। यथा महान्तो वृक्षाः शाखां विस्तारयन्त ऊर्ध्वमन्तरिक्षं व्याप्नुवन्ति तथाग्नेर्ज्वाला ऊर्ध्वं प्रसरन्ति ॥१॥

Agni is awakened (kindled) by the holy fuel of men (priests or sacrificers), like a milch-cow coming at every dawn. Like large trees stretching forth branches aloft, his flames proceed up towards heaven.—1.

**सा०-भा०।** अयम् 'अग्निः' जनानाम् अध्वर्य्वादीनां 'समिधा' समिद्भिः 'अबोधि' प्रबुद्धोऽभूत्। 'धेनुमिव' अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वद् 'आयतीम्' आगच्छन्तीम् 'उषसम्' प्रति उषःकाले इत्यर्थः। अथ प्रबुद्धस्याग्नेः 'भानवः' रश्मयो ज्वालाः 'यह्वाः' महान्तः 'वयां' शाखां 'प्रोज्जिहानाः' प्रोद्गमयन्तो वृक्षा इव। यद्वा महान्तः प्रोज्जिहानाः स्वाधिष्ठानं त्यजन्तो भानवः 'नाकम्' अन्तरिक्षम् 'अच्छ' आभिमुख्येन 'प्र सस्रते' प्रसरन्ति ॥ १ ॥

१। ऋ० सं० ५म० १सू० १ऋ०। ṚV. has **'सिस्रते'** instead of **'सस्रते'** as above.

अबोधि—rt. बुध् (*to awake*). लुङ् (Aor.) in the pres. sense, *vide* Pāṇ. iii. 4. 6.

प्रति धेनुमिवायतीमुषासम्—the simile is—'as a milch-cow rises at early dawn, every day to give milk for sacrificial purpose, so Agni is kindled daily before dawn, for the purpose of sacrifice.

वयाम्—*accus.* branch of trees, dr. from rt. वय् ( गतौ, *to spread.* 1. Ā.) with affix अच् Pāṇ. iii. 1.134. fem. टाप्, 'वयते आकाशे प्रसरति'—इति वया शाखा। Or वेतेर्वातायना भवन्ति, वेतेः ( वी गतौ, 2. p.) कर्त्तरि नन्दिग्रहि० पा० ३, १, १३४ इति अच्, ब्रियन्ति चलन्ति इति वयाः,—वातेन हि ताः समन्ततोऽयन्ते इति वातायनाः—the branches of trees are so called, because they are wafted by the wind—Nir. 1. 4. cf. 'वृक्षस्य नु ते पुरुहूत वयाः'—ṚV. vi. 24. 3. 'वया इव रुरुहुः सप्त विस्रुहः' like branches 7 streams grew—ṚV. vi. 7. 6.

यह्वा इव प्र वयामुज्जिहानाः—Stevenson has translated—'his irradiations proceed aloft to the heavens, like the flocks of moving birds'. Max Muller—'like birds flying up to a branch, the flames of Agni went up to heaven'. But these interpretations are not acceptable, as no word in the text conveys the meaning—'bird', perhaps they have confounded वयां with वयः (nom. pl. of the word वि—a bird).

यह्वाः—Mahidhar means—large (birds), and explains the simile—'as large (birds) springing from the branches of the trees'. It is better to supply वृक्षाः after यह्वाः than पक्षिणः, so we prefer Sāy.'s explanation to that of Mahīdhara. यह्व इति महतो नामधेयम्, यातश्च हूतश्च भवति। यातेर्ह्वयतेश्च 'गेहे कः' Pāṇ. 3. 1. 144. इति बाहुलकाद् न क-प्रत्ययो ह्वयतेः सम्प्रसारणाभावः—Nir. 8. 8 ; *vide* notes on यह्वम् SV. 1. 59.

उज्जिहानाः—उत् + rt. हाङ् ( गतौ, *to move*, 3 Ā.) pr. pt.—spreading upwards.

सस्रते—spread—Ngh. 2. 14. सिस्रते (ṚV. reading) is also enumerated in the list.

वत्सप्रि ऋषिः। एकं 'वासुक्रं साम वसुक्र ऋषिः (क)। त्रिष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

२ ३१ २ ३ १ २ ३ ३ ३ १र २र ३ २ ३ १ २
प्र भूर्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्माणम्।
१ २ ३ २ ३ १र २र ३ १ २ ३ १र २र ३ २
नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वर्मणा धनर्चिम् ॥२॥७४

प्रभूः। जयन्तम्। महाम्। विपःऽधाम्। मूरैः। अमूरम्। पुराम्। दर्माणम् नयन्तम्। गीर्भिः। वना। धियम्। धाः। हरिऽश्मश्रुम्। न। वर्मणा। धनऽर्चिम्॥ २॥

भाष्यसारः। हे स्तोतः त्वं जयन्तं--जयशीलम्, महां—महान्तम्, विपोधां--मेधाविरक्षकम्, मूरैः—मूढैः अज्ञानिभिः, अधिष्ठितानां पुरां—शरीराणाम्, दर्माणं—आदरेण रक्षकम्, अमूरम्—अमूढं सर्वज्ञम्, अग्निं प्रभूः—स्तोतुं समर्थो भव। गीर्भिः—स्तुतिभिः, वना—वननीयं सम्भजनीयम्, नयन्तं धनानि प्रापयन्तम्, वर्मणा—कवचस्थानीयज्वालया उपेतम्, हरिश्मश्रुं न—हरितवर्णकेशमयमिव, धनर्चिं—प्रीणनकरस्तोत्रम्, अग्निमुद्दिश्य, धियं—परिचरणरूपं कर्म, धाः—विधेहि ॥२॥

Be able to praise great Agni, the conqueror, the supporter of the wise, the careful protector of bodies, governed by the foolish (senses), himself not unwise; set thy heart (or turn thy meditation) to Agni, the leader, adorable by hymns, having the armour (of flames), with golden beard, to whom pleasant hymns are addressed.-2.

**सा०-भा०।** हे स्तोतः! त्वम् 'जयन्तम्' असुर-सेनानां जेतारं 'महां' महान्तं 'विपोधां' मेधाविनः धर्त्तारं 'मूरैः' मूढैरधिष्ठितानां 'पुरां' शरीराणां 'दर्माणम्' आदरेण रक्षकम् 'अमूरम्' अमूढमग्निं 'प्रभूः' स्तोतुं प्रभवः समर्थो भव। 'गीर्भिः' स्तुतिभिः 'वना' वननीयं सम्भजनीयं 'नयन्तं' धनानि प्रापयन्तं 'वर्मणा' कवचस्थानीयज्वालयोपेतं 'हरिश्मश्रुं नः' हरितवर्णकेशमयमिव 'धनर्चिं' धार्यमाणं क्रियमाणं स्तोत्रं यस्य तम्, प्रीणनकरस्तोत्रं वा अग्निमुद्दिश्य 'धियं' परिचरणरूपं कर्म 'धाः' विधेहि ॥ २॥

---

(क) 'वासुक्रं च'—आ० ब्रा०।

२। ऋ० सं० १०म ४६ सू० ५ऋ०। The RV. reads (1) **मूराः** instead of **मूरैः** as above and (2) **'नयन्तो गर्भं वनां धियं धुर्हरिश्मश्रुं नार्वाणं धनर्चम्'**—instead of the 2nd hemistich of the above SV. stanza. The meaning there is—'The fools (referring to the human priests who are weak and foolish in comparison with the wise Agni) brought him etc.

प्र-भूः—Aor. 2 sg. अडभावश्छान्दसः ; imp. sense—be able (to laud) ; be competent (to glorify)—*Wils.*

विपोधां—'विप इति मेधाविनाम' Nir.3.19. विपान् मेधाविनः दधाति इति—'the supporter or sustainer of the wise', *Sāy.* 'Song-inspirer'—*Ludwig.*

पुरां दर्माणं—the word पूः is often found in the Vedas and Upaniṣads to mean body, cf. पुरमेकादशद्वारमजस्यावक्रचेतसः—Katha. 1. 87. So Sāyaṇ explains—'the careful protector of bodies' : दर्माणं is drvd from rt. दृङ् ( आदरे, *to take care* ) with affix मनिन्। The West. scholars have meant 'fort-destroyer'—Ludwig, Grfth. they have, perhaps, derived—दर्माणं from rt. दॄ(विदारणे, *to pierce through*), the demolisher of cities—*Wils.*

मूरैः—मूढैः—by the fools referring to the senses, which are easily susceptible to bewilderment, dr. from rt. मुह् ( वैचित्त्ये, *to be bewildered* ) क्तः, व्यत्ययेन रः। Similarly अमूरम् is drvd with the prefix नञ्,—never bewildered ;—'the exempt from folly'.—*Wils.*,—rfs. to wise, omniscient Agni. For the use of मूराः for मूढाः and अमूर for अमूढ (referring to Agni) *vide* : 'मूरा अमूर न वयं चिकित्वो महित्वमग्ने'—we are ignorant, thou art wise, we do not perceive thy greatness---RV. x. 4. 4.

वना—वननीयम् adorable.

धाः—aor. 2 sg. अडभावश्छान्दसः ; imp. sense विधेहि।

---

भरद्वाज ऋषिः। एकं पौषं साम (क)। त्रिष्टुप्छन्दः। पूषा देवता। शुक्रग्रहहोमे शुक्रार्चने वा विनियोगः।

३ १ २ ३ १ २ ३१ २ ३ १र २र ३ १ २ ३ १ २
**शुक्रं ते अन्यद्यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि।**
२ ३ २ ३ १र २र ३ १ २ ३ २ ३ १ २
**विश्वा हि माया अवसि स्वधावन् भद्रा ते पूषन्निह रातिरस्तु ॥३॥७५**

शुक्रम्। ते। अन्यत्। यजतम्। ते। अन्यत्। विषुरूपे इति विषुऽरूपे। अहनी इव। द्यौःऽइव। असि। विश्वाः। हि। मायाः। अवसि। स्वधावन्। भद्रा। ते। पूषन्। इह। रातिः। अस्तु ॥ ३ ॥

---

(क) 'पौषं च'—सा० ब्रा०

भाष्यसारः—हे स्वधावन्—अन्नवन्, पूषन्, तव शुक्रं—शुक्लवर्णम्, अन्यत्—एकमहर्भवति दिवाख्यम् तथा तव सम्बन्धि यजतं—यजनीयं प्रकाशेन सङ्गमनीयं स्वतः कृष्णवर्णम् अन्यत्—एकमहः रात्र्याख्यं भवति। इत्थं विषुरूपे—शुक्ल-कृष्ण-तया नानारूपे अहनी—अहोरात्रे भवतः। द्यौरिवासि—आदित्य इव त्वं प्रकाशकोऽसि। विश्वाः—सर्वाः, मायाः—प्रज्ञाः, हि यस्मात् अवसि—रक्षसि। तादृशस्य तव भद्रा—कल्याणी, रातिः—दानम्, इह—अस्मासु, अस्तु—भवतु ॥ २ ॥

O Pūṣan, rich in food, thou hast one form—bright by itself (the day),—and hast another to be united with light (the night)—both dissimilar in form. Thou art like the sun. Thou guardest all intellects; may thy gift be gracious to us.—3.

**सा०-भा०।** हे 'पूषन्'! 'ते' तव 'शुक्रं' शुक्लवर्णम् 'अन्यत्' एकमहर्भवति वासरात्मकम्, तथा 'ते' तव सम्बन्धि 'यजतं' यजिरत्र सङ्गतिकरणे वर्त्तते यजनीयं प्रकाशेन सङ्गमनीयं स्वतः कृष्णवर्णम् 'अन्यत्' एकमहर्भवति रात्र्याख्यम्। इत्थं 'विषुरूपे' शुक्लकृष्णतया नानारूपे 'अहनी' तव महिम्ना निष्पद्येते। यद्वा, हे पूषन्! त्वदीयमन्यद्रूपं 'शुक्रं' निर्मलं दिवसस्योत्पादकम्; त्वदीयमन्यदेकं रूपं 'यजतं' केवलं यजनीयं न प्रकाशकं रात्रेरुत्पादकम्। अतएव 'विषुरूपे' विषमरूपे 'अहनी' अहश्च रात्रिश्च भवतः। अहोरात्रयोर्निर्माणे सूर्य एव कर्त्ता। कथमस्य प्रसक्तिरिति? तत्राह, 'द्यौरिवासि' यथा द्यौरादित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि। कुतः? इत्यत आह, हे 'स्वधावन्'! अन्नवन्! पूषन्! 'विश्वाः' सर्वाः मायाः प्रज्ञाः 'हि' यस्मात् कारणाद् 'अवसि' रक्षसि, अतः कारणात् त्वं सूर्य इव भवसीत्यर्थः। तादृशस्य 'ते' तव 'भद्रा' कल्याणी 'रातिः' दानम् 'इह' अस्मासु 'अस्तु' भवतु। यास्कस्त्वाह—"शुक्रं तेऽन्यल्लोहितं तेऽन्यद्यजतं तेऽन्यद्यज्ञियं तेऽन्यद्विषमरूपे ते अहनी कर्म द्यौरिव चासि सर्वाणि च प्रज्ञानान्यवसि अन्नवन् (१२, १७)" इति ॥ ३ ॥

३। ऋ० सं० ६म० ५८ सू० १ऋ०। This stanza is explained by Yāska in Nir. 12. 17. Sāy. follows him.

शुक्रम्—*Vide*: SV. 1. 4. शुक्लवर्णम्, bright, fr. rt. शुच्।

यजतम्—यजनीयम्, worthy of adoration *vide* SV. 1. 63.

विषुरूपे—विषमरूपे—dissimilar in form.—Sāy. and Yāska. Variously complexioned—*Wils.* cf. दक्षस्य वादिने जन्मनि व्रते···ऋतूतपत्न्याः पुरुरथो···विषुरूपेषु जन्मसु (in births of diverse forms) ṚV. x. 64. 5. विषुरूपेषु—विषमरूपेषु—Nir. 11. 23.

द्यौरिव—like the sun,—Sāy. like heaven—*Grfth.*

माया:—प्रज्ञा: Sāy. ; (thou protectest) all intelligences.—*Wils* ; all learning or wisdom. 'magic powers of the gods'—*Grfth.*

स्वधावन्—*voc.*—स्वधा—अन्नम्—Ngh. 2.7.

पूषन्—*voc.*—'अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति'—Nir. 12. 16. rt. पुष् *to nourish* —aff. कनिन् uṇ. 1. 115.—One who nourishes with rays ; the sun, the regulator of both day and night.

रातिः—rt. रा ( दाने to give )—aff. क्तिन्,—दानम् bounty, thine auspicious liberality.—*Wils.*

---

**विश्वामित्र ऋषिः। 'कौत्सं' साम कुत्स ऋषिः (क)। त्रिष्टुप् छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।**

१ २ ३ १ २ २ १र २र ३ १र २र
**इडामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध।**
१ २ ३ १र २र ३ २उ ३ १ २ ३ १ २ ३ २
**स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥४॥७६॥**

इडाम्। अग्ने। पुरुऽदंसम्। सनिम्। गोः। शश्वत्ऽतमम्। हवमानाय। साध। स्यात्। नः। सूनुः। तनयः। विजाऽवा। अग्ने। सा। ते। सुऽमतिः। भूतु। अस्मे इति ॥ ४ ॥

भाष्यसारः—हे अग्ने! पुरुदंससं—बहुकर्माणम्, गोः सनिं—गवादिपशूनां प्रापयित्रीम्, इडां—एतन्नामिकां गोरूपां देवताम्, शश्वत्तमम्—निरन्तरम्, हवमानाय—यजमानाय मह्यम्, साध—साधय, प्रापय। नः—अस्माकम्, सूनुः—पुत्रः, तनयः—वंशविस्तारयितृ-सन्ततिः पौत्र इत्यर्थः, स्यात्—भवतु। तव सुमतिः—शोभना अनुग्रहबुद्धिः विजावा—अबन्ध्या सती अस्मे—अस्माकम्, भूतु—भवतु ॥ ४ ॥

O Agni, bring unto thy frequent sacrificer (or invoker)—Ida—the presiding diety of the cows, the source of cattle, rich in manifold deeds ; may a son and a perpetuating offspring (grandson) be born to us ; may thy good will, Agni, be ever fruitful to us.—4.

**सा०-भा०।** हे 'अग्ने'! 'पुरुदंससम्'—'दंसः वेषः' इति ( निघ० २, १ ) कर्मनामसु पठितत्वाद् दंसः-शब्दः कर्मवाची—पुरूणि बहूनि दंसांसि कर्माणि यस्याः सा, तां बहुकर्माणं 'गोः सनिं' गवादिपशूनां सम्पादयित्रीम् 'इडाम्' एतन्नामिकां गोरूपां

---

(क) 'कौत्सं च'—आ० ब्रा०।

देवतां 'शश्वत्तमं' निरन्तरं 'हवमानाय' यजमानाय मह्यं 'साध' साधय। किञ्च, 'नः' अस्माकं 'सूनुः' पुत्रः 'तनयः' पौत्रः 'स्यात्' भवतु, इति 'ते' तव या 'सुमतिः' शोभना बुद्धिः सा 'विजावा' अवन्ध्या सती 'अस्मे' अस्माकं 'भूतु' भवतु॥४॥

४। ऋ० सं० ३म० १सू० २३ऋ०।

Sāy.'s addl. notes in his com. on the Ṛ V. विजावा—पुत्रपौत्रादिरूपेण स्वयं विजायते इति विजावा स्यात्, who is born in the form of son and grandson, and thus perpetuates the family.

इडाम्—the earth—*Wils*; holy food—*Grfth.* the goddess in the form of cow—Sāy.

पुरु-दंससम्—'पुरु'—बहु, 'दंसः' कर्म यस्य; 'rich in marvels'—*Grfth*; the means of many pious rites—*Wils.*

सनिम्—rt. सन् ( लाभे, *to gain* ) *vide* SV. 1. 28. गोः सनिं—bestower of cattle.

शश्वत्तमम्—adv. most frequently, constantly. Grfth has taken it as an adj. meaning 'lasting, permanent'—qualifying 'गोः सनिम्'।

साध—साधय। Imp. 2 sg., grant, give.

तनयः—from rt. तन् *to spread.* तन्+कयन् 'बलिमलितनि०' uṇ. 4. 99. Sāyaṇ has meant पौत्र or grandson, but Grfth. has meant 'spreading offspring'.

विजावा—विजायते इति वि-जन्+वनिप् 'विड्वनो' पा० ६,४,४१ जन्-धातोरनुनासिकस्य आत्. विविधं पुत्रादिप्रजननेन वंशविस्तारयिता—spreading or perpetuating the family; adj. qual. तनयः। Sāy. takes it as an epithet of सुमतिः।

भूतु—भवतु। बहुलं छन्दसीति शपो लुक्, 'भूसुवो०' पा० ७,३,८८ इति गुणाभावः।

अस्मे—अस्मभ्यम्, अस्माकम् इति वा। 'सुपां सुलुक्' पा० ७,१,३९ इति विभक्तेः शे-भावः।

---

वत्सप्रि ऋषिः। द्वे सामनी 'काश्यपे', कश्यप ऋषिः (क)। त्रिष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

१र २र ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
प्र होता जातो महान्नभोविन् नृषद्मा सीददपां विवर्त्ते।
२ ३ २ ३ २ ३ १र २र ३ १र २र ३ १ २ ३ २
दधद्यो धायी सुते वयांसि यन्ता वसूनि विधते तनूपाः॥५॥७७॥

प्र। होता। जातः। महान्। नभःऽवित्। नृऽसद्मा। सीदत्। अपाम्। विवर्त्ते। दधत्। यः। धायी। सु। ते। वयांसि। यन्ता। वसूनि। विधते। तनूऽपाः॥ ५॥

---

(क) 'काश्यपे द्वे'—आ० ब्रा०।

भाष्यसारः। यः नृषद्मा—नृषु सीदन् अवतिष्ठमानः जठराग्निरूपः, अपाम्—अन्तरिक्षस्य, विवर्त्ते—विवर्त्तने उत्सङ्गे वैद्युताग्निरूपेण, कर्मणाम् उपस्थाने समीपे यज्ञवेद्यामाहवनीयरूपेण प्र सीदत्—निषीदति। स होता—होमनिष्पादकः, जातः—प्रादुर्भूतः, महान्—पूज्यः, नभोवित्—अन्तरिक्षस्य ज्ञाता, दधत्—हवींषि धारयन्, सुधायी—वेद्यां सुनिहितः, हे स्तोतः, सोऽग्निः विधते—परिचरते, ते—तुभ्यं, वयांसि अन्नानि, वसूनि—धनानि च, यन्ता—नियमयिता प्रदाता भवतु। अपि च तनूपाः—तन्वः शरीरस्य, पाता—रक्षको भवतु ॥ ५ ॥

(O invoker) May Agni be the bestower of food or riches on thee, who servest him and the protector of thy person, Agni who lies within men, sits on the lap of the waters, is the principal priest, is born mighty, the knower of heaven, the bearer of oblation, well established (on the altar).—5.

**सा०-भा०।** 'यः नृषद्मा' अग्निः 'अपाम्' अन्तरिक्षनामैतत् (नि० १,३,८) अन्तरिक्षस्य 'विवर्त्ते' विवर्त्तने उत्सङ्गे वैद्युतरूपेण निषण्णोऽभूत्, स इदानीं 'होता' यजमानानां होमनिष्पादको जातः प्रादुर्भूतः 'महान्' गुणैः पूज्यः। 'नभोवित्' अन्तरिक्षस्य वेत्ता यतस्तत्रोत्पन्नः अतस्तस्य ज्ञाता। 'नृषद्मा' नृषु सीदन् सदेर्मनिन्, 'प्रसीदत्' वेद्यां प्रसीदति। "अपामुपस्थे महिषा अगृभ्णत" ऋ० ६,८,४ इति हि निगमः। यद्वा, अपां अपसाम् इत्यर्थः, कर्मणामुपस्थे उपस्थाने समीपे वेद्यामुक्तलक्षणः सन्। अथवा, अपाम् उदकानां विवर्त्ते मध्ये योऽग्निर्हविर्वोढुमसहमानो निगूढः सन् स देवैः पुनः प्रार्थितः उक्तविधः सन् वेद्यां प्रसीदति, सोऽग्निः 'दधत्' हवींषि धारयन् 'सुधायी' वेद्यां निहितोऽभूत्। हे स्तोतः! सोऽग्निः 'विधते' परिचरते 'ते' तुभ्यं 'वयांसि' अन्नानि 'वसूनि' धनानि च 'यन्ता' नियमिता भवतु। किञ्च, तनूपाः, 'तन्वः' पाता च भवत्विति शेषः ॥ ५ ॥

५। ऋ० सं० १०म०, ४६सू०, १ऋ०। RV. reads नृषद्वा instead of नृषद्मा and सते for सुते।

नभोवित्—'who knows the clouds, from which Agni comes in the form of lightning'—*Grfth*; 'cognizant of heaven'—*Wils.*

नृषद्मा—नृषु सीदति, सदधातोर्मनिन् षत्वम्। 'abiding with men'—*Wils.* and *Grfth*; 'lying within men in the form of 'जाठराग्नि' (digestive power of the stomach)—by which food is digested in the stomach or the vital warmth'.

सीदत्—असीदत्, लङि रूपम्, अडभावश्छान्दसः—Pāṇ. vi. 4. 75. pres. sense. 'छन्दसि लुङ्लङ्लिटः'—Pāṇ. iii. 4. 6.

अपाम् विवर्त्ते—on the lap of the waters. 'In the waters' eddy, where the waters of the firmament separate and descend.—*Grfth.*

सु-धायी—'धा'-धातोर्णिन्—well established; who has been stationed on the altar.

वयांसि—for etymology and mg. of वयः see note on वयोवृध: SV. 1. 43; 'vital vigour'—*Grfth.* वयांसि यन्ता—the regulator (*niyamitā*) or giver of food. cf. 'सुगुरसत् सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति' (अत्र वयः—अन्नम् आयुर्वा food or full tenure of life)—ṚV. i. 125. 2.

विधते—dat. sg.—to one who serves or offers worship to Agni.

तनूपाः—the protector of thy person. cf. 'स न त्रिपा उत भवा तनूपाः'—may he be our guardian and protector of our bodies—ṚV. x. 69. 4.

---

**वशिष्ठ ऋषिः। एकं साम आङ्गिरसो घृताचिर्ऋषिः (क)। त्रिष्टुप्छन्दः। अग्निर्देवता। विनियोगस्तु लैङ्गिकः।**

२ ३२ ३१२ ३ २ ३ १ २३ १२३१ २
**प्र सम्राजमसुरस्य प्रशस्तं पुंसः कृष्टीनामनुमाद्यस्य।**
१ २ ३ २ ३१२३ १ २ ३१२ ३ १२
**इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु ॥६॥७८॥**

प्र। सम्ऽराजम्। असुरस्य। प्रऽशस्तम्। पुंसः। कृष्टीनाम्। अनुऽमाद्यस्य। इन्द्रस्यऽइव। प्र। तवसः। कृतानि। वन्दद्वारा। वन्दमाना। विवष्टु ॥ ६ ॥

भाष्यसारः। **असुरस्य पुंसः—बलवतो वीरस्य, कृष्टीनाम्—जनानाम्, अनुमाद्यस्य—स्तुत्यस्य, तवसः—बलवतः, इन्द्रस्य इव अग्नेः प्रशस्तम्—समुत्कृष्टम्, सम्राजम्—सम्यग्राजमानम् स्वरूपम्, प्रस्तौतु ऋत्विक् यजमानो वा। वन्दद्वारा—वन्दः स्तुतिः तद्द्वाराणि स्तुतिप्रमुखाणि, वन्दमाना—वन्द्यमानानि सर्वैः स्तूयमानानि, कृतानि—कर्माणि, प्र विवष्टु—प्रकर्षेण कामयताम् ॥ ६ ॥**

Best is the sovereignty of mighty Agni, the strong hero, like that of Indra, revered by all people; let the sacrificer long (to celebrate) deeds such as laudations (to him)—commended by all.—6.

**सा०-भा०।** 'असुरस्य' बलवतः 'पुंसः' वीरस्य पौंस्यमिति वीर्यमुच्यते तथा च यास्कः—'पुमान् पुरुमना भवति पुंसतेर्वे'ति—नि० ६।१५। 'कृष्टीनां' जनानाम् 'अनुमाद्यस्य' स्तुत्यस्य 'तवसः' बलवतः 'इन्द्रस्येव तस्याग्नेः प्रशस्तम् उत्कृष्टं

(क) 'घृताचेराङ्गिरसस्य साम'—आ० ब्रा०।

'सम्राजं' सम्यग्राजमानं स्वरूपं प्रस्तौतु। तथा 'वन्दद्वारा' वन्दनं वन्दः स्तुतिः, तद्द्वाराणि स्तुतिप्रमुखाणि 'वन्दमाना' सर्वैः स्तूयमानानि 'कृतानि' कर्माणि 'प्र विवष्टु' प्रकर्षेण कामयताम् ॥ ६ ॥

६। ऋ० सं० ७ म० ६ सू० १ ऋ०। R̥V. reads प्र सम्राजो असुरस्य प्रशस्तिम् instead of प्र सम्राजमसुरस्य प्रशस्तम् and वन्दे दारुं वन्दमानो विवच्मि in the place of वन्दद्वारा etc. the above SV. text.

सम्राजम्—*vide* note on SV. 1. 17, 1. 15.

असुरस्य पुंसः—Sāyaṇ has explained—mighty or powerful hero. The word *Asura* is variously derived. In Post-Vedic Sanskrit असुर is the antonym of सुर, so always means demon. But in the Vedas *Asura* is often found as an epithet of gods, the following derivative senses are obtained (1) अस्यति क्षिपति शत्रून्—इति असेरुरन् uṇ. 1. 42. (2) असून्—प्राणान् राति—ददाति—असु-रा+कः। असुरस्य पुंसः in the gen. case rfs. to 'Agni'.

कृष्टीनाम्—*vide* notes on कृष्टयः, SV. 1. 11.

अनुमाद्यस्य—अनु+rt. मद ( हर्षे, *to rejoice* )—aff. ण्यत् ; in whom the folk must triumph—*Grfth* ; reverenced of all men—*Wils.*

तवसः—strong, powerful ; from rt. तव् ( तवतिर्वधार्थः सौत्रो धातुः )—असुन् ; सर्वधातुभ्य असुन्, तवस्—strength, Ngh. 2. 9 ; Again 'तवस् इति महतो नामधेयम्'—a syn. of mighty, Nir. 5. 9. 'तं त्वां गृणामि तवसम्'—I glorify thee, who art mighty.—R̥V. vii. 100.5.

वन्दद्वारा—वन्दद्वाराणि, 'शेश्छन्दसि बहुलम्' पा० ६,१,७० इति शेर्लोपः।—deeds such as praising or the like.

वन्दमाना—वन्द्यमानानि, कर्मणि शानचि कृते यग्लोपश्छान्दसः। ततः शेर्लोपश्छान्दसः।—Commendable, worthy of praise.

विवष्टु—वष्टु (class. form.)—rt. वश् (कामनायाम्, *to desire*)—Imp. 3. sg. 'बहुलं छन्दसि' पा० २.४.७६ इति शपः श्लुः— द्वित्वम् अभ्यासस्य इत्—Pāṇ. vii. 4. 78. *Vide* SV. 1. 55.

---

विश्वामित्र ऋषिः। एकं प्रासाहं साम, भरद्वाज ऋषिः (क)। त्रिष्टुप्छन्दः। अग्निर्देवता। वरुणप्रघासादियागेऽग्निप्रणयनादिकार्ये विनियोगः।

३ २ ३ १ २र ३ १ २ ३ १ २ ३ १र २र ३ १ २
अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः।
३ १ २ ३ १ २ ३ १ २ ३ १ २ क २र ३ २
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥७॥ ७६॥

अरण्योः। निऽहितः। जातऽवेदाः। गर्भःऽइव। इत्। सुऽभृतः।

(क) —'भरद्वाजस्य प्रासाहम्'—आ० ब्रा०।

गर्भिणीऽभिः । दिवेऽदिवे । ईड्यः । जागृवत्ऽभिः । हविष्मत्ऽभिः । मनुष्येभिः । अग्निः ॥ ७ ॥

भाष्यसारः । **जातवेदाः अग्निः—अरण्योः मध्ये निहितः—स्थितः, गर्भिणीभिः स्त्रीभिः गर्भ इव सुभृतः—सम्यक् भृतः पोषितः । यथा गर्भो गर्भिणीभिः स्त्रीभिः सुष्ठु धार्यते तद्वत् । सः अग्निः हविष्मद्भिः—संगृहीतहविष्कैः, जागृवद्भिः—कर्मणि जागरूकैः प्रमादरहितैः, मनुष्येभिः—मनुष्यैः ऋत्विग्भिः, दिवे दिवे—प्रतिदिनम्, इत्—एव, ईड्यः—स्तोतव्यः ॥ ७ ॥**

Within the two *Araṇīs* lies Agni, the omniscient,—like the foetus well preserved by pregnant women. Agni is, indeed, worthy of adoration by men, provided with oblations, ever-wakeful (in the celebration of rites).—7.

**सा०-भा० ।** 'जातवेदाः' सर्वविषयज्ञानवान् अयम् अग्निः 'अरण्योर्निहितः' देवैर्यज्ञार्थं नितरां स्थापितः । तत्र दृष्टान्तः--'गर्भः इव' इति, यथा गर्भो गर्भिणीभिः स्त्रीभिः 'सुभृतः' सुष्ठु धार्यते तद्वत् । स तादृशोऽग्निः 'हविष्मद्भिः' सम्भृतहविष्कैः अतएव 'जागृवद्भिः' कर्मणि जागरूकैः 'मनुष्येभिः' मनुष्यैरस्माभिः 'दिवे दिवे' प्रत्यह-मुत्पत्त्यर्थम् 'ईड्यः' स्तुतिरूपाभिर्गीर्भिः स्तोतव्यः ॥ ७ ॥

७ । ऋ० सं० ३म० २९सू० २ऋ० । The Ṛ.V. reading is **सुधितो गर्भिणीषु ।**

Sāy.'s addl. notes in his com. on the Ṛ.V. stanza :—'अरण्योः—ऋ गतौ, अर्त्तिसृधृधमीत्यादिना अनिः । दिवे दिवे—दिवु क्रीडादौ इगुपधलक्षणः कः । नित्यवीप्सयोरिति द्विर्वचनम् । जागृवद्भिः—जागृ निद्राक्षये इत्यस्य क्वसौ रूपम् । द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति विकल्पितत्वाद्द्विर्वचनाभावः । 'वसुस्रंसुध्वंस्वनडुहां दः' पा० ८,२,७२ इति वसोः सकारस्य दत्वम् ।

अरण्योः—*vide* SV. 1. 72. as to *Araṇīs*, why so called, *vide* Sāy.'s quotation from Nirukta and the translation thereof in our notes on it.

जातवेदाः—Agni is very often called by this epithet, *vide* SV. 1. 31, 35, 40, 66.

दिवे दिवे—*vide* notes on SV. 1. 14.

ईड्यः—dr. from rt. ईड् (स्तुतौ, to praise, worship) *vide* ईडते SV. 1.70.

जागृवद्भिः—rt. जागृ—*to awake*, क्वसु,—vigilant, watchful, wakeful in sacrificial rites.

हविष्मद्भिः—rich in or laden with oblations.

मनुष्येभिः—for मनुष्यैः ; rfs. to the sacrificers, भिस् not changed to ऐस् by बहुलं छन्दसि—Pāṇ. vii. 1. 10.

---

पायुर्ऋषिः। 'राक्षोघ्नं' साम वैश्वानरोऽग्निर्ऋषिः अग्निर्वा (क)। त्रिष्टुप् छन्दः। रक्षोहाग्निः। रक्षोहननार्थं जपादिषु विनियोगः।

३ १ २ १२ ३ २ ३ १ २ ३ १ २
सनादग्ने मृणसि यातुधानान् न त्वा रक्षांसि पृतनासु जिग्युः।
१ २ ३१२ ३ २ ३ १ २३ १ २ ३ १ २
अनु दह सहमूरान् कयादो मा ते हेत्या मुक्षत दैव्यायाः॥८॥८०॥

सनात्। अग्ने। मृणसि। यातुऽधानान्। न। त्वा। रक्षांसि। पृतनासु। जिग्युः। अनु। दह। सहऽमूरान्। कयादः। मा। ते। हेत्याः। मुक्षत। दैव्यायाः॥ ८॥

भाष्यसारः। हे अग्ने! त्वं सनात्—चिरात्, यातुधानान्—राक्षसान्, मृणासि—बाधसे नाशयसि, रक्षांसि—राक्षसाः पृतनासु—संग्रामेषु, त्वाम्, न जिग्युः—जितवन्तः। स त्वं सहमूरान्—समूलान्, कयादः—क्रव्यादः मांसभक्षकान् राक्षसान्, अनु—अनुक्रमेण, अनुक्षणं वा दह—स्वतेजसा भस्मीकुरु। तव दैव्यायाः हेत्याः—दिव्यात् आयुधात्, ते यातुधानाः, मा मुक्षत—मुक्ता न भवन्तु॥ ८॥

Ever, Agni, doest thou slay demons; never did the demons conquer thee in battles; consume all the carrion-eaters to their root; let them not escape thy divine missile.—8.

**सा०-भा०।** त्वं 'सनात्' चिरादेवारभ्य 'यातुधानान्' राक्षसान्। 'मृणसि' बाधसे। तथापि 'त्वा' त्वाम्। 'पृतनासु' संग्रामेषु। 'रक्षांसि' राक्षसाः 'न जिग्युः' नाजयन्। किञ्च, स त्वमधुना अनुक्रमेण 'सहमूरान्' मूलेन सहितान् मारकव्यापारेण युक्तान् 'कयादः' क्रव्यादो मांसभक्षकान् राक्षसान् 'दह' तेजसा भस्मीकुरु। किञ्च, तव सम्बन्धिनो 'दैव्यायाः' दैव्यात् 'हेत्याः' आयुधात् 'ते' यातुधानाः 'मा मुक्षत' मुक्ता मा भूवन्॥ ८॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य अष्टमः खण्डः।

८। ऋ० सं० १० म०, ८७ सू० १९ ऋ०।

सनात्—*Indec.*—सदा, always, ever; from old time—*Wils*; from days of old.—*Grfth.*

(क) 'अग्नेर्वैश्वानरस्य 'राक्षोघ्न'मेतद्'—आ० ब्रा०।

सर्षसि—rt. ऋण (हिंसायाम्, *to slay* 6 p.), pres. 2. sg.—thou hast opposed —*Wils.*

यातुधानान्—Sāy. derives the word in his com. on ṚV. i. 35.10. thus—"यत् निकारोपसंस्कारयोः तस्मात् ण्यन्तादौणादिको भावे उ-प्रत्ययः" (rt. यत्—णिच्—उ = यातु)। यातवो यातना एव धीयन्ते इति यातुधानाः अधिकरणे ल्युट्।—the sources of troubles and pains. 'giants'—*Stevenson*; 'demons'—*Grfth.*

रक्षांसि—*vide* notes on:—

पृतनासु—in battles, in fight; drvd. from rt. पृङ् (*to be busy*) 'व्याप्रियन्तेऽत्र योद्धारः' where warriors are engaged. पृतना युद्धनाम, a syn. of battle, Ngh. 2. 17. Nir. 9. 14. cf. 'पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति'—(the quiver) stung on the back, conquers all battles—ṚV. vi. 75. 5.

जिग्युः—*vide* note on SV. 1. 68. न जिग्युः—have never over-come thee.

सहमूरान्—समूलान् with the very root. सह is not changed to स *opt*, *vide* Pāṇ. vi. 3. 82. ल (of मूल) is changed to र by व्यत्यय। cf. 'उद्वृह रक्षः सहमूलमिन्द्र'—tear up, Indra, the Rākṣasas with their root. ṚV. iii. 30. 17. Grfth—following the meaning of the 2nd Ṛk of this decade (SV. 1. 74.)—has meant 'foolish ones'—which sense, however, does not suit here at all.

कयादः—is the same as क्रव्यादः flesh-eating—*Wils*; raw-flesh-devourers—*Grfth.* 'क्रव्यम्'—आममांसमत्तीति क्रव्य—अद् + अण्। व्यत्ययेन क्रव्य-शब्दस्य रेफ-वकारयोर्लोपे कयाद इति रूपम्।

मा मुक्षत—rt. मुच् (मोचने, *to get free*) Aor. 3 pl. 'न माङ्योगे' पा० ६।४।७४ इति अडभावः।

दैव्यायाः—divine, heavenly, dr. देवानामिदमिति 'देवाद्यञञौ'—वा० ४,१,८५ इति यञ्। स्त्रियां टाप्।

हेत्याः—from weapon, thunderbolt. Ngh. 2. 20. 'हेतिर्हन्तेः' drvd. fr. rt. हन् Nir. 6. 3. 'चकर्थ ब्रह्मद्विषे तपिषं हेतिमस्य'—throw the burning weapon upon those opposed to prayer—iii. 30. 17. (*stem.* हेति abl. sg.)—from rt. हन् *to kill.* हन्यते अनया इति करणवाची क्तिः, anomalously formed by 'ऊति यूति...हेति०' Pāṇ. iii. 3.97.

---

अथ प्रथमप्रपाठकस्य द्वितीयार्द्धे चतुर्थी दशतिः।

गायत्रिऋर्षिः। द्वे 'पाथे' सामनी (क)। अनुष्टुप्छन्दः (ख)। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

२ ३ १ २ ३ १ २ ३ २ ३ १ २
अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो।
१ २ ३ १२ २२ ३ २ ३ १ २ ३ १ २
प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् ॥१॥८१॥

---

(क) 'पाथे च'—आ० ब्रा०।

(ख) 'अनुष्टुब्गायत्रैः' पि० छन्दः ३।२३—अष्टाक्षरैः पादैश्चतुष्पादनुष्टुप् छन्दो भवति,—Anuṣṭup metre consists of 4 pādas, each containing 8 syllables.

अग्ने । ओजिष्ठम् । आऽभर । द्युम्नम् । अस्मभ्यम् । अध्रिगो इत्यध्रिऽगो । प्र । नः । राये । पनीयसे । रत्सि । वाजाय । पन्थाम् ॥ १ ॥

भाष्यसारः । हे **अध्रिगो—अप्रतिहतगमन अनिवारित-रश्मे, अग्ने, ओजिष्ठं—बलवत्तमम्, द्युम्नं—धनम्, अस्मभ्यम्, आभर—आहर देहि । किञ्च, पनीयसे—स्तुत्याय, राये—धनाय, वाजाय—अन्नाय च, नः—अस्मभ्यम्, पन्थां—पन्थानं धनस्य अन्नस्य च प्राप्तिसाधनमार्गम्, प्र रत्सि—प्रकर्षेण विलिख कुरु इत्यर्थः ॥ १ ॥**

O Agni, unrestrained in movement (or with unimpeded rays), bring unto us most mighty opulence (i.e. treasure together with strength to protect it); cut out (prepare) for us, the way (leading) to laudable wealth or food.—1.

**सा०-भा० ।** षोड़शानुष्टुभो ह्यग्न ओजिष्ठमिति खण्डयोः ।
सोमं राजानमित्येषा वैश्वदेवी ततः परा ।
स्तुतिरङ्गिरसां शिष्टाः आग्नेय्यस्तु चतुर्दश ।

हे अग्ने ! 'ओजिष्ठ' बलवत्तमं 'द्युम्न' द्योतते कटक-मुकुटादि-रूपेण सर्वत्र काशते इति द्युम्नं धनम् अस्मभ्यम् 'आभर' आहर । हे 'अध्रिगो !' अधृत-गमन ! अधृतमप्रतिहतं गमनं यस्येति, अधृता अनिवारिता गावो रश्मयो यस्येति वा, अध्रिगुः, तस्य सम्बोधनं हे अध्रिगो ! 'पनीयसा स्तोतव्येन 'राये' राया धनेन । सुपां सुलुगिति ( पा० ७,१,३९ ) शे-आदेशः, 'नः' अस्मान् प्रकर्षेण योजय । 'वाजाय' अन्नस्य लाभाय 'पन्थाम्' पन्थानम् अन्नस्य, मत्समीप-प्राप्ति-साधनं मार्गं, 'रत्सि' विलिख कुर्वित्यर्थः ॥१॥

१ । ऋ० सं० ५ म० १० सू० १ ऋ० RV. reads, **'प्र णो राया परीणसा'** instead of **'प्र नो राये पनीयसे'** the mg. there is—'invest us with abundance of wealth'; here the mg. is—'make for us a path to food'.

Sāy's addl. notes in his com. on the RV. stanza:—

ओजिष्ठम्—उब्ज आर्जवे । उब्जेर्बलोपश्चेत्यसुन् बलोपश्च, गुणः ओजः । तदस्यास्तीत्यर्थेऽस्मायामेधास्रजो विनिः, अतिशायने इष्ठन्, विन्मतोर्लुक्, टेरिति टिलोपः । द्युम्नं—द्युत दीप्तावित्यस्माद्धातोः सुम्नद्युम्नेत्यादिना नक्-प्रत्ययो मकारश्चान्तादेशो निपात्यते । अध्रिगो—अधृतशब्दस्य अध्रादेशः । गोशब्दस्योपसर्जन-ह्रस्वत्वम् । पन्थां—द्वितीयैकवचन इतोऽत् सर्वनामस्थान इत्यत् । नकारलोपश्छान्दसः ।

ओजिष्ठम्—most powerful; rfs. to द्युम्नम् (treasure). ओजस्विन् + spv. dg. इष्ठन् विन्मतोर्लुक् पा० ६.३.६५ इति विनोलुक्; for etymology of ओजस् *vide* notes on ओजसे SV. 1. 11.

आभर—आहर, dr. rt. हृञ् ( हरणे, to bring ). Imp. 2. sg. ह is changed to भ by 'हृग्रहोर्भश्छन्दसि' वा० ३,१,८४ । *Vide* : SV. 1. 10.

द्युम्नम्—Sāy. derives it from द्युत् *to glitter* 'द्युम्नमिति धननाम' Ngh. 2. 10. 'द्युम्नं द्योततेर्यशो वा अन्नं वा' drvd. fr. rt. द्युत्, means glory or food.—Nir. 5. 5. cf. 'अस्मे द्युम्नमधिरत्नं च धेहि'—vii. 25. 3. 'Splendour'—*Grfth.*

अध्रिगो *voc.*—of irresistible prowess,—*Wils* ; resistless on thy way—*Grfth.* for Sāyaṇ's explanation see above. अग्निरप्यध्रिगुरुच्यते cf. 'तुभ्यं श्चोतन्त्यध्रिगो शचीवः—O irresistible and mighty one, the drops flow for thee'—iii. 21.4. इन्द्रोऽप्यध्रिगुरुच्यते cf. 'अध्रिगव ओहमिन्द्राय' i. 61. 1. 'अध्रिगु—अधृतगमनकर्मवान्'—one of un-restrained motion and action—Nir. 5. 11. अध्रि—stands for अधृत, गु for गो meaning rays, Ngh. i.5.

पनीयसे—from the rt. पन् ( स्तुतौ, *to praise* ) तृच्, ततः तुश्छन्दसि पा० ५,३,५९ इति ईयसुन्। तुरिष्ठे पा० ६,४,१५४ इति तृचो लोपः ;—most glorious, praise-worthy.

रत्सि—rt. रद् ( विलिखने, *to dig* 1. p. ). Ved. imp. 2. sg. 'वा छन्दसि' पा० ३,४,८८ इति शपो लुक् ; *vide* note on सत्सि SV. 1. 1. cut or open a path.

वाजाय—for etymology *vide* notes on वाजपति SV. 1. 30.

राये—*Vide* SV. 1. 41 ; 1. 49. dat. sg ; Sāy. takes it in the instr. case. after the ṚV. reading ( राया ) and observes that the case-term. is changed to ए by सुपां सुलुक्—Pāṇ. vii. 1. 39.

पथ्याम्—for पथ्यानम्।

---

**वामदेवो भरद्वाजो बार्हस्पत्यो वा ऋषिः। एकं बृहन्नामकं सामाग्निदेवताकम् (क)। अनुष्टुप्छन्दः। अग्निर्देवता। अग्न्याधाने विनियोगः।**

१ २ ३२उ ३ २ ३१ २ ३ १ २
**यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः।**
३ १ २ ३ १ २ ३१र २ ३ १ २
**आजुह्वद्धव्यमानुषक् शर्म भक्षीत दैव्यम्॥२॥८२॥**

यदि। वीरः। अनु। स्यात्। अग्निम्। इन्धीत। मर्त्यः। आजुह्वत्। हव्यम्। आनुषक्। शर्म। भक्षीत। दैव्यम्॥ २॥

भाष्यसारः। **यदि मर्त्यः—मनुष्यः—अग्निम्, इन्धीत—प्रज्वालयेत्, अनु—तदनु, आनुषक् अविच्छिन्नं, निरन्तरं, हव्यम्—आजुह्वत्—तदग्नौ आभिमुख्येन जुहुयात्, स वीरः स्यात्, दैव्यम्—देवसम्बन्धि, शर्म—गृहं सुखं वा, भक्षीत—भजेत॥२॥**

If a mortal kindles Agni and then incessantly offers oblation, (to him), he becomes an eminent man and enjoys divine bliss (or dwelling).—2.

---

(क) 'बृहदाग्नेयम्'—आ० ब्रा०।

सा०-भा०। 'यदि' यदा 'यस्य' मनुष्यस्य 'वीरः' पुत्रः, 'स्यात्' भवति, तदा सः 'मर्त्यः अग्निमिन्धीत' आधानमादधीत कुर्वीत। किञ्च, 'आनुषक्' अविच्छिन्नं यथा भवति तथा 'हव्यम्' 'आ जुहवत्' आभिमुख्येन जुहोति। अपि च, 'दैव्यं' देव-सम्बन्धि 'शर्म' गृहं सुखं वा 'भक्षीत' भजेत सेवेतेत्यर्थः ॥२॥

२। इयम् ऋक् ऋग्वेदे नास्ति।

वीरः—*Vide* notes on सुवीरम् SV. 1. 26. p. 37.

इन्धीत—fr. rt. इन्ध् ( to kindle 2Ā ) vide इन्धे इन्धानः 1. 19. इन्धते 1. 46.

आजुहवत्—आ + हु लेट् (Ved. Subj.) तिप् 3. sg. अडागमः—इलोपश्च—Pāṇ.

आनुषक्—*Indec.*—आनुषगिति नामानुपूर्व्यस्य—अनुषक्तं भवति mg. continuously—Nir. 6. 14. cf. 'स्तृणन्ति बर्हिरानुषक्—ṚV. viii. 45. 1. uninterruptedly—ṚV. v. 16. 2.

शर्म—fr. rt. शॄ ( to take shelter. ) शरणं, शरीरं etc. are drvd. from the same root; shelter, protection, a refuge; a house,—Ngh. 3. 4. It also means joy, bliss, happiness.

भक्षीत—fr. rt. भक्ष *to eat*, secondarily '*to enjoy*'. It is rarely used in the latter sense; here it conveys this rare secondary sense. cf. 'ते सुतस्य ( अभिषुतस्य ) भक्षीमहि पित्र्यस्येव रायः'—ṚV. viii. 48.7. West. scholars derive it fr. rt. भज् *to divide, to partake of* (*optative*); *vide*. M. W. S. E. Dict. rt. भज् and Mcdnll's Stu. Ved. Gram. List of Vbs.

दैव्यम्— divine; for dr. *vide* notes on दैव्याया:—SV. 1. 80.

---

भरद्वाज ऋषिः। यामं साम(क)। अनुष्टुप्छन्दः। अग्निर्देवता। धूम उदिते 'त्वेषस्ते धूम ऋण्वती'ति विनियोगः(ख)।

३ १ २ ३ १ २ ३ २उ ३ १ २र
त्वेषस्ते धूम ऋण्वति दिवि सञ्छुक्र आततः।
३ २उ ३ २उ ३ १ २ ३ १ २
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥३॥८३॥

त्वेषः। ते। धूमः। ऋण्वति। दिवि। सन्। शुक्रः। आऽततः। सूरः। न। हि। द्युता। त्वम्। कृपा। पावक। रोचसे ॥ ३ ॥

भाष्यसारः। हे अग्ने! त्वेषः—दीप्तस्य, तव शुक्रः—निर्मलः, धूमः दिवि—

(क) 'यामं च'—आ० ब्रा०।

(ख) लाट्यायन-श्रौतसूत्रम्।

अन्तरिक्षे, आततः—प्रसृतः, ऋण्वति मेघरूपं प्राप्य गच्छति। हे पावक अग्ने, सूरो न—सूर्य इव, कृपा—स्तुत्या, द्युता—दीप्त्या, हि—खलु, रोचसे—प्रकाशसे दीप्यसे ॥ ३ ॥

The white (pure) smoke of thee, the bright one, rises up (in the from of cloud) and spreads far in heaven. O purifying Agni, like the sun, lauded by praise, thou shinest with thy resplendent lustre.—3.

**सा० भा०।** हे अग्ने! 'त्वेषः' दीप्तस्य 'ते' तव 'शुक्रः' शुक्लो निर्मलः शुभ्रवर्णो वा 'धूमः' 'दिवि' अन्तरिक्षे 'आततः' विस्तीर्णः 'सन्' 'ऋण्वति' मेघात्मना परिणतो गच्छति। अपि च, हे 'पावक' शोधक अग्ने! 'सूरो न' सूर्य इव 'कृपा' स्तोतव्याभिमुखीकरणसमर्थया स्तुत्या स्तूयमानस्त्वं 'द्युता' दीप्त्या 'रोचसे हि' प्रकाशसे खलु ॥ ३ ॥

३। ऋ० सं० ६म० २ सू० ६ ऋ०।

त्वेषः—bright, *gen. sg.* to be connected with ते (तव); rt. त्विष् (दीप्तौ, *to shine*, I.u.) with aff. अच् (पचाद्यच्); the case term. is changed to सु (*nom. sg.*) by 'सुपां सुलुक्' etc. Pāṇ. vii. 1.39. cf. 'अस्तुर्न दिद्युत्त्वेष-प्रतीका'—like an archer's arrow bright in appearance—ṚV. 1. 66. 7.

ऋण्वति—fr. rt. रिवि (गतौ, *to go*. I. p.) pres. 3. sg. र is changed to ऋ (सम्प्रसारणम्) by व्यत्यय (Vedic anomaly); rt. ऋ (गतौ) being of cl. 1. and cl. 3. does not give the above form, the vb. is found in the list of verbs mg. *to go*—Ngh. 2. 14.

शुक्रः—fr. rt. शुच् (*to shine*, 4. u.) with aff रन्. च is changed to क। *Vide* notes on SV. 1. 4; 1. 75.

द्युता—rt. द्युत् (दीप्तौ to shine, 1.Ā) + क्विप्, द्युत् Instr. sg.

सूरः—सूर्यः, the sun; dr. rt. सू (प्रसवे, *to bring forth*, 2 and 4 Ā) + क्रन् by 'सु-सू-धाञ्' uṇ ii. 24. The etymological sense is—'he who brings forth or creates all beings' cf. 'सूरादश्वं वसवो निरतष्ट'—O Vasus, ye fashioned forth the horses from the sun—ṚV. i. 163. 2; also 'ऋभवः सूरचक्षसः'—Ṛvus—radiant like the sun i. 110. 4.

कृपा—is a peculiar word in Instr. case; Sāy. explains 'with praise by which favourable disposition can be secured.' The word is found in Mon. W's S.E. Dict. col. 1. p. 305 in the sense of beauty, splendour (always in Instr. case)—ṚV. VS. iv. 25; it occurs in the Mantra 'अग्निं होतारं मन्ये···य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा'—···with *prayer* directed towards the gods—ṚV. i. 127. 1. where it apparently has the sense of *praise* or *prayer*; It is derived from कृप् (*vide* कृपायति कृपण्यति—*to worship*—Ngh. 3. 14.) or fr. कृपू (सामर्थ्ये—*to be able* or *capable* 1. Ā.)—कृप् कृपते वा कल्पते वा—Nir. 6. 8.

न—इव, like. *Vide* SV. 1. 5. पावकः—Vide 1. 29. रोचसे—rt. रुच् ( दीप्तौ, to shine 1.Ā. ) pr. ( लट् )—2. sg.

Prof. Wils. translates 'युता त्वं कृपा रोचसे' as—'thou shinest with light by praise' and comments—'*kṛpā* is of rather doubtful import ; it occurs subsequently in the unmistakable sense of *dīptyā* (with lustre). *Sāyaṇa* here explains it by *stutyā*, i. e., by praise which is able to compel the presence of the deity ( अभिमुखीकरणसमर्थया ). Mahīdhara (Yajus, 17. 10.) explains *kṛpā* as *sāmarthyena dīptyā vā*—'by ability, power or by lustre'.

---

भरद्वाज ऋषिः । बृहन्नामकं साम(क) । अनुष्टुप्छन्दः । अग्निर्देवता । प्रातरनुवाके आश्विनशस्त्रे विनियोगः ।

१र २र ३ १र २र ३ १र २र
त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।
१ २ ३ २ ३ १ २ ३ १र २र
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥४॥८४॥

त्वम् । हि । क्षैतऽवत् । यशः । अग्ने । मित्रः । न । पत्यसे । त्वम् । विऽचर्षणे । श्रवः । वसो इति । पुष्टिम् । न । पुष्यसि ॥ ४ ॥

भाष्यसारः । हे विचर्षणे—सर्वसाक्षिन्, वसो—धनात्मक, अग्ने त्वं हि मित्रः न—इव, क्षैतवत्—क्षयशील-काष्ठयुक्तं शुष्कसमिद्युक्तमित्यर्थः, यशः—अन्नं हविरित्यर्थः, पत्यसे—तदभिमुखं गच्छसि, तस्य ईशिषे वा । त्वं श्रवः—अन्नं यजमानस्य इत्यर्थः, पुष्टिं न—पोषणं च, पुष्यसि—वर्धयसि ॥ ४ ॥

O Agni, the seer of all, the possessor of wealth, like Mitra, thou tendest towards the oblation presented with consumable fuel ; thou enhancest the sacrificer's store of food as well as his means of sustenance.—4.

सा० भा० । हे 'अग्ने' ! 'त्वं हि' त्वं खलु 'क्षैतवत्' क्षितिः क्षयोऽपचयः तत्सम्बन्धि क्षैतं शुष्कं काष्ठं तद्युक्तं 'यशः' अन्नं ( निघ० २,७ ) हविर्लक्षणं 'पत्यसे' अभिपतसि गच्छसि । तत्र दृष्टान्तः 'मित्रो न' अहरभिमानी मित्रो देवः स इव । यद्वा, क्षय इति गृहनाम ( निघ० ३,४ ) 'क्षैतवत्' क्षैतं निवासकं हविर्लक्षणमन्नं तद्युक्तं यजमानगृहं मित्रभूतः पुरुष इवाभिपतसि । यद्वा, पत्यतिरैश्वर्यकर्मा ( निघ० २,२१ ) ईदृशमन्नं 'पत्यसे' ईशिषे, अतः कारणात् हे 'विचर्षणे' विशेषेण सर्वस्य द्रष्टः !

(क) "बृहद्वेवाग्नेयम्"—आ० ब्रा० ।

'वसो' वासकाग्ने ! त्वं 'श्रवः' श्रवणीयमन्नम् (निघ०२,७) यजमानगृहस्थं न, अयं न शब्दश्चार्थे। अन्नकार्यभूतां 'पुष्टिं' च 'पुष्यसि' वर्धयसि ॥ ४॥

४। ऋ०, सं०, ६म०, २ सू०, १ ऋ०।

चैतवत्—(1) चैतं is drvd. from चिति ( i.e. चय – अपचय, decay, waste )with Tad. aff. अण् (in the sense of तत्सम्बन्धि—concerning or related to)—consumable, subject to decay, here rfs. to wood or fuel ; next aff. मतुप् is added to give the above form,—a qualifying adjective of यशः (अन्नम्—oblation) ;—'offered with dry fuel' —*Wils*; (2) चितिः चयः—गृहम् (house) Ngh. 3. 4 ; with the above affix—makes the word चैतम्—pertaining to house, *means* the oblation necessary for the welfare of the house. चैतवत्—in this case, rfs to sacrificer's house amply provided with food to be offered as oblations to Agni and other gods. चैतवत् यशः—'princely glory'—*Grfth.*

यशः—अन्नम्, food,—'यश इत्यन्ननाम' Nir. 3. 9—'glory, fame'—West. scholars. *Vide* ṚV. i. 1. 3 ; iv. 51. 11 ; viii. 48. 5. Sāy. also means 'fame' in these passages.

मित्रः—Mitra is a sun-god, for his characteristic features vide—Mcdnll's Vedic Myth. para 13. p. 29.

पत्यसे—rt. पत् ( ऐश्वर्ये, to be master of. 4. Ā.) pres. 2. sg. Thou art the master of. पत्यते इति ऐश्वर्यकर्मा Nir. 3. 11. Sāy. adds another sense अभिपतसि—thou tendest or goest towards ; 'thou alightest upon'—*Wils.*

विचर्षणे (*voc.*)—beholder of all ; वि+कृष् ( विलिखने 1.p.)+अनि uṇ ii. 104. क is changed to च, विचर्षणिरिति पश्यति-कर्मा Ngh. 3. 11.). cf. Sāy's com. on ṚV. i. 35. 9. विचर्षणिः विविधदर्शनयुक्तः। विचर्षणिः पश्यत्यर्थः। विचर्षणिर्विश्वचर्षणिरिति तन्नामसु पाठात्, also ṚV. 1. 160. 5. Mcdnll. and Grfth. mean 'active.'

श्रवः—अन्नम्, (here) *vide* Nir. 10. 3 Ngh. 2. 7. ; it also means wealth (Nir. 3. 9. ), 'fame' (Nir. x1. 9. 1), *vide* notes on 'चित्रश्रवस्तमः' ṚV. i. 1. 5.

वसो—*voc. vide* notes on SV. 1. 36 ; 1. 41 ; 1. 58.

न—*Indec.* च, as well as ;—see Sāy.'s com., above.

---

भ्रक्तवाहाद्वित ऋषिः। बृहतः कौमुदस्य साम। अनुष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

३ २३ १ २ ३ २ ३ १ २३१ २
प्रातरग्निः पुरुप्रियो विश स्तवेतातिथिः।
३ २ ३ १ २ ३ १र २र ३ १ २
विश्वे यस्मिन्नमर्त्ये हव्यं मर्त्तास इन्धते ॥५॥८५॥

प्रातः । अग्निः । पुरुऽप्रियः । विशः । स्तवेत । अतिथिः । विश्वे । यस्मिन् । अमर्त्ये । हव्यम् । मर्त्तासः । इन्धते ॥ ५ ॥

भाष्यसारः । पुरुप्रियः—बहुप्रियः, विशः—सर्वस्याः प्रजायाः, अतिथिः अग्निः प्रातः स्तवेत—सर्वैः यजमानैः स्तूयते । अमर्त्ये—मरणरहिते, यस्मिन् अग्नौ, विश्वे—सर्वे, मर्त्तासः—मर्त्ताः मनुष्याः, हव्यम् इन्धते—प्रज्वालयन्ति समर्पयन्तीत्यर्थः ॥ ५ ॥

Most beloved Agni, the guest of men, is lauded at dawn, in whom, the immortal, all the mortals offer oblations and make them blaze.—5.

सा० भा० । 'पुरुप्रियः' बहुप्रियः 'विशः' यजमाने धनस्य निवेशकः 'अतिथिः' यजमानानां गृहान् प्रति तिथिषु न अभ्येतीत्यतिथिः । तथाह यास्कः,—'अतिथिरभ्यतितो गृहान् भवत्यभ्येति तिथिषु परकुलानीति परगृहाणीति वा' ( नि० ४,५ ) इति । एवंविधोऽग्निः 'प्रातः' 'स्तवेत' स्तूयते । 'अमर्त्ये' अमरणधर्मके 'यस्मिन्' अग्नौ 'विश्वे' सर्वे 'मर्त्तासः' मर्त्ताः मनुष्याः, 'हव्यम्' 'इन्धते' दीपयन्ति दधत इत्यर्थः ॥ ५ ॥

५ । ऋ० सं०, ५म० १८ सू० १ ऋ० ।

Ṛ V. reads **'विश्वानि यो अमर्त्यो हव्या मर्त्तेषु रण्यति'** instead of **'विश्वे यस्मिन्नमर्त्ये हव्यं मर्त्ता इन्धते'** । Ṛ V. text means—'The immortal who delights in all oblations given by mortal men.'

पुरुप्रियः—beloved of many ; पुरु means बहु—*vide* notes on पुरुतमम्. SV. 1. 21.

विशः—ordinarily means people. *vide* SV. 1. 15. here Sāyaṇa explains the word differently as 'यजमाने धनस्य निवेशकः,'—'the awarder of wealth to the sacrificer.' Acc. to Sāy.—विशः is drvd. fr. विश् with aff. कः = निवेशकः, धनस्य निवेशकः *bestower of wealth* ; we have followed the ordinary sense, namely '*of man*' and have connected it ( in the sixth case ) with अतिथिः ( see our tran. above ). 'Guest of the house'—*Grfth* ; —'of man'—*Wils*.

स्तवेत—स्तूयेत—स्तूयते—Sāy. Pass. in sense, Act. in form ; कर्मणि व्यत्ययेन शप्, potential form ( लिङ् ) in the place of pres. ( लट् ) ; this is also common in the Vedas.

अतिथिः—*Sāy*. observes—Agni is called 'Atithi' inasmuch as he comes to the houses of the sacrificers every day (*lit*. lunar day—tithi). *Vide* notes on SV. 1. 5. Macdnll's Ved. Myth. P. 92. 95 ; acc. to Yāska अतिथि is drvd. fr. rt. अत् ( सातत्यगमने, *to go frequently*. 1. p. ) with uṇ aff. इथिन् ;—who comes very often to the houses, or comes on particular lunar days, e.g., full-moon day, new-moon day or so—to others' (i. e. sacrificers') houses—Nir. 4. 5 ; the orig. passage of Yāska is quoted in Sāy.'s com. above.

अमर्त्या—*Vide* notes on SV. I. 12 ; अमृतम्—I. 45. The term—'immortal' is commonly applied to Agni—Ṛ̣V. viii. 60. I.

हव्यम् इन्धते—'make their offerings blaze' i.e., offer the oblation to the fire to be consumed by it. As to इन्धते *vide* notes on SV. I. 46.

———

आत्रेया वसूयव ऋषयः। द्वे सामनी यद्वाहिष्ठीये यन्मंहिष्ठीये वाग्निर्ऋषिः। अनुष्टप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे, विशेषतोऽश्वमेधयागस्य पौष्णेष्टौ स्विष्टकृत्प्रकरणे याज्यारूपेण विनियोगः।

१र २र ३ २ ३ १ २ ३ १ २
**यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो।**
१ २ ३ २ ३ २उ ३ १ २
**महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥६॥८६॥**

यत्। वाहिष्ठम्। तत्। अग्नये। बृहत्। अर्च। विभावसो इति विभाऽवसो। महिषीऽइव। त्वत्। रयिः। त्वत्। वाजाः। उत्। ईरते ॥ ६ ॥

भाष्यसारः। **वाहिष्ठं—वोढृतमम् अत्यन्तमिष्टं प्रापयितृ इत्यर्थः, यत्—स्तोत्रम् तत् अग्नये अग्निमुद्दिश्य क्रियते, हे विभावसो—प्रभा-धन स्वप्रकाश इत्यर्थः, बृहत्—महत् धनमन्नं च प्रभूतम्, अर्च—अस्मभ्यं देहि। यतः त्वत्—तव सकाशात् महिषी—महती, रयिः—धनम्, त्वत्—त्वत्तः, वाजाः—अन्नानि बलानि च, उदीरते—उद्गच्छन्ति, प्रादुर्भवन्ति ॥ ६ ॥**

That hymn, which best conveys blessings (to us), is (sung) to Agni ; O one resplendent with (thy own) light, award us ample wealth and food, (inasmuch as) great wealth or food (or strength) emanate from thee.—6.

**सा० भा०।** 'वाहिष्ठं' वोढृतमं 'यत्' स्तोत्रं 'तत् अग्नये' क्रियते। अतः हे 'विभावसो'! प्रभाधन अग्ने! 'बृहत्' बह्वन्नं धनं च 'अर्च' अस्मभ्यं प्रयच्छ। कथमस्य अन्नधनप्रदातृत्वमित्यपेक्षायामाह—यतः 'त्वत्' त्वत्तः सकाशात् 'महिषी' महती 'रयिः' धनम् 'उदीरते' उद्गच्छन्ति। वाजा अन्नानि च त्वत्त उदीरते उद्गच्छन्ति। 'इव' इति पाद-पूरणः ॥ ६ ॥

६। ऋ० सं० ५ म० २५ सू० ७ ऋ०।

वाहिष्ठम्—'which conveys best our veneration'—*Wils*; 'the most effectual means of obtaining our desires'—*Mahidhara*. rt. वह् ( प्रापणे *to convey*, 1.u. ) with aff. तृच्—इष्ठन्—Spv. dg. तृच् is dropped with इष्ठन् following, by 'तुरिष्ठेमेयस्सु' Pāṇ. vi. 4. 154. cf. 'वाहिष्ठो वां हवानां स्तोमो दूत:...' R̥V.

अर्च—rt. अर्च ( पूजायाम्, *to worship*, *to honour* 1. p. ). Imp. 2. sg. here—honour or favour us with the award of wealth.

विभावसो—*voc.*—विभा (resplendence) वसु धनं यस्य 'rich in radiant light'—*Grfth.*

महिषी = महती, great; adj. quals रयि:, mg. is—great or vast riches; as to महिष mg. *great*, *vide* notes on 'महिष:' SV. 1. 71. Grfth. translates 'महिषी इव' like the chief consort of a king. This is simply absurd.

त्वत्—युष्मत्, भवत्त:—from thee; abl. sg.

वाजा:—अन्नानि बलानि वा। उदीरते—proceed.

Mahidhara (Yajur-Veda, 26. 12) differs from Sāyaṇa in his interpretation of this verse; he renders—'Sing to Agni, that Br̥hat-Sāman (a hymn of the Sāma-Veda), which is the most effectual means of obtaining our desires; Sāyaṇa observes that *iva* in the second line, is a pleonasm (*iveti pūraṇaḥ*): Mahīdhara understands it as denoting a comparison and explains—'as the newly married bride proceeds from her home to her husband (प्रथमपरिणीता स्त्री गृहात् पतिं प्रति उद्गच्छति), so riches and food proceed to the worshipper, Agni, from thee'. On this Prof. Wils. comments—'the necessity of supplying a whole sentence is rather against this rendering and महिषी as an adj. is of not unfrequent occurrence'. We also cherish this view.

---

गोपवनः सप्तवध्रिर्वा ऋषिः। विशोविशीयम् ऐडं वा शार्गं साम, अग्निऋ षिः, अनुष्टुप्-छन्दः। अग्निर्देवता।

३ १ २ ३ १ २ ३ १ २ ३ २
विशो विशो वो अतिथिं वाजयन्तः पुरुप्रियम्।
३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥७॥८७॥

विशःऽविशः। वः। अतिथिम्। वाजऽयन्तः। पुरुऽप्रियम्। अग्निम्। वः। दुर्यम्। वचः। स्तुषे। शूषस्य। मन्मऽभिः॥ ७॥

भाष्यसार:। हे ऋत्विजो यजमानाश्च, वः—यूयम्, वाजयन्तः—अन्नमिच्छन्तः, विशः विशः—सर्वासां प्रजानाम्, पुरुप्रियं—बहुप्रियम् अतिथिं, दुर्यं—गृहहितम्, अग्निं स्तुत्या परिचरत। अहमपि शूषस्य सुखस्य लाभाय, मन्मभिः—मननीयैः मन्त्ररूपैः वचः—वचोभि स्तोत्ररूपैः, वः—युष्मदर्थम्, तमग्निं स्तुषे—स्तौमि॥ ७॥

(O priests and sacrificers), let you, desiring food, pray to Agni, the guest of all people, the most beloved and the benevolent friend of the house; I, too, applaud him (Agni) with hearty hymns to win bliss for you.—7.

**सा०-भा०।** हे ऋत्विग्यजमानाः! 'वः' यूयं 'वाजयन्तः' अन्नमिच्छन्तः 'विशो विशः' सर्वस्या प्रजायाः 'पुरु-प्रियं' बहुप्रियम् 'अतिथिं' पूज्यम् 'अग्निं' स्तुत्या परिचरतेति शेषः। अहं च 'वः' युष्मदर्थं 'दुर्यं' गृह-हितम् अग्निं 'वचः' 'स्तुषे' स्तौमि 'शूषस्य' सुखस्य लाभाय। कैः साधनैः? 'मन्मभिः' मननीयैः स्तोत्रैः॥ ७॥

७। ऋ० सं० ८ म० ७४ सू० १ऋ०। उ० आर्चि० ७, २, १२, १।

विशो विशः—of all men. *Vide* notes on विशि विशि SV. 1. 15.

वः—यूयम्, an instance of विभक्ति-व्यत्यय—an anomalous use of विभक्ति termination common in the Vedas, *vide* SV. 1. 21.

अतिथिम्—*Vide* notes on SV. 1. 5; 1. 85.

वाजयन्तः—वाजः is अन्नम् (1. 81, 16)—क्यच्, in the sense of desiring to have food.

दुर्यम्—placed in the house, 'Durya, mfn.—belonging to the door (दुर्) of house', M. W's S. E. Dict.; m. pl.—a residence (cf. Lat. *fores*). In Maxmüller's Ed. of ṚV. the com. has 'दुर्यं—गुहाहितम्' which seems to be a misprint, it should be 'गृहाहितम्'—placed in the house (benevolent to the house, friend of dwellings, गृहे or गृहाय हितम्) cf. ṚV. vii. 1. 11. the word *Duryam* occurs also in ṚV. ii. 38. 5, where Sāy. explains as 'गृह्यम्—गृहे भवम्' *domestic.*

वचः—वचोभिः—the Instr. case term. is dropped by 'सुपां सुलुक्'—Pāṇ. vii. 1. 39.

स्तुषे—*Vide* notes on SV. 1. 5.

शूषस्य—सुखस्य, for the attainment of happiness—Ngh. 3. 6.

मन्मभिः—मननीयैः स्तोत्रैः, with agreeable prayers; fr. rt. मद् (स्तुतौ, *to praise* 1. Ā.)—aff. मनिन्। For मन्म in the sense of prayer cf. 'प्र तद्वोचेयम्······य इयवान् मन्म रेजति रक्षोहा मन्म रेजति'—he (Indu) stirs prayer······ṚV. i. 129. 6; again 'तमू षु समना गिरा पितॄणां च मन्मभिः'—I praise him (Varuṇa) with noble speech, hymns of the manes—ṚV. vii. 41. 2.

---

आत्रेयः पुरुऋर्षिः। द्वे सामनी कानीनिके प्रजापतिश्चर्षिरत्रिर्वा (क)। अनुष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे विनियोगः।

३ २उ ३ २ ३ १र २र ३ २ ३ १ २
बृहद्वयो हि भानवेऽर्चा देवायाग्नये।
३ १र २ २र ३ १ २ ३ २ ३ २
यं मित्रं न प्रशस्तये मर्त्तासो दधिरे पुरः।८।८८।

(क) 'प्रजापतेश्च कानीनिके द्वे अत्रेर्वा—' आ० ब्रा०।

बृहत् । वयः । हि । भानवे । अर्च । देवाय । अग्नये । यम् । मित्रम् । न । प्रशस्तये । मर्त्तासः । दधिरे । पुरः ॥ ८ ॥

भाष्यसारः । **हे स्तोतः, मर्त्तासः—मनुष्याः, यम् अग्निं मित्रं न—सखायमिव प्रशस्तये—प्रकृष्टस्तुत्यै, पुरः दधिरे—पुरस्कुर्वन्ति पुरः पूर्वस्यां दिशि आहवनीय-देशे आदधति प्रणयन्ति प्रतिष्ठापयन्तीत्यर्थः, तस्मै भानवे—दीप्तिमते, देवाय अग्नये बृहत्—महत्, वयः—अन्नं हवीरूपम्, अर्च—प्रयच्छ ॥ ८ ॥**

Offer abundant oblation to the radiant god Agni, whom, as a friend, mortals place in front, for (presenting) praise.—8.

**सा०-भा० ।** **यस्मै 'भानवे' दीप्तिमते 'अग्नये' 'बृहत्' महत् 'वयः' हवीरूपमन्नं दीयते 'हि'। अतस्त्वमपि 'देवाय' द्योतमानायाग्नये वयः 'अर्च' प्रयच्छ। 'मर्तासः' मनुष्याः 'यम्' अग्निं 'मित्रं न' सखायमिव 'प्रशस्तये' प्रकृष्ट-स्तुतये अस्मदर्थं देवानग्निः स्तौत्विति 'पुरः' 'दधिरे' पुरस्कुर्वन्ति ॥ ८ ॥**

**८। ऋ० सं० ५ म० १६ सू० १ ऋ०।** ṚV. reads **प्रशस्तिभिः** (by praises) instead of **प्रशस्तये** (for praise)—the above SV. text.

वयः—Sāy. interprets बृहत् वयः as abundant sacrificial food. Grfth. has taken वयः in the sense of 'age' i. e. life. But this meaning is simply absurd and not at all appropriate to the text.

अर्चा—for अर्च ; rt. अर्च् ( पूजायाम्, *to worship*, I. P.) Imp. 2. sg ; the last vowel ( अ ) is lengthened by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135. 'Sing praise to Agni'—*Grfth.* This verb being transitive cannot be construed as 'अग्नये अर्च' to convey the sense—'Sing praise to Agni' but acc. to Sāy. the construction should be 'भानवे अग्नये बृहत् वयः अर्च'—offer abundant sacrificial food to brilliant Agni. Although अर्च् has the orig. sense—'*to worship*', the secondary sense 'to give'—'to offer' can be easily deduced from it.

मित्रं न—nothing is more open to criticism than Grfth's interpretation 'Like Mitra (the sun).' and his notes thereon. The West. scholars can not be expected to know clearly the meanings of the Skt. words varying in genders. मित्रम् (in neu.) is a friend, मित्रः (in masc.)—the sun. So this sort of explanation on their part is not to be wondered at. न—इव *vide* SV. 1. 5 ; 1. 17.

पुरः दधिरे—have placed in foremost place ; लिट् (perfect) in दधिरे stands for लट् (pr.)—by 'छन्दसि लुङ्लङ्लिटः'. Pāṇ. iii. 4.6. See Whitney's Gram. para 823. 'The 'Perfect' in the Vedas has frequently to be rendered by the Present'—Peterson.

मर्त्तासः—मर्त्ताः, mortals, men ; Pāṇ. iii. 1. 50., असुक् in nom. pl.

आत्रेयः पुरुऋषिः। श्रौतर्वणम् साम(क)। अनुष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

१ २ ३ १ २ ३ १ २ ३ १र २र
**अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम्।**
१ २ ३ २ ३ २ ३ १ २ ३ १ २
**यः स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते ॥९॥८९॥**

अगन्म। वृत्रहन्ऽतमम्। ज्येष्ठम्। अग्निम्। आनवम्। यः। स्म। श्रुतर्वन्। आर्क्षे। बृहत्ऽअनीकः। इध्यते ॥ ९ ॥

भाष्यसारः। **वृत्रहन्तमं--पाप-रोगादिबाधक-शत्रूणामतिशयेन हन्तारम्, ज्येष्ठं—प्रशंसनीयम्, आनवम्—अनवो मनुष्यास्तेषां हितकरम्, अग्निम् अगन्म—वयं प्राप्नुमः, उपगच्छाम इत्यर्थः। योऽग्निः आर्क्षे—ऋक्षपुत्रे, श्रुतर्वन्—तन्नाम्नि राजनि, तन्निमित्त-मित्यर्थः, बृहदनीकः—बृहत् महान् अनीकः ज्वालासमूहरूपः सन् ज्वालामालोपेतः, इध्यते स्म—प्रवृद्धोऽभवत् ॥ ९ ॥**

We have come to greatest Agni, benevolent to men, the mightiest remover of obstructing evils, who, for *Śrutarvan* the son of *Ṛkṣa*, was kindled with lofty array of flames.—9.

**सा०-भा०।** 'वृत्रहन्तमं' पापानामतिशयेन हन्तारं 'ज्येष्ठं' प्रशस्यम् 'आनवं' मनुष्यसम्बन्धिनम्, तेषां हित-कारिणम् 'अग्निम्' 'अगन्म' गन्तारो 'वयं' पूजार्थं बहु-वचनम्। अग्निः 'यः' 'आर्क्षे' ऋक्ष-पुत्रे 'श्रुतर्वन्' नाम्नि राजनि तन्निमित्तं 'बृहत्' महान् 'अनीकः' ज्वालासमूहः सन् 'इध्यते स्म' प्रवृद्धोऽभवत्। 'लट् स्मे' (पा० ३,२,११८) इति भूते लट्। तमग्निमागता इति समन्वयः। एवं श्रुतर्वाणं भिक्षणायागतो गोपवनः अग्निं स्तौति ॥९॥

९। ऋ० सं० ८ म० ७४ सू० ४ ऋ०। ṚV reads(1) **'आगन्म'** instead of **'अगन्म'** meaning almost the same; also (2) **यस्य श्रुतर्वा बृहन्नार्क्षो अनीक एधते** —in whose (Agni's) presence, Śrutarvan, the mighty son of Ṛkṣa, rises—i.e. attains exalted position) instead of **यः स्म** etc., the SV. text above.

अगन्म—गम्—aor. (लुङ्), च्लेर्लुक् by मन्त्रे घस० Pāṇ. ii. 4. 80. म् of गम् is changed to न by मो नो धातोः—Pāṇ. viii. 2.64.

वृत्रहन्तम्—अतिशयेन वृत्राणां हन्ता—the greatest destroyer of the obstructing

(क) श्रौतर्वणाद्य—आ० ब्रा०।

obstacles, 'the mightiest destroyer of the wicked'—*Wils.* वृत्र + हन् + क्विप् 'ब्रह्मभ्रूणवृत्रेषु क्विप्' Pāṇ. iii. 2.16. तमप् is added in spv. dg. For वृत्राणि *vide* notes on SV. 1. 4.

मानवम्—fr. rt. अन् ( प्राणने, *to live*. 2. p. ) with aff. उ by 'अणश्च'—uṇ. i. 8. अनवः मनुष्याः—Ngh. 2. 3. तस्मै हितम्—benevolent to mankind. 'The benefactor of men'.—*Wils.*

आर्क्षे श्रुतर्वन्—*loc.*—Śrutarvan was an ancient mighty king ; he was the son of 'Ṛkṣa' ; his prosperity was due to Agni's favour. The loc. term. in the word श्रुतर्वन् is dropped by सुपां सुलुक् Pāṇ. vii. 1. 39 ; the real mg. should be—'who (Agni) with his array or host of rays is kindled in *Srutarvan*, the son of *Ṛkṣa*'.

आर्क्षे—in the sense of ऋक्षस्य अपत्यं पुमान्, Tad. affix. अण् is added. loc. sg. adj. quals.—Śrutarvan (*loc*).

बृहदनीकम्—अनीकम् means multitude, here multitude of flames or rays cf. 'चित्रं देवानामुदगादनीकम्'—ṚV. i.115.1. 'तेजःसमूहरूपम्'—Sāy's com. on this ṚV. verse. West. scholars translate अनीकम् as face. For the mg. of the whole cd. *see* Eng. tran. above ; 'in lofty presence'—*Grfth* ; he has, probably, taken the word in loc. case ( बृहदनीके ) after ṚV. reading.

---

**वामदेव ऋषिः कश्यपो वा मारीचो मनुर्वा वैवस्वत उभौ वा। एकं साम स्वयोनिनामकं कश्यपश्चर्षिः, इन्द्रियनामकं साम इन्द्रो वा ऋषिः, यद्वा प्रियनामकं साम इन्द्र ऋषिः(क)। अनुष्टुप्छन्दः। अग्निर्देवता। अग्न्याधानप्रकरणेऽग्निस्तुतौ विनियोगः।**

३ १र २र३ १ २ ३ २३१ २ ३१ २
**जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः।**
३ २उ ३ १ २ ३ २ ३ २ ३ १र २र ३ २
**पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः ॥१०॥९०॥**

जातः। परेण। धर्मणा। यत्। सवृत्ऽभिः। सह। आऽभुवः। पिता। यत्। कश्यपस्य। अग्निः। श्रद्धा। माता। मनुः। कविः॥ १०॥

भाष्यसारः। **हे अग्ने! त्वं परेण धर्मणा--उत्तमेन कर्मणा यज्ञेन सह, जातः प्रादुर्भूतोऽसि। यत् यः त्वं सवृद्भिः—सवृतः यज्ञे सहवर्त्तिनः ऋत्विजः तैः सह, आ भुवः—यज्ञे वर्त्तसे। यत् अग्निः—यस्य अग्नेः ( विभक्तिव्यत्ययः )। कश्यपस्य—कश्यपः ( विभक्तिव्यत्ययः ) पिता, श्रद्धा—आस्तिक्यबुद्धिः माता, तथा मनुः कविः—स्तोता। सोऽग्निरभीष्टं प्रयच्छतु—इत्याशयः ॥ १० ॥**

(क) 'कश्यपस्य च 'स्वयोनि' इन्द्रस्य वा 'इन्द्रियम', इन्द्रस्य वा प्रियम्'—आ० ब्रा०।

Born with supreme ceremony (sacrifice), thou, Agni, who remainest ever in company with thy associates (the priests), whose father is Kaśyapa, mother is Faith, and eulogizing poet is Manu, (mayest grant us the desires).—10.

**सा०-भा० ।** हे अग्ने ! त्वं 'परेण' उत्कृष्टेन 'धर्मणा' आधानादिकर्मणा 'जातः' प्रादुर्भूतोऽसि । 'यत्' यः 'सवृद्भिः' यज्ञे सह वर्तन्ते इति सवृतः ऋत्विजः, तैः सह 'अभुवः' भूमि-सम्बन्धि-यज्ञे वर्तसे कश्यपस्याग्निरित्येतयोः परस्परं विभक्ति-व्यत्ययः । 'यत्' यस्याग्नेः 'कश्यपः' 'पिता', 'श्रद्धा' देवी 'माता' च, 'मनुः' 'कविः' क्रान्त-कर्मा मेधावी वा "मनुर्वैवस्वतः स्तोता आसीत् सोऽग्निः यजमानायाभीष्टं फलं प्रयच्छतु" अनेन सूचितमुपाख्यानं ब्राह्मणान्तरे द्रष्टव्यम् ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमस्याध्यायस्य नवमः खण्डः ।
इति प्रथमप्रपाठकस्य द्वितीयार्द्धे चतुर्थी दशतिः ।

१० । ऋगियम् ऋग्वेद-संहितायां नास्ति । not found in the Ṛg-Veda.

परेण धर्मणा—with noblest or mighty action, rfs to sacrifice.—Agni is said to have been produced with the commencement of sacrifice *vide* note on Manu (below) : so he is here called 'जातः परेण धर्मणा'—born with the noble action—i.e., sacrifice ; this idea is obtained by another epithet of अग्नि, e.g., 'ऋतजातः' SV. I. 54.

सहद्भिः—सह + वृत् + क्विप्—rfs. to the priests, his (Agni's) associates—Sāy. 'Those who grow with him'—rfs. to 'the flames of fire'—*Grfth.*

सहाभुवः—may be disjoined either as (1) सह – आभुवः or (2) सह – अभुवः । (1) for आभुवः—*vide* I. 53.

कश्यपस्य *gen.*—stands for कश्यपः (*nom.*)—Sāy. ; *gen.* for *nom.* by व्यत्यय or Vedic anomaly. Similarly in 'अग्निः' *nom.* is used for *gen.*—अग्निः = अग्नेः । 'पिता यत् कश्यपस्य अग्निः' = यस्य अग्नेः पिता कश्यपः । 'Father of Kaśyapa'—West. scholars *Stevenson*, *Grfth* etc ; this is incongruous and untenable, inasmuch as nowhere in our mythology, Kaśyapa appears to be the son of Agni.

कश्यपः—Kaśyapa is identical with Prajāpati (the creator). Macdnll's Ved. Myth. p. 151. In the Purāṇas Kaśyapa is represented as the father of all gods and demons. In order to arrive at this sense available from the myths, Sāy. has to interchange the case terminations of the words—कश्यपस्य as कश्यपः and अग्निः as अग्नेः

---

अथ प्रथमप्रपाठकस्य द्वितीयार्द्धे पञ्चमी दशतिः ।

तापसनाम्ना प्रसिद्धोऽग्निर्ऋषिः । 'बार्हस्पत्यं' साम बृहस्पतिर्ऋषिः । अनुष्टुप्छन्दः । विश्वेदेवा देवताः । महाव्रतयागेऽग्निमारुतशस्त्ररूपेण विनियोगः ।

२ ३ १ २ ३ १ २ ३ २ ३ १ २
सोमं राजानं वरुणमग्निमन्वारभामहे ।
३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २
आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥१॥९१॥

सोमम् । राजानम् । वरुणम् । अग्निम् । अनु । आऽरभामहे । आदित्यम् । विष्णुम् । सूर्यम् । ब्रह्माणम् । च । बृहस्पतिम् ॥ १ ॥

भाष्यसारः । राजानं राजमानं शोभमानम् ईश्वरं वा सोमं वरुणम् अग्निम् आदित्यं विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिं च अन्वारभामहे—स्तुतिभिराह्वयामः ॥१॥

We invoke, (for our protection), with songs of praise, king (or shining) Soma, Varuṇa, Agni, Viṣṇu the son of Aditi, Sūrya and Bṛhaspati, the Brāhmaṇa priest.—1.

**सा०-भा० ।** 'राजानं' राजमानमीश्वरं वा 'सोमं' 'वरुणं' च 'अग्निं' च 'गीर्भिः' स्तुतिभिः 'अन्वारभामहे' रक्षणार्थम् आह्वयामहे । तथा 'आदित्यम्' अदितेः पुत्रं 'विष्णुं' च 'सूर्यं' च 'ब्रह्माणं च बृहस्पतिं' च अन्वारभामहे ॥ १ ॥

१ । ऋ० सं० १० म० १४१ सू० ३ ऋ० । ṚV. has the reading 'अवसेऽग्निं गीर्भिर्हवामहे आदित्यान्' instead of 'वरुणमग्निमन्वारभामहे आदित्यम्'—the SV. text above.

सोमं राजानम्—Etymologically सोम means 'pressed juice', being derived from the root सु—'to press',—it is the same as the Avestan 'Haoma'—drvd from the rt. *hu* of the same sense. Soma sacrifice forming the main feature of the ritual of the ṚV, the god Soma is naturally one of the most important deities of that Veda. Soma comes third in order of importance among the Vedic gods. Soma is often called king,—e. g., king Soma, when pressed, is *amṛta* (VS. 19. 72). HILLEBRANDT holds 'Soma' to be the lord of all plants and herbs and asserts the identification of Soma and the Moon. In ṚV. ix. 114. 2. Soma is described as the lord of all plants. He receives the epithet *vanaspati* 'the lord of forests'—(ix. 12. 7). Besides being the lord of plants, Soma is often called a king (HILLEBRANDT. Ved. Myth. (317—8) the sovereign *Soma* is a king of rivers (ix. 89. 2),—a king of the

whole world (ix. 97. 50), a king or father of the gods (ix. 86. 10 ;—87. 2 ; 109. 4), the sovereign of both gods and mortals (ix. 97. 24),—a king of Brāhmaṇas (VS. 9. 40 ; TS. i. 8. 10 ; MS. 2. 69). For further details of Soma's other features *vide* Mcdnll's VED. Myth. Para 37 ; HILLEBRANDT'S Vedische Mythologie.

**वरुणम्**—for his characteristic features, see Mcdnll's—Ved. Myth. Para 12. **विष्णुम्**—do do Para 17. **सूर्यम्**—do do Para 14. **बृहस्पतिम्**—do do Para 36.

ब्रह्माणम्—बृहस्पति is the *Brāhmaṇa* priest of the gods.—*Olden-Berg. Die Religion des veda*, P. 382.

आदित्यम्—In the corresponding ṚV. stanza—the reading is आदित्यान् ; the Ādityas are generally eight in number (ṚV. x. 72. 8 ; AV. 8. 9. 21. TB. 1. 1. 9. 1. ) forming a group, namely 1. Mitra, 2. Varuṇa, 3. Aryaman, 4. Aṃśa, 5. Bhaga, 6. Dhātṛ, 7. Indra, 8. Vivasvat. In the Post-Vedic literature, there are 12 sun-gods, evidently connected with the 12 months, —Viṣṇu being one of them and the greatest, Mbh. 1. 121. chap. Viṣṇupurāṇa , 1. 15. 90. ŚB also speaks of 12 Ādityas (6. 1. 2. 8 ; 11. 6. 3. 8). Here in the above SV. text आदित्यम् being in sg. is taken in its etymological sense—son of Aditi and rfs. to ( acc. to Sāyaṇa ) Viṣṇu ; but Viṣṇu being not mentioned in the above Vedic group of Eight, it is more appropriate to take it to mean Varuṇa found in the list, although Sāyaṇa has quoted the list ( of Eight ) in his com. on ṚV. ii. 27. 1. ( in the orig. text, however, six are enumerated) and on x. 72. 8. Sāy.'s list differs from the above in one point only, in his list Āditya (the sun) being mentioned instead of Indra. Sāy. seemingly cited from Adh. Br. and TS. vi. 5. 6. 1, but he probably bore in mind the Post-Vedic list of 12, of whom Viṣṇu is the greatest.

---

**वामदेव ऋषिः। 'आरुढवत्' साम आङ्गिरसम् अथवा यामं साम। अनुष्टुप्छन्दः। अङ्गिरसो देवताः। प्रैषरूपेण विनियोगः।**

३ २ ३ २ ३ १ २ ३ २ ३ १र २र
**इत एत उदारुहन् दिवः पृष्ठान्यारुहन्।**
२ ३ २ ३ १ २ ३ १र २र
**प्र भूर्जयो यथा पथो द्यामङ्गिरसो ययुः ॥२॥६२॥**

इतः। एते। उत्। आऽरुहन्। दिवः। पृष्ठानि। आऽरुहन्। प्र। भूर्जयः। यथा। पथः। द्याम्। अङ्गिरसः। ययुः॥ २ ॥

भाष्यसारः। **एते भूर्जयः हविषां पक्तारः, अङ्गिरसः यथा पथः—मार्गेण यथा जनाः गच्छन्ति, तथा इत पृथिव्याः सकाशात् उदारुहन् ऊर्ध्वमागच्छन् दिवः पृष्ठानि आकाशस्य**

पृष्ठदेशान् आरोहन्ति। ततः द्यां—द्युलोकं स्वर्गम्, प्र ययुः—प्रयान्ति। केषाञ्चिन्मते यथा भूर्जयः भुवो जेतारः पथः प्रकृष्टमार्गान् उद्गच्छन्ति तद्वत् ॥ २ ॥

Hence (from this earth) these Angirasas, the preparers of oblations, like the people pursuing an excellent path, soar up and ascend to the back of the sky and reach heaven.—2.

**सा०-भा०।** एते अङ्गिरसः 'यथा' 'उत्' मार्गेणैव 'द्यां' दिवं 'प्र ययुः' प्रापुः। कीदृशाः? 'भूर्जयः' भृज्जतिः पाक-कर्मा हविषां पक्तारः। तत्र दृष्टान्तः 'पथा' मार्गेण जना ग्रामादीन् गच्छन्ति, तथा इतः भूमेः सकाशात् उदारुहन्' उद्गच्छन्। आगत्य च 'दिवः' स्वर्गस्य 'पृष्ठानि' स्थानानि 'आरुहन्' प्राक्रमन्ति ॥ २ ॥

२। इयम् ऋक् ऋग्वेदे नास्ति। This stanza is not found in the Rigveda.

भूर्जयः—acc. to Sāy. fr. rt. भ्रस्ज्(पाके, *to cook*, 6.u)—the cookers or preparers of oblations; some have interpreted it as 'conquerors of earth' भुवो जेतारः।

अङ्गिरसः—*Vide* notes on SV. 1. 29; more frequently used in plural. The Angirasas are the sons of heaven, one whole hymn (Ṛ̣V. x. 62) is devoted to the praise of the Angirasas as a group. They are once mentioned as fathers or progenitors (pitṛs) with the Atharvans and Bhṛgus (ṚV. x. 14. 6). They are Brāhmaṇa priests (ṚV. vii. 42. 1). They found Agni hidden in the wood (ṚV. v. 11. 6) and first organised sacrifice (Ṛv. x. 67 2) It is by sacrifice that they obtained immortality as well as the friendship of Indra (ṚV. x. 62. 1).

---

वामदेव ऋषिः (कश्यपोऽसितो देवलो वा ऋषिरिति सायणः)। द्वे सामनी 'आमिते' असित ऋषिः(क)। अनुष्टुप्छन्दः। अग्निर्देवता। प्रैषरूपेण विनियोगः।

३ १ २ ३२ ३ १ २ ३ १ २
राये अग्ने महे त्वा दानाय समिधीमहि।
१ २३ २ ३१ २३ १ २ ३ १ २ ३२
ईडिष्वा हि महे वृषन् द्यावा होत्राय पृथिवी ॥३॥९३॥

राये। अग्ने। महे। त्वा। दानाय। सम्ऽइधीमहि। ईडिष्व। हि। महे। वृषन्। द्यावा। होत्राय। पृथिवी ॥ ३ ॥

(क) 'आसिते द्वे'—आ० ब्रा०।

भाष्यसारः । **हे अग्ने, त्वा—त्वाम्, महे—महते, राये—धनस्य दानाय, समिधीमहि—सम्यक् प्रदीपयामः । हे वृषन्—कामाभिवर्षक अग्ने, महे—महते, होत्राय—अग्निहोत्र-यागाय, द्यावापृथिवी—दिवं पृथिवीञ्च, ईडिष्व—स्तुहि ॥ ३ ॥**

For (the acquisition of) immense wealth, Agni, we inflame thee. O showerer (of blessings) i. e., fulfiller of desires, for the great sacrifice, pray Heaven and Earth (to become propitious to us or to protect us).—3.

**सा०-भा० । हे 'अग्ने !' 'त्वा' त्वां 'महे' महतः 'राये' धनस्य 'दानाय' दानार्थं 'समिधीमहि' वयं सम्यग् दीपयामहे । 'वृषन्' वर्षितः । अग्नये 'महते' 'होत्राय' अग्निहोत्रार्थं 'द्यावा' दिवं 'पृथिवीं' च 'ईडिष्व' स्तुहि ॥ ३ ॥**

**३ । इयम् ऋक् ऋग्वेदे नास्ति ।** This stanza is not found in the Ṛg-Veda.

राये—रायस्य to be connected with दानाय ; the 6th case termination is changed to शे by सुपां सुलुक् Pāṇ. vii. 1.39.

महे—dat. sg. महते, तलोपश्छान्दसः ।

समिधीमहि—सम्—rt. इन्ध् (to kindle 7. Ā.) Imp ( लोट् ) 1. pl. ( ईमहि )—let us kindle thee.

ईडिष्वा—rt. ईड् ( स्तुतौ, *to praise*, 2. Ā. ) in Saṃhitā text the last vowel is lengthened by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137.

वृषन्—*voc.*—fr. rt. वृष् ( सेचने, *to rain* ), by this word Sāyaṇa always means—'showerer of blessings, i. e., fulfiller of desires. वृषा वर्षिता Nir. xi 47. The West. scholars almost always interpret the word as—'bull, steer', no matter whether it suits the context or not.

द्यावा—होत्राय—पृथिवी—In the Dv. cd. दिव् takes optionally the form द्यावा by 'दिवसश्च पृथिव्याम्' Pāṇ. vi. 3. 30. The cd. forms are,therefore,—(1) दिवस्पृथिव्यौ, (2) द्यावा-पृथिव्यौ ; here the form is द्यावापृथिवी instead of—पृथिव्यौ, the accus. dual 'औ' taking the form of the last vowel of the preceding noun, as दुष्टुती for दुष्टुत्या—ṚV. ii. 33. 4. by—'सुपां सुलुक् पूर्व्वसवर्ण०' Pāṇ. vii. 1. 39. The word 'होत्राय' intervenes between द्यावा and पृथिवी—two parts of the cd. This is sanctioned by usage in the Vedas (छन्दसि दृष्टानुविधिः)—as 'द्यावा चिदस्मै पृथिवी नमेते' ṚV. ii. 12.13 ; 'द्यावा रक्षतं पृथिवी नो अभ्वात्' ।

गृत्समद ऋषिः (भार्गहुतिः सोमो वा ऋषिरिति सायणः)। 'त्वाष्ट्रि' साम। अनुष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे आग्नेयक्रतौ च आभिप्लविकद्वितीयाहे चतुर्विंशाहे वा आज्यशस्त्ररूपेण विनियोगः।

३ २ ३ २ ३ २ ३ २ ३ २उ ३ २ ३ २
दधन्वे वा यदीमनु वोचद्ब्रह्मेति वेरु तत्।
२ ३ १ २ ३ १ २ ३ २ ३ १ २
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥४॥९४॥

दधन्वे। वा। यत्। ईम्। अनुवोचत्। ब्रह्म। इति। वेः। ऊम् इति। तत्। परि। विश्वानि। काव्या। नेमिः। चक्रम्ऽइव। अभुवत् ॥ ४ ॥

भाष्यसारः। वा—अथवा, ईम्—एनम्, यज्ञम् अनु—उद्दिश्य यत् हविरादिकं दधन्वे धारयति अध्वर्य्वादिर्ऋत्विक्। यत् ब्रह्म स्तोत्रमिति वा अनुवोचत्—अनुवक्ति होत्रादिर्ऋत्विक्, अग्निः तत् सर्वं वेः—जानाति अङ्गीकरोति। अयम् अग्निः विश्वानि काव्या—काव्यानि ऋत्विक्कर्माणि, परि अभुवत्—व्याप्नोति सर्वतः स्वीकरोति, नेमिश्चक्रमिव यथा नेमिश्चक्रस्य बहिर्वेष्टनं चक्रं सर्वथा व्याप्नोति तद्वत् ॥ ४ ॥

Or, whatever (oblations) the priest ('Hota') offers in connection with this sacrifice, and whatever prayers the priest ('Adhvaryu') utters, (in short) all the activities of the priests, he (Agni) comprehends fully as the rim entirely embraces the wheel.—4.

**सा० भा०।** 'वा' अथवा 'ईम्' एनं यज्ञम् 'अनु' लक्षीकृत्य 'यत्' हविरादिकं 'दधन्वे' धारयत्यध्वर्य्वादिरूपः। यद् 'ब्रह्म' स्तोत्रम् 'अनुवोचत्' अनुवक्ति होत्रादिरूपः। अत्र वा अन्वित्येतद् योज्यम्। 'तत्' सर्वं 'वेरु' वेरेव कामयते जानाति वा स्वयमनुष्ठातुम्। अयमग्निः 'विश्वानि' सर्वाणि 'काव्या' काव्यानि 'कवयः' मेधाविन ऋत्विजः तत् सम्बन्धीनि कर्माणि 'पर्यभुवत्' परिभवति स्वायत्तानि करोति व्याप्नोतीत्यर्थः। व्याप्तौ दृष्टान्तः 'नेमिः' बहिर्वेष्टनवलयः 'चक्रमिव' रथाङ्गं यथा कार्त्स्न्येन व्याप्नोति तद्वत् ॥ ४ ॥

४। ऋ० सं० २ म० ५ सू० ३ ऋ०। ṚV. reads (1) **ब्रह्माणि** (pl.) instead of **ब्रह्म** (sg.) here; again (2) **अभवत्** instead of **अभुवत्**।

Stevenson translates the stanza thus :—'what my soul utters, Agni lays to heart; he knows where sacrificial viands are served up'—but this is not accurate, perhaps he has confounded **काव्यानि** with **कव्यानि** (the oblations

offered to the Pitṛs, as distinguished from हव्यानि—the sacrificial viands offered to the gods). Grfth. observes—'It is difficult to make sense of the first line in either Veda'.

ईम्—एनम् ; accus. of the pron. stem. i.—occurs in the Vedas only ; it is generally used as an acc. sg. of all genders—*him, her, it* ; ईम् here stands for *it* (rf. to यज्ञ)—Sāy. cf. 'उप-ईम्-असृक्षि वाजयुर्वचस्यां' desirous of gain, I have sent forth this prayer *to him* ṚV. ii. 35. 1. 'आ-ईम् आशुम्···भर'—bring *him* the swift. ṚV. i. 4. 7 ; 'य ईं चकार'—(he) who made this—i. 64. 32. Nir. 2. 8.

दधन्वे—rt. धन्व ( गतौ, *to go*, 1. P. )—लिट् (perf.) 3. sg,—although the verb is परस्मैपदी, here it is used in आत्मनेपद by Vedic anomaly ; perf. ( लिट् ) is used in the sense of pres. ( लट् ) by 'छन्दसि लुङ्लङ्लिटः' Pāṇ. iii. 4.6. Sāy. explains धारयति (holds or offers)—having for its object 'यत्' referring to हविः ( oblation). Grfth translates differently—'He runs, when (=यत्) one calls after him,—this is the prayer, he holds all knowledge in his grasp...'. The readers are to judge the accuracy of this rendering. For दधन्वे in the sense of संदधाति (bears)—cf. 'पिता यत्र दुहितुः सेकमृञ्जन्त्संशग्म्येन मनसा दधन्वे', when a father arranges a husband for his daughter, he *bears* himself with a tranquil mind—ṚV. iii. 31. 1 ; Nir. 3. 4. *see* दधन्विरे (=धन्वन्ति गच्छन्ति they approach) SV. 1. 109.

अनु-वोचत्—अन्ववोचत् ; Aor. ( लुङ् ), here the aug. अ is not placed before the verb as is generally the case with लुङ्, by 'बहुलं छन्दस्यमाङ्योगेऽपि' Pāṇ. vi. 4.75.

ब्रह्म—स्तोत्रम् , ब्रह्मन् (neu.) means वेद i.e., a Vedic hymn, an ode.

वेः—अवेः, विद् ( ज्ञाने, *to know* 2. p.) Impf. ( लङ् ) 2. sg. aug. अ is not placed before the verb.—*See* notes on अनु-वोचत् above. लङ् stands for लट् Pāṇ. iii. 4. 6.

काव्या—काव्यानि, all priestly acts ; for etymology and explanation—*see* Sāy.'s com. above ; dr. कवि—aff. ष्यञ्, by 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' Pāṇ. v. 1. 124. काव्या —for काव्यानि—शि (neu. nom. & accus. pl. term.) is dropped by 'शेश्छन्दसि बहुलम्' Pāṇ. vi. 1. 70.

अभुवत्—अभवत्—Impf. ( लङ् )।

---

**पायुर्ऋषिः। 'राक्षोघ्नं' साम अगस्त्यश्चर्षिः(क)। अनुष्टुप्छन्दः। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।**

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
**प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि।**
३ १ २ ३ २ ३ २ ३क २र ३क २र
**यातुधानस्य रक्षसो बलं न्युब्ज वीर्यम् ॥५॥९५॥**

---

(क) अगस्त्यस्य च राक्षोघ्नम्—आ० ब्रा०।

प्रति । अग्ने । हरसा । हरः । शृणाहि । विश्वतः । परि । यातु-ऽधानस्य । रक्षसः । बलम् । निऽउब्ज । वीर्यम् ॥ ५ ॥

भाष्यसारः । **हे अग्ने हरसा—स्वकीयतेजसा, यातुधानस्य—यातनाधिकरण-रूपस्य राक्षसस्य, विश्वतः परि—परितो व्याप्तम्, हरः—हरणशीलं बलम्, प्रति-शृणाहि—खण्डय, नाशय । रक्षसः—रक्षापादानभूतस्य राक्षसस्य, वीर्यं न्युब्ज—नितरां भञ्जय च ॥ ५ ॥**

O Agni, smite down, with thy power, Yātudhānas' atrocious or destructive force spread everywhere, and break down the power of Rākṣasas.—5.

**सा०-भा० । हे 'अग्ने !' त्वं 'हरसा' त्वदीयेन तेजसा क्रोधेन वा, तथा च यास्कः—'हरोहरतेर्ज्योतिर्हर उच्यते' (नि० ४, १९) इति । 'यातुधानस्य' राक्षसस्य 'हरः' हरणशीलं बलं 'विश्वतः' सर्वतः 'परि' परिगतं 'प्रति-शृणाहि' नाशयेत्यर्थः । तथा, 'रक्षसः' राक्षसस्य 'वीर्यं' च 'न्युब्ज' निःशेषेण रुज भञ्जयेत्यर्थः ॥ ५ ॥**

५ । **ऋ० सं० १० म० ८७ सू० २५ ऋ० ।** ṚV. reads (1) **शृणीहि** instead of **शृणाहि** and (2) **'बलं विरुज वीर्यम्'** instead of **'बलं न्युब्ज वीर्यम्'** ।

हरसा, हरः force, fr. rt. हृ (*to take away*) with aff. असुन् ; that which takes away (the power of others). 'हरो हरतेः' drvd. fr. rt. *hṛ*. Nir. 4. 19.

शृणाहि—rt. शॄ (हिंसायाम्, *to tear to pieces* 9. p.) ; to kill.—Ngh. 2. 9. Imp. (लोट्) 2. sg. The gram. correct form is शृणीहि by 'ईहल्यघोः' Pāṇ. vi. 4. 113, शॄ becomes शृ by 'प्वादीनां ह्रस्वः' Pāṇ. vii. 3. 80.

परि—परिगतम्, spread on every side.

यातुधानस्य—*vide* notes on यातुधानान् SV. 1. 80.

न्युब्ज—नि—rt. उब्ज (*to bend*. 1. p.). Imp. (लोट्) 2. sg.—break the strength of Rākṣasas.

---

प्रस्कण्व ऋषिः । 'मानवं' साम मनुश्चर्षिः(क) । अनुष्टुप्छन्दः । अग्निर्देवता । प्रातरनुवाके आश्विनशस्त्रे विनियोगः ।

१ २ ३ १ २ ३ २ ३१ २ ३ २ ३ २
**त्वमग्ने वसूँरिह रुद्राँआदित्याँ उत ।**
१ २ ३ २उ ३ १ ३ ३ १ २
**यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥६॥९६॥**

(क) 'मानवं च'—आ० ब्रा० ।

त्वम् । अग्ने । वसून् । इह । रुद्रान् । आदित्यान् । उत । यज । सुऽअध्वरम् । जनम् । मनुऽजातम् । घृतऽप्रुषम् ॥ ६ ॥

भाष्यसारः । हे अग्ने ! त्वम् इह कर्मणि अस्मिन् यज्ञे इत्यर्थः, वसुप्रभृतीन् देवान् यज । उत अपि च जनं—अन्यमपि देवं स्वध्वरं—शोभनयागयुक्तम्, मनुजातं—मनुना उत्पादितम्, घृत-प्रुषं—घृतस्य वृष्टिरूप-जलस्य सेक्तारम्, प्रजापतिम् इन्द्रं वा यज । यजमानपक्षे देवस्वरूपम्, स्वध्वरं—यज्ञस्य सुष्ठ सम्पादकम्, घृतप्रुषं—घृतस्य सेक्तारं हविषा यज्ञस्य अनुष्ठातारमित्यर्थः, मनुजातं—मनुष्य-यजमानम्, यज—संवर्धय ॥ ६ ॥

O Agni, offer sacrifice, here, to the Vasus, the Rudras, the Ādityas also to the person (i.e. the god, *rf. to Prajāpati or Indra*), sprung from Manu, well-served with sacrifice, sprinkling water (rain).—6.

**सा०-भा० ।** हे 'अग्ने !' त्वम् 'इह' कर्मणि वस्वादीन् 'यज'। 'उत' अपि च 'जनम्' अन्यमपि देवतारूपं प्राणिनं यज । कीदृशम् ? 'स्वध्वरं' शोभनयागयुक्तं 'मनुजातं' मनुना प्रजापतिना उत्पादितं 'घृतप्रुषम्' उदकस्य सेक्तारं यजेति सम्बन्धः ॥ ६ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने

प्रथमस्याध्यायस्य दशमः खण्डः ॥

इति प्रथमप्रपाठकस्य द्वितीयार्द्धे पञ्चमी दशतिः ॥

६ । ऋ० सं० १म० ४५ सू० १ऋ० ।

वसूँरिह, रुद्राँ आदित्यान्, आदित्याँ उत—for न् changed to रु and अनुनासिक *vide* the gram. rules 'दीर्घादटि समानपादे' Pāṇ. viii. 3. 9, 'आतोऽटि नित्यम्' viii. 3. 3.

Sāyaṇa's addl. notes on the Ṛ̣V. Stanza.

'शोभनोऽध्वरो यस्याऽसौ स्वध्वरः । 'मनुजातं' जनेरन्तर्भावित-ण्यर्थात् कर्मणि क्तः । 'घृतप्रुषम्' प्रुष स्नेहनसेचनपूरणेषु, घृतेनोदकेन प्रुष्णाति पूरयतीति घृतप्रुट्' ।

वसून्—Vasus are eight in number e.g. Dhava, Dhruva, Soma, Viṣṇu, Anila, Anala, Pratyūṣa, Prabhāsa.—acc. to Viṣṇu-Purāṇa ; the names differ variously.

रुद्रान्—Eleven Rudras are thus enumerated in the Mbh. i. 121. chap.—'मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः । अजैकपादहिर्बुध्न्यः पिनाकी च परन्तपः । दहनोऽथेश्वरश्चैव कपाली च विशाम्पतिः स्थाणुर्भगश्च भगवान् रुद्रास्तत्रावतस्थिरे ।' The names vary in other Purāṇas.

आदित्यान्—*vide* notes on आदित्यम् SV. 1. 91.

उत—*Indec.* here in the sense of समुच्चय ('and') and not विकल्प ('or') *vide* Sāy.'s note on this word on ṚV. i. 1. 2. 'उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः। उच्चावचेष्वर्थेषु निपतन्तीति निपातत्वम्।'

यज्ञा—the final vowel is lengthened by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135.

जनम्—perhaps refers to sacrificer,—sacrificer being regarded as a god. In post-Vedic time यजमान is considered as a god's phase cf. 'भूतार्कचन्द्रयज्वानो मूर्त्तयोऽष्टौ प्रकीर्त्तिताः' ; *jana*, acc. to Sāyaṇa, here, signifies a divine being in connection with divinities enumerated.

स्वध्वरम्—well-accomplished in sacrifice (in the case of sacrificer) ; well-furnished or served with sacrifice ( in case of जनम्—the god referring to Indra or Prajāpati) ; 'who knows fair sacrifices'—*Grfth.*

घृतप्रुषम्—rt. प्रुष् ( स्नेहनसेवनपूरणेषु, *here* स्नेहने *to sprinkle*, 9. p. ) aff. क्विप् sprinkling ghṛta—i.e., offering ghee to Agni in a sacrifice ; 'giver of rain' —*Stevenson* ; scattering down blessings, prosperity, good gifts—*Grfth.* The West. schs. mean by जनं—the body of gods, already referred to,—Vasus etc.

———

अथ द्वितीयप्रपाठकस्य प्रथमार्द्धे प्रथमा दशतिः।

दीर्घतमा ऋषिः। सामानि पञ्च—द्वे 'तौदे', त्रीणि 'दैर्घतमसानि' पञ्च सामानि तौदानि वा, सर्वाणि दैर्घतमसानि वा। उष्णिक्छन्दः(क)। अग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

३ १ २ ३ १ २ ३ १२ ३ १२ ३ २
पुरु त्वा दाशिवाँ वोचेऽरिरग्ने तव स्विदा।
३ १ २ ३ २उ ३ १ २
तोदस्येव शरण आ महस्य ॥१॥९७॥

पुरु। त्वा। दाशिवान्। वोचे। अरिः। अग्ने। तव। स्वित्। आ। तोदस्यऽइव। शरणे। आ। महस्य ॥ १ ॥

भाष्यसारः। हे अग्ने, दाशिवान्—दाश्वान् अभिमतं हविर्दत्तवान्, अरिः—तव भर्त्ता—सेवकोऽहं तव स्वित्—आ तवैव शरणे, महस्य—महतः, तोदस्य—शिक्षकस्य

(क) 'उष्णिग्गायत्रौ जागतश्च' पि० छ० ३।१८. यत्र गायत्रावष्टाक्षरौ पादौ, जागतश्च द्वादशाक्षरः एवं त्रिभिः पादैरुष्णिङ् नाम छन्दो भवति। Uṣṇik metre consists of two pādas of eight syllables each and the third pada of twelve syllables (8 + 8 + 12).

स्वामिनः, शरणे इव—प्रभुगृहे दास इव तवाश्रये नियतो वर्त्तमानोऽहं—त्वां पुरु वोचे—बहु स्तौमि—पुत्रं देहि, धनं देहि इत्यादिरूपं बहु प्रार्थयामि ॥ १ ॥

O Agni, I, presenting thee oblation, ever devoted like a slave in the house of the mighty master, pray thee a good deal.—1.

सा०-भा० । खण्डयोर्ह पुरुत्वेति ककुभोऽष्टौ दशोष्णिहः ।
जज्ञानः पावमानी स्यादुतस्येत्यदितेः स्तुतिः ।
शिष्टाः षोड़श चाग्नेय्यः समाख्या कृत्रिणीतिवत् ॥

हे 'अग्ने' ! 'त्वा' त्वां 'पुरु' बहु 'वोचे' यद्वा, बहु दाश्वानिति सम्बन्धः, पुत्रं देहि, वित्तं देहि इत्याद्याशासनानि ब्रवीमीत्यर्थः। किं तूष्णीम् ? नेत्याह, यतोऽहं 'दाशिवान्' दाश्वान् अभिमतं हविर्दत्तवानस्मि, अतो वोचे। इतरसाधारण्येन ब्रुवतः कथं दातव्यम् इति न मन्तव्यम्। यतः हे अग्ने ! 'तव स्विदा' 'अरिः' तवैव अर्त्ता सेवकोऽहं 'महस्य' महतः 'तोदस्य' शिक्षकस्य स्वामिनः 'शरण आ' 'इव' इत्युपमार्थे, तदा ईशगृहे यथा गर्भदासादिर्नियतो वर्त्तते तद्वदहमपि। यस्मादेवं तस्मात् अभिमतं बहु वोचे। त्वमपि तत् सर्वं देहीत्यर्थः। अत्र निरुक्तम्—"बहु दाश्वांस्त्वामभिह्वयाम्यरिरमित्र ऋच्छतेरीश्वरोऽप्यरिरेतस्मादेव यदन्यदैवत्या अग्नावाहुतयो हूयन्ते इत्येतद् दृष्ट्वैवमवक्ष्यत् 'तोदस्येव शरण आ महस्य'—तुदस्येव शरणेऽधिमहतः" —( नि० ५, ७ ) इति ॥ १ ॥

१। ऋ० सं० १म० १५० सू० १ ऋ०। This stanza is explained by Yāska in Nir. 5. 7, where दाश्वान् is used instead of दाशिवान्।

दाशिवान्—the same as दाश्वान् ; 'दाशिवम् is only found here in this passage in the whole range of the Vedic literature. fr. rt. दाश्ट दाने, to serve or honour a god by offering or presenting oblation to him.

वोचे—अवोचे, rt. ब्रू (to speak. 2. u). Aor. ( लुङ् ) Ā. 1. sg. ब्रू becomes वच् by 'ब्रुवो वचिः' Pāṇ. ii. 4. 53. वच् becomes वोच् before अङ् in लुङ् by 'वच उम्' Pāṇ. vii. 4. 20. The aug. अ is not prefixed to the root by 'बहुलं छन्दस्यमाङ्योगेऽपि' Pāṇ. vi. 4.75.

अरिः—Sāy. means अर्त्ता, सेवकः, attendant ; fr. rt. ṛ (ऋ) ; attached to, faithful or devoted or pious man—M. W. S.E. Dict. P. 87. col. 3.

तोदस्य—fr. rt. तुद ( व्यथने, *to strike*. 6.u ) with aff. घञ् ; 'तोदस्तुद्यतेः' drvd. fr. rt. *tud*. Nir. 5. 6. तोद is a teacher or preceptor, who strikes out ignorance ; 'a governor, a master' ( शिक्षकस्य स्वामिनः –Sāy. ) ; Benfey renders it—'a tyrant'. acc. to Yāska and other Indian interpreters तोद is the same as तुद mg. a chasm or cavity ( तुन्नः विदीर्णो भूप्रदेशः ) । The import is—just as a cavity or

deep chasm in the earth holds as much water as enters into it, so Agni accepts as much oblation as is offered *in* it by us to other gods ( बिलं कस्मिंश्चिद् महत: आप: सर्वतो गच्छन्ति न च तस्य बिलस्य महतो ग्रहणशक्तिपरिहाणमस्ति। एवं हे अग्ने तवानेकाशानेकदेवता-थाहुतीरस्माभि: प्रदत्ता: प्रतीच्छतो न सामर्थ्यपरिहाणमस्ति।

शरणे—fr. rt. शॄ ( हिंसायां, *to kill* )—अधिकरणे ल्युट् : शीर्यन्ते दुःखानि यत्र इति शरणं गृहम्।

महस्य—Great, powerful. पुरु—may also be taken as modifying दाश्वान्,—offerer of *abundant* oblation, *vide* Yāska's explanation.

Yāska's explanation, quoted by Sāyaṇa in his com. above, is—'I, the offerer of abundant oblation, invoke thee in many ways, I am indeed the master of thy panegyrics ( *Ari* means an enemy, drvd. fr. rt. *ṛ* (to injure), it also means *master* or *lord* ; here it has the latter sense). The seer, having seen that offerings, made to other gods, are sacrificed in fire, declared—'as in the cavity of a great well'. Agni's capacity of receiving oblations of other gods is compared to that of a deep cavity of a well to hold water within. Durga explains 'अरिरग्ने तव स्वित् आ'—as तवाहमरिरिव स्तोमानामुच्चारणे,—अरि: अर्य: ईश्वर: समर्थ: इतारे्य: अहं त्वामाह्वयामि—I, being able ( अरि:—समर्थ: ) to praise thee, invoke thee.

———

विश्वामित्र ऋषि:। द्वे सामनी प्रहिते, श्यावाश्वर्षि:। उष्णिक् छन्द:। अग्निर्देवता। प्रातरनुवाके विनियोग:।

१र २र ३ २उ ३ १ २ ३ २
प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत्।
३ १र २र ३ १ २ ३ २ ३ १ २
विपां ज्योतींषि बिभ्रते न वेधसे ॥२॥९८॥

प्र। होत्रे। पूर्व्यम्। वच:। अग्नये। भरत। बृहत्। विपाम्। ज्योतींषि। बिभ्रते। न। वेधसे ॥ २ ॥

भाष्यसार:। हे ऋत्विज:, यूयं विपां—मेधाविनां विप्राणाम्, 'ज्योतींषि तेजांसि बिभ्रते—कुर्वते विदधते, वेधसे—जगद्विधात्रे यज्ञविधात्रे वा, होत्रे—देवानामाह्वात्रे, अग्नये, बृहत्—महत्, पूर्व्यं—पुरातनम्, वच:—स्तोत्रादिकं प्रभरत—प्रब्रूत ॥ २ ॥

(O priests), offer your sublime primeval prayers to Agni, the principal priest, the ordainer, causing the brilliance of the wise (Brāhmaṇas).—2.

**सा०-भा०** । यजमानो होत्रादीन् प्रति ब्रूते हे होत्रादय: ! 'विपां' विप्राणां मेधाविनाम् अध्वर्य्वादीनां 'ज्योतींषि' सत्कर्मानुष्ठानसम्पाद्यानि तेजांसि 'बिभ्रते'

निमित्ततया कुर्वाणाय 'वेधसे' जगतो विधात्रे 'होत्रे' देवानामाह्वात्रे 'अग्नये' 'बृहत्' महत् 'पूर्व्यं' पुरातनं 'वचः' स्तोत्रशस्त्रादिकं वाक्यं 'प्र भरत' सम्पादयत। नेत्ययं पादपूरणः, अन्वयाभावात्। यद्वा 'वेधसे न' यथा वेधाः जगद्विधाता परमेश्वरः आदित्यादीनि ज्योतींषि करोति तद्वदिति। प्र-शब्दस्य छन्दसि 'व्यवहिताश्च' इति भरतेत्यनेन सम्बन्धः ॥ २ ॥

२। ऋ० सं० ३ म० १० सू० ५ ऋ०।

होत्रे—*vide* notes on होतारम् SV. I. 1,3. बृहत् वचः—great praise.

पूर्व्यम्—पुरातनम् ; पूर्व्यमिति पुराणनाम—Nir. 3. 19. ancient, primeval. पूर्व्यम्—पूर्वैः कृतमित्यर्थः।—'recited of old'—*Wils.* 'पूर्वैः कृतम् इति य-प्रत्ययः'—Sāy. in his com. on ṚV. stanza.

प्र—भरता—the last vowel of भरत is lengthened by 'ऋचि तु-नु-घ-मक्षु-तङ्०' Pāṇ. vi. 3. 133. Imp. (लोट्) 2 pl. By the dictum 'अपित् सार्वधातुकं ङित्'—त is here treated as तङ्, but when त becomes तप् or तनप् by 'तप्तनप्०' Pāṇ. vii. 1. 45—it is then पित् सार्वधातुक, hence not regarded as ङित्, so there, in that case, the last vowel cannot be long acc. to the rule 'ऋचि तु' etc. (above)—for example 'श्रृणोत ग्रावाणः'।

विप्रां ज्योतींषि—विप्राम् fr. rt. विप् with aff. क्विप् ; the word विप्र is dervd. from the same root with aff. रन् ; विप्—or विप्रः means a learned man (मेधावी) Ngh. 3. 15. विप्रः or विद् *lit* means—'stirred or excited (inwardly), inspired, wise, (said of Brāhmaṇas) fr. विप् or वेप् (*to tremble*, to be stirred)—M. W. S. E. Dict. p. 972, col. 3. Prof. Wils. renders 'विप्रां तेजांसि बिभ्रते'—for the sake of animating the energies of the pious (worshippers).

न वेधसे—acc. to Sāy. 'न' is either to be taken as meaningless (used only for filling up metrical deficit) or as conveying the sense of comparison ; in the latter case, the mg. is—'like unto the creator or ordainer (of the world)'.

---

गोतम ऋषिः। द्वे सामनी प्रजापतिर्ऋषिः। उष्णिक् छन्दः। अग्निर्देवता। प्रातरनुवाके विनियोगः।

३ १ २ ३ १ २ ३ १ २
अग्ने वाजस्य गोमत ईशानः सहसो यहो।
३ १ २ ३ २ ३ १ २
अस्मे देहि जातवेदो महि श्रवः ॥३॥६६॥

अग्ने। वाजस्य। गोमतः। ईशानः। सहसः। यहो। अस्मे। देहि। जातवेदः। महि। श्रवः ॥ ३ ॥

भाष्यसारः। हे सहसः यहो—बलस्य पुत्र, गोमतः—गवादिपशुयुक्तस्य, वाजस्य —अन्नस्य, ईशानः—ईश्वरस्त्वमसि। हे जातवेदः—अग्ने, महि—महत्, श्रवः—अन्नम्, अस्मे—अस्मासु अस्मभ्यमित्यर्थः, देहि—प्रयच्छ ॥ ३ ॥

O Agni, the issue of energy, thou art the lord of wealth consisting of cows or cattle; O omniscient, grant us ample food.—3.

**सा०-भा०।** हे 'सहसो यहो' बलस्य पुत्र! 'अग्ने!' 'गोमतः' बहुभिर्गोभिर्युक्तस्य 'वाजस्य' अन्नस्य 'ईशानः' ईश्वरस्त्वमसि अतः 'अस्मे' अस्मासु हे 'जातवेदः' जातधन! जातानां 'वेदितः' वा अग्ने! 'महि' प्रभूतं 'श्रवः' अन्नं 'देहि' प्रयच्छ स्थापयेत्यर्थः। सहसो यहो पराङ्गवद्भावाद् आमन्त्रितस्य षष्ठ्यामन्त्रितसमुदायो निहन्यते। अस्मे सुपां सुलुगिति (पा० ७, १, ३९) सप्तम्याः 'शे'आदेशः ॥ ३ ॥

३। ऋ० सं० १म० ७९ सू० ४ ऋ०। RV. reads 'अस्मे धेहि' while SV. has 'अस्मे देहि' meaning almost the same. उ० आर्चि० ७, २, ११, १।

वाजस्य—अन्नस्य, धनस्य वा,—of food or riches; *vide* वाजाय SV. 1.81, वाजाः 1. 86, वाजयन्तः 1. 87.

वाजस्य गोमतः—lord of food and of cattle—Prof. *Wils.*

सहसः यहो—Sprung from energy; Agni is very often so called, because he is generated by the strength required for rubbing the two Araṇis or the fire-sticks. *vide* our notes on ऊर्जोनपातम् SV. 1.45; also Nir. 8.2.

यहो—*voc.* of यहु meaning child, 'यहुरित्यपत्यनाम'—Nir. 3. 1.

अस्मे—अस्मासु; शे in the place of loc. case pl. by 'सुपां सलुक्०' Pāṇ. vii. 1. 39.

जातवेदः—Thou who knowest all that exist. This epithet of Agni occurs so frequently that in the post-vedic literature, it has become the synonym of Agni; *vide*: SV. 1. 31; 1. 35; 1. 66; etc.

महि—neu. accus. sg.—abundant, great, from rt. मह् (वृद्धौ, *to increase* 1. 10. p.)

श्रवः—अन्नम्—*Sāy.*—'Sustenance'—*Wils.* 'Renown'—*Grfth.*

---

विश्वामित्र ऋषिः। त्रीणि सामानि पूर्वस्य 'सदो' नाम, उत्तरे द्वे हविर्धान-संज्ञके। प्रजापतिर्ऋषिः। उष्णिक् छन्दः। अग्निर्देवता। विनियोगः पूर्ववत्।

३ १ २   ३ २ ३ १   २ ३ २ र   २
अग्ने यजिष्ठो अध्वरे देवान् देवयते यज।
१ ३ ३ १र २र   २ २ ३   १ २
होता मन्द्रो वि राजस्यति स्रिधः ॥४॥१००॥

अग्ने । यजिष्ठः । अध्वरे । देवान् । देवऽयते । यज । होता । मन्द्रः । विऽराजसि । अति । स्रिधः ॥ ४ ॥

भाष्यसारः । **हे अग्ने, यजिष्ठः—यष्टृतमस्त्वम्, देवयते—देवान् यष्टुम् इच्छते यजमानाय, अध्वरे—यज्ञे, देवान् यज । अपि च त्वं होता—देवानामाह्वाता, मन्द्रः—यजमानस्य आह्लादकः, स्रिधः—शत्रून्, अति—अतिक्रम्य, वि-राजसि—विशेषेण दीप्यसे ॥ ४ ॥**

O Agni, the best sacrificer, sacrifice unto the gods, in favour of the devout man desiring to offer worship to the gods. The invoker of gods, the delighter, thou shinest forth, eclipsing all the disturbing enemies.—4.

**सा०-भा० ।** हे 'अग्ने !' 'यजिष्ठः' यष्टृतमः 'त्वम्' 'अध्वरे' यज्ञे 'देवानात्मन इच्छते यजमानाय 'देवान् यज' तदर्थं यष्टव्यानग्न्यादीन् देवान् पूजय । किञ्च 'होता' देवानामाह्वाता 'मन्द्रः' यजमानस्य मादयिता स त्वं 'स्रिधः' क्षपयितॄन् शत्रून् 'अति' अतिक्रम्य 'वि-राजसि' विशेषेण शोभसे ॥ ४ ॥

४ । ऋ० सं० ३म० १० सू० ७ ऋ० ।

यजिष्ठः—for etymology and meaning *vide* SV. I. 12 and I. 112. rt. यज्—aff. तृच् spv. dg. इष्ठन्—'तुश्छन्दसि' इतीष्ठन् Pāṇ. v. 3. 59. 'तुरिष्ठेमेयःस्वि'ति तृचो लोपः Pāṇ. vi. 4. 154.—Sāy.'s note in his com. on the ṚV. stanza.

देवयते *dat. sg.*—देव—क्यच्—शतृ ; for the formation of the word *vide* rules 'छन्दसि परेच्छायामपि क्यच् वक्तव्यः', 'न च्छन्दस्यपुत्रस्य' Pāṇ. vii. 4. 35.—heavenly-minded, pious man, i. e., a sacrificer, who desires to offer worship to gods.

मन्द्रः—fr. rt. मन्द् (*to be glad*, I.Ā) with aff.रक्; joyful, pleasant—M. W. S. E. Dict. p. 787. col. 3. Sāy. explains आह्लादक—gladdener, delighter. अति—*Indec.*—stands for अतिक्रम्य—overcoming, overpowering.

स्रिधः—this word occurs also in SV. I. 102, fr. rt. स्रिध् ( बाधने, *to oppress*)—क्विप्। In M. W. S. E. Dict. the word is drvd. fr. rt. स्रिध् (*to fail*, *err*, *blunder*) and mg. is—'erring, failing, misbeliever, foe, enemy', p. 1274. col. 2.

---

**त्रित ऋषिः । आतिथ्यम् साम त्वष्टा ऋषिः । उष्णिक् छन्दः । अग्निर्देवता । विनियोगः पूर्ववत् ।**

३ २ ३ २ ३ १र २ ३ १र ३ २र १ ३ २
जज्ञानः सप्तमातृभिर्मेधामाशासत श्रिये ।
३ २ ३ १ २ ३ १ २ ३ २
अयं ध्रुवो रयीणां चिकेतदा ॥५॥१०१॥

जज्ञानः । सप्तऽमातृभिः । मेधाम् । आशासत । श्रिये । अयम् । ध्रुवः । रयीणाम् । चिकेतत् । आ ॥ ५ ॥

भाष्यसारः । **ध्रुवः—स्थिरः, अयम् अग्निः रयीणां—धनानाम्, आ चिकेतत् स्वस्य अधिकारे स्वायत्ततया इत्यर्थः जानाति, सप्त-मातृभिः—सप्तजिह्वाभिः सह, जज्ञानः—प्रादुर्भूतः, सोऽग्निः मेधां—बुद्धिम्, श्रिये—अस्मत्श्रेयसे, आशासते—अनुशास्ति ॥ ५ ॥**

Born with seven mothers, (he) sways the intellectual faculties to our prosperity; he (Agni), firm and steady, knows of the riches (under his control).—5.

**सा०-भा० । 'ध्रुवः' स्थिरोऽयमग्निः 'रयीणां' धनानाम् 'आचिकेतत्' अस्यानुशासने जानाति । 'सप्तमातृभिः' सप्तसङ्ख्याभिः हविर्मानस्मर्थाभिर्जिह्वाभिः स्वात्मनि हविःप्रक्षेत्रीभिर्वा जिह्वाभिः सह । 'जज्ञानः' प्रादुर्भतः सोऽग्निः 'मेधां'(?) कर्मणो विधातारं सोमं 'श्रिये' सेवार्थम् 'आशासत' अनुशास्ति । शास्तेर्लटि व्यत्ययेनात्मनेपदम् ( पा० ३, १, ८५ )। 'बहुलं छन्दसि' ( पा० २, ४, ७३ ) इति शपो लुक् न भवति । अन्विच्छतीत्यर्थः ॥ ५ ॥**

**५ । ऋ० सं० ६ म० १०२ सू० ४ ऋ० ।** ṚV. reads—(1) **'जज्ञानं सप्तमातरः'** in the place of **'जज्ञानः सप्तमातृभिः'** the above SV. text, (2) **'वेधाम्'** instead of **'मेधाम्'**, (3) **'अशासत'** instead of **'आशासत'**, and (4) **'चिकेत यत्'** instead of **'चिकेतत्'** ।

जज्ञानः—born ; rt. जन्—aff. कानच्, 'लिटः कानज्वा' Pāṇ. iii. 2. 106.

सप्त-मातृभिः—Sāyaṇa, in his com. above, interprets the seven tongues or flames of Agni. These are (1) काली, (2) कराली, (3) मनोजवा, (4) सुलोहिता, (5) सुधूम्रवर्णा, (6) स्फुलिङ्गिनी, (7) विश्वरूपी—मुण्डक १.२.४. In ṚV. iii. 20. 2, three are mentioned. In his com. on the ṚV. stanza he means 'the seven metres' or the seven rivers, e.g., the Ganges etc.

मेधाम् आशासत—he commands or guides wisdom ; reference is found in ṚV. viii. 91. 8. that Agni is a producer of wisdom, also in ṚV. iv. 11.3—he is described as the source of wisdom. Sāy. here seems to follow the ṚV. reading वेधाम् for मेधाम् as he interprets कर्मणो विधातारम् ।

चिकेतत् आ—आ-चिकेतत्, In the Vedas, उपसर्ग (*prefix*) is, sometimes, placed after the verb. 'छन्दसि परेऽपि' Pāṇ. i. 4. 81. चिकेतत्—rt. कित (ज्ञाने, *to know*, 10. p.) लेट्, अडागमः by 'लेटोऽडाटौ' Pāṇ. iii. 4. 94. इ of ति drops by 'इतश्च लोपः' Pāṇ. iii. 4. 97.

रयीणाम् etc.—he knows of the riches, which Agni is said to command abundantly (ṚV. i.1.3 ; i.31.10) and all treasures are collected in him (ṚV. x. 6.6), he commands all riches in heaven and earth. (ṚV. iv. 5.11).

इरिमिठिर्ऋषिः । आदित्यं साम । उष्णिक् छन्दः । अदितिर्देवता । पूर्ववद् विनियोगः ।

२ २उ २ १ १ ३ १र २र ३ १ २
**उत स्या नो दिवा मतिरदितिरूत्यागमत् ।**
१र २ ३ १ २ ३ २३ १ २
**सा शन्ताता मयस्करदप स्त्रिधः ॥६॥१०२॥**

उत । स्या । नः । दिवा । मतिः । अदितिः । ऊत्या । आ । गमत् । सा । शन्ताता । मयः । करत् । अप । स्त्रिधः ॥ ६ ॥

भाष्यसारः । **उत—अपि च, स्या—सा, मतिः—मननीया स्तोतव्या, अदितिः ऊत्या—रक्षया सार्द्धम्, दिवा—अहनि, नः—अस्मान् अस्मत्सकाशम्, आगमत्—आगच्छतु । आगत्य च शन्ताता—शन्तातिः शान्तिकरम्, मयः—सुखम्, करत्—करोतु, स्त्रिधः—बाधकान् शत्रून्, अप—अपबाधतु ॥ ६ ॥**

Also, may adorable Aditi, come to us by day, with her protection, bring us weal and drive away the obstructing enemies.—6.

**सा०-भा० । 'उत' अपि च 'स्या' सा पूर्वोक्ता 'मतिः' मन्त्री मन्तव्या स्तोतव्या वा 'अदितिः' 'ऊत्या' रक्षया सार्द्धं 'दिवा' अहनि 'नः' अस्मान् 'आगमत्' आगच्छतु, आगत्य च 'शन्ताता' शन्तातिः शान्तिकरं 'मयः' सुखं 'सा' अदितिः 'करत्' करोतु । 'स्त्रिधः' नाशकान् शत्रूंश्चापगमयतु, स्त्रिधिर्बाधनार्थः ॥ ६ ॥**

६ । **ऋ० सं० ८ म० १८ सू० ७ ऋ० ।** Ṛ̣V. reads (1) **'उत त्याः'** instead of **'उत स्या'** and (2) **'सा शन्तातिः'** in the place of **'सा शन्ताता'** ।

उत—*Indec*—generally means 'or', here means 'and', 'also', *vide* : notes on SV. 1. 96.

स्या—सा ; there is a सर्वनाम (pron.) त्यद् equivalent to तद्, meaning the same.

मतिः—मननीया adorable ; 'monitress'—*Wils.*

अदितिः—Aditi is described as the mother of almost all the gods, e.g., Mitra, Varuṇa, Aryaman, the Rudras, the Ādityas. In Nirukta we find her represented as 'अदीना देवमाता'—undecaying mother of the gods, Nir. 4. 22. She is, several times, spoken of as protecting from distress ; worshippers beseech Aditi to make them sinless (Ṛ̣V. 1. 162. 22) and also pray that evil doers may be cut off by Aditi. In the above stanza, she is entreated to drive away all injurious enemies.

ऊत्या—rt. अव् (*to protect*)—क्ति by 'ज्वरत्वर०' Pāṇ. vi. 4. 20. अव् is changed to ऊ with क्ति following. *Vide* SV. 1.10.

आगमत्—आगच्छतु, may come to us. 'लिङर्थे लेट्' Pāṇ. iii. 4.7. 'लेटि अडागम:' Pāṇ. iii. 4. 94. 'इतश्च लोप:' Pān iii. 4.97.

शन्ताता...मय: करत्—may she, the *benevolent*, grant us happiness or delight ; शन्ताता is the same as शन्ताति:, which is derived as शम्—with aff. तातिल्, by 'शिवशमरिष्टस्य करे' Pāṇ. iv. 4. 143. the mg. is—शम् करोति इति, *beneficent*, *auspicious*. शन्ताति—सु (nom. sg.term.) is replaced by डा, by 'सुपां सुलुक्०' Pāṇ. vii.1.39 ; टिलोप:, hence the form शन्ताता is obtained.

करत्—करोतु ; rt. कृ—लेट् ति, in लेट् (subj.) अ is added to the root, इ of ति drops, Pāṇ. iii. 4.97.

मय:—Prob. fr. rt. मा, 2. p. refreshment, enjoyment, pleasure, delight, ṚV. VS, T.Br. There are expressions like मयस्कर and मयोभव, mg.—causing pleasure, delighting—M. W. S. E. Dict. P. 789. col. 2 ; मय:—happiness, Ngh. 3. 6. cf. 'आपो हिष्ठा मयोभुवः' ṚV. x. 9. 1 ; SV. ii. 9. 2. 10. (2. 1187).

---

विश्वमना ऋषिः । 'वार्कजम्भं' साम वृकजम्भा ऋषिः । उष्णिक् छन्दः । अग्निर्देवता । विनियोगः पूर्ववत् ।

१ २ ३ १ २ ३ २ १ २ ३ १ २
ईड़िष्वा हि प्रतीव्या३ं यजस्व जातवेदसम् ।
२ १ २ ३ २ ३
चरिष्णुधूममगृभीतशोचिषम् ॥७॥१०३॥

ईडिष्व । हि । प्रतीव्यम् । यजस्व । जातऽवेदसम् । चरिष्णुऽधूमम् । अगृभीतऽशोचिषम् ॥ ७ ॥

भाष्यसारः । प्रतीव्यं—शत्रुषु प्रतिगमनशीलम्, चरिष्णुधूमं—सर्वत्र प्रचरित-धूमम् अप्रतिहतगतिमित्यर्थः, अगृभीतशोचिषं—रक्षोभिरप्रधृष्यमाणदीप्तिम् अप्रतिहत-दीप्तिमित्यर्थः, जातवेदसं—जातधनं जातप्रज्ञमग्निम् ईडिष्व—स्तुहि, यजस्व—हविर्भिरर्चय च ॥ ७ ॥

Adore and offer sacrifice to Agni, the omniscient, the resister of foes, whose smoke wanders everywhere, and who bears unobstructed splendour.—7.

सा०-भा० । 'प्रतीव्यं' शत्रुषु प्रतिगमनशीलम् अग्निम् 'हि'रवधारणे, अग्निमेव 'ईडिष्व' स्तुतिभिः स्तुतं कुरु । किञ्च, 'चरिष्णुधूमम्' सर्वत्र चरण-शील-धूम-जालम् 'अगृभीत-शोचिषम्' रक्षोभिरप्रधृत-दीप्तिम् 'जातवेदसं' जातप्रज्ञं यद्वा, जातानि भूतानि वेत्तीति जातवेदाः, तमग्निं 'यजस्व' हविर्भिः पूजय ॥ ७ ॥

७। ऋ० सं० ८ म० २३ सू० १ ऋ०।

ईडिष्वा—*for* ईडिष्व ; adore ; for grammatical and other notes *vide* SV. I. 49. 93.

प्रतीव्यम्—going against the enemies i.e., opposing or counteracting all their activities ; 'who resists foes'—*Wils*. प्रति—rt. वी ( गतिव्याप्ति etc. here *to go*. 2.p.) प्रति here means 'against'.

जातवेदसम्—*vide*. SV. I.31, 35, 40, etc.

चरिष्णु-धूमम्—चरिष्णु: (fr. rt. चर् *to move*—इष्णुच्, Pāṇ. iii. 2. 136.) सञ्चरणशीलो धूमो यस्य, 'the diffuser of smoke'—*Wils*.

अगृभीत-शोचिषम्—अगृहीतम् (हृग्रहोर्भश्छन्दसि) अप्रतिहतं शोचि: तेज: यस्य—'of unobstructed or unchecked radiance'—*Wils* ;—having unsubdued splendour, of unbounded lustre ; this epithet is often applied to Agni (as here) and to the Maruts (v. 54. 5 and 12). For शोचि: *vide* notes on शोचिषा SV. I. 22.

---

**विश्वमना ऋषिः। 'राक्षोघ्नं' साम अगस्त्य ऋषिः। उष्णिक् छन्दः। अग्निर्देवता। विनियोगः पूर्ववत् ॥**

१र २र ३ १ २ ३ २ ३ १ ३ १ २
**न तस्य मायया चन रिपुरीशीत मर्त्यः।**
३ १ २ ३ २ ३ २
**यो अग्नये ददाश हव्यदातये ॥ ८ ॥१०४॥**

न। तस्य। मायया। चन। रिपुः। ईशीत। मर्त्यः। यः। अग्नये। ददाश। हव्यऽदातये ॥ ८ ॥

भाष्यसारः। **यः मर्त्यः—मनुष्यः यजमानः, हव्य-दातये—देवेभ्यो हविःप्रदानाय, अग्नये ददाश—हवींषि ददाति, तस्य रिपुः—शत्रुः, मायया—छलेन, चन—अपि, न ईशीत—तं न अतिक्रमितुं प्रभवति ॥ ८ ॥**

Even with all his wily stratagem, no enemy can prevail over the mortal, who presents offerings to Agni, with a view to offer oblations to the gods.—8.

**सा०-भा०।** 'मर्त्यः' मनुष्यः 'रिपुः' शत्रुः चनेति निपातसमुदायोऽप्यर्थे 'मायया चन' माययापि 'तस्य' जनस्य 'न ईशीत' ईश्वरो न भवति। 'यः' जनः 'हव्यदातये' हविषामादानसमर्थाय 'अग्नये' यो यजमानः 'ददाश' हवींषि प्रयच्छति तस्य रिपुर्न ईशीतेत्यर्थः ॥ ८ ॥

८। ऋ० सं० ८ म० २३ सू० १५ ऋ०। RV. reads 'हव्यदातिभिः' (by the offerers of the oblation) instead of 'हव्यदातये' the above SV. text.

मायया—'by fraud'—*Wils.*

चन—*Indec.* अपि, *even* ; it is usually used after a negative ; e. g. 'यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन'—without whom the sacrifice does not succeed *even* of the wise man RV. i. 18. 7. 'इन्द्रं न मह्ना पृथिवी चन प्रति'—*even* the earth is not equal to Indra in greatness. i. 81. 5. for further use of चन *vide* RV. i. 155. 5 ; vii. 86. 6. etc.

ईशीत—rt. ईश् (*to predominate, to lord over.* 2.Ā.) pot. (लिङ्) 3. sg.—shall have power over him.—*Wils.*

ददाश—rt. दाश् (दाने, *to make offering.* 1. u.) perf. (लिट्) ;—perf. stands for pres.

हव्य-दातये—दाति (dr. fr. rt. दा *to give*)—with aff. क्ति,—दानम् ;—for giving oblations to the gods.

---

भरद्वाज ऋजिश्वा ऋषिः। 'सौमक्रतवं' साम, सोमक्रतुना ऋषिणा दृष्टत्वात्, सोमक्रतुषु अग्निष्टोमादि-सप्तसंस्थेषु वा गीयमानत्वात्। अथवा बृहद्दाग्नेयीयमग्निर्देवताकं साम। उष्णिक्छन्दः। वैश्वदेवोऽग्निः। दशरात्र-यागस्य चतुर्थदिवसे प्रउग-शस्त्ररूपेण विनियोगः।

३ १ २ ३ २ ३ २ ३ १ ३क २र
अप त्यं वृजिनं रिपुं स्तेनमग्ने दुराध्यम्।
१ २ ३ २ ३ २
दविष्ठमस्य सत्पते कृधी सुगम् ॥९॥१०५॥

अप। त्यम्। वृजिनम्। रिपुम्। स्तेनम्। अग्ने। दुराध्यम्। दविष्ठम्। अस्य। सत्पते। कृधि। सुगम् ॥ ९ ॥

भाष्यसारः। हे सत्पते—सतां पालक अग्ने, त्वं त्यं—तम्, वृजिनं—पापिनम्, रिपुं—शत्रुम्, दुराध्यं—दुरभिसन्धिं हिंसकम्, स्तेनम्—चौरम्, दविष्ठं—दूरतमम्, अपास्य—अपक्षिप अपसारय। अथवा तं सुगं—सुपथगामिनं कृधि—कुरु ॥ ९ ॥

O (Agni) guardian of the good, turn out, afar, the sinful wicked enemy, the malicious thief, or lead him to the honest righteous path.—9.

**सा०-भा०।** हे 'अग्ने! त्वं 'त्यं' तं प्रसिद्धं 'वृजिनं' कुटिलं 'रिपुं' पापकारिणं 'दुराध्यं' दुःखस्याध्यातारं दुष्टाभिप्रायं वा एवम्भूतं 'स्तेनं' हिंसकं 'दविष्ठं' दूरतमम् 'अपास्य' अपक्षिप। असु क्षेपणे इति धातुः। हे 'सत्पते!' सतां पालयितः अग्ने! अस्माकं 'सुगं' शोभनेन गन्तव्यं सुखं 'कृधि' कुरु। अत्र सर्वदेवात्मकस्याग्नेः स्तवनाद् वैश्वदेवत्वम्॥ ६॥

६। ऋ० सं० ६ म० ५१ सू० १३ ऋ०।

दुराध्यम्—दुः-आ-ध्यै-क, one who meditates ill i. e., malicious, evil-hearted, malignant.

दविष्ठम्—दूर-इष्ठन् spv. dg. 'दूर' is changed to 'दव' by 'स्थूलदूर०' Pāṇ. vi. 4. 157. adv. far away.

अप-अस्य—(अपास्य)—the prefix अप stands at a distance from the verb. *Vide* Pāṇ. i. 4. 82. अस्य—rt. अस् (क्षेपे, *to throw* 4. p.), imp. 2. sg.—drive away to a distance.

कृधी—the final vowel is lengthened by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137. 'हेर्धिः', 'श्रु-शृणु-पृ-कृ०' Pāṇ. vi. 4. 102. Wilson translates 'सत्पते कृधी सुगम्' after Sāy.—grant us felicity, O protector of the virtuous.

---

विश्वमना ऋषिः। 'राक्षोघ्नं' सामागस्त्य ऋषिः। उष्णिक् छन्दः। वैश्वदेवोऽग्निर्देवता। प्रातरनुवाके आश्विनशस्त्रे च विनियोगः।

३क २र ३ १ २ ३ १ २
**श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते।**
३ १र ३ १ २ ३ १ २
**नि मायिनस्तपसा रक्षसो दह॥१०॥१०६॥**

श्रुष्टी। अग्ने। नवस्य। मे। स्तोमस्य। वीर। विश्पते। नि। मायिनः। तपसा। रक्षसः। दह॥ १०॥

भाष्यसारः। **भाष्यस्य सुगमत्वात् केवलमन्वयो दीयते।—हे वीर विशपते—प्रजापते अग्ने, त्वं मे नवस्य स्तोमस्य—नूतनम् अधुना क्रियमाणं स्तोत्रम्, श्रुष्टी—श्रुत्वा, मायिनः—मायाविनः राक्षसान्, तापसा—तापकेन तेजसा, नि-दह—नितरां भस्मीकुरु॥ १०॥**

O hero (Agni), the lord of men, listening to this my present praise, consume the wily demons with thy scorching flame.—10.

**सा०-भा० । 'वीर' शत्रूणां विनाशयितः वीर्यवन् वा 'विश्पते' विशां पालयितः! हे अग्ने ! 'नवस्य' इदानीं क्रियमाणत्वान्नूतनं 'मे' मदीयं 'स्तोमस्य' स्तोत्रशस्त्रादिकं 'श्रुष्टी' श्रुत्वा 'मायिनः' मायाविनः रक्षसः कर्म-विघ्नकारिणः राक्षसान् 'तपसा' तापकेन तेजसा 'निदह' नितरां भस्मीकुरु। श्रुष्टीति "स्नात्व्यादयश्च" ( पा० ७, १, ४६ ) इति निपातितः, वकारलोपश्छान्दसः ॥ १० ॥**

**१० । ऋ० सं० ८ म० २३ सू० १४ ऋ० ।** ṚV. reads **'तपुषा'** instead of **'तपसा'**

श्रुष्टी = श्रुत्वा, hearing ;—some words with aff. क्त्वाच take anomalous forms, श्रुष्टी stands for श्रुत्वा । *Vide* : Pāṇ. vii. 1. 49 ; *elsewhere* श्रुष्टी, acc. to Yāska, is an *indec.* mg. *quick* ( श्रुष्टीति क्षिप्रनाम आशु अष्टीति—it pervades *quickly* ), Nir. 6. 12. cf. 'ताँ अध्वरे उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरन्धिम्'.—O Agni, offer oblation *quickly* to them, i. e., wise Bhaga etc. ṚV. vii. 39. 4.

विश्पते—'lord of men'—Prof. Wils.

तपसा—the same as तपुषा (the ṚV. reading)—'by thy flames.' 'Tapas'—warmth, heat, *vide* 'पञ्च तपांसि' the five fires.—M. W. S. E. Dict. p. 437. col. 1.

नवस्य स्तोमस्य—my new ode, newly-fashioned hymn ; 'my present praise'—*Wils.*

**इति प्रथमाध्यायस्य एकादशः खण्डः, द्वितीयप्रपाठकस्य प्रथमार्द्धे प्रथमा दशतिः ।**

---

**सौभरिर्ऋषिः ( प्रयोगभार्गव ऋषिः—सायणः ) । चत्वारि सामानि प्रमंहिष्ठशब्दयुक्तान्येतन्नामधेयानि, इन्द्रो वसिष्ठो वा ऋषिः, यद्वा एषां मध्ये तृतीयमासितमसितनामर्षिस्तत्सम्बन्धि । ककुप् छन्दः (क) । अग्निर्देवता । प्रातरनुवाके आश्विनशस्त्रे च विनियोगः ।**

१ २ २र ३ १ २ ३ २ ३ १ २
**प्र मंहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।**

३ १ २ ३ २
**उपस्तुतासो अग्नये ॥ १ ॥१०७॥**

प्र । मंहिष्ठाय । गायत । ऋताव्ने । बृहते । शुक्रऽशोचिषे । उपऽस्तुतासः । अग्नये ॥ १ ॥

भाष्यसारः । **हे उपस्तुतासः—उपस्तोतारः ! यूयं मंहिष्ठाय—दातृतमाय ऋताव्ने—यज्ञवते, बृहते—महते, शुक्रशोचिषे—प्रदीप्ततेजसे, अग्नये प्रगायत—स्तोत्रं पठत ॥१॥**

---

(क) The Kakup metre consists of three Pādas, of which the *first* and *third* have each 8 syllables and the *second* has 12 syllables (8 + 12 + 8).

O singers of hymns, sing praises to most munificient, mighty Agni, the master of sacrifices (or the truthful), having resplendent effulgence.—1.

**सा०-भा० ।** हे 'उपस्तुतासः' हे उपस्तोतारः ! यूयं 'मंहिष्ठाय' दातृतमाय 'ऋताव्ने' यज्ञवते सत्यवते वा 'बृहते' महते 'शुक्रशोचिषे' दीप्ततेजसे 'अग्नये' प्रगायत स्तोत्रं पठत ॥ १ ॥

१ । ऋ० सं० ८ म० १०३ सू० ८ ऋ० । ऊ० आर्चि० २, २, १७, १ ।

मंहिष्ठाय—fr. rt. मंह् (*to give, grant, bestow*—I. Ā.)—तृच्—इष्ठन् 'तुश्छन्दसि' Pāṇ. v. 3. 59 ; elision of तृ with इष्ठन् following, by 'तुरिष्ठे०' Pāṇ. vi. 4. 154—granting most abundantly, very liberal or generous ; 'bounteous'—*Wils.*

ऋताव्ने (dat. sg.)—ऋतं (सत्यं यज्ञो वा)—aff. वनिप् in the sense of मतुप्, by 'छन्दसीवनिपौ' Pāṇ. v. 2. 122 ; so the vedic form is ऋतावन् instead of ऋतवत्—the class. skt. form ; truthful—M. W. S. E. Dict. p. 224. col. 1 ; 'observant of truth'—*Wils.* As to this sense '*truthful*', *vide* Agni's another epithet सत्यधर्माणम् SV. 1. 32.

शुक्र-शोचिषे—शुक्रं शोचिर्यस्य—'radiant with brightness.' For शुक्रम् *vide* SV. 1.4.

उपस्तुतासः (voc. *pl.*)—singers of praise ; असुक् Pāṇ. vii. 1. 50.

---

सौभरिर्ऋषिः । 'वाजभृत्'—'वाजाभर्मीयं' वा साम, भरद्वाज ऋषिः । ककुप् छन्दः । आभिप्लविकषडहे उक्थ्ये प्रशास्तृ-शस्त्रे विनियोगः ।

१र २र ३ २ ३ १ २ ३ १ २ ३ १ २
**प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः ।**
२ ३ २ ३ १र २र
**यस्य त्वं सख्यमाविथ ॥२॥१०८॥**

प्र । सः । अग्ने । तव । ऊतिभिः । सुवीराभिः । तरति । वाजऽकर्मभिः । यस्य । त्वम् । सख्यम् । आविथ ॥ २ ॥

भाष्यसारः । हे अग्ने, यस्य—यजमानस्य, सख्यं—मित्रत्वम्, आविथ—प्राप्नोषि, सः तव वाजकर्मभिः—अन्नयुक्ताभिः, सुवीराभिः—शोभनवीरपुत्रवतीभिः, ऊतिभिः—रक्षाभिः, प्र-तरति—प्रवर्धते ॥ २ ॥

He, Agni, whose friendship thou seekest, thrives with thy protection, provided with heroic sons and ample food or immense strength.—2.

**सा०-भा० ।** हे 'अग्ने !' 'तव' 'ऊतिभिः' रक्षाभिः 'सः' यजमानः 'प्र तरति' प्रवर्धते । ऊतयो विशेष्यन्ते 'सुवीराभिः' 'शोभनवीराः पुत्रादयो यासु, ताभिस्तथो-

त्ताभिः 'वाजकर्मभिः' वाजानामन्नानां बलानां वा कर्म रक्षणं यासु तादृशीभिः। हे अग्ने, 'त्वं' 'यस्य' यजमानस्य 'सख्यं' सखित्वं मित्रत्वम् 'आविथ' प्राप्नोषीत्यर्थः, सः प्रतरतीति पूर्वत्रान्वयः ॥ २ ॥

२। ऋ० सं० ८ म० १६ सू० ३० ऋ०। उ० आर्चि० ६, २, २, १ (2. 1172.)
ṚV. reads 'तिरते वाजभर्मभिः' for 'तरति वाजकर्मभिः' and 'आदरे' for आविथ'।

ऊतिभिः—rt. अव—aff. क्ति ; for gram. *vide* SV. 1. 10. Grith. frequently renders 'ऊति' as 'help, aid' ; 'through thy favours'—*Wils.*

वाजकर्मभिः—वाजः अन्नं (Ngh. 2. 7.) कर्म यासु ताभिः, adj. quals. ऊतिभिः ;—with the provision of food or strength.

आविथ—rt. अव् *to get*, perf. (लिट्) 2. sg, used for pres. (लट्) by 'छन्दसि लुङ्लङ्लिटः' Pāṇ. iii. 4. 6.—thou acceptest, dost acknowledge.

---

सौभरिर्ऋषिः। त्रीणि सामानि सौभरिश्चर्षिः। ककुप्छन्दः। अग्निर्देवता।

१ २ क २र ३ १ २ ३ १ २ ३ १ २
तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे।
३ २ ३ १ २
देवत्रा हव्यमूहिषे ॥३॥१०६॥

तम्। गूर्धय। स्वःऽनरम्। देवासः। देवम्। अरतिम्। दधन्विरे। देवऽत्रा। आ। हव्यम्। ऊहिषे ॥ ३ ॥

भाष्यसारः। स्वर्णरं--सर्वस्य नेतारम्, देवं--दीप्यमानं दानादिगुणयुक्तं वा, अरतिं—स्वामिनम्, अग्निं देवासः—ऋत्विजः, दधन्विरे—अभिगच्छन्ति, तं—प्रसिद्धमग्निम्, गूर्धय--स्तुहि, तथा तेनाग्निना देवत्रा—देवान्, हव्यं—हविः, आ-ऊहिषे—अभिप्रापय ॥ ३ ॥

Eulogise him (Agni), the munificent or resplendent lord, the leader of all or the bearer of oblation to heaven, whom the glowing ones (the priests) approach (with praises), and send, through him, the sacrificial viands to the gods.—3.

सा०-भा०। हे 'स्तोतः!' 'तं' प्रसिद्धमग्निं 'गूर्धय' स्तुहि। गूर्धयतिः स्तुतिकर्मा (निघ० ३,१४,५)। कीदृशम्? 'स्वर्णरं' सर्वस्य नेतारं सर्वैः यजमानैः कर्मादौ नेतव्यं वा। अथवा स्वर्गं प्रति हविषां नेतारम्। 'देवासः' दीव्यन्ति स्तुवन्तीति देवा ऋत्विजः। 'देवं' दानादिगुणयुक्तम्। 'अरतिं' स्वामिनं यद्वा, अभिप्राप्तव्यम्। 'दधन्विरे', धन्वन्ति गच्छन्ति स्तुत्यादिभिः प्राप्नुवन्ति। धविर्गत्यर्थः। प्राप्य च तेनाग्निना

'देवत्रा' देवान् 'देवमनुष्ये'त्यादिना ( पा० ५, ४, ५६ ) द्वितीयार्थे 'त्रा'-प्रत्ययः। 'हव्यं' चरुपुरोडाशादि-लक्षणं हविः। 'आ ऊहिषे' अभिप्रापय। वहेर्लिटि यजादित्वात् सम्प्रसारणम् ॥ ३ ॥

३। ऋ० सं० ८ म० १९ सू० १ ऋ०। ṚV. reads 'हव्यमोहिरे' (हव्यम् आ-ऊहिरे) instead of 'आ हव्यमूहिषे'। उ० आर्चि० ८, २, ११, १।

गूर्धया—In the Saṃhita text the final vowel is lengthened by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137. गूर्धयतीतार्चतिकर्मा, *to worship*—Ngh. 3. 14; 'glorify'—*Wils.* 'sing praise to'—*Grfth.*

स्वर्णरम्—the leader of all—Sāy; we have added to it a new but rational sense, e. g., carrying or conveying oblation to heaven. Sāy. often interprets the word स्वः as सर्वस्य *of all* cf. ṚV. ii. 35. 6; sometimes he means *heaven* by it as in 'पिन्वते स्वः' v. 83. 4, and 'स्वर्वित्'—viii. 48. 15; West. schs. always mean *light* or *heaven.*

देवासः—'Priests'—acc. to Sāyaṇa. *vide* notes on देवेभिः SV. i. 2, 67, 68; 'the gods'—*Grfth.*

अरतिम्—the lord; Wils. renders देवमरतिम् as the divine lord. *Vide* SV. 1. 45, 67.

दधन्विरे—approach; fr. rt. धवि (*to go*), perf. ( लिट् ) 3. pl. *Vide* दधन्वे SV. 1. 94. the word धन्व mg.—the sky (so called as the rain *comes down* from it) is derived from this root.

देवत्रा—for देवान्; 'त्रा' being the substitute of the 2nd case-term. by 'देव-मनुष्य-पुरुष-पुरु-मर्त्येभ्यो द्वितीया-सप्तम्योर्बहुलम्' Pāṇ. v. 4. 56. cf. 'तनूनपात् पथ ऋतस्य ...देवत्रा च कृणुह्यध्वरं नः'—O Tanūnapāt...carry our sacrifice *to the gods.* x. 110. 2.

ऊहिषे—rt. वह् perf. ( लिट् ) 2. sg. for pres. 3. pl. mg. वहन्ति,—convey; व of वह् changed to उ ( सम्प्रसारणम् )।

---

सौभरिः प्रयोगो वा ऋषिः। द्वे सामनी सौभरिपुत्रस्य पक्थस्य ऋषेः। ककुप्छन्दः। अग्निर्देवता।

१ २ १ १ २ ३ १२३ १ २ ३ २ ३ २
मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः।
२ ३ १ २ ३ २
यः सुहोता स्वध्वरः ॥४॥११०॥

मा। नः। हृणीथाः। अतिथिम्। वसुः। अग्निः। पुरुऽप्रशस्तः। एषः। यः। सुऽहोता। सुऽअध्वरः ॥ ४ ॥

भाष्यसारः। हे ऋत्विग्गण ! यः एषः—अग्निः, सुहोता—यज्ञेषु सुष्ठु देवानामाह्वाता, स्वध्वरः—शोभनयज्ञः, पुरु-प्रशस्तः—बहुभिः स्तुतः, वसुः—धनात्मकः तं नः—अस्माकम् , अतिथिवत् पूज्यं मा हृणीथाः—न कोपय अपमन्यस्व वा ॥ ४ ॥

(O priests,) Do not provoke (or excite the anger of) him (Agni) who is our guest, the awarder of wealth, the excellent invoker of gods (in the sacrifices), the best performer of sacrifice, eulogised by many.—4.

**सा०-भा०** हे ऋत्विक्सङ्घ ! 'नः' अस्मत्सम्बन्धि-यज्ञे 'अतिथिम्' अतिथिवत् प्रियम् अग्निं 'मा हृणीथाः' मा हर। कमग्निम् इत्यत आह—'यः' अग्निः 'सुहोता' सुष्ठु देवानामाह्वाता 'स्वध्वरः' शोभनयज्ञो भवति। एषः अग्निः 'पुरु-प्रशस्तः' बहुभिः स्तुतः 'वसुः' वासकश्च भवति तमिति पूर्वत्रान्वयः ॥ ४ ॥

४। ऋ० सं० ८ म० १०३ सू० १२ ऋ०। ṚV. has the reading **'मा हृणीतामतिथिः'** instead of **'मा हृणीथा अतिथिम्'**।

हृणीथाः—हृणीयथाः fr. rt. हृणी (रोषणे, लज्जायाञ्च to get angry or ashamed.), of the कण्ड्वादि cl. Sāy.—मा हृणीथाः—मा हर। 'Anger not him'—*Grfth.* ṚV. reading is 'मा हृणीताम्' which Sāyaṇa interprets 'न केनापि क्रुध्यताम्', which Prof. Wils. renders—'may none hinder Agni (from coming to us)'.

अतिथिम्—*Vide* SV. 1. 5 ; 1. 67 ; 1. 85, 87.

वसुः—Agni is very often called by this name, *vide* : SV. 1. 36, 41, 58, 84. वसु is wealth, of which Agni is the master. So it has been identified with him, *vide* : notes on रयीणाम् आचिकेतत्, SV. 1. 101. Prof. Wils. renders **'वसु'** *here* 'as the giver of dwellings'.

स्वध्वरः—सुक्रतुः, *vide* 1. 3 ; 1. 45. etc.—skilled in sacrifice.

---

सौभरिर्ऋषिः। 'दैवानीकं' साम देवानीकः पक्थो वा ऋषिः। ककुप्छन्दः। अग्निर्देवता। अभिप्लवषडहेपृष्ठ्येषु तृतीयसवने प्रशास्तृ-शस्त्ररूपेण विनियोगः।

२ १ २ ३ १र २र ३ २ ३ १ २ ३ १ २ ३ २
**भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः।**
३ २ ३ १र २र
**भद्रा उत प्रशस्तयः ॥५॥१११॥**

भद्रः। नः। अग्निः। आऽहुतः। भद्रा। रातिः। सुऽभग। भद्रः। अध्वरः। भद्राः। उत। प्रऽशस्तयः॥ ५ ॥

भाष्यसारः। भाष्यस्य सुगमत्वात् केवलमन्वयोऽत्र दीयते। आहुतः अग्निः नः अस्माकं भद्रः भवतु। हे सुभग! भद्रा रातिः—दानम्, च अस्माकं भवतु। भद्रः अध्वरः—यागः, भवतु। उत—अपि च, भद्राः प्रशस्तयः—अस्मत्कृतस्तुतयः भवन्तु ॥ ५ ॥

May Agni, served with oblation, be propitious to us; may the gift be auspicious; O blessed one, may the sacrifice yield us blessings or prosperity, and may our panegyrics be blissful.—5.

**सा०-भा०।** 'आहुतः' हविर्भिस्तर्पितोऽग्निः 'नः' अस्माकं 'भद्रः' कल्याणो भवतु। हे 'सुभग' शोभन-धनाग्ने! 'भद्रा' कल्याणी 'रातिः' दानं च अस्माकं भवतु। 'भद्रः' कल्याणः 'अध्वरः' यागश्च भवतु। 'उत' अपि च 'भद्राः' कल्याण्यः 'प्रशस्तयः' प्रशंसाः स्तुतयश्च भवन्तु ॥ ५ ॥

५। ऋ० सं० ८ म० १९ सू० १९ ऋ०। उ० आर्चि० ७, २, १०, १ (2. 909.), यजुः १५, ३८।

रातिः—fr. rt. रा (दाने, *to give*, 2. p.) with aff. क्ति, cf. 'भद्रा ते पूषन्निह रातिरस्तु'। SV. 1. 75.

उत—अपि च, also; *vide* SV. 1. 96, 102.

———

सौभरिर्ऋषिः। 'गौतमं' साम—गोतम ऋषिः, 'साध्यं' वा साम—सध्यो नामर्षिः। ककुप् छन्दः। अग्निर्देवता। पूर्ववद्विनियोगः।

१ २ ३ १र २ ३ १र २र ३ १ २
यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम्।
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥६॥११२॥

यजिष्ठम्। त्वा। ववृमहे। देवम्। देवत्रा। होतारम्। अमर्त्यम्। अस्य। यज्ञस्य। सुऽक्रतुम् ॥ ६ ॥

भाष्यसारः। हे अग्ने, यजिष्ठं—यष्टॄणां श्रेष्ठम्, देवत्रा—देवेषु, देवम्—अतिशयेन दातारम्, होतारम् अमर्त्यम्—मरणरहितम्, अस्य यज्ञस्य सुक्रतुं—सुष्ठु निष्पादकम्, त्वां ववृमहे—वृणीमहे संभजामहे ॥ ६ ॥

We adore thee, the immortal (O Agni), the best sacrificer, the principal priest (or the invoker of gods), the most munificent among gods, the well-accomplisher of this ceremony.—6.

**सा०-भा० ।** हे अग्ने ! 'यजिष्ठं यष्टृतमं 'त्वा' त्वां 'ववृमहे' वृणीमहे सम्भजामहे। कीदृशं त्वाम् ? 'देवत्रा' देवेषु मध्ये 'देवम्' अतिशयेन दानादिगुणम्। 'होतारं' देवानामाह्वातारम्। 'अमर्त्यम्' अविनाशिनम् अस्य 'यज्ञस्य' यागस्य सुक्रतुम् सुष्ठु कर्तारम् ॥ ६ ॥

६। ऋ० सं० ८ म० १९ सू० ३ ऋ०। SV. 1. 312 ; उ० आर्चि० ६,२,१३,१ ( 2. 763 ).

यजिष्ठम्—*Vide* SV. I. 12. rt. यज् (to sacrifice, 1. u.)—aff. अच् in Act. voice 'पचाद्यच्'—यजः—यष्टा, in spv. dg. इष्ठन् is added. अ drops before इष्ठन्, by 'यस्येति च' Pāṇ. vi. 4. 148. Sāy. in his com. on the Ṛ.V. stanza interprets यजिष्ठं as इष्टतमम्—most adorable.

ववृमहे—we adore (thee) ; rt. वृ ( वरणे, to choose, 5.u. or 9.Ā ) perf. ( लिट् ) Ā. 1. pl.—perf. is here used for pres. tense by, 'छन्दसि लुङ्लङ्लिटः' Pāṇ. iii. 4. 6.

देवत्रा—देवेषु, among the gods ; त्रा is added in the place of ७मी (*loc.*) or २या (*accus.*) by 'देवमनुष्य०' Pāṇ. v. 4. 56. *Vide* SV. I. 109.

होतारम्—Agni is often called the 'priest' ( ऋत्विज्, विप्र ) or specially the 'domestic priest' ( पुरोहित ) and more frequently the offerer ( होता ) or chief priest. *Vide* Ṛ.V. viii. 49. 1 ; x. 7. 5 ; vi. 16. 1 ; x. 2. 1, 91. 8 ; SV. I. 1, 3 ; I. 98.

अमर्त्यम्—अमृतम, SV. I. 12, I. 35, I. 40, I. 45, I. 85.

सुक्रतुम्—*vide* SV. I. 3, सुक्रतो (voc) I. 52 ; 'the perfecter of this sacrifice'—*Wils.*

---

सौभरिर्ऋषिः। संवर्गं साम जमदग्निर्ऋषिः। ककुप् छन्दः। अग्निर्देवता।

१ २   ३ १र   २र २ ३   ३ २ ३   १ २ ३ १ २ ३ १ २

तदग्ने द्युम्नमाभर यत्सासाहा सदने कंचिदत्रिणम्।

३ १र   २र   ३क २र

मन्युं जनस्य दूढ्यम् ॥ ७ ॥११३॥

तत्। अग्ने। द्युम्नम्। आभर। यत्। सासह। आसदने। कम्। चित्। अत्रिणम्। मन्युम्। जनस्य। दुःऽध्यम् ॥ ७ ॥

भाष्यसारः। भाष्यस्य सुगमत्वात् केवलमन्वयो दीयते।—हे अग्ने, तत् द्युम्नम् अस्मभ्यमाभर—आहर, यत्—यदा, आसदने—यज्ञगृहे, वर्त्तमानं कश्चित् अत्रिणं—

अत्तारं हिंसकं राक्षसादिकम्, सासह—अत्यर्थमभिभव, तथा दूढ्यं—दुर्धियं दुष्टमतिं शत्रुम्, जनस्य मन्युं—क्रोधश्च अभिभव॥ ७॥

Confer on us that splendour, Agni, which may destroy any devouring demon in the sacrificial abode, overcome malicious enemy and put down the anger of men.—7.

**सा० भा०।** हे 'अग्ने!' 'तत्' 'द्युम्नम्' अन्नं यशो वा 'आभर' अस्मभ्यमाहर। 'यत्' यदा 'आसदने' यज्ञ-गृहे वर्त्तमानं कञ्चित् कमपि 'अत्रिणम्' अत्तारं राक्षसादिकं 'सासह' अत्यर्थमभिभव। तथा 'दूढ्यं' दुर्धियं पापबुद्धिं शत्रुं 'जनस्य' 'मन्युं' क्रोधं च अभिभव, तदेति पूर्वत्रान्वयः॥ ७॥

७। ऋ० सं० ८ म० १९ सू० १५ ऋ०। ṚV. reads **'दूढ्यः'** instead of **'दूढ्यम्'** the SV. text above; and (2) **'सासहत्'** instead of **'सासाहा'**।

द्युम्नम्—*Vide* SV. I. 81. द्युम्नं द्योततेर्यशो वा अन्नम् वा Nir. 5. 5; fr. rt. द्युत् (दीप्तौ, *to shine*, I. p.) with aff. न anomalously formed, Pāṇ. iii. 3. I. द्युम्नं—दीप्तिमद् यशो बलं वा अन्नं धनं वा Ngh. 2. 10, 2. 7. अन्नं हि भुञ्जानस्य दीप्तिं जनयति, यशस्तु द्युम्नं स्वतः प्रकाशस्वभावात्। cf. ṚV. 'अस्मे द्युम्नमधि रत्नं च देहि'। '*Dyumna*'—splendour, glory, strength, Mbh. i. 6406; 'wealth, possession'—M. W. S. E. Dict. p. 500, col. I.

आभर—आहर—Imp. 2. sg. *Vide*: SV. I. 10, 81.

अत्रिणम्—fr. rt. अद् *to eat*. 2. p.—cannibal—*Wils.*

सासाहा—class. sans. form is सासह; dr. सह् (मर्षणे, *to overcome*) यङ्लुक् imp. 2. sg; long vowel in स and final ह by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137 as पूरुष for पुरुष, cf. 'इहास्मा इह पूरुषाः' ṚV. 'अतो ज्यायांश्च पूरुषः' x. 90. 3.

दूढ्यम्—दुष्टमपरस्य अनिष्टं ध्यायति, one who meditates ill, malignant enemy. दुः is changed to दू, by 'पृषोदरादीनि यथोपदिष्टम्', Pāṇ. vi. 3. 109. dr. दुः—rt. ध्यै—क, 'आतोश्चोपसर्गे' Pāṇ. iii. 3. 106. ध of the rt. ध्यै is changed to 'ढ' by 'दुरो दाश-नाश-दभ-ध्येषूत्वमुत्तरपदादेः ष्टुत्वं च'—Vārtti. 'दूढ्यम्—पापधियम्' Nir. 5. 2, 23. cf. 'वयं जयेन पृतनासु दूढ्यम्',—may we subdue, in battles, the *malignant* person, ṚV. vii. 82. I; *again* 'मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः…' let not the *evil-minded* harm us. viii. 75. 9.

---

विश्वमना ऋषिः। एकं 'राक्षोघ्नं' साम अगस्त्य ऋषिः। उष्णिक् छन्दः। अग्निर्देवता। प्रातरनुवाके आग्नेयक्रतौ च विनियोगः।

१र २र ३ १ २ ३ १र २र ३ १ २ ३ २
यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे।
२उ ३ २उ ३ १ २
विश्वेदग्निः प्रति रक्षांसि सेधति॥ ८॥११४॥

यत् । वै । ऊम् इति । विश्ऽपतिः । शितः । सुऽप्रीतः । मनुषः । विशे । विश्वा । इत् । अग्निः । प्रति । रक्षांसि । सेधति ॥ ८ ॥

भाष्यसारः । **यद्वै—यदा खलु, विश्पतिः—प्रजानां पतिः गृहपतिर्वा, अग्निः शितः—हविर्भिः तीक्ष्णीकृतः समुज्ज्वलितः, सुप्रीतः सन् मनुषः—मानुषस्य, विशे—निवेशने, गृहे इत्यर्थः वर्त्तते, तदा सः अग्निः विश्वा इत्—सर्वाण्येव रक्षांसि—प्रतिषेधति निवारयति—हिनस्ति ॥ ८ ॥**

Whenever the lord of men (Agni), rendered sharp (i.e., ablaze) by oblations, remains content, in the abode of men, he wards off all the Rakṣasas (evil spirits).—8.

**सा०-भा० । 'विश्पतिः' विशां पतिः पालयिता, 'शितः' हविर्भिस्तीक्ष्णीकृतः सोऽग्निः 'सुप्रीतः' सुष्ठु प्रीतः सन् 'मनुषः' मनुष्यस्य 'विशे' निवेशने गृहे, 'यद्वै' यदा खलु वर्त्तते, तदानीम् 'अग्निः' 'विश्वा इत्' विश्वान्येव तस्य बाधकानि रक्षांसि 'प्रतिषेधति' हिनस्ति । षिधु गत्यां भौवादिकः । 'उ' प्रसिद्धौ ॥ ८ ॥**

**इति प्रथमस्याध्यायस्य द्वादशः खण्डः । इति द्वितीयप्रपाठकस्य प्रथमार्द्धे द्वितीया दशतिः ।**

**वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।**
**पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥**

**इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने आग्नेयपर्वणि प्रथमोऽध्यायः ।**

**समाप्तम् आग्नेयं पर्व आग्नेयं काण्डं वा ।**

**८ । ऋ० सं० ८ म० २३ सू० १३ ऋ० ।** Ṛ.V. reads **'विशि'** instead of **'विशे'**
विश्पतिः—*Vide* notes on विश्पते SV. I. 26 ;

विशे—विश्यते अस्मिन् इति = विशः, rt. विश्—aff. क, a house.

शितः—rt. शि (निशाने, to sharpen. 5. u.) or शो (तनूकरणे, 4. p.)—क्तः sharpened, i. e., rendered ablaze.

मनुषः—*gen. sg.* fr. मन् (अवबोधने, *to consider.* 8. Ā)—उस्, uṇ. ii. 115. *manus* is so called as he works after due thought or consideration. 'मनुसशब्दोऽपि मनुष्यवचन इत्यसकृदभिहितो वेदे'—the word *manus* is found, many times, in the Vedas to mean *man.*—Nir. Viv. in connection with the Mantra 'समिद्धो अद्य मनुषो दुरोणे देवो देवान यजसि जातवेदः' Ṛ.V. x. 110. 1. Nir. 8. 5. West. schs. have meant 'Manu's race', but the word has no concern with 'Manu'.

विश्वा—विश्वानि—'शेश्छन्दसि बहुलम्', Pāṇ. VI. 1. 70.

प्रति-सेधति—fr. √सिध् (गत्याम. *to go.* 1. p.)—averts ; between प्रति the prefix and सेधति, another word (रक्षांसि) intervenes, by 'व्यवहिताश्च' Pāṇ. 1. 4. 82.

---

# सामवेदसंहिता

## अथ द्वितीयोऽध्यायः

### ऐन्द्रं पर्व

अथ द्वितीयप्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः ।

शंयुर्बार्हस्पत्य ऋषिः । गायत्रीच्छन्दः । इन्द्रो देवता ।

१ २ ३ १र २र ३ २ ३ १ २
**तद्वो गाय सुते सचा पुरुहूताय सत्वने ।**
२उ ३ २ ३ १ २
**शं यद्गवे न शाकिने ॥ १ ॥ ११५ ॥**

तत् । वः । गाय । सुते । सचा । पुरुऽहूताय । सत्वने । शम् । यत् । गवे । न । शाकिने ॥ १ ॥

भाष्यसारः । हे स्तोतारः, वः—यूयम् , सुते—अभिषुते सोमे सति, पुरु-हूताय बहुभिर्यजमानैराहूताय, सत्वने—शत्रूणां नाशयित्रे धनानां दात्रे वा, इन्द्राय तत् स्तोत्रम्, सचा—सह मिलिता भूत्वा, गाय—गायत (व्यत्ययेन बहुवचनस्थाने एकवचनम्)। यत् स्तोत्रं शाकिने—शक्तिमते इन्द्राय, शं—सुखकरं भवति। गवे न—यथा गवे, तृणं सुखकरं भवति तद्वत् ॥ १ ॥

The soma-juice being pressed out, sing, ye together, to him, the awarder of wealth (or the vanquisher of foes), invoked by many, that panegyric, which is pleasant to him—the mighty hero, like fresh grass to the cow.—1.

**सा०-भा० ।** यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥

हे 'स्तोतारः!' 'वः' यूयम् 'सुते' अभिषुते सोमे सति 'पुरुहूताय' बहुभिर्यजमानैराहूताय 'सत्वने' शत्रूणां सादयित्रे यद्वा, धनानां सनित्रे दात्रे इन्द्राय 'तत्' स्तोत्रम् 'सचा' सह संहता भूत्वा 'गाय' गायत। 'यत्' स्तोत्रं

'शाकिने' शक्तिमते इन्द्राय 'शं' सुखकरं भवति। 'गवे न' यथा गवे यवसं सुखकरं तद्वदित्यर्थः ॥ १ ॥

१। ऋ० सं० ६म० ४५ सू० २२ ऋ०। उ० आर्चि० ८,२,४,१।

गाय—rt. गै, *to sing*. Imp. 2. sg. *for pl.* ( गायत )।

वः—यूयम् ; an instance of विभक्तिव्यत्ययः, an anomalous use of वः (generally accus. dat. or gen. pl.) for *nom. pl. vide* SV. 1. 5, 21.

सुते—*loc.* in the sense of nom. absolute. सोमे सुते सति ; 'when the soma-juice has been expressed for libation'—*Grfth* ; 'when your libation is poured out'—*Wils.*

सचा—सह, *together* ; 'सचा सह' Nir. 5. 5. cf. 'वसुभिः सचा भुवा'—being *together with* the Vasus, ṚV. ii. 31. 1 ; 'रथं नु मारुतं वयं···हुवामहे, आ यस्मिन्···सुरणानि बिभ्रती सचा मरुत्सु रोदसी'—we invoke the chariot of the Maruts (i.e., the cloud) wherein stands Rodasī, bearing delightful waters, *together with* the Maruts—ṚV. v. 56. 8. From rt. सच्, *to be associated.*

पुरुहूताय—much invoked—*Grfth.* पुरु=बहु, Ngh. 3. 1.

सत्वने—fr. सन् ( दाने, *to give* ) with aff. वनिप्,—the giver of riches ; or fr. rt. सद् ( विशरणे *to break*, 1. 6. p. ) in caus. sense,—the scatterer or overthrower of enemies.

शाकिने—शाक *means* शक्ति,—strength, (fr. rt. शक्—शक्लृ, *to be powerful*, 5. p.) शाकिन् (शाक—इन् अस्त्यर्थे)—mighty, powerful, strong ; acc. to some commentator, शाकिने is to be connected with गवे, as its qualifying adj ; the sense is—just as a peasant praises a strong bull, so do you offer pleasant praises to Indra.

---

श्रुतकक्षः सुकक्षो वा ऋषिः। गायत्रीच्छन्दः। इन्द्रो देवता।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
यस्ते नूनं शतक्रतविन्द्र द्युम्नितमो मदः।
१ २ ३ १२ २र
तेन नूनं मदे मदेः ॥ २ ॥ ११६ ॥

यः। ते। नूनम्। शतक्रतो इति शतऽक्रतो। इन्द्र। द्युम्निऽतमः। मदः। तेन। नूनम्। मदे। मदेरिति मदेः ॥ २ ॥

भाष्यसारः। हे शतक्रतो—इन्द्र, द्युम्नितमः—दीप्ततमः, यः मदः—सोमः, नूनं—पुरा, ते—त्वदर्थं अस्माभिरभिषुतोऽस्ति. तेन—सोमेन, नूनम्—इदानीम्, मदे—तत्पानेन तव मदे हर्षे सञ्जाते सति, अस्मान् मदेः—धनादिदानेन मादय ॥ २ ॥

O Indra, of a hundred deeds, rejoice with the most sparkling, exhilarating soma-juice, which has been poured out for thee, and in wild rapture caused by it (i.e., the drinking of the soma-juice), delight us (the worshippers with splendid gifts).—2.

**सा०-भा० ।** अत्र सोमः स्तूयते। हे 'शतक्रतो' शतविध-प्रज्ञान ! हे 'इन्द्र !' 'द्युम्नितमः' यशस्वितमः 'यः मदः',—माद्यन्त्यनेन इति मदः सोमः, यः सोमः 'नूनं' पुरा 'ते' त्वदर्थम् अस्माभिरभिषुतोऽस्ति। 'तेन' अस्माभिर्दीयमानेन सोमेन 'नूनम्' इदानीम् 'मदे' तत्पानेन तव मदे सञ्जाते सति अस्मानपि 'मदेः' धनादिदानेन त्वं मादय। मदी हर्षे, अत्रान्तर्भावितण्यर्थः। छन्दसि 'व्यत्ययो बहुलम्' (पा० ३,१,८५) इति शप्॥ २॥

२। ऋ० सं० ८ म० ९२ सू० १६ ऋ०।

Indra is pre-eminently fond of soma, it is his favourite nutriment; the epithet 'soma-drinker' (*soma-pā* etc.) is characteristic of him; soma is said to stimulate Indra to perform great cosmic actions, such as supporting the earth and the sky, spreading out the earth, it exhilarates him to carry out his warlike deeds, e. g., the slaughter of Vṛtra or the conquest of foes.

शतक्रतो—*voc.*—of hundred-fold wisdom—*Sāy.* शतम् means 'many' 'शतमिति बहु-नाम' Ngh. 3. 1. 'क्रतुरिति कर्मनाम' Nir. 2. 1. 'Indra is connected with many acts or religious rites as their performer'—Sāy. '*Śata-kratu*' is a name of Indra signifying—the possesser of a hundred or many powers or wise designs'—*Grfth.* 'Having a hundred powers'—Macdnll. *Ved. Myth.* p. 58. Perterson comments—'क्रतु is the same as Grk. '*Kratos*' and like that, means strength as well of the body as of the mind or of both.' '*Kratu*' never has, in the ṚV, the sense of the sacrifice, which was afterwards attributed to it. Hence *Śata-kratu*, a common epithet of Indra both in the ṚV. and later literature, meant originally—'He whose strength is as the strength of a hundred'. For the original mg. of क्रतु there is a fine defn. in the Ś. Br. 4. 1. 4. 1. 'स यदेव मनसाऽकामयत इदं मे स्यादिदं मे स्यादिदं कुर्वीयेति स एव क्रतुः'—*Geldner, Vedische Studien.* 1. 267.

द्युम्नितमः—fr. rt. द्युत् (दीप्तौ *to shine* 1. Ā); दीप्ततमः, brightest, extremely effulgent, most glorious.

मदेः—मादय, gladden or rejoice us; rt. मद् (हर्षे, *to be glad*, 4. p.)—Pot. (लिङ्) 2. sg. caus. (caus.affix being suppressed or hidden—अन्तर्भावितण्यर्थः)—*Sāy.* 'rejoice'—*Grfth.* 'मादयस्व'—rejoice thyself—Viv.

मदे—a commentator has taken मदे for मदेन (*loc.* in the place of instr. case.—an instance of विभक्तिव्यत्यय) and has construed it with तेन—Viv.

हर्यतः प्रगाथ ऋषिः । गायत्रीच्छन्दः । इन्द्रो देवता ।

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
**गाव उपवदावटे मही यज्ञस्य रप्सुदा ।**
३ १र २र ३ १ २
**उभा कर्णा हिरण्यया ॥ ३ ॥ ११७ ॥**

गावः । उपऽवद । अवटे । मही इति । यज्ञस्य । रप्सुदा । उभा । कर्णा । हिरण्यया ॥ ३ ॥

भाष्यसारः । **हे गावः अजाश्च, यूयं घर्मयागस्य साधनभूतम् अवटे—अवटं महावीर-नामकपात्रं प्रति उपवद—उपावत उपागच्छत । यज्ञस्य—घर्मयागस्य साधनभूते, रप्सुदा—रप् मन्त्रः तेन सुदे क्षारणीये दोहनीये गवाजयोः पयसी, मही—महती बहुले, प्रचुरतया आसेचनीये । महावीर-नामकस्य पात्रस्य उभा—उभौ, कर्णा—कर्णौ कर्णस्थानीयौ द्वौ रुक्मौ हिरण्यया—हिरण्मयौ, सुवर्णनिर्मितौ ॥ ३ ॥**

O cows (and goats), come near the vessel ('Mahāvīra'), as a large quantity of milk (both of cows and goats), to be milked with the recitation of *Mantra* or to be poured with *Mantra*, is required (for the *Gharma* ceremony); both the ears (i. e., the handles of the vessel called *Mahāvīra*) are made of gold.—3.

**सा०-भा० ।** **हे 'गावः' घर्मदुघाः ! यूयम् 'अवटे' अवटं महावीरं प्रति 'उपवद' उपावत वर्णव्यत्ययः ( पा० ३,१,८५ ) उपागच्छत । 'यज्ञस्य' घर्मयागस्य साधनभूते 'रप्सुदा' रप्सुदे आरिप्सोः फलदे लिप्सोरश्विनोर्दातव्ये वा यद्वा, रपणं शब्दनं रप् मन्त्रः तेन सुदातव्ये अथवा, सुद क्षरणे ( भ्वा० आ० ), रपा मन्त्रेण क्षारणीये दोहनीये ईदृशे गवाजयोः पयसी 'मही' महती बहुले अपेक्षिते । अत उपावत, गोशब्दो अजाया अप्युपलक्षकः, अजापयसोऽपि महावीरे आसेचनीयत्वात् । अपि च अस्य महावीरस्य 'उभा' 'उभौ' 'कर्णा' कर्णस्थानीयौ द्वौ रुक्मौ 'हिरण्यया' हिरण्मयौ सुवर्णरजतमयावित्यर्थः ॥ ३ ॥**

३ । **ऋ० सं० ८ म० ७२ सू० १२ ऋ० ।** R̥V. has **'उपावतावतम्'** instead of **'उपवदावटे'** the SV. reading. *White Yajur-veda* 33. 19. **उ० आ० सं० ७,३,१६,१ ।**

उपवद—for उपावत ; Sāyaṇa explains it as an instance of **वर्णव्यत्यय** i. e., an anomalous change of **त** to **द**, **पा** to **प**, mg.—come near, approach.

अवटे—for अवटम् ; the accus. case. sg. term. is changed to शे by 'सुपां सुलुक् पूर्वसवर्णाच्छे०' Pāṇ. vii. 1. 39. It means—the '*Mahāvīra*'—a cauldron used for holding the two kinds of milk of cows and goats, required for the '*Gharma*' ceremony.

मही—महती, neu. nom. dual referring to पयसी (both kinds of milk).

रप्सुदा—for रप्सुदे ; *neu. nom. dual.* Grfth. observes—the mg. of the word is unknown and he admits—his translation of this part of the stanza is conjectural. Sāyaṇa assigns several interpretations to this word e. g., (1) आरिप्सोः फलप्रदे—giving fruit to one who is about to begin ; (2) लिप्सोरश्विनो-र्दातव्ये—to be presented to the Aśvins, who desire to receive it ; (3) रपा मन्त्रेण सु-दातव्ये or दोहनीये—to be offered or milked (rt. सुद्) with recitation of Mantra ; of these, we have picked out the sense mentioned last, which seems to suit the text best ; dr. fr. rt. रप् ( व्यक्तायां वाचि, *to speak distinctly, to praise*—in the Vedas) + क्विप् = रप्, mg. मन्त्र, rt. षुद् ( क्षरणे, *to flow* ) the dual rfs. to two kinds of milk ( पयसी ) of cows and goats, with which the vessel '*Mahāvira*' is to be filled up.

उभा कर्णा – for उभौ कर्णौ, डा (आ) in the place of औ (nom. du.) by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. Similarly हिरण्यया for हिरण्ययौ ( छन्दसि हिरण्यय, Pāṇ. vi. 4. 175) ; the ears refer to the two handles of the vessel (cauldron) called 'Mahāvīra'.

Prof. Wils. translates this stanza—'Draw nigh, ye cows, to the cauldron (the two kinds of milk) in the sacrifice are plentiful and fruit-giving ; both ears (of the vessel) are golden' and remarks—'रप्सुदा is a very hard word to explain'. Mahīdhara gives a totally different explanation which is adopted by Benfey. He takes रप्सु to mean रूप ( beauty) and renders the lines—'O cows, approach the altar trench (*chātwāla* ), for heaven and earth (मही—mg. heaven and earth, Ngh. 3. 30) *give beauty* to the sacrifice ; both your ears are golden.' But this explanation is apparently faulty, as रप्सु and not रप्सु is found in the list of the synonyms of beauty—Ngh. 3. 7.

घर्म—*ordi.* means a cauldron, boiler, esp. the vessel in which the milk-offering to Aświns is boiled ; x. 181. 3. cf. 'घर्मश्चित् ततः प्रवृञ्जे य आसीदयस्मयः'—(we have accepted) the glittering, golden vessel for the *pravargya* ceremony, ṚV. v. 30. 15 ; Sāy. cites a text in his com. on v. 43. 7 to define it—*yad ghra ityatapat tad gharmasya gharmatvam iti śrutiḥ* ( so called, as it is put on the fire to heat the offering (a mixture of *soma*, ghee and milk, which the vessel contains) AV. vii ; VS. viii. 61. Ait. Br. ; Ś. Br. xiv. ; a cavity in the earth shaped like a cauldron ; A hot milk or any other beverage offered as an oblation (esp. to the Aśvins) ṚV. viii. 9. 4 ; AV. iv. 1. 2 ; Ś. Br. iv. xiv ; VS. xxxviii ; Sāy. *here* calls *Gharma*—a Yāga or a sacrificial ceremony.

श्रुतकक्ष ऋषिः। गायत्रीच्छन्दः।

३ १ २ २ १ २ ३ २ ३ १ २
अरमश्वाय गायत श्रुतकक्षारं गवे।
३ १ २ ३ १ २
अरमिन्द्रस्य धाम्ने ॥ ४ ॥ ११८ ॥

अरम्। अश्वाय। गायत। श्रुतकक्ष। अरम्। गवे। अरम्। इन्द्रस्य। धाम्ने ॥ ४ ॥

भाष्यसारः। हे श्रुतकक्ष, अश्वाय—अश्वलाभाय, अरम्—अलं गायत उच्चैरिन्द्रमुद्दिश्य स्तोत्रं कुरु, तथा गवे—गो-लाभार्थम्, इन्द्रस्य अलं गीतिं कुरु। पुनः धाम्ने—गृहलाभाय, अरं—पर्याप्तम्, इन्द्रस्य—इन्द्रम् ( कर्मणि षष्ठी ), स्तुहि ॥ ४ ॥

Sing highly to Indra for a horse, O Śrutakakṣa, sing highly for a cow and also for a house.—4.

**सा०-भा०।** श्रुतकक्ष ऋषिरात्मानमेव सम्बोधयति, हे 'श्रुतकक्ष' आत्मन्! 'अरम्' अलं 'गायत', वचनव्यत्ययः ( पा० ३, १, ८५ ), गाय गीतिं कुरु। किमर्थमिन्द्रोद्देशेन स्तुतिस्तत्राह—'अश्वाय' इन्द्रेण दीयमानायाश्वाय तदर्थम् 'अरम्' अलं गाय इन्द्रविषयं स्तोत्रं कुरु, तथा 'गवे' अलं गाय। 'इन्द्रस्य' इन्द्रकर्तृकाय 'धाम्ने' गृहाय तदर्थञ्च 'अरम्' पर्याप्तं स्तुहि, गृहादिकमिन्द्रः प्रयच्छति, तस्मै गायेति ; यद्वा, इन्द्रस्येति कर्मणि षष्ठी, गवादिलाभार्थमिन्द्रं स्तुहि ॥ ४ ॥

४। ऋ० सं० ८ म० ९२ सू० २५ ऋ०। ṚV. reads 'श्रुतकक्षारम्' instead of 'श्रुतकक्षारम्' ; In the ṚV. 'श्रुतकक्षः' is nom., while in the SV. it is voc.

*Grfth*, after the ṚV. text, renders—'now Śrutakakṣa sings his song, in order that cattle and the steed may come to him' ; he takes धामन् to mean 'Indra's might' or 'Indra's self' ; this sense is not, here, appropriate ; but धामन् is more common in the sense of house. Benfey's explanation is apparently inaccurate as he renders धाम्ने as 'for Indra's heaven.' The real idea is that horses, cows, houses or the like can be obtained by offering praises to Indra, so the sage is asked, in the above stanza, to sing praises to Indra. *Sāy.* says that the sage addresses himself.

इन्द्रस्य—Indra being the lord or owner of all riches, (e.g., the horse, the cow, the house) the sixth case may well be interpreted in the possessive case, or acc. to Sayaṇa, it may be taken in the place of accus. इन्द्रस्य ( = इन्द्रम् ) being more properly connected with स्तुहि, as its object.

गायत—*imp.* 2. *pl.* for गाय sg. of the same mood, ( *vide* 1. 115 ) ; अरम्—अलम्, aloud.

श्रुतकक्ष ऋषिः । गायत्रीच्छन्दः ।

१र २र ३ २ ३ २ ३ १ २
**तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।**
१र २र ३ १ २
**स वृषा वृषभो भुवत् ॥ ५ ॥११६ ॥**

तम् । इन्द्रम् । वाजयामसि । महे । वृत्राय । हन्तवे । सः । वृषा । वृषभः । भुवत् ॥ ५ ॥

भाष्यसारः । **तम् इन्द्रम्, महे वृत्राय—महान्तं वृत्रासुरम्, हन्तवे—हन्तुम्, वाजयामसि—सोमेन स्तुतिभिर्वा वाजवन्तं बलवन्तं कुर्मः । वृषा—बलवान्, सः—इन्द्रः, वृषभः—धनादि-सेचकः दाता, भुवत्—भवतु ॥ ५ ॥**

We animate Indra (with praises and offerings of the soma-juice), so that he may slay mighty Vṛtra ; may he be the liberal showerer of blessings or riches.—5.

**सा०-भा० ।** यजमाना आहुः, 'तम्' पूर्वोक्तलक्षणम् 'इन्द्रम्' 'वाजयामसि' सोमेन स्तुतिभिर्वाजयामः वाजवन्तं कुर्मः ; किमर्थम् ? 'महे' महान्तम् 'वृत्राय' अपामावरकं वृत्रासुरं 'हन्तवे' हन्तुम्, सोमपानेन मत्तः स्तुतिभिर्वा स्तुतः सन्, वृत्रहत्यायाञ्च, वाजयामसि ; वाजवन्तं करोतीत्यर्थे तत्करोतीति णिच्, 'णाविष्ठवत्' इति णेरिष्ठवद्भावात् 'टेः' (पा० ६,४,१५५) इति टिलोपः, 'विन्मतोर्लुक्' (पा० ५,३,६५) इति वचनान्मतुपो लुक् । 'वृषा' धनानां सेक्ता दाता । 'सः' इन्द्रः 'वृषभः' अस्माकं स्तोतृणां सोमस्य दातॄणां धनादिसेचको दाता 'भुवत्' भवतु ॥ ५ ॥

५ । ऋ० सं० ८ म० ९३ सू० ७ ऋ० । उ० आर्चि० ५, १, १०, १ ।

वाजयामसि—For gram. formation and mg. see Sāy.'s com. above. मस् is changed to मसि, by 'इदन्तो मसि' Pāṇ. vii. 1. 46 ; mg.—we render him powerful ; —'we make Indra very strong'—*Grfth.*

महे वृत्राय—for महान्तं वृत्रम्, an instance of विभक्ति व्यत्यय—an anomalous change of 2nd case to 4th case—peculiar only in the Vedas ; for slaying mighty Vṛtra. Indra's fight with Vṛtra is often alluded to in the hymns addressed to Indra ; *see* ṚV. 1. 32. etc.

हन्तवे—for हन्तुम्,—an instance of Vedic infinitive, aff. तवेन् is added in the place of तुम् by 'तुमर्थे से-सेन्०'—Pāṇ. iii. 4. 9.

वृषा (nom. sg. of the *stem* वृषन्), वृषभः—the munificent offerer of wealth ; The West. scholars, as a rule, render the terms as '*a bull*', having very little regard for the propriety of the context. Sāyaṇa has taken both the words as

drvd. fr. rt. वृष् ( सेचनहिंसाक्लेशनेषु, *to rain*, *to pour forth* etc., 1. p ). वृषा or वृषभ may also be derived fr. rt. वृष् ( शक्तिबन्धने—*to have virile power*, 10. Ā). So Grfth's rendering—'*vigorous hero*' for वृषा, वृषभः, can be accepted as right, but his interpretation—'a strong bull' in some passages, however literal, can in no way be acceptable. Prof. Max Müller also translates the word वृषा as *hero* in the verse 'ऋतस्य बुध्न उषसाम् इषण्यन् वृषा' etc., (ṚV. iii. 61. 7), *vide* his note on वृषन्,—Vedic Hymns, Part 1. p. 145. Prof. Wils. translates after Sāyaṇa—'a bounteous showerer of wealth'.

भुवत्—भवतु, may he be ; लेट् (Ved. subj.) 3. sg.

---

इन्द्रमातरो देवजामय ऋषिकाः । गायत्रीच्छन्दः ।

१ २ ३ २ ३ २ ३ १ २ ३ १र २र
त्वमिन्द्र बलादधि सहसो जात ओजसः ।
१र २र ३ १र २र
त्वं सन् वृषन् वृषेदसि ॥ ६ ॥ १२० ॥

त्वम् । इन्द्र । बलात् । अधि । सहसः । जातः । ओजसः । त्वम् । वृषन् । वृषा । इत् । असि ॥ ६ ॥

भाष्यसारः । हे इन्द्र, त्वं बलात् हेतोः अधि—अधिकः श्रेष्ठोऽसि । अपि च सहसः—बलात् त्वं जातोऽसि । हे वृषन्—बलवन् श्रेष्ठ, ओजस इत्—बलादेव निमित्तात्, वृषा असि—कामानां वर्षिता असि ॥ ६ ॥

Thou, Indra, art great for strength, thou art born of strength ; thou art, indeed, O mighty one, through power, the showerer of blessings or riches.—6.

**सा०-भा० ।** हे 'इन्द्र !' 'त्वम्' 'सहसः' परेषामभिभावुकाद् 'बलात्' 'अधि जातः' असि, अधिः पञ्चम्यर्थानुवादकः । वृत्रादिवधहेतुभूताद् बलाद्धेतोस्त्वं प्रख्यातो भवसि इत्यर्थः । अपि च 'ओजसः' ओजो नाम बलहेतुहृदयगतं धैर्यम्, तस्मादपि त्वं जातोऽसि । हे 'वृषन्' वर्षितः ! 'सन्' श्रेष्ठः 'त्वम्' 'वृषा इत् असि' कामानां वर्षितैव भवसि ॥ ६ ॥

६ । ऋ० सं० १० म० १५३ सू० २ ऋ० ।

बलात्, सहसः, ओजसः—these three words are synonymous ; Sāyaṇa draws a nice distinction : by बलम् and सहस् (fr. rt. सह् *to overpower*, 1. p—with

aff. असुन् ) he means *physical strength*, while by ओजस् he understands *mental vigour or spirit of the heart*; the author of *Vivaraṇa* (quoted by Pt. S. Sāmaśramin, Sām. V. *Bib. Ind.*), however, explains differently—'sprung from strength which overcomes enemies' vigour'—('ओजसः' = परकीयबलस्य, 'सहसः' (*abl.*) = अभिभावुकात् बलात् अधिजातः). Prof. Wilson renders—'from overpowering strength'; for etymology of ओजस्, *vide* SV. I. 11. We have given a very simple and perhaps adequate explanation aptly suiting the text, *see* our भाष्यसार and trans.

वृषन्—(*voc*), वृषा (*nom. sg.*) *vide* our notes on वृषा and वृषभ in the preceding stanza (SV. I. 119). Sāyaṇa means by both—'*the showerer*' i.e., the fulfiller of desires; but to avoid tautology, we have slightly differed from him by taking वृषन् to mean '*O mighty one*' (fr. rt. वृष्—*to have virile power*,) and वृषा (fr. rt. वृष् *to rain*, I. p.) in the sense of 'showerer of blessings, i. e., fulfiller of desires'.

---

गोषूक्त्यश्वसूक्तिनौ ऋषी । गायत्रीच्छन्दः ।

३ १र २र ३ २उ ३ १ २
यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्त्तयत् ।
२ १ २ ३ २ ३ २
चक्राण ओपशं दिवि ॥ ७ ॥ १२१ ॥

यज्ञः । इन्द्रम् । अवर्धयत् । यत् । भूमिम् । वि । अवर्त्तयत् । चक्राणः । ओपशम् । दिवि ॥ ७ ॥

भाष्यसारः । यज्ञः—यागः, इन्द्रम् अवर्धयत् । स इन्द्रः, यत्—यस्मात्, भूमिं—पृथिवीम् व्यवर्त्तयत्—वृष्ट्यादिदानेन विशेषेण वर्त्तमानामकरोत् । दिवि—अन्तरिक्षे, मेघम् ओपशम्—उपेत्य शयानम्, चक्राणः—कुर्वन् ॥ ७ ॥

Sacrifice has exalted Indra, he has (in his turn) made the world exist (by pouring rain), causing the cloud to rest (or settle) in the sky.—7.

**सा०-भा० ।** 'यज्ञः' यजमानैरनुष्ठीयमानो यागः 'इन्द्रं' देवम् 'अवर्धयत्' श्रूयते हि,—'इन्द्र इदं हविरजुषतावीवृधत महो ज्यायोऽकृत' इति, स इन्द्रः 'यत्' यस्मात् 'भूमिम्' पृथिवीं 'व्यवर्त्तयत्' वृष्ट्यादिप्रदानेन विशेषेण वर्त्तमानामकरोत् । किं कुर्वन्? 'दिवि' अन्तरिक्षे मेघम् 'ओपशम्' उपेत्य शयानं 'चक्राणः' कुर्वन् । यद्वा, आत्मनि समवेतो वीर्यविशेषः 'ओपशः' तमन्तरिक्षे कुर्वन् ॥ ७ ॥

७। ऋ० सं० ८ म० १४ सू० ५ ऋ०। उ० आर्चि० ८, १, ६, १।

यज्ञ इन्द्रमवर्धयत्—Sacrifice has magnified or augmented (the might of) Indra ; The mortals offer oblation in sacrifice to Indra, who, in his turn, being satisfied, pours rain on the earth—making her productive of crops., This idea is contained in the passage quoted by Sāyaṇa in his com., above from (इन्द्र इदं हविरजुषतावीवृधत महो ज्यायोऽक्रतेति) T. Br. 3, 5. 10. 3. and Śāṅkhāyana-Śrautasūtra, 1. 14. 13—the mg. of the passage quoted is—'Indra accepts or enjoys the oblation and is magnified i.e., becomes increased in power. In the Gītā (3. 11), we find a parallel idea in connection with the praise of sacrifice—'देवान् भावयतानेन ते देवा भावयन्तु वः, परस्परं भावयन्तः श्रेयः परमवाप्स्यथ:'—with this, you nourish the gods and may they nourish you in return, thus nourishing one another you shall reap the supreme good. Kalidāsa's Abhijñāna-Śakuntala has a stanza expressing a similar sentiment—'तव भवतु बिडौजा: प्राज्यवृष्टि: प्रजासु, त्वमपि विततयज्ञः स्वर्गिणः प्रीणयालम्'—may Indra shower abundant rain to the people of the earth for good harvest, and you (the king) also propitiate the denizens of heaven, by offering sacrifice to them—Act vii.

भूमिं व्यवर्त्तयत्—has supported the earth (with rain)—*Wils.*

चक्राणः—rt. कृ—aff. कानच्, by 'लिटः कानज् वा' Pāṇ. iii. 2. 106.

ओपशम्—fr. आ—उप—rt. शी *to lie*, उपेत्य शयानम् making cloud appear and rest in the sky—*Sāy.* Prof. Wilson translates the last line—'making the cloud quiescent in the firmament'.

---

गोषूक्त्यश्वसूक्तिनौ ऋषी। गायत्रीच्छन्दः।

१ २ ३ २उ ३ १२ २र ३ २ ३ २ ३ २
यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्।
३ २ ३ १ २
स्तोता मे गोसखा स्यात्॥ ८॥ १२२॥

यत्। इन्द्र। अहम्। यथा। त्वम्। ईशीय। वस्वः। एकः। इत्। स्तोता। मे। गोऽसखा। स्यात्॥ ८॥

भाष्यसारः। हे इन्द्र यथा त्वम् एक इत्—एक एव, वस्वः—वसुनः धनस्य, ईश्वरो भवसि, तथा अहं यत्—यदि, ईशीय—धनस्वामी भवेयम्, तदा मे—मम, स्तोता गोसखा स्यात्—गवां स्वामी भवेत्॥ ८॥

**सा०-भा० ।** हे 'इन्द्र !' 'यथा' 'त्वम्' 'एक इत्' एक एव केवलः 'वस्वः' वसुनः धनस्य ईशिषे, एवम् 'अहम्' अपि 'यद्' यदि 'ईशीय' ऐश्वर्ययुक्तः स्याम्, तदानीं 'मे' मम 'स्तोता' 'गोसखा स्यात्' गोभिः सहितो भवेत् ईश्वरस्य तव स्तोता कुतो हेतोर्गोसहितो न भवेत् ? अपि तु भवेदेवेत्यभिप्रायः ॥ ८ ॥

८ । ऋ० सं० ८ म० १४ सू० १ ऋ० । उ० आर्चि० ६,२,६,१ (2. 1184).

यत्—यदि ।

ईशीय—rt. ईश् ( ऐश्वर्ये, *to rule, to be master of*, 2. Ā ), pot. ( लिङ् ), 1. sg. If I were the lord….

वस्वः—*gen. sg.* for वसुनः ( class. skt. form),—of wealth ; व्यत्ययेन पुंलिङ्गम्—anomalously used in masc. instead of neu. ; absence of गुण (instead of वसोः, the form is वस्वः ) by 'जसादिषु छन्दसि वा वचनम्'—*Vārtti.* ; see under Pāṇ. vii. 3. 97. *gen.* for *accus.* by 'अधीगर्थदयेशां कर्मणि' Pāṇ. ii. 3. 52.

गो-सखा—possessed of i. e., master of cows or cattle.

——

मेधातिथिराङ्गिरस ऋषिः । गायत्रीच्छन्दः ।

१ २ ३ १ २ ३ १ २ ३ १ २
**पन्यं पन्यमित्सोतार आ धावत मद्याय**
१ २ ३ २ ३ १ २
**सोमं वीराय शूराय ॥ ९ ॥ १२३ ॥**

पन्यम्ऽपन्यम् । इत् । सोतारः । आ । धावत । मद्याय । सोमम् । वीराय । शूराय ॥ ९ ॥

भाष्यसारः । हे सोतारः—सोमाभिषवकारिणः अध्वर्यवः, मद्याय—मादयितव्याय, वीराय शूराय—इन्द्राय, पन्यं पन्यम् इत्—सर्वत्र प्रशंसनीयमेव, सोमम् आ धावत—नयत प्रयच्छत इत्यर्थः ॥ ९ ॥

O Adhvaryus (the ex-pressers of the soma-juice), come on with the offer of the most commendable soma-juice to Indra, the brave hero, to be cheered up.—9.

**सा०-भा० ।** हे 'सोतारः' अभिषोतारोऽध्वर्यवः । 'मद्याय' मादयितव्याय 'वीराय' विक्रान्ताय 'शूराय' शौर्यवते इन्द्राय 'पन्यम् पन्यम् इत्' सर्वत्र स्तुत्यमेव 'सोमम्' 'आ धावत' अभि गमयत प्रयच्छतेत्यर्थः ॥ ९ ॥

६। ऋ० सं० ८ म० २ सू० २५ ऋ०। उ० आर्चि० ८, २, १, १।

पन्यं पन्यम्—rt. पन् (स्तुतौ, *to praise* I. Ā)—य-प्रत्ययः ; repetition signifies intensity of action ( अतिशयार्थः ) ; 'most glorious'—*Wils.*

सोतारः—*voc. pl.*—rt. सु (*to press out juice*, 5. u.)—तृच्, rfs. to the '*Adhvaryus*', whose duty is to press out soma-juice.

वीराय—शूराय—rf. to Indra. Indra's greatness and power are lauded frequently in the Vedas ; neither gods nor men have attained to his valour (ṚV. i. 100. 15) ; All the gods yield to him, in might and strength (vii. 51. 7). He bears several epithets expressive of power, e.g., *Śakra*—'mighty' ; *Śachipati*, *Śachīvat*—'lord of might', 'possessed of power' ; *Śatakratu*—'having a hundred powers' etc. His strength and valour are also described by several other epithets : he is called '*tavas*'—strong, '*śūra*'—valiant, '*vīra*'—heroic. He is said to have unbounded force (i. 11. 4, 102. 6), of irresistible might (i. 84. 2).

मद्याय—to be gladdened, animated, or incited ; 'for his exhilaration'—*Wils.* 'for his joy'—*Grfth.*

---

काण्व प्रियमेध ऋषिः। गायत्रीच्छन्दः।

३ १ २ ३ २उ ३ २ ३ १ २ ३ १ २
इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्।
१ २ ३ १ २
अनाभयिन् ररिमा ते ॥ १० ॥ १२४ ॥

इदम्। वसो इति। सुतम्। अन्धः। पिब। सुऽपूर्णम्। उदरम्। हे अनाभयिन्। ररिम। ते। ॥ १० ॥

भाष्यसारः। हे वसो—धनात्मक धनवन् इन्द्र, इदं सुतं—अभिषुतम्, अन्धः—अन्नं सोमलक्षणम्, पिब, यथा उदरं तव सुपूर्णं भवेत्। हे अनाभयिन्—निर्भीक, ते—तुभ्यम्, ररिम—सोमं ददामः ॥ १० ॥

Here, O ordainer of wealth, is the pressed soma ; drink this libation, till thy belly is well full. O fearless (Indra), we offer it to thee.—10.

**सा०-भा०।** हे 'वसो' वासयितः इन्द्र! 'इदम्' पुरो वर्त्तमानं 'सुतम्' अभिषुतम् 'अन्धः' अन्नम् सोमलक्षणम् 'पिब' यथा 'उदरम्' त्वदीयं जठरं 'सुपूर्णम्' अतिशयेन सम्पूर्णं भवति तथेत्यर्थः। हे 'अनाभयिन्! आ समन्ताद् बिभेत्याभयी बिभेतेरौणादिक इनिः, न आभयी अनाभयी, तादृश हे इन्द्र! 'ते' तुभ्यं त्वदर्थं 'ररिम' उक्तगुणं सोमं दद्मः। रा दाने छान्दसो लिट्॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
द्वितीयाध्यायस्य प्रथमः खण्डः॥

इति द्वितीयप्रपाठकस्य प्रथमार्द्धे तृतीया दशतिः॥

---

**१०। ऋ० सं० ८ म० २ सू० १ ऋ०। उ० आर्चि० १, २, ८, १।**

वसो—*voc.*—प्रशस्तधनवन्, master of excellent wealth—*Viv.* 'O Vasu e. g., O bright, or good lord, or possessor of wealth'—*Stevenson*; 'giver of dwellings' —*Wils.*

अन्धस्—is a synonym of अन्नम्, Ngh. 2. 7.

पिबा—the final vowel is long, by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135.

ररिमा—the last vowel is long by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137. रा (दाने to give 2. p.) लिट् 1. pl; perf. used for pres. by 'छन्दसि लुङ्-लङ्-लिटः' Pāṇ. iii. 4. 6.

अनाभयिन् *voc*—आ—rt. भी (भये, *to fear*, 3. p.)—uṇ. aff. इनि = आभयी, न आभयी—अनाभयी, undaunted, fearless.

---

अथ द्वितीयप्रपाठकस्य प्रथमार्द्धे चतुर्थी दशतिः।

सूतकक्षः श्रुतकक्षो वा ऋषिः। गायत्रीच्छन्दः।

२उ ३ २ ३ १ २ ३ १र २र
**उद्घेदभि श्रुतामघं वृषभं नर्यापसम्।**
१ २
**अस्तारमेषि सूर्य॥ १॥ १२५॥**

उत्। घ। इत्। अभि। श्रुतऽमघम्। वृषभम्। नर्यऽअपसम्। अस्तारम्। एषि। सूर्य॥ १॥

भाष्यसारः। हे सूर्य! सूर्यात्मक इन्द्र! श्रुतमघं—ख्यातैश्वर्यम्, वृषभं—धनस्य वर्षकम्, नर्यापसं—नरहितकारिणम्, अस्तारं—धन-विकिरकम्, शत्रूणां वा

होतारम्, अभि—अग्रतः, उत्-एषि—उदयसि। त्वम्, इत्—एव, तस्य यज्ञे सूर्यरूपेण उदितो भवसि। अत्र परस्यां च ऋचि सूर्यरूपेण इन्द्रः स्तूयते ॥ १ ॥

O sun, thou risest upon (to present thyself in the sacrifice of) the person of renowned wealth, the showerer of riches, devoted to the good of the people, the overthrower of enemies (or the liberal donor of wealth).—1.

**सा०-भा०।** अस्मिन् तृचे सूर्यरूपेणेन्द्रस्य स्तुतिः क्रियते, असौ वा आदित्य इन्द्रः इति हारिद्रविकम्। हे 'सूर्य'! द्वादशसु भानुषु इन्द्रोऽपि सूर्यात्मना पठितः तस्मात् सूर्यात्मक, सुवीर्य हे इन्द्र! 'श्रुत-मघम्' सर्वदा देयत्वेन विख्यात-धनम्। अत एव 'वृषभम्' याचमानानां धनस्य वर्षितारम्, 'नर्यापसम्' नरहितं नर्यम्, नरहितकर्माणम्, 'अस्तारं' दानशौण्डम् औदार्यवन्तम् एतादृशानुभावम् अभित उदेषि। 'इत्' अवधारणे। त्वमेव तस्य यज्ञे सूर्यात्मना उद्गतोऽसि। 'घ' इति प्रसिद्धौ ॥ १ ॥

१। ऋ० सं० ८ म० ९३ सू० १ ऋ०। उ० आर्चि० ६, ३, ४, १।

Indra is here addressed in the form of 'Sūrya'; Indra and Sūrya are here identified, Indra being one of the twelve phases of the sun, (see Sāy.'s com., above). Some West. scholars, however, take 'Indra' and 'Sūrya' as separate gods, but this is not proper, because 'Sūrya' as a separate god-head cannot have a place among the hymns addressed to Indra. Indra is, in several passages of the ṚV, distinctly identified with Sūrya—*Hopkins, Religions of India*, p. 92. In ṚV. iv. 26. 1, Indra speaks of himself the same as Sūrya; in ii. 30. 1, Indra gets the name Savitṛ; in viii. 82. 4, Sūrya and Indra are both invoked, as if they are the same person; in x. 89. 2, Indra is directly called Sūrya. The Ś. Br. (1. 6. 4. 18) identifies Indra with the sun. Indra is one of the Ādityas, the different phases of the sun, *see* our notes on आदित्यान्, SV. 1. 91.

श्रुतामघम्—for श्रुतमघम्, famous for wealth. (मघ is a synonym of धनम्, Ngh. 2. 7) the vowel अ in त is lengthened by 'अन्येषामपि दृश्यते' Pāṇ. vi. 1. 135, while Pt. S. Sāmaśramī erroneously rfs. to the rule 'द्व्यचोऽतः' Pāṇ. vi. 1. 135, which is concerned with the verbs of two vowels only.

वृषभम्—'showerer of blessings'—*Wils. Vide*: our notes on वृषा and वृषभ SV. 1. 119.

नर्यापसम्—'the benefactor of men'—*Wils.* अपस् is a syn. of कर्म, Ngh. 2. 1.

नर्यं—नरहितम्, doing public good ; 'who works for man'—*Grfth.* cf. 'वज्रं धत्ते इन्द्रो नर्यपांसि कर्त्तवे'—Indra bears thunderbolt to do benevolent deeds to men, i. 85. 3.

अस्तारम्—fr. rt. अस् (क्षेपे, *to throw*, 4. Ā )—throwing or liberally pouring forth wealth.

---

सूतकक्षः श्रुतकक्षो वा ऋषिः। गायत्रीच्छन्दः।

२ ३ १र २र ३ १ २ ३ १ २
**यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य।**
३ १ २ ३ १ २
**सर्वं तदिन्द्र ते वशे ॥ २ ॥ १२६ ॥**

यत्। अद्य। कत्। च। वृत्रऽहन्। उत्ऽअगाः। अभि। सूर्य। सर्वम्। तत्। इन्द्र। ते। वशे ॥ २ ॥

भाष्यसारः। हे वृत्रहन्, सूर्य—सूर्यात्मक इन्द्र! अद्य यत् कच्च—यत् किञ्चित् पदार्थजातम्, अभि—प्रति, उदगाः—स्वतेजसा उदितोऽसि, तत् सर्वं स्थावरजङ्गमात्मकं जगत्, तव वशे—त्वदधीनं भवति ॥ २ ॥

O Indra—the sun, the slayer of Vṛtra, whatever thing thou risest upon, to-day, is all under thy sway.—2.

**सा०-भा०।** अत्र शौनकः—

'यदद्य कच्चेत्युदिते रवौ स्तुत्वा पुरन्दरम्।
गृणन्नपाहते रिप्रं वश्यं वा कुरुते जगत्' ॥ इति।

हे 'वृत्रहन्' वृत्रस्य अपामावरकस्य मेघस्य हन्तः! हे 'सूर्य' सूर्यात्मकेन्द्र! 'अद्य' अस्मिन् दिने 'यत् कच्च' यत् किञ्चित् पदार्थजातम् 'अभि' अभिमुखीकृत्य 'उदगाः' इण् गतौ उत्पूर्वः, तस्य लुङि गादेशः, उदयं प्राप्तवानसि, 'तत्सर्वं' पदार्थजातं ते तव वशे वशवर्त्ति स्वायत्तमस्ति ॥ २ ॥

२। ऋ० सं० ८ म० ९३ सू० ४ ऋ०। यजुः ३३, ३५।

Sāyaṇa's addl. notes in his com. on the Ṛ̥V. verse—'उदिते सूर्ये त्वदर्थं ( इन्द्रस्य क्रतोः ) प्राक् कर्म कुर्वन्ति जुह्वति च'।

There is a special efficacy in reciting this stanza at sun-rise. Śaunaka has a verse to this effect—'one, who recites the above *Rk*. 'यदद्य कच्च' etc., at sun-rise, belauding Indra (in the form of Sūrya)—gets rid of all evils or wins

over the world'. This *Ṛk.* is also referred to in the Sāmavidhāna-Brāhmaṇa, as a kind of स्वस्त्ययन (a redress of evil and source of welfare)—'उदिते यदद्य कच्च वृत्रहन्नित्याकालं स्वस्त्ययनम्' [ 2. 4. 1 ].

वृत्रहन्—for वृत्र *vide* our notes on वृत्राणि, SV. 1. 4. वृत्रः—मेघः, Ngh. 1. 10. Nir. vii. 3. 3. dr. (1) fr. rt. वृ ( आवरणे, *to cover*, 1. u)—वन्, आच्छादयति ह्यसौ नभः—'covers the sky' (cloud), (2) fr. rt. वृत् (*to go*)—रक् by स्फायितञ्चि०—the sense is 'it spreads all over the sky' (the cloud)—गच्छत्यसौ कृत्स्नं नभः, (3) fr. rt. वृध् ( *to swell* ) ध् is changed to त—'the cloud swells or is expanded in rainy season'. Sāy. has taken वृत्रहन् etymologically to mean—'the dispeller of cloud', as this is here an epithet referring to the sun.

उदगाः—उत्—rt. इ (*to go*, 2. p.)—aor. (लुङ्) 2. sg.

The author of Viv. explains this *Ṛk.* in a different way—'O Indra, the slayer of Vṛtra, whatever object the sun rises to shine over, to-day, is all in thy power', ( यत् किञ्चित् अभिलक्ष्य 'सूर्य' = सूर्यः, 'उदगाः' = उद्गच्छति प्रकाशयति, तत् सर्वं ते वशे वर्त्तते—Pt. Sāmaśramin's Ed. of Sām. V. *Bib. Ind.* p. 310. vol. 1 ); in this case 'सूर्य' stands for सूर्यः (*nom.* instead of *voc.*) nom. sg. term., सु is elided, by 'सुपां सुलुक् etc.' Pāṇ. vii. 1. 39.

---

भरद्वाज ऋषिः (क)। गायत्रीच्छन्दः।

१र २र ३ २ ३ १ २ ३ २ ३ १ २
**य आनयत्परावतः सुनीती तुर्वशं यदुम्।**
२ ३ २ ३ २ ३ १ २
**इन्द्रः स नो युवा सखा॥ ३॥ १२७॥**

यः। आ। अनयत्। पराऽवतः। सुऽनीती। तुर्वशम्। यदुम्।
इन्द्रः। सः। नः। युवा। सखा॥ ३॥

भाष्यसारः। यः इन्द्रः तुर्वशं यदुं च—तदाख्यौ राजानौ शत्रुजयार्थं दूरदेशं गतौ, सुनीती—सुनीत्या शोभन-नयनेन, परावतः—तस्मात् दूरदेशात्, आनयत्—आनीतवान्, युवा सः इन्द्रः नः अस्माकं सखा भवतु॥ ३॥

May ever-young Indra, who brought Yadu and Turvaśa from a distant land by right guidance, be our friend.—3.

**सा०-भा०।** 'यः इन्द्रः तुर्वशं यदु' च एतन्नसंज्ञौ राजानौ शत्रुभिः दूरदेशे प्रक्षिप्तौ 'सुनीती' सुनीत्या शोभनेन नयनेन 'परावतः' तस्माद् दूरदेशात् 'आनयत्' आनीतवान् 'युवा' तरुणः 'सः इन्द्रः' नः अस्माकं सखा भवतु॥ ३॥

---

(क) Ascribed to Saṃyu in the Ṛg-Veda.

३। ऋ० सं० ६ म० ४५ सू० १ ऋ०।

परावतः (*abl. sg.*)—from afar ; the word is a synonym of दूर (distance) 'आके, पराके, पराचैः, आरे, परावत इति पञ्च दूरनामानि' Ngh. 3. 26. cf. 'आ देवो याति सविता परावतः'—God Savitṛ comes *from the distance*, i. 35. 3 ; 'वैश्वानरं मातरिश्वा परावतः' Mātariśvan brought Vaiśvānara *from afar*, vi. 8. 4. 'सस्रार सीं परावतः'—she (Dawn) has fled *afar* iv. 30. 11 ; also *see* iv. 50. 3.

सुनीती (Instr. sg.)—for सुनीत्या ; Instr. sg. case-term. is substituted by the lengthening of the final vowel of the *stem* सुनीति। Similar uses are often found in the Vedas, as दुष्टुती for दुष्टुत्या, ii. 33. 4 ; धीती for धीत्या, मती for मत्या.

तुर्वशम्, यदुम्,—They are the eponymous heroes of too closely connected Aryan tribes ; In the Purāṇas they are mentioned as sons of Yayāti by Devayānī. *Turvaśa* appears in the Purāṇas as *Turvasu.* They are frequently mentioned together in the Ṛg-V. In i. 54. 6, they are mentioned as being protected by Indra ; in i. 174. 9, Indra is mentioned to have safely brought *Turvaśa* and *Yadu* across the rivers ; in i. 36. 18, *Turvaśa* and *Yadu* are invoked along with Agni ; in viii. 7. 18, Maruts are described to have bestowed wealth on Kaṇva along with *Turvaśa* and *Yadu* ; in viii. 45. 27, Indra helps them in the battle against Ahnavāyya ; in vii. 18. 6, *Turvaśa* along with Bhṛgus and Druhyus—being mentioned as the foes of king Sudās. Perhaps a reference is, here, made to an expedition led by these two heroes against a distant country, whence through good grace of Indra, they came back victorious.

युवा—'young' ; this epithet frequently occurs to characterize Indra—*vide* ṚV. i. 11. 4, where he is called '*Ajara*'—un-aging.

———

श्रुतकक्षः सुकक्षो वा ऋषिः। गायत्रीच्छन्दः।

१ २ ३ २ २३ १ २ ३ १र २र
मा न इन्द्राभ्या३दिशः सूरो अक्तुष्वायमत्।
३ १ २ ३ २
त्वा युजा वनेम तत्॥ ४ ॥ १२८ ॥

मा। नः। इन्द्र। अभि। आऽदिशः। सूरः। अक्तुषु। आ। यमत्। त्वा। युजा। वनेम। तत्॥ ४ ॥

भाष्यसारः। हे इन्द्र, आदिशः—आदेष्टा, सूरः—सर्वत्र सरणशीलः राक्षसः, अक्तुषु—रात्रिषु, नः—अस्मान्, अभि—प्रति, मा आयमत्—न आगच्छतु। यदि

आगच्छेत्, तदा तत् रक्षः—तं राक्षसम्, त्वा युजा—त्वया सहायेन, वनेम—हिंसाम ॥ ४ ॥

Let not, O Indra, the dominating evil spirit come upon us at nights; may we smite it down with thy help.—4.

**सा०-भा०।** हे 'इन्द्र!' 'आदिशः' आदेष्टा समन्तादायुधान्यतिसृजन् 'सूरः', सृ गतौ (भ्वा० प०), सर्वत्र सरणशीलः राक्षसः। 'अक्तुषु' रात्रिषु 'नः' अस्माकम् 'अभ्यायमत्' आ आभिमुख्येन 'मा' नियन्ताऽऽगन्ता भवतु। आगन्ता चेत् तदा 'तत्' रक्षः 'त्वा युजा' त्वत्सहायेन वयं 'वनेम' हन्याम। श्लथक्नथकथ हिंसार्थाः, वनु चेत्यत्र पठितत्वाद्धिंसार्थः ॥ ४ ॥

४। ऋ० सं० ८ म० ९२ सू० ३१ ऋ०। ṚV. reads **'आयमन्'** (pl.) instead of **'आयमत्'** (sg.) the SV. text above.

आदिशः—rt. दिश् (*to point or direct*, 6. p.)—कः in कर्त्तृवाच्य (Act. v.) by 'इगुपध०' Pāṇ. iii. 1. 135. आदेष्टा—commanding, domineering.

सूरः—fr. rt. सृ (गतौ, *to go*. 1. p.); here it rfs. to the evil spirit (रक्षः or राक्षसः) faring everywhere; sometimes this word, from the same etymology, means the sun, as according to old ideas, he goes all round the world.

अक्तुषु—at nights; अक्तु is a synonym of night. Ngh. 1. 7; Nir. 5. 28, 12. 23. cf. 'वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः···सूर्य'—Thou reachest, sun, heaven,... measuring the wide region and days with *nights*, i. 50. 7.

अभि-आयमत्—fr. rt. यम् (*to check, to obstruct*, 1. p.), लेट्, 3. sg.—let not (the evil spirit) assail upon us and obstruct our affairs.

त्वा—त्वया, by or with thee; *instr. sg. vide* SV. 1. 195. also 'त्वा दत्तेभी रुद्र शंतमेभि.' (त्वा दत्तेभिः = त्वया दत्तैः, *given by thee*)—ii. 33. 2. Whitney says—'a few instances of त्वा for त्वया are found in ṚV; see also Macdnll's Stu. Ved. Gram. Para 109 A; P. 104.

युजा—as a helper, an ally. *see* notes on युजम्, SV. 1. 130.

वनेम—may we destroy; fr. rt. वन् (हिंसायाम्, *to injure*, 1. p.)—pot. (विधिलिङ्) 1. pl. *vide* वनुष्यति—'अभिजिघांसति, वनुष्यतिर्हन्तिकर्मा'—(means *to slay*) —Nir. 5. 2. cf. 'दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यम्'—may we in battles, conquer the sinful person, who *seeks to injure* our long-spread sacrifice. —vii. 82. 1.

---

मधुच्छन्दा ऋषिः। गायत्रीच्छन्दः।

१ २ ३ २ ३ २ ३ १ २ ३ १ २
एन्द्र सानसिं रयिं सजित्वानं सदासहम्।
१ २ ३ १ २
वर्षिष्ठमूतये भर॥ ५ ॥ १२६ ॥

आ। इन्द्र। सानसिम्। रयिम्। सऽजित्वानम्। सदाऽसहम्। वर्षिष्ठम्। ऊतये। भर॥ ५॥

भाष्यसारः। हे इन्द्र! ऊतये—अस्मद्-रक्षार्थम्, सानसिं—सम्भजनीयम्, सजित्वानं—समानशत्रुजयशीलम्, सदासहं—सततशत्रुपरिभवकरम्, वर्षिष्ठं—प्रवृद्धं प्रभूतमित्यर्थः, रयिं—धनम्, आ-भर—आहर, देहि॥ ५॥

O Indra, give, for our protection, profuse excellent wealth, ever-conquering and overpowering our rivals.—5.

**सा०-भा०।** हे 'इन्द्र'! ऊतये अस्मद्रक्षार्थम् 'रयिम्' धनम् 'आ भर' आहर। कीदृशं रयिम्? 'सानसिम्' सम्भजनीयम्, 'सजित्वानम्' समानशत्रुजयशीलम्—धनेन हि शूरान् भृत्यान् सम्पाद्य शत्रवो जीयन्ते, 'सदासहम्' सर्व्वदा शत्रूणामभिभवनहेतुम्, 'वर्षिष्ठम्' अतिशयेन वृद्धम् प्रभूतमित्यर्थः॥ ५॥

५। ऋ० सं० १ म० ८ सू० १ ऋ०।

आ—the prefix, to be connected with भर, *vide* our notes on SV. 1. 1, re. the rules on Vedic prefixes.

सानसिम्—fr. rt. सन् (संभक्तौ, *to adore*, 8.p.) aff. असि,—adorable, i.e., excellent; 'enjoyable'—*Wils*; gained by fair means, so commanding respect of the people or of society. Sāy. derives—'वन षण संभक्तावित्यस्मादसिप्रत्ययो वृद्धिरन्तोदात्तत्वं च 'सानसि-वर्णसी'त्यादिना' uṇ. iv. 107. *Ṛk. Bhāṣya* on the *corres. ṚV. verse.* This word is not of infrequent occurrence, *vide*: i. 8. 1; i. 75. 2; i. 175. 2; iii. 59. 6; iv. 15. 6; vii. 93. 2; viii. 21. 2; ix. 85. 5; ix. 100. 4; ix. 106. 2, 3; x. 63. 14; x. 140. 4, 5; Roth means by this word—'winning, making booty, victorious; Macdnll. derives fr. सन् *to gain*, and means—*bringing gain.*

स-जित्वानम्—स is the abbreviation of समान in cd; जित्वानम्—dr. rt. जि—क्वनिप्, 2. sg. Sāy. derives thus—"समानान् अरीन् जेतुं शीलमस्य (conqueror of rivals.) 'अन्येभ्योऽपि दृश्यते' (Pāṇ. iii. 2. 75) इति क्वनिप्। उपपदसमासः। 'समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु' (Pāṇ. vi. 3. 84) इति समानस्य सः"—Sāy's com. on the ṚV. verse. 'The source of victory'—*Wils.*

सदासहम्—fr. rt. सह् ( अभिभवे, *to prevail over, to overcome*, 1. Ā. ),—always prevailing over enemies ; 'the humbler of our foes'—*Wils.*

आ-भर—for आ हर ; ह is changed to भ, by 'हग्रहोर्भश्छन्दसि' *Vartti, see* under Pāṇ. viii. 2. 35.

वर्षिष्ठम्—most abundant ; वृद्ध—इष्ठन् spv. dg. Pāṇ v. 3. 55. वृद्ध is changed to वर्ष by 'प्रियस्थिर०' Pāṇ. vi. 4. 157.

---

मधुच्छन्दा ऋषिः । गायत्रीच्छन्दः ।

१ २ ३ १ २ ३ २उ ३ १ २
**इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।**
१ २ ३ १ २ ३ १ २
**युजं वृत्रेषु वज्रिणम् ॥ ६ ॥ १३० ॥**

इन्द्रम् । वयम् । महाऽधने । इन्द्रम् । अर्भे । हवामहे । युजम् । वृत्रेषु । वज्रिणम् ॥ ६ ॥

भाष्यसारः । **वयं महाधने—प्रभूतधनार्थं निमित्तार्थे सप्तमी, अर्भे—स्वल्पे धने स्वल्पधनार्थमपि, युजं—सहायकम्, वृत्रेषु—आवरकेषु धनलाभविरोधिषु शत्रुषु तेषां निवारणाय, वज्रिनं—वज्रधरम्, इन्द्रं हवामहे—आह्वयामः ॥ ६ ॥**

We invoke Indra, for abundant wealth, as well as for smaller amount,—Indra, who is our friend wielding thunder-bolt against our obstructing enemies.—6.

**सा०-भा० ।** 'वयम्' अनुष्ठातारः 'महाधने' प्रभूतधननिमित्तम् 'इन्द्रम्' 'हवामहे' आह्वयामः 'अर्भे' अर्भके स्वल्पेऽपि धने निमित्तभूते सति इन्द्रं हवामहे। कीदृशम् इन्द्रम्? 'युजं' सहकारिणं समाहितं वा, 'वृत्रेषु' शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय 'वज्रिणं' वज्रोपेतम्। महाधनशब्दो यद्यपि संग्रामवाची तथापि महद्धनमत्र विवक्षितम् ॥ ६ ॥

६ । ऋ० सं० १ म० ७ सू० ५ ऋ० ।

महाधने—for great wealth ; *loc.* here signifies 'for the sake of' ( निमित्तार्थे ) ; the word महाधन also means 'war', Ngh. 2. 17. Some commentator (the author of Vivaraṇam) interprets—'in great war as well as in smaller battles or conflicts'. Grfth follows this explanation and translates the passage—'in mighty battle and in lesser fight'.

युजम्—'युज्यते' इति युक्—सहायः, तम्—Viv. rt. युज् (+Ā)—aff. क्विप्। 'युजेरसमासे' (Pāṇ. vii. 1. 71). इति नुम् न भवति—Say.'s com. on ṚV. verse. 'युजिरितीकारनिर्देशात् युज समाधावित्यस्य नुम् न भवति, यथा युजमापन्ना ऋषयः; अन्यत्र युञ्जम्'—काशिका।

अर्भे—syn. of small, little, Ngh. 3. 2; dr. rt. ऋ—भन् by 'अर्त्ति-गृभ्यां भन्' uṇ. iii. 152. cf. 'नमो महद्भ्यो नमो अर्भकेभ्यः,' i. 27. 13.

हवामहे—we invoke, call; rt. ह्वे (*to call*. 1. Ā.).—pres. 1. pl. Sāy. derives—'ह्वेञ् स्पर्द्धायां शब्दे च। ञित्त्वात् कर्त्रभिप्राये (Pāṇ. i. 3. 72). आत्मनेपदम्। कर्त्तरि शप् (Pāṇ. iii. 1. 68). ह्वः संप्रसारणम् (Pāṇ. vi. 1. 32) इत्यनुवृत्तौ बहुलं छन्दसि (Pāṇ. vi. 1. 34) इति संप्रसारणं वकारस्योकारः। परपूर्वत्वम्। गुणावादेशौ। 'अतो दीर्घो यञि' (Pāṇ. vii. 3. 101) इति दीर्घत्वम्'—Sāy.'s com. on the corres. ṚV. verse, rfd. above.

वृत्रेषु—dr. fr. rt. वृत् (वर्त्तने, *to be*)—रक्, uṇ. ii. 13.—प्रतिकूलतया वर्त्तन्ते इति वृत्राणि शत्रुकुलानि, enemies are called *Vṛtras*, as they remain ever perverse—Sāy.'s com. on ṚV. verse, *vide* our notes on वृत्राणि, SV. 1. 4.

———

त्रिशोक ऋषिः। गायत्रीच्छन्दः।

१ २ ३ १ २ ३ १ २र ३ १ २
**अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे।**
१ २ ३ १ २
**तत्रादेदिष्ट पौंस्यम्॥ ७॥ १३१॥**

अपिबत्। कद्रुवः। सुतम्। इन्द्रः। सहस्रऽबाह्वे। तत्र। अदेदिष्ट। पौंस्यम्॥ ७॥

भाष्यसारः। इन्द्रः कद्रुवः—कद्रुनामकस्य ऋषेः, सुतम्—अभिषुतं सोमम्, अपिबत्—पीतवान्; सहस्रबाह्वे—सहस्रबाहुनामकं शत्रुमहन्। यद्वा, विवरणमते सहस्रं—बहवः, बाहवः—कर्त्तारः (बाहुशब्देन अवयवेन समुदायस्य सम्बन्धात् कर्त्ता उच्यते), यत्र तत् सहस्रबाहु-सत्रम्, तस्मिन् सोमं पीतवान् इत्यर्थः। तत्र—तदा तत्र सत्रे वा, इन्द्रस्य पौंस्यं—वीर्यम्, अदेदिष्ट—अदीप्यत॥ ७॥

Indra drank Kadru's soma-juice in the sacrifice conducted by a thousand hands (i. e., performers); there his manly vigour splendidly shone forth.—7.

**सा०-भा०।** 'इन्द्रः' 'कद्रुवः' कद्रुनामकस्य ऋषेः सम्बन्धिनं 'सुतम्' अभिषुतं सोमम् 'अपिबत्' पीतवान्। 'सहस्रबाह्वे' सहस्रबाह्वाख्यं शत्रुम् अहन्निति शेषः। 'तत्र' तस्मिन्नवसरे 'पौंस्यम्' इन्द्रस्य वीर्यम् 'अदेदिष्ट' अदीप्यत॥ ७॥

७। ऋ० सं० ८ म० ४५ सू० २६ ऋ०। Ṛ̣V. has 'अदविष्ट' instead of 'अदेविष्ट'।

कद्रुवः—*gen. sg.* of *stem.* कद्रू (with long ū), the Ved. form of कद्रु by 'कद्रुकमण्डल्वोश्छन्दसि'—Pāṇ. iv. 1. 71 ; Sāyaṇa explains—'of a sage named Kadru.' The St. Petersburg Dict. takes it to mean—'from a Kadru or soma-vessel. Benfey renders—*Der Kadru Trank hat eingeschlürft, Indra zur tausendarmgen schlacht.*

पौंस्यम्—fr. *stem.* पुम्स्, by adding tad. aff. ष्य,—manhood, virility, manly strength—Ngh. 2. 9.

सहस्रबाह्वे—'सहस्र' signifies many,—being a synonym of बहु Ngh. 3. 1. बाहु (hand) represents 'man'—the performer, possessed of arms ; part used for whole. Thus 'सहस्रबाहवः' can aptly be expressed by the Eng. phrase—'a thousand hands', where the word '*hands*' stands for 'men'—the workers ; Benfey takes 'Sahasra-bāhve' as a vedic dative without guṇa in the sense of 'battle' ; for the mg. of the term सहस्रबाह्वे, see our translation and explanation adopted from 'Vivaraṇam' in our भाष्यसार and trans. Grfth. translates—'in the battle of a thousand arms.'

We have not accepted Sāyaṇ's interpretation—'he killed the foe named 'Sahasra-bāhu', because nowhere else we find any reference to this curious foe in the whole legendary literature, either Vedic or Puranic, concerning Indra. Moreover, Sāy. has to supply an addl. word अहन् (killed), not found in the text, in support of his explanation This we discard emphatically. Sāy. again in his com. on Ṛ̣V. verse. explains differently 'सहस्रबाहोः शत्रून् अहन् इति शेषः'—he killed also the enemies of the thousand-armed.

अदेदिष्ट—rt. दिश्, *to point*, 6. u. यङ्लुक्, imperf. 3. sg.

---

वसिष्ठ ऋषिः। गायत्रीच्छन्दः।

३ १    ३ २ ३ १र    २र
वयमिन्द्र त्वायवोऽभि प्र णोनुमो वृषन्।
३ २    १ २
विद्धी त्व३स्य नो वसो ॥ ८ ॥ १३२ ॥

वयम्। इन्द्र। त्वाऽयवः। अभि। प्र। नोनुमः। वृषन्। विद्धि। तु। अस्य। नः। वसो इति ॥ ८ ॥

भाष्यसारः। हे वृषन्—कामानां वर्षक इन्द्र! त्वायवः—त्वाम् यष्टुम् इच्छन्तः वयं वासिष्ठाः, त्वाम् अभि—उद्दिश्य, प्र-णोनुमः—अत्यर्थं स्तुमः। हे वसो—

धनात्मक धनप्रद इन्द्र ! अस्य—इदम्, नः—अस्माकं स्तोत्रम्, तु—क्षिप्रम्, विद्धि—अवधारय ॥ ८ ॥

O Indra, showerer (of blessings), we (the Vāsiṣṭhas), thy adherents, offer songs of praise to thee. O master of riches, take note of this (our prayer).—8.

**सा०-भा०।** हे 'वृषन्' कामानां वर्षितः 'इन्द्र !' 'त्वायवः' त्वत्कामाः 'वयं' वासिष्ठाः त्वाम् 'अभि प्र-णोनुमः' प्रकर्षेण स्तुमः। हे 'वसो' वासयितः इन्द्र ! 'अस्य' इदम् 'नः' अस्मदीयं स्तोत्रं 'तु' क्षिप्रं 'विद्धि' अवधारय ॥ ८ ॥

८। ऋ० सं० ७ म० ३१ सू० ४ ऋ०।

त्वायवः (nom. pl.—of the *stem.* त्वायु)—त्वाम् इच्छन्तः, युष्मिच्छन्त इत्यर्थः। त्वाम्—क्यच्—उ, 'सुप आत्मनः क्यच्' Pāṇ. iii. 1. 8. 'क्याच्छन्दसि' (उ) Pāṇ. iii. 2. 170; *lit.* desiring to have thee in our midst, in order to offer sacrifice to thee; 'faithful to thee'—*Grfth.* 'devoted to thee'—*Wils.*

प्र-णोनुमः—fr. rt. नु (स्तुतौ, *to praise*, 1. p.) perf. 1. pl. Macdnll's Stu. Ved. Gram. appendix 1, *List of verbs p. 396*—vedic perf. form नोनाव is given there, classical form is नुनाव।

वृषन्—*vide* our notes on 1. 119.

अस्य—for इदम्, *gen.* in the place of *accus.* an instance of विभक्ति-व्यत्यय peculiar in the Vedas; *vide* notes on इन्द्रस्य, SV. 1. 118.

विद्धी—विद्धि—fr. विद् (*to know*, 2. p.);—pay heed to, listen carefully, 'mark' —*Grfth*; the final vowel is lengthened in the Saṃhitā-text by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137.

वसो—*voc.*—for mg. vide notes on SV. 1. 36, 41, 58, 84, 124.

---

काण्व-त्रिशोक ऋषिः। गायत्रीच्छन्दः।

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।
३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा ॥ ९ ॥ १३३ ॥

आ। घ। ये। अग्निम्। इन्धते। स्तृणन्ति। बर्हिः। आनुषक्। येषाम्। इन्द्रः। युवा। सखा ॥ ९ ॥

भाष्यसारः। ये ऋषयः आ घ—अग्रतः खलु, अग्निम् इन्धते—प्रज्वालयन्ति, येषां च युवा इन्द्रः सखा—स्तुत्य-स्तोतृसम्बन्धेन सखिभूतो भवति, ते आनुषक् सततम्, बर्हिः, स्तृणन्ति—यज्ञार्थं वितन्वन्ति ॥ ६ ॥

Ever-young Indra is the friend of those, who inflame the fire and strew, in continuous order, Kuśa grass (for sacrifice).—9.

**सा०-भा०।** 'ये' ऋषयः 'आ घ' आभिमुख्येन खलु 'अग्निम्' 'इन्धते' दीपयन्ति, 'येषां' च 'युवा' नित्य-तरुणः 'इन्द्रः' 'सखा' भवति, ते 'आनुषक्' आनुपूर्व्येण 'बर्हिः 'स्तृणन्ति' ॥ ६ ॥

६। ऋ० सं० ८ म० ४५ सू० १ ऋ०। उ० आर्चि० ५, २, २१, १।

घा—for घ—an *indec.* used generally to make up the metrical deficit (पादपूरणे)* ; the vowel is lengthened in Saṃhitā-text by 'ऋचि तु-नु घ०' Pāṇ. vi. 3. 133 ; re. the lengthing of the vowel of घ, instead of this special rule, Pt. S. Sāmaśramin erroneously quotes the rule 'निपातस्य च' vi. 3. 136.

इन्धते—rt. इन्ध् (*to ignite, kindle*) pres. (लट्) 3. pl.

स्तृणन्ति—rt. स्तॄ आस्तरणे, (*to strew* 9. u.—pres. (लट्) 3. pl.

आनुषक्—an *indec.* fr. अनु—rt. सञ्ज्, mg.—always, often, frequently, uninterruptedly ; *vide.* SV. 1. 82 ; it means also आनुपूर्व्यम्—one after the other, i.e., in continuous order. Nir. 6. 14. cf. 'प्र यज्ञ एत्वानुषक्…' let the sacrifice proceed uninterruptedly—ṚV. v. 26. 8.

सखा—Indra is intimately or friendly related with the sacrificers, inasmuch as the latter come in touch with Indra in the way of offering prayers and oblations to him (स्तुत्य-स्तोत्र-सम्बन्धेन सखिभूतः). 'More generally Indra is spoken of as the compassionate helper, the deliverer and advocate of his worshippers (ṚV. viii. 85. 20) ; He is very often called the friend of his worshippers (x. 152. 27).

———

त्रिशोक ऋषिः। गायत्रीच्छन्दः।

३ २उ ३ २ ३ २ ३ ३ ३ १ २ ३ १र २र
**भिन्धि विश्वा अप द्विषः परिबाधो जही मृधः।**
१ २ ३ १र २र
**वसु स्पार्हं तदा भर ॥ १० ॥ १३४ ॥**

* We quote from Nir. i. 4. to show that indeclinables are used in different senses—अथ निपाता उच्चावचेष्वर्थेषु निपतन्ति, अपि उपमार्थे (sometimes convey the sense of comparison), अपि पादपूरणाः (sometimes for filling up metrical deficit etc.).

भिन्धि । विश्वाः । अप । द्विषः । परि । बाधः । जहि । मृधः । वसु । स्पार्हं । तत् । आ । भर ॥ १० ॥

भाष्यसारः । हे इन्द्र ! विश्वाः द्विषः—सर्वाः शत्रुसेनाः, अप भिन्धि—विदारय, बाधः—बाधकान्, मृधः—शत्रून् संग्रामान् वा, परिजहि—विनाशय, ततः स्पार्हं—स्पृहणीयम्, तत्—प्रसिद्धम्, वसु—धनम्, आ भर—आहर, देहीत्यर्थः ॥ १० ॥

Disperse all our enemies, slay the obstructing foes, (or put an end to warfare) and bestow on us covetable riches.—10.

**सा०-भा० ।** हे 'इन्द्र!' त्वं 'विश्वाः' सर्वाः 'द्विषः' द्वेष्ट्रीः शत्रुसेनाः 'अप भिन्धि' विदारय । 'बाधः' हिंसित्रीः 'मृधः' संग्रामान्, 'स्पृधः मृधः' इति संग्रामनामसु पठितत्वात्,—'परिजहि' हिंस्याः । ततः तासां 'स्पार्हं' स्पृहणीयं 'तत्' प्रसिद्धं 'वसु' 'आ भर' अस्मभ्यम् आ-हर ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ इति द्वितीयप्रपाठकस्य चतुर्थी दशतिः ॥

१० । ऋ० सं० ८ म० ४५ सू० ४० ऋ० । उ० आर्चि० ४, १, ६, १ ।

परि-जही—परिजहि, the final vowel is lengthened by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3.137. स्पार्हम्—in this sense—cf. 'त्वया वयं ब्रह्मणस्पते स्पार्हा वसु···आददीमहि', ii. 23.9.

मृधः—*fem. pl.*—wars, Ngh. 2.17 ; fr. rt. मृध, *to kill*, 1.p. ; *ordi.* the word मृध् means battle, fight ; sometimes it means—a foe, adversary. *vide* ṚV. 1.174.5, *also* cf. 'वि न इन्द्र मृधो जहि', ṚV. x. 152.4, SV. 2. 1218, where मृधः *means* enemies.

---

अथ द्वितीयाध्यायस्य तृतीयः खण्डः । द्वितीयप्रपाठकस्य पञ्चमी दशतिः ।

कण्वोघौर ऋषिः । गायत्रीच्छन्दः ।

३ १ २ ३ २ ३ १ २ ३ १ २र
इहेव शृण्व एषां कशा हस्तेषु यद्वदान् ।
१र २र ३ १ २
नि यामञ्चित्रमृञ्जते ॥ १ ॥ १३५ ॥

इह । इव (एव) । शृण्वे । एषाम् । कशाः । हस्तेषु । यत् । वदान् । नि । यामन् । चित्रम् । ऋञ्जते ॥ १ ॥

भाष्यसारः। एषां मरुताम्, हस्तेषु स्थिताः कशाः यद् वदान्—वदन्ति ध्वनिं कुर्वन्ति, तं ध्वनिम् इहेव—अत्रैव स्थितः, शृण्वे—शृणोमि। स ध्वनिः यामन्—संग्रामे, चित्रम्—विविधं शौर्यम्, न्यृञ्जते—अत्यर्थमलंकरोति। यद्वा, चित्रम्—विचित्रम्, यामम्—रथम्, नि-ऋञ्जते—नियमेन गमयति। यदा एषां हस्तेषु कशाः वदन्ति, यदा च एषां चित्रं रथं सारथयो नियमेन गमयन्ति, तदा स शब्दः इहैव श्रूयते—इति विवरणम्॥ १॥

Verily from here, I hear the cracking of the whips in their (of the Maruts) hands, the snapping note adds to the vigour in war, (or orderly leads the beautiful car).—1.

**सा०-भा०।** 'एषां' मरुतां 'हस्तेषु' स्थिताः 'कशाः' स्व-स्व-वाहन-ताडन-हेतवः, 'यद् वदान्' यद् वदन्ति यं ध्वनिं कुर्वन्ति, तं ध्वनिम् 'इहेव'—अत्रैव स्थित्वा 'शृण्वे'—शृणोमि। स ध्वनिविशेषः 'यामन्'—संग्रामे, 'चित्रं'—विविधं शौर्यं 'न्यृञ्जते' नितरामलंकरोति। 'ऋञ्जतिः प्रसाधनकर्मा' (नि० ६, २१) इति यास्कः॥ १॥

१। ऋ० सं० १ म० ३७ सू० ३ ऋ०।

The Maruts are here mentioned, as they are the chief friends, allies and intimate associates of Indra; they are alluded to, in innumerable passages, as assisting him in his warlike exploits. Indra is so closely associated with them that *Marutvan*—'accompanied by the Maruts'—has become a characteristic epithet of him.

Wils. translates the last line—'wonderfully inspiring courage in the fight'.

शृण्वे—Sāyaṇa derives—'श्रु श्रवणे। व्यत्ययेनाऽऽत्मनेपदम्। 'श्रुवः शृ च'ेति शृ: (iii. 1. 74.) 'हुश्नुवोः सार्वधातुके' इति यणादेशः' (vi. 4.87)—Sāy.'s com. on corres. ṚV. verse (rfd. to above).

वदान्—fr. rt. वद् (व्यक्तायां वाचि, *to make sound*)—लेट् (subj.) 3. pl. आट् (आ) is added by 'लेटोऽडाटौ' Pāṇ. iii. 4. 94, 'इतश्च लोपः' Pāṇ. iii. 4. 97. इकारलोपे संयोगान्तलोप—(the final letter of the conj. consonants drops).

यामन्—for यामनि, in battle; 'on the way'—*Grfth*; loc.term. is elided by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. न् is retained by 'न ङिसंबुद्ध्योः' Pāṇ. viii. 2. 8. यामन् (fr. rt. या, *to go*) mg. *on the course*, occurs in i. 85. 1. ('प्र ये शुम्भन्ते ... यामन्') also in x. 127. 4. ('नि ते यामन्नविक्ष्महि'), where यामन् means *at her approach*.

ऋञ्जते—fr. rt. ऋजि (6. u.) प्रसाधने—Nir. 6. 21. *vide* Mcdnll's Ved. Gram. List of verbs. p. 374. *See* our notes on ऋञ्जसे, SV. 1. 12.

त्रिशोक ऋषिः। गायत्रीच्छन्दः।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः।
३ १ २ ३ १ २ ३ २
पुष्टावन्तो यथा पशुम्॥ २ ॥ १३६ ॥

इमे। ऊम् इति। त्वा। वि। चक्षते। सखायः। इन्द्र। सोमिनः। पुष्टऽवन्तः। यथा। पशुम्॥ २॥

भाष्यसारः। **हे इन्द्र त्वां सोमिनः—अभिषुतसोमसनाथाः, सखायः—सखिभूताः, उ—खलु, इमे अस्मदीया ऋत्विजः, पुष्टवन्तः—पोषणकरतृणयुक्ताः, यथा पशुं—पशुमिव, वि-चक्षते—विपश्यन्ति। पशुपालकाः घासेन गृहीतेन पशोस्तर्पणाय परमया प्रीत्या युक्तास्तमेव पशुमपेक्षन्ते, तद्वन्मदीया ऋत्विजः सोमवन्तः तेनैव सोमेन गृहीतेन तर्पणार्थं त्वां पश्यन्तीत्यर्थः॥ २॥**

These (our priests)—thy friends, O Indra, with soma-juice (in hands), look for thee; as men, with nourishing food, wait for the cattle.—2.

**सा०-भा०। हे 'इन्द्र!' 'त्वा' त्वां 'सोमिनः' अभिषुतसोमाः 'सखायः इमे उ' इमे खल्वस्मदीया जनाः 'पुष्टवन्तः' सम्भृतघासाः 'यथा पशुं' पशुमिव 'वि चक्षते' वि पश्यन्ति॥ २॥**

**२। ऋ० सं० ८ म० ४५ सू० १६ ऋ०।**

इमे—refers to the priests. सखायः—the priests are said to be the friends of Indra, inasmuch as they frequently come in contact with him by way of invocation and offering oblations to him. *Vide* notes on सखा, SV. 1. 133.

पुष्टावन्तः—पुष्टम्—पोषणम्, fr. rt. पुष्—*to nourish*, पुष्ट—मतुप्; अ of पुष्ट is lengthened by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137. The idea of the verse is—'as a pastor, with fodder ready in hand, looks for the animal of which he is in charge, so do the priests, with pressed-out soma-juice, wait for Indra, in order to propitiate him with the offering of the same'.

विचक्षते—fr. rt. चक्ष्, *to see*, 2. Ā.—3. pl.—Mcdnll's Ved. Gram. App. I.—List of vbs. cf. 'मित्रः कृष्टीः...अभिचष्टे,' iii. 59. 1. 'अभि यो विश्वा भुवनानि चष्टे', viii. 61. 1. 'चक्षुः' is drvd. fr. this rt.

वत्सः काण्व ऋषिः । गायत्रीच्छन्दः ।

१ २ ३ २ ३ १ ३ १ २ ३ १ २
**समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।**
३ १ २ ३ १ २
**समुद्रायेव सिन्धवः ॥ ३ ॥ १३७ ॥**

सम् । अस्य । मन्यवे । विशः । विश्वाः । नमन्त । कृष्टयः । समुद्रायऽइव । सिन्धवः ॥ ३ ॥

भाष्यसारः । **विशः—अभिनिविष्टाः, विश्वाः—सर्वाः, कृष्टयः—प्रजाः, अस्य—इन्द्रस्य, मन्यवे—क्रोधाय, तस्य क्रोधो मा भूदिति बिभ्यत्यः, सं नमन्त—सम्यक् नमन्ति प्रह्वीभवन्ति, समुद्राय इव—यथा समुद्रं—जलधिं प्रति, सिन्धवः—नद्यः, स्वयमेव नमन्ति तद्वत् ॥ ३ ॥**

Anticipating his wrath, all the people, with devoted attention, bow down (to him), as rivers descend towards the sea.—3.

**सा०-भा० । 'विशः' निविशन्त्यः 'विश्वाः' सर्वाः 'कृष्टयः' प्रजाः 'अस्य' इन्द्रस्य 'मन्यवे' क्रोधाय, यद्वा मन्युर्मननसाधनं स्तोत्रं तदर्थं 'सं नमन्त' सम्यक् स्वत एव नमन्ति प्रह्वीभवन्ति । तत्र दृष्टान्तः,—'समुद्राय इव' यथा समुद्रम् अब्धिं प्रति 'सिन्धवः' स्यन्दनशीला नद्यः स्वयमेव नमन्ति तद्वत् ॥ ३ ॥**

**३ । ऋ० सं० ८ म० ६ सू० ४ ऋ० ।**

विशः, कृष्टयः—both the words *mean* 'men', 'people'—Ngh. 2. 3 ; as for कृष्टि, *vide* our notes on SV. 1. 11 ; Nir. 10. 22. In order to avoid tautology, विशः is taken here in the etymological sense, which possibly is—'devoted to praying and worshipping or the like ; Wils. translates 'All people, all men', Grfth.—'all the people, all the men',—this is but the repetition of the words of the same sense. This is not proper.

नमन्त—Sāy.'s note on this word in his com. on this verse in the RV. is as follows—'नमते: कर्मकर्त्तरि छान्दसो लङ् । 'न दृह-स्नु-नमामि'ति यक्चिणोः प्रतिषेधः । imperf. ( लङ् ) for pres. ( लट् ) by 'छन्दसि लुङ्-लङ्-लिटः' Pāṇ. iii. 4. 6. The aug. अ is not placed before the rt. ( न अडागमः ) by 'बहुलं छन्दस्यमाङ्योगेऽपि' vi. 4. 75. Mcdnll's Stu. Ved. Gram. para. 128c. on the *augment*.

---

कुसीदी काण्वऋषिः। गायत्रीच्छन्दः।

३ २ ३ १२ २२ ३ १२ २२ ३ २
देवानामिदवो महत्तदा वृणीमहे वयम्।
१ २ ३ १ २ ३ १ २
वृष्णामस्मभ्यमूतये ॥ ४ ॥ १३८ ॥

देवानाम्। इत्। अवः। महत्। तत्। आ। वृणीमहे। वयम्। वृष्णाम्। अस्मभ्यम्। ऊतये ॥ ४ ॥

भाष्यसारः। हे देवाः, देवानाम्—दीप्यमानानाम्, वृष्णाम्—कामवर्षणशीलानां युष्माकम्, इत्—एव, महत्—मंहनीयम्, यत् अवः—रक्षणम्, तत् वयम्—यजमानाः, अस्मभ्यम् ऊतये—अस्माकं पालनाय, आ-वृणीमहे—सम्भजामहे ॥ ४ ॥

We solicit, for ourselves, the great protection of the glowing gods, the showerers of blessings, for our safety.—4.

**सा०-भा०।** हे देवाः! 'देवानां' स्व-तेजसा सर्वतो दीप्यमानानाम्। 'इत्' एवार्थे। युष्माकमेव 'महत्' व्याप्तम्, मंहनीयं वा 'अवः' पालनं यद् विद्यते 'तत्' 'वृष्णां' कामानां वर्षितॄणां युष्माकं स्वभूतं तद्रक्षणं यजमानाः 'वयम्' 'आ वृणीमहे' समन्तात् सम्भजामहे। किमर्थम्? 'अस्मभ्यम्' 'ऊतये' पूर्वमस्मभ्यमस्मदर्थमिति साधारण्येनोक्त्वा तद् विशिनष्टि 'ऊतये' इति, अस्माकं पालनायेति ॥ ४ ॥

४। ऋ० सं० ८ म० ८३ सू० १ ऋ०।

वृष्णाम्—(*gen.* pl.) of the *stem* वृषन्, fr. rt. वृष् (to rain, I. p.); *vide* our notes on SV. I. 119;—'desire-rainers'—*Wils.* ऊतये dat. of *stem* ऊति, dr. अव्—क्ति।

अवः—*accus.* rt. अव्, *to protect*, I. p.—aff. असुन्।

---

मेधातिथिः ऋषिः।

३ २ ३ १ २ ३ १ २
सोमानं स्वरणं कृणुहि ब्रह्मणस्पते।
३ १ २ ३ १ २ ३ २
कक्षीवन्तं य औशिजः ॥ ५ ॥ १३९ ॥

सोमानम्। स्वरणम्। कृणुहि। ब्रह्मणः। पते। कक्षीवन्तम्। यः। औशिजः ॥ ५ ॥

भाष्यसारः। हे ब्रह्मणस्पते, त्वं सोमानम्—अभिषवस्य कर्त्तारं माम्, य औशिजः—उशिजः पुत्रः कक्षीवान्, तमिव स्वरणं—देवेषु प्रकाशवन्तम्, कृणुहि—कुरु ॥ ५ ॥

O Brahmaṇaspati, make (me) the presser of soma-juice illustrious among the gods, like Kakṣīvat, the son of Uśij.—5.

**सा०-भा०।** हे 'ब्रह्मणस्पते' एतन्नामक देव ! त्वं 'सोमानम्' अभिषवस्य कर्त्तारं माम् अनुष्ठातारम्, 'स्वरणं' देवेषु प्रकाशनवन्तम् 'कृणुहि' कुरु। तत्र दृष्टान्तः—'कक्षीवन्तम्' एतन्नामकमृषिम्, इवशब्दोऽत्राध्याहार्यः। कक्षीवान् यथा देवेषु प्रसिद्धः तद्वदित्यर्थः। 'यः' कक्षीवान् 'औशिजः' उशिजः पुत्रः तमिवेति पूर्वत्र योजना। कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरीयैराम्नायते,—'एतं वै पर आट्णारः कक्षीवाँ औशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत' (तै० स० ५,६,५,३) इति। ऋगन्तरेऽप्यृषित्व-कथनेन अनुष्ठातृत्व-प्रसिद्धिः सूच्यते,—'अहं कक्षीवाँ ऋषिरस्मि विप्रः' (ऋग्वे० ४,२६,१) इति। तस्मादस्यानुष्ठातारं प्रति दृष्टान्तत्वं युक्तम्। मन्त्रोऽप्येवं यास्केनैव व्याख्यातः—'सोमानं सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते ! कक्षीवन्तमिव य औशिजः। कक्षीवान् कक्ष्यावान्। औशिजः उशिजः पुत्रः। उशिक्, वष्टेः कान्तिकर्मणः। अपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्, तं सोमानं (सोमानां) सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते' ! (नि० ६,१०) इति। अस्मिन् मन्त्रे सोममिति पदेन ब्रह्मण इति पदेन च सूचितं तात्पर्यं तैत्तिरीया आमनन्ति—'सोमानं स्वरणमित्याह, सोमपीथमेवावरुन्धे, कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवावरुन्धे' ( तै० स०, १,५,८,४ ) इति ॥ ५ ॥

५। ऋ० सं० १ म० १८ सू० १ ऋ०। उ० आर्चिच्चं० ८१३।

ब्रह्मणस्पते—*voc.*—The etymology is—ब्रह्मणः वेदस्य मन्त्रस्य वा पतिः, which means—the deity of sacred prayer or of the text of the Veda. Dr. Roth following this etymology defines him accordingly; whether he is to be considered as a distinct personification or as a modified form of Agni is doubtful. He is associated with Indra and Soma. In hymn i. 40. ṚV, he is represented as specially connected with prayer. ब्रह्मणस्पति can rightly be identified with Agni, as Agni is the deity of the Brahmaṇas, and Ṛg-Veda being supposed to have sprung from him. Medhātithi, the commentator of Manu, has suggested this idea, inasmuch as the ṚV. opens with the hymn to Agni—*Agnim ile*, etc. *Vide* also our notes on SV. 1. 48, 56, where this word occurs; in our notes on SV. 1. 56. we have shown by etymology that *Brahmaṇaspati* is identical with *Bṛhaspati* (the lord of prayer). These two names alternate in different verses of the same hymn (ii. 23); he is designated as the supreme

king of prayers (ii. 23. 1) ; he conquers the enemies of prayer (*ibid.* 3). He is the generator of all prayers (i. 90.2). Later he is called *Vācaspati* (MS. 2.6.6 ; ŚBr. 14. 4. 1. 23)—a name applied to *Bṛhaspati* in post-Vedic literature. In ii. 1. 3, Agni is intimately connected with *Brahmaṇaspati* ; in ii. 23. 3, *Brahmaṇaspati* is said to be the father of the gods.

कक्षीवन्तं य औशिजः—*Kakṣīvat* was the son of sage *Dirghatamas* by Uśij—a maid-servant of the queen of *Kalinga-rāja*, whom the king, her husband, employed to be united with the sage in order to beget a son (a *Kṣetraja son*) on *niyoga* principle, which was then prevalent. The queen instead of going herself to the sage, sent her maid 'Uśij', who, in consequence, begot a son, named *Kakṣīvat.* This story with some variations is found in the Mahābhārata and other Purāṇas, *e. g.*, Matsya, Vāyu etc. He was regarded as a Kṣatriya and became king, but as the son of '*Dirghatamas*' was a '*Brāhmaṇa*', he was also a Ṛṣi, as he says of himself '*Ahaṃ Kakṣīvān ṛṣirasmi*'—I am the ṛṣi Kakṣīvān, ṚV. iv. 26. 1. The Taittiriyas also include him among the holy persons who are entitled to conduct sacrifices.

*Kakṣīvat* is an important personage in the Ṛg-Veda, as a devout performer of sacrifices to the gods (esp. to Indra and Aśvins) and the recipient of various blessings in abundance from them. Several hymns are ascribed to him, some again to his daughter *Ghoṣā* (x. 39, 40) and one to his son *Sukīrti* (x. 131). Innumerable are his references in the ṚV ; in i. 18. 1 (the stanza above) ; in i. 51. 13, he is described as having obtained *Vṛchayā* (a young girl) through Indra's favour ; in i. 112. 4, he is mentioned as having been learned in the three kinds of sacrifices (1. pāka-yajñas, 2. havir-yajñas, 3. the soma-yajñas), through *Aśvins'* aids or favour ; in verse 11 of the same hymn, he is said to have been protected by *Aśvins* ; he is the seer of the hymn i. 116 ; in the verse 7 of this hymn, he is alluded to, as having obtained various knowledge through *Aśvins* ; in i. 122. 5, he addresses Aśvins ; the hymn i. 125 is said to have been recited by him in praise of the munificence of Rājā *Svanaya*, who gave him his ten daughters in marriage and many precious presents ; in ix. 74. 8, he is represented as having seen a hundred winters (Śata-himāya) and obtained cattle from Soma (the deity) ; in x. 25. 10, Soma is described to have increased his intelligence ; in x. 143. 1, Aśvins have re-juveniled him. Further mention of his name is found in i. 117. 6, 120. 5 ; iv. 26 ; v. 41. 5 ; viii. 9. 10 ; x. 61. 15, etc.

स्वरणम्—loud sounding, clear-voiced,—M. W. S. E. Dict. p. 1285, col. 3. Grfth. has adopted this mg.—'a loud chanter' ; Yāska and Sāyaṇa interpret as *glorious* ;—*Wilson* follows Sāyaṇa and renders—'*illustrious*', for dr. *see* Sāy.'s addl. gram. notes quoted next page.

This verse is explained by Yāska, in *Nirukta* :—

'O Lord of prayer, make me, the soma-presser (सोमानं = सोमानां सोतारं माम्) *glorious* like Kakṣīvat, the son of Uśij.

On Kakṣīvat and Auśija Yāska has particular notes :—*Kakṣīvat* = possessed of secluded apartment, or equipped with the *girth* fastened round the back and belly of the horse. Or else the armpit of a man may have been meant. *Uśij* is derived from the rt. वश् (कान्तौ, *to desire*), the mg. then will be—'make me, the presser of soma, possessing fine shoulders, resplendent.—Nir. 6. 10.

Sāyaṇa in addl. notes in his com. on the corres. ṚV. verse, gives the derivations of some important words occurring there:—

सोमानम्—सुनोतीति षुञ् अभिषवे, 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्। उञ्छादिषु वा सोमञ्छब्दो द्रष्टव्यः (Pāṇ. vi. 1. 160). बहुलग्रहणादौणादिको वा मनिद् द्रष्टव्यः।

स्वरणं = प्रख्यातम्—rt. स्वृ शब्दोपतापयोः। 'कृत्यल्युटो बहुलम्' (Pāṇ. iii. 3. 113). इति कर्मणि ल्युट्।

कृणुहि—rt. कृवि हिंसाकरणयोश्च। इदितो नुम् धातोरिति नुम्। लोटः सिपो हिः। शपि प्राप्ते धिन्विकृण्व्योरच्चेत्युप्रत्ययः। तत्संनियोगेन वकारस्य चाकारः। तस्यातो लोप इति लोपः। तस्य स्थानिवद्भावान्न पूर्वस्य लघूपधगुणः। ङित्त्वादुकारस्य न गुणः। 'उतश्च प्रत्ययाच्छंदो वा वचनम्' (*Vartti.* under Pāṇ. vi. 4. 106.) इति हेर्लुक् न।

ब्रह्मणस्पते—'षष्ठ्याः पतिपुत्रे'त्यादिना (Pāṇ. viii. 3. 53)—संहितायां विसर्जनीयस्य सकारः।

कक्षीवन्तं—कक्षे भवा कक्ष्याऽश्वोदरसम्बन्धिनी रज्जुः। 'भवे छन्दसि' (Pāṇ. iv. 4. 110) इति यत्प्रत्ययः। साऽस्यास्ति इत्यर्थः, 'झयः' (Pāṇ. viii. 2. 10) इति वत्वम्। 'आसंदीवदष्ठीवच्चक्रीवत-कक्षीवत्०' (Pāṇ. viii. 2. 12) इत्यृषिविशेषनाम-कक्षीवच्छब्दो निपातितः।

———

श्रुतकक्ष ऋषिः।

१ २ ३ १ २ ३ १ २
बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः।
३ १ २ ३ २ ३ १ २
शृणोतु शक्र आशिषम्॥ ६ ॥ १४० ॥

बोधत्ऽमनाः। इत्। अस्तु। नः। वृत्रऽहा। भूरिऽआसुतिः। शृणोतु। शक्रः। आऽशिषम्॥ ६ ॥

भाष्यसारः। वृत्रहा—वृत्रस्य हन्ता, भूर्यासुतिः—यस्य इन्द्रस्य कृते प्रभूताः सोमा आसूयन्ते—अभिषूयन्ते, सः नः अस्माकं बोधन्मनाः इत्—अस्मदभिप्रायज्ञ एव, अस्तु—भवतु, अस्माकमभीप्सितानि जानात्वेवेत्यर्थः। ततः शक्रः—इन्द्रः, आशिषम्—अस्मदीयां स्तुतिम्, शृणोतु—अवधारयतु॥ ६ ॥

May the Vṛtra-slayer, for whom abundant soma-juice has been extracted, know our desires ; may Śakra hear our prayer.—6.

**सा०-भा० ।** अयं परोक्षकृतः । 'वृत्रहा' वृत्रस्य हन्ता 'भूर्यासुतिः' बहुषु देशेषु इन्द्रार्थं सोमा आसूयन्ते अभिषूयन्ते इति तादृशः । यद्वा, बहूनि सोमादिहवींषि इन्द्रार्थमासूयन्ते हूयन्त इति तादृशः । 'बोधन्मनाः' बुध अवगमने, औणादिको इत्-प्रत्ययः ; यस्य मनः स्तोतॄणामभिमतं बुध्यते जानातीति तथोक्तः । 'इत्' अवधारणे । 'नः' अस्माकं बोधन्मना एव 'अस्तु' सर्वदास्मदभीप्सितानि जानात्वेवेत्यर्थः । यद्वा, एतादृश इन्द्रः नोऽस्माकं सम्बन्धिनि यज्ञे भवत्विति । ततः 'शक्रः' संग्रामे शत्रुहननसमर्थः इन्द्रः 'आशिषम्' अस्मदीयां स्तुतिम् आशासनं वा 'शृणोतु' ॥ ६ ॥

६ । ऋ० सं० ८ म० ९३ सू० १८ ऋ० । Ṛv. has the reading '**बोधिन्मनाः**' instead of '**बोधन्मनाः**', as here.

बोधन्मनाः—बोधत्-मनाः—fr. rt. बुध् *to know*—*varia lectio* for बोधिन्मनाः—one whose mind is awake, watchful, attentive ; knowing minds, i.e., cognizant or aware of our desires.

भूर्यासुतिः—'to whom many libations are offered'—*Wils.* ; 'much honoured with libations'—*Grfth.* भूरिः आसुतिर्यस्मै, आसुति is drvd. fr. सु *to press out soma-juice.* 5. u.

आशिषम्—prayer, fr. आ—rt. शास् *to desire, pray for.* 'आशीराशास्तेः'—Nir. 6. 8.

———

श्यावाश्व ऋषिः ।

२ १ २ ३ १ २ ३ १ २
**अद्या नो देव सवितः प्रजावत्सावीः सौभगम् ।**
१ २ ३ १ २
**परा दुःष्वप्न्यं सुव ॥ ७ ॥१४१॥**

अद्य । नः । देव । सवितः । प्रजाऽवत् । सावीः । सौभगम् । दुःऽस्वप्न्यम् । सुव ॥ ७ ॥

भाष्यसारः । हे सवितः देव, अद्य नः—अस्मभ्यम्, प्रजावत्—पुत्राद्युपेतम्, सौभगं—सम्पदम्, सावीः—प्रेरय । दुःष्वप्न्यं—दुःस्वप्नवत् दुःखकरं दारिद्र्यम्, परा सुव—दूरम् अपसारय ॥ ७ ॥

Send to us to-day, O God Savitṛ, prosperity with progeny and dispel the evil dream away.—7.

**सा०-भा० ।** हे 'सवितः देव !' 'नः' अस्मभ्यम् 'अद्य' अस्मिन् यागदिने 'प्रजावत्' पुत्राद्युपेतं 'सौभगं' धनं 'सावीः' प्रेरय । 'दुःष्वप्नयम्' दुःस्वप्नं दुःस्वप्नवद् दुःखकरं दारिद्र्यं च 'परा सुव' दूरे प्रेरय ॥ ७ ॥

७ । ऋ० सं० ५ म० ८२ सू० ४ ऋ० ।

सौभगम्—prosperity, affluence. cf. 'सा वर्धतां महते सौभगाय'—may she (the cow) grow for good fortune, i. 164. 27.

दुःष्वप्न्यम्—Sāy. interprets as poverty, which is as painful as an evil dream, as contrasted with 'prosperity' in the preceding line.

प्रजावत्—together with offspring. In the days of nationbuilding such a prayer was natural.

सावीः—rt. सू ( प्रेरणे, *to impel*, 6. p. ), Aor. ( लुङ् ) 2. sg. imp. sense ; aug. अ does not sit before, by 'बहुलं छन्दस्यमाङ्योगेऽपि' Pāṇ. vi. 4. 75. [ सुव is drvd. from the same rt. imp. 2. sg. ].

परा—दूरम्, afar, away. 'परा सुव'—drive away.

——

प्रागाथः कण्व ऋषिः ।

२ १ २ ३ १र २र ३ २ ३ १ २
**क३स्य वृषभो युवा तुविग्रीवो अनानतः ।**
३ १ २र
**ब्रह्मा कस्तं सपर्यति ॥ ८ ॥१४२॥**

क । स्यः । वृषभः । युवा । तुविऽग्रीवः । अनानतः । ब्रह्मा । कः । तम् । सपर्यति ॥ ८ ॥

भाष्यसारः । स्यः—सः, वृषभः—कामवर्षणशीलः, युवा—नित्य-तरुणः, तुविग्रीवः—प्रशस्त-कन्धरः, अनानतः—न कदापि अवनतः, इन्द्रः क—कुत्र, वर्तते ? कः—ब्रह्मा स्तोता, तम्—इन्द्रम्, सपर्यति—पूजयति ॥ ८ ॥

Where is that ever-young, firm-necked and unhumbled showerer (of blessings)? What *Brahman* ( praying priest ) does adore thee?—8.

**सा०-भा० ।** 'स्यः' सः 'वृषभः' वर्षिता 'युवा' नित्यतरुणः । 'तुविग्रीवः' प्रवृद्धग्रीवः 'अनानतः' कदाचिदप्यनवनतः इन्द्रः 'क' कुत्र वर्त्तते इति को जानातीत्यर्थः । 'कः' 'ब्रह्मा' स्तोता 'तम्' इन्द्रं 'सपर्यति' पूजयति ॥ ८ ॥

८ । ऋ० सं० ८ म० ६४ सू० ७ ऋ० ।

स्यः—सः, there is a pron. त्यत् equivalent to तत् ।

वृषभः—*Vide* notes on SV. I. 119. युवा—*vide* notes on. SV. I. 127, 133.

तुवि-ग्रीवः—strong-necked; this word occurs also in ṚV. i. 187. 5. (तुविग्रीवा इव ईरते)—तुवि is a synonym of बहु 'much', 'many' Ngh. 3. 1;—Sāyaṇa explains it as enlarged, fully grown or developed (प्रवृद्धः).

अनानतः—bending or bowing to none.

ब्रह्मा—One of the four principal priests at a sacrifice; his duty or function is to recite mantras during the celebration of sacrifice; 'hymner' —*Wils.*

सपर्यति—adores, worships;—belongs to the 'कण्ड्वादि' group, (सपर—य) 3. sg.

---

वत्स ऋषिः ।

२ १ २ ३ १ २ ३ १ २ ३ १ २
**उपह्वरे गिरीणां सङ्गमे च नदीनाम् ।**
३ १ १ २र
**धिया विप्रो अजायत ॥ ९ ॥१४३॥**

उपऽह्वरे । गिरीणाम् । सङ्गमे । च । नदीनाम् । धिया । विप्रः । अजायत ॥ ९ ॥

भाष्यसारः । **गिरीणाम् उपह्वरे—उपकण्ठे प्रान्ते निर्जनगिरिप्रदेशे वा, नदीनां सङ्गमे, धिया—स्तुत्या यज्ञकर्मणा वा, विप्रः—मेधावी इन्द्रः, अजायत—आविर्भवति ॥ ९ ॥**

The sage (Indra), manifests himself by praise near the mountain regions, and where the rivers meet.—9.

**सा०-भा० । 'गिरीणां' पर्वतानाम् 'उपह्वरे' उपह्वर्त्तव्ये प्रान्ते । 'नदीनां' सरितां 'सङ्गमे' सङ्गमने च ईदृग्विधे देशे क्रियमाणया 'धिया' स्तुत्या 'विप्रः' मेधावी इन्द्रः 'अजायत' प्रादुर्भवति, स्तुतिं श्रोतुमिति शेषः । गिरीणामित्यत्र 'नामन्यतरस्याम्' (पा० ६,१,१७७) इति नाम उदात्तत्वम् ॥ ९ ॥**

९ । ऋ० सं० ८ म० ६ सू० २८ ऋ० । यजुः २६, १५. ṚV. has **'सङ्गथे'** instead of **'सङ्गमे'** ।

उपह्वरे—(*loc. sg.*)—समीपे at the proximity, near, in the neighbourhood. Sāy. explains—उपह्वर्त्तव्ये, to be approached by windings or turnings, i.e., by circuitous or zigzag course (fr. rt. ह्वृ (कौटिल्ये, *to approach by windings or turnings*, 1. p.). It sometimes conveys the sense—'a *solitary* or *private place*,' viii. 96. 14, (गूढस्थाने—Sāy.), this sense suits here well; thus the expression 'उपह्वरे गिरीणाम्' may be better rendered—

'*in the secluded mountain regions*'. उपह्वरे occurs in ṚV. i. 62. 6 ;—87. 2 ; viii. 6. 28 ; viii. 69. 6 ; viii. 96. 14.

विप्रः—Say. means by this word 'मेधावी'—wise, sapient, Ngh. 3. 15 ; here it rfs. to 'Indra'. Mahīdhara (in Yajur-Veda rfd. to above) understands 'मेधावी' 'सोमः', and he interprets '*dhiya*' as *understanding* ; he means to say that Soma takes birth on the impression that wise men will perform sacrifice by me (Soma). Sāyaṇa's conclusion of the purport of the verse is that men ought to sacrifice in those places, where Indra is said to have been manifested. ( 'अतो वयमपि तादृशे देशे यजामः स्तुमो वेति भावः' ) । *Wils.* takes धिया to mean 'by holy rites'.

---

इरिमिठ ऋषिः ।

२ ३ १ २ ३ १र २र ३ १ २ ३ २
प्र सम्राजं चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः ।
१ २ ३ २ ३ १ २
नरं नृषाहं मंहिष्ठम् ॥ १० ॥१४४॥

प्र । सम्ऽराजम् । चर्षणीनाम् । इन्द्रम् । स्तोत । नव्यम् । गीःऽभिः । नरम् । नृऽसहम् । मंहिष्ठम् ॥ १० ॥

भाष्यसारः । हे स्तोतारः, मनुष्याणां सम्राजम्—अधीश्वरम्, गीर्भिः—स्तुतिभिः, नव्यं—स्तुत्यम्, नरम्—नेतारम्, नृ-षाहम्—शत्रुरूप-मनुष्याणाम् अभिभवितारम्, मंहिष्ठम्—दातृतमम्, इन्द्रं प्र-स्तोत—अत्यर्थं स्तुत ॥ १० ॥

Sing panegyrics to most munificent Indra adorable with praises, the sovereign of men, the guide, the subduer of foes.—10.

**सा०-भा० ।** 'चर्षणीनां' मनुष्याणां मध्ये 'सम्राजं' सम्यग् राजमानम् । यद्वा, मनुष्याणामधीश्वरम् 'इन्द्रम्', हे स्तोतारः ! 'प्र स्तोत' प्रकर्षेण स्तुत । कीदृशम् ? 'गीर्भिः' स्तुतिभिः 'नव्यं' स्तुत्यम् , 'नरं' नेतारम्, 'नृषाहम्' नृणां शत्रुमनुष्याणाम् अभिभवितारम्, 'मंहिष्ठम्' दातृतमम् ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयस्याध्यायस्य तृतीयः खण्डः ॥

इति द्वितीयप्रपाठकस्य प्रथमार्द्धं पञ्चमी दशतिः । द्वितीयप्रपाठकस्य प्रथमार्द्धं समाप्तम् ॥

---

१०। ऋ० सं० ८ म० १६ सू० १ ऋ०।

सम्राजम्—sole sovereign, the supreme king of men, to be construed with चर्षणीनाम्।

चर्षणीनाम्—*gen. pl.* of the *stem.* चर्षणि, fr. rt. कृष्, *to cultivate*, 'कृषेरादेश्च चः' (uṇ. ii. 97.)—Śākaṭāyana ; acc. to others,—fr. rt. चाय् (निशामने, *to observe*) with aff. अनि, चाय becomes चर्ष ; mg.—मनुष्याणाम्, of men. Ngh. 2. 3. cf. 'मित्रस्य चर्षणीधृतः' —of Mitra, the supporter of men, iii. 59. 6 ; 'ओमासश्चर्षणीधृतो विश्वे देवास आ गत'—come, All-gods, protectors and supporters of men, i. 3. 7 ; also 'एवैश्च चर्षणीनाम्...' viii. 64. 4, SV. 1. 364. स्तोता—for स्तोत = स्तुत, imp. 2. pl. long vowel in Saṃhitā text by 'द्व्यचोऽतः०'।

नव्यम्—worthy of praise. fr. rt. नु, *to praise*, 6. p. ; नरम्—the leader of rites.

नृ-षाहम्—overcoming men (i.e., enemies). सह—aff. ण्वि by 'छन्दसि सहः' Pāṇ. iii. 2. 6. *Vide* सदासाहम्, SV. 1. 122.

मंहिष्ठम्—spv. dg. most liberal or munificent, fr. rt. मंह् *to bestow*, *to give*, *to grant*—1. Ā. *Vide* SV. 1. 107.

---

अथ द्वितीयाध्यायस्य चतुर्थः खण्डः।

अथ द्वितीयप्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः।

श्रुतकक्ष ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
अपादु शिप्र्यन्धसः सुदक्षस्य प्र होषिणः।
२ ३ २ ३ १ २
इन्द्रोरिन्दो यवाशिरः॥ १ ॥१४५॥

अपात्। ऊम् इति। शिप्री। अन्धसः। सुऽदक्षस्य। प्रऽहोषिणः। इन्दोः। इन्द्रः। यवऽआशिरः॥ १ ॥

भाष्यसारः। शिप्री—शोभन-हनुः, इन्द्रः प्रहोषिणः—प्रकर्षेण देवान् हविर्भिर्जुह्वतः, सुदक्षस्य ऋषेः, यवाशिरः—यवैः सह पक्वम्, इन्दोः—क्षरन्तम्, अन्धसः—सोमलक्षणमन्नम्—(कर्मणि षष्ठी), उ—एव, अपात्—अपिबत्॥ १ ॥

Indra, bearing fine cheeks, has drunk of the soma-draught mixed with fried barley powder of, i. e., offered by, (sage) Sudakṣa, expert in offering oblation.—1.

सा०-भा०। 'शिप्री'—शिप्रे हनू नासिके वा—शोभनहनुः। यद्वा, शिप्राः शीर्षण्याः, सुशिरस्त्राणः सः 'इन्द्रः' एव, 'प्रहोषिणः' प्रकर्षेण देवान् हविर्भिर्जुह्वतः

'सुदत्तस्य' एतन्नामकस्य ऋषेः सम्बन्धि 'यवाशिरः' श्रीञ् पाके (क्र्या० उ०) आङ्पूर्वकस्य 'अपस्पृधेथामानृचुः०' (पा० ३, १, ३६) इत्यादिना धातोः शिरादेशः। यवैरामिश्रितं यवैः सह पक्वम् 'इन्दोः' सर्वत्र पात्रेषु क्षरत् 'अन्धसः' सोमलक्षणमन्नम् 'अपात्' अपिबत्। यद्वा, सोमस्य भागम् इन्द्रार्थम् परिकल्पितं सोमांशम् अपिबत्। 'उ' इत्यवधारणे ॥ १ ॥

१। ऋ० सं० ८ म० ९२ सू० ४ ऋ०।

शिप्री – full-cheeked ; '*Der schone*', –the beautiful, –Benfey ; 'whose jaws are strong'—*Grfth.* ; 'handsome-jawed'—*Wils.* शिप्रवत् occurs in ṚV. vi. 17. 2.

अन्धसः—अन्नस्य, of food.—mg. Ngh. 2. 7 ; here refers to the soma-juice, the favourite food of Indra ; *gen.* used for *accus.*

प्रहोषिणः—fr. प्र—rt. हु ; mg. 'assiduous in sacrifice'—*Wils.* ; scrupulous at the rite. Benfey takes 'सुदत्तस्य प्रहोषिणः' as epithets of the Soma—'*des Kraftigen aufregenden*'.

यवाशिरः—*Vide* आशिरम् ṚV. viii. 69. 6 ; SV. 1. 187, fr. आ—rt. श्री (*to mix, to boil*, 9. u.) *see* Pāṇ. iii. 1. 36.—prepared with barley ; 'cooked with barley',—*Wils.*

---

मेधातिथिर्ऋषिः।

३ १ २ ३ १र २र ३ १ २
इमा उ त्वा पुरुवसोऽभि प्र णोनुवुर्गिरः।
१ २ ३ २उ ३ १ २
गावो वत्सं न धेनवः ॥ २ ॥१४६॥

इमाः। ऊम् इति। त्वा। पुरुवसो इति पुरुऽवसो। अभि। प्र। नोनुवुः। गिरः। गावः। वत्सम्। न। धेनवः ॥ २ ॥

भाष्यसारः। हे पुरुवसो—बहुधन बहुयज्ञ वा इन्द्र, त्वाम् अभि—उद्दिश्य, इमाः गिरः—स्तुतयः, प्र नोनुवुः—अत्यर्थं स्तुवन्ति पुनः पुनः अभिगच्छन्ति वा, धेनवः—गावः, वत्सं न—इव यथा, अभिगच्छन्ति तद्वत् ॥ २ ॥

O Indra, master of abundant riches, these our praises tend again and again to thee, as milch-cows to their young calves.—2.

सा०-भा०। हे 'पुरुवसो!' बहुधन! यद्वा, वसवो यज्ञाः बहुयज्ञ, इन्द्र! 'त्वा' त्वाम् 'अभि' 'इमाः' अस्मदीयाः 'गिरः' स्तुतयः 'प्रणोनुवः' प्रकर्षेण पुनः

पुनः स्तुवन्ति प्राप्नुवन्तीत्यर्थः। नौतिरत्र व्याप्तिकर्मा। तत्र दृष्टान्तः,—'गावो वत्सं न धेनवः' यथा धेनवः गावः गृहे वर्त्तमानं वत्सं शीघ्रमभिगच्छन्ति तद्वत्। यद्वा, अस्मदीया वाचः त्वाम् अभिनोनुवुः—अभितः शब्दयन्ति—स्तुवन्ति, यथा गावो वत्समभिलक्ष्य हम्भारवं कुर्वन्ति तद्वत् ॥ २ ॥

२। ऋ० सं० ६ म०४५ सू० २५ ऋ०। ṚV. has (i) **'शतक्रतो'** instead of **'पुरुवसो'** and (ii) in the 3rd. pāda—**'इदं वत्सं न मातरः'** (the mother-cows to their young.) instead of **'गावो वत्सं न धेनवः'** the above SV. reading.

पुरु-वसो—*voc*—पुरु—बहु, वसु—धनम्, यस्य।

नोनुवुः—fr. rt. नु ( स्तुतौ, *to praise*, 2. p) . *Vide* notes on प्र-णोनुमः, SV. 1.132 perf. used for pres.—Pāṇ. iii. 4. 6. Whitney, Para 823.

'प्र-णोनुवुः—प्रकर्षेण पुनः पुनर्गच्छन्ति। नौतिरत्र गतिकर्म्मा' ( नु *to go* )—Sāy.'s com. on the corres. ṚV. verse.

——

गोतम ऋषिः।

२उ ३ १ २ ३ २ ३ १ २ ३क २र
अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्।
३ २ ३ १ २ ३ २
इत्था चन्द्रमसो गृहे ॥ ३ ॥ १४७ ॥

अत्र। ह। गोः। अमन्वत। नाम। त्वष्टुः। अपीच्यम्। इत्था। चन्द्र-मसः। गृहे ॥ ३ ॥

भाष्यसारः। अत्र ह—अमुष्मिन्नेव, गोः—गन्तुः, चन्द्रमसो गृहे—चन्द्रमण्डले त्वष्टुः—आदित्यस्य, अपीच्यं—अपगतमपिहितं रात्रौ अन्तर्हितम्, नाम—तेजः, इत्था—निश्चितम्, अमन्वत—जानाति। रात्रौ अन्तर्हितं सौरं तेजः चन्द्रमण्डलं प्रविश्य अहनीव नैशं तमो निवार्य सर्वं प्रकाशयति। एवंविध-तेजसा युक्तः सूर्य इन्द्र एव, यतो द्वादशस्वादित्येषु इन्द्रोऽपि परिगणितः। अतः सूर्यात्मक इन्द्र एवात्र स्तुतेर्विषयः ॥ ३ ॥

They (the sun's rays) think (highly) of the light of Tvaṣṭṛ, hidden there, indeed, in the mansion of the Moon.—3.

**सा०-भा०।** 'अत्र ह' अस्मिन्नेव 'गोः' गन्तुः 'चन्द्रमसः' 'गृहे' मण्डले 'त्वष्टुः' एतत्संज्ञकस्य आदित्यस्य सम्बन्धि 'अपीच्यं' रात्रौ अन्तर्हितं स्वकीयं यत्

'नाम' तेजः तदादित्यस्य रश्मयः, 'इत्था' इत्थम् अनेन प्रकारेण 'अमन्वत' अजानन्। उदकमये स्वच्छे चन्द्रबिम्बे सूर्यकिरणाः प्रतिफलन्ति, तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं सञ्ज्ञां लभन्ते, तादृशीं चन्द्रेऽपि वर्त्तमाना लभन्त इत्यर्थः। एतदुक्तम् भवति—यद्रात्रावन्तर्हितं सौरं तेजः तच्चन्द्रमण्डलं प्रविश्याहनीव नैशं तमो निवार्य सर्वं प्रकाशयति। ईदृग्भूततेजसा युक्तः सूर्य इन्द्र एव, द्वादशस्वादित्येषु इन्द्रस्यापि परिगणितत्वात्। अतोऽहोरात्रयोः प्रकाशक इन्द्र एवेति इन्द्रस्तुतेः प्रतीयमानत्वात् इन्द्रो देवतेत्युपपन्नं भवति, ईदृग्भूतस्य तेजसः आश्रयत्वेन चन्द्रमसः प्राधान्यविवक्षया चान्द्रमस्यामिष्टौ विनियोगोऽप्युपपद्यते। अत्र निरुक्तम्—'अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपेक्षितव्यम् आदित्यतोऽस्य दीप्तिर्भवतीति। 'सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः' इत्यपि निगमो भवति, सोऽपि गौरुच्यते, अत्राह गोरमन्वतेति' (नि० २,६)—'अत्र ह गोः सममंसतादित्यरश्मयः स्वं नामापीच्यमपगतमपचितमपिहितमन्तर्हितं वा, अमुत्र चन्द्रमसो गृहे' ( नि० ४,२५ ) इति ॥ ३ ॥

३। ऋ० सं० १म० ८४ सू० १५ ऋ०। उ० आर्चि० ३, १, ८, ३ (2. 264)

The stanza apparently refers to the astronomical truth, known to the Aryans as early as the Vedic age, that the moon shines only through reflecting the light of the sun. The solar radiance, concealed by the night, enters into the moon and thus dispels nocturnal darkness. In Nir. 2. 6. it is stated that one ray of the sun (suṣumṇa) lights up the moon, whose light, consequently, is said to be borrowed from the sun. ( अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते।…आदित्यतोऽस्य दीप्तिर्भवति )।

अता ह = अत ह, the last vowel of अत्र is long by 'निपातस्य च' Pāṇ. vi. 3. 136.

गोः—Sāy. has taken it in *gen. case.* mg. *moving*, as a qualifying adj. to चन्द्रमसः (—of the moving moon). Acc. to Yāska, गोः refers to the particular ray of the sun called *Suṣumṇa*, which illuminates the sun. In support of this explanation, Yāska quotes 'सुषुम्णः…गन्धर्वः' from VS. 18. 40 ; ŚBr. 9. 4. 1. 9.

इत्था—verily, truly सत्यम्, Ngh. 3. 9 ; it occurs in this sense, in ṚV. i. 154. 5 ; 'उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः'। Sāy. takes it to mean '*thus*' ( इत्थम्, उक्तप्रकारेण ) ; this verse is explained by Yāska, in Nir. 4. 25, where he takes 'गोः' to mean 'the solar ray and gives the synonyms of अपीच्यम् (dr. fr. अपि—rt. अञ्च—with aff. क्विन्, यत् ) as अपचितम्, अपगतम्, अपिहितम्, अन्तर्हितम्—mg. respectively severed, deviated or transmitted, concealed or hidden.

त्वष्टुः—त्वष्टृ is derived from a rare root त्वक्ष् (identical with the common root तक्ष् *to shape*, a derivative of which *thwakṣ* is found in the *Avesta*,

the mg. appears to be the 'Fashioner' or 'Artificer'; Yāska gives the etymology—त्वष्टा तूर्णमश्नुते···, त्विषेर्वा···दीप्तिकर्मणः, त्वक्षतेर्वा करोति-कर्मणः—Tvaṣṭṛ is so called, because he pervades quickly, or it may be drvd. fr. त्विष्—*to shine*, or fr. त्वक्ष्—*to shape*.—Nir. 8. 13. He is an atmospheric deity, he is enlisted among the atmospheric gods, *ibid* and Bṛh. D. iii. 25. Tvaṣṭṛ here stands for the sun,—being one of the Ādityas—*Wils*; HILLEBRANDT holds that Tvaṣṭṛ represents the sun—Vedische Mythologie, I. P. 517; Hardy considers him a solar deity—Hardy, Vedisch-brahmanische Periode, P. 30—I. According to *Sāy.* it refers to 'Indra' to whom the hymn is addressed and who is identical with the sun (*see* our notes on 1. 125).

Tvaṣṭṛ in the Puranic mythology is the carpenter or artisan of the gods identified with *Viśvakarman*. He is described as sharpening Indra's thunder-bolt.—ṚV. i. 32. 2; i. 52. 7; i. 61. 6; he is the framer or fashioner of the thunder-bolt of Indra—i. 85. 9, vi. 17. 10, x. 48. 3;—holds an iron axe in his hand, viii. 29. 3;—is the most skilful artificer, sharpens his iron axe—x. 53. 9;—is the lord or owner of all these worlds and progenitor of all beings—iii. 55. 19;—is the glorious creator—x. 5. 7;—is the progenitor and is said to have created husband and wife for each other even from the womb—x. 10. 5;—is the creator of good races of men—x. 18. 6;—is the father—x. 64. 10;—has decked heaven and earth and all the worlds with living beings—x. 110. 9;—is the master in fashioning the forms of beings—i. 188. 9, in another passage, the office of fashioning beings in the womb is ascribed to him (*retasaḥ siktasya Tvaṣṭā rūpāṇi Vikaroti*, which Sāy. explains *Yonau sṛṣṭaṃ rūpāṇi kartuṃ prabhuḥ*,—is able to make forms out of the semen cast into the uterus; in x. 184. 1, he is prayed for fashioning the limbs of the fœtus in the womb; he is identified with Agni—i. 95. 5, ii. 1. 5, Śākapūṇi identifies Tvaṣṭṛ with Agni (Nir. 8. 13); again he is the generator of Agni—i. 95. 2, x. 2. 7, x. 46. 9; he is identified with Indra from whom Dadhyāc learned *Madhuvidyā*—i. 117. 22, and vi. 47. 19; in some passages he is represented as inferior to Indra, he is said to shake with fear at Indra's wrath—i. 80. 14; he is identified with Savitṛ (Kauśika-Sūtra), in later mythology he is one of the 12 Ādityas; he is the father-in-law of Vāyu—viii. 26. 21, 22.

Saraṇyu,—his daughter is given in marriage to Vivasvat, on which occasion the whole world is said to have assembled,—x. 17. 1; for his further references, *see* i. 13. 10,—20. 6,—22. 9,—84. 15, (the above verse अत्राह etc.);—142. 10,—161. 4,—186. 6; ii. 3. 9,—23. 17,—31. 4,—36, 3; iii. 4. 9,—54. 12; iv. 33. 6; v. 5. 9,—41. 8; vi. 49. 9,—52. 11; vii. 2. 9,—34. 21, 22,—35. 6; ix. 5. 9,—81. 4; x. 8. 8, 9,—65. 10,—66. 3,—70. 9,—76. 3,—92. 11,—125. 2,—184. 1.

Durga explains the verse thus—'गाः—सुषुम्णस्यैकस्य सूर्यरश्मेः, अपीच्यम्—अपगतं तत्रैव चन्द्र-मण्डलेऽन्तःप्रविष्टस्य, नाम—नमनं प्रत्यागमवस्थानम्, इतरे सूर्यरश्मयोऽमन्वत—अमन्यन्त समनुज्ञातवन्तः—'all other rays of the sun think highly of or value most (Yāska has समनंसत)—the transmission of one ray of the sun, named *Suṣumṇa* to the moon.

On the word नाम (lustre or radiance) there is an esp. note:—यद्यपि 'नाम'-शब्दः उदकार्थे निघण्टावुक्तः तथापीह तत्प्रभवं तेज इह लक्ष्यते—ordi. *Nāma*, in the Vedas, is a syn. of water (Ngh. I. 12.), but here it signifies *ray* or *light*, the origin of water. Durga explains—'*Suṣumṇa*' as one who gladdens all beings—'सुषुम्णः सुष्ठु सुखः ( सर्वाणि भूतानि नित्यमसौ सुखयतीति ) सूर्यरश्मिः सूर्याद्भिःसृत्य चन्द्रमसं प्रति गतः' इत्यसौ चन्द्रमाः गन्धर्व इत्युच्यते—गां धरतीति नैरुक्तनिर्वचनात्—the moon is so called, as she is the holder of the solar ray—तथा च ईमः—'गन्धर्वस्तु नभश्चरे'—(Gandharva is a syn. of the moon).

Sāyaṇa, in his com. on the ṚV. verse refrd. to above, gives the derivations of some important words occurring there :—

1. अपीच्यम्—(a) अप—rt. चि—यत् निपातनात् by 'अघ्न्यादयश्च' uṇ. iv. 111. (b) अपि—rt. अच्—क्विन्, न of अञ्च् drops by 'अनिदिताम्०' Pāṇ. vi. 4. 24. यत्—'भवे छन्दसीति यत्' iv. 4. 110,—अ of अञ्च् drops, इ gets lengthened by 'चौ' vi. 1. 222. 'अपीच्योऽप्रकाशः'—इति भट्ट-भास्करमिश्रः।

2. इत्था—(a) इदम्—था in the sense of प्रकार—mg. '*thus*' (b) इदम्—थमु, सुप् is added by 'अव्ययादाप्सुपः' Pāṇ. ii. 4. 82. डा takes the place of सुप् by 'सुपां सुलुक०' Pāṇ. vii. 1. 39.

3. चन्द्रमसः—चन्द्रमाह्लादनं मिमीते निर्मिमीते इति चन्द्रमाः ; असि is affixed by 'चन्द्रे माङो डित्', uṇ. iv. 227.

Grfth's rendering and purport convey but no sense.

---

२उ ३ १ २ ३ १ २ ३ २ ३ १र २र
यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः।
१ २ ३ १ २ ३ १ २
तत्र पूषाभवत्सचा ॥ ४ ॥ १४८ ॥

यत्। इन्द्रः। अनयत्। रितः। महीः। अपः। वृषन्ऽतमः। तत्र। पूषा। अभवत् (भुवत् वा)। सचा ॥ ४ ॥

भाष्यसारः। यत्—यदा, वृषन्तमः—अतिशयेन वर्षणशीलः, इन्द्रः रितः—गन्त्रीः स्रवणशीलाः, महतीः अपः—वृष्ट्युदकानि, अनयत्—प्रेरयति। तत्र—तदा, पूषा सचा—सह सहायः, अभवत्—भवति भुवदिति पाठे लेटो रूपम् ॥ ४ ॥

When Indra, the best rainer, brings down the mighty streaming waters (rain), Pūṣan remains along with him.—4

**सा०-भा०।** 'यत्' यदा 'इन्द्रः' 'वृषन्तमः' अतिशयेन वर्षिता इन्द्रः 'रितः' गच्छतीः 'महीः' महतीः 'अपः' वृष्ट्युदकानि 'अनयत्' इमं लोकं प्रापयति। 'तत्र' तदानीं 'पूषा' पोषको देवः 'सचा अभवत्' ( भुवत्—इत्यपि पाठः ) इन्द्रस्य सहायो भवति ॥ ४॥

४। ऋ० सं० ६ म० ५७ सू० ४ ऋ०।

रितः—*accus. pl.*—fr. rt. रि or री (*to go.* 9.p.)—क्विप्, running, streaming, flowing, quick; falling—*Wils.* This word occurs only here.

वृषन्तमः—spv. dg. of वृषन्, for which *vide* SV. 1. 119.

सचा—*together, along with.* cf. 'ब्रह्म च नो वसो सचेन्द्र यज्ञं च वर्धय', RV. i. 10. 4. See also our notes on the word, SV. 1. 115.

पूषा—*Vide* notes on SV. 154.

---

बिन्दुः पूतदक्षो वा ऋषिः।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
**गौर्धयति मरुतां श्रवस्युर्माता मघोनाम्।**
३ २उ ३ १ २
**युक्ता वह्नी रथानाम् ॥ ५ ॥ १४९ ॥**

गौः। धयति। मरुताम्। श्रवस्युः। माता। मघोनाम्। युक्ता। वह्निः। रथानाम् ॥ ५ ॥

भाष्यसारः। मघोनां—धनवताम्, मरुतां माता, रथानां—मरुद्-रथानाम्, वह्निः—मरुद्वाहिनीभिः पृषतीमृगीभिः संयोजयित्री, युक्ता—सर्वत्र पूज्या, गौः पृश्निरूपा, श्रवस्युः—अन्नं कामयमाना, धयति—सोमं पिबति ॥ ५ ॥

The Cow Pṛśni, the adorable mother of the affluent Maruts, who yokes the speckled deer to their cars, longing for food, drinks (the soma).—5

**सा०-भा०।** 'मघोनां' धनवतां 'मरुतां 'माता' निर्मात्री 'गौः' पृश्निरूपा। 'पृश्न्यै मरुतो जाताः' इति श्रुतेः। यद्वा, गौर्माध्यमिका वाक्, तत्रैव मध्यमस्थाने मरुतामपि वर्त्तनात् तेषां तत्पुत्रत्वमुपचर्यते, सा 'धयति' सोमं पिबति पाययति वा स्वपुत्रान् मरुतः, किमिच्छन्ती ? 'श्रवस्युः' अन्नं कामयमाना। कीदृशी ? 'रथानां

मरुतां वह्निः' पृषतीभिः वडवाभिर्वोढ्री संयोजयित्री सा। 'युक्ता' सर्वत्र सम्मता पूज्या भवति ॥ ५ ॥

५। ऋ० सं० ८ म० ६४ सू० १ ऋ०।

गौः—here refers to पृश्निः ; the Maruts are spoken of—'*Pṛśni-mātaraḥ*', having 'Pṛśni' for their mother,—ṚV. i. 23. 10 ; i. 85. 2 ; ii. 34.2 ; the allusion is to the legend of the earth's assuming the form of a brindled cow, and Rudra's begetting the Maruts of her in the shape of a bull.

धयति—fr. rt. धेट् ( पाने, *to drink* ). 3. sg.

श्रवस्युः—food-desiring. श्रवस्—अन्नम्, Ngh. 2. 7.—क्यच्—उ by 'क्याच्छन्दसि' Pāṇ. iii. 2. 170.

रथानां वह्निः—*lit.* the drawer, carrier ( वह्निः—dr. fr. rt. वह्, *to carry* ) of the chariots of the Maruts. But it is the 'Priṣatī-deer' that carry the cars of the Maruts [ 'पृषत्यो मरुताम्', Ngh. 1. 15. ]. So instead of calling the Pṛśni-cow directly the drawer of the cars of the Maruts, she is rightly explained by Sāyaṇa to be the guide of the *Pṛṣatis* by yoking them to their chariots. Grfth. takes this in literal sense—'harnessed to draw their chariots on', but this mg. is against the traditional sense.

———

श्रुतकक्षः सुकक्षो वा ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २
उप नो हरिभिः सुतं याहि मदानां पते।
१ २ ३ १ २ ३ २
उप नो हरिभिः सुतम् ॥ ६ ॥ १५० ॥

उप। नः। हरिभिः। सुतम्। याहि। मदानाम्। पते। उप। नः। हरिभिः। सुतम् ॥ ६ ॥

भाष्यसारः। हे मदानां पते—सोमानां स्वामिन् इन्द्र, हरिभिः—अश्वैः सह, नः अस्माकं यज्ञे, सुतम्—अभिषुतं सोमम्, उप-याहि—पातुं शीघ्रमागच्छ। द्विरुक्तिरादरार्था ॥ ६ ॥

Come with thy horses, to drink the soma-juice pressed out, O lord of exhilarating draughts, come with thy horses, etc.—6.

सा०-भा०। हे 'मदानां पते'—माद्यन्त्यनेनेति मदः सोमः 'मदोऽनुपसर्गे' इति करणे अप्-प्रत्ययः, सोमानां स्वामिन् इन्द्र, 'हरिभिः'—'आ शनेन

हरिभिरि'त्यादिषु [ ऋ० २,१८,६ ] बहूनामश्वानां श्रुतेः। अत्रापि शतसहस्रसंख्याकैः अश्वैः सह 'नः' अस्माकं यज्ञे 'सुतम्' अभिषुतं सोमम् 'उपयाहि' तत्पानार्थं शीघ्रमागच्छ। पुनः 'उप नः' इत्याद्युक्तिरादरार्था ॥ ६ ॥

६। ऋ० सं० ८ म० ६३ सू० ३१ ऋ०। उ० आर्चि० ६, १, १०, १।

मदानां पते—lord of the *Soma*—*Wils.*

सुतम् उप याहि—come to our effused libation.

हरिभिः—although the horses of Indra are properly but two [ हरी इन्द्रस्य, Ngh. 1. 15], yet from their supernatural faculties, they may multiply themselves without limit—Sāy. in his com. on ṚV. ii. 18. 6.

---

श्रुतकक्षः सुकक्षो वा ऋषिः।

३ १र २र ३ १ २ ३ १ २ ३ २
इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे।
१ २ ३ १र २र
अच्छावभृथमोजसा ॥ ७ ॥ १५१ ॥

इष्टाः। होत्राः। असृक्षत। इन्द्रम्। वृधन्तः। अध्वरे। अच्छ। अवऽभृथम्। ओजसा ॥ ७ ॥

भाष्यसारः। अध्वरे—यज्ञे, वृधन्तः—हरिभिरिन्द्रं वर्धयन्तः, इष्टाः—यज्ञं कृतवन्तः प्रिया वा, ओजसा—तेजसा युक्ताः, होत्राः—होतारः, अवभृथम् अच्छ—यज्ञस्यान्त्यहोमं प्रति ( अच्छ—अभि, प्रति ), इन्द्रम् असृक्षत—यजन्ति ॥ ७ ॥

The resplendent hotṛs (sacrificing priests), magnifying Indra with their offerings at the sacrifice, send forth Indra to the *Avabhṛtha* (the concluding ceremony of purification or ablution after the sacrifice).—7.

**सा०-भा०।** 'अध्वरे' अस्मदीये यज्ञे 'वृधन्तः' हविर्भिरिन्द्रं वर्धयन्तः 'इष्टाः' इष्टवन्तः यागं कृतवन्तः सप्तसंख्याकाः 'होत्राः' होत्रकाः 'अवभृथम्' अन्त्यदिवसम् 'अच्छ' अभि प्रति 'ओजसा' स्वतेजसा सहिताः। 'इन्द्रम्' 'असृक्षत' व्यसृजन्। यावदवभृथ-समाप्ति होत्रकाः ( यावदवभृथं सप्त होत्रकाः—इति पाठभेदः ) यजन्तीति ॥ ७ ॥

७। ऋ० सं० ८ म० ९३ सू० २३ ऋ०। ṚV reads 'वृधासः' instead of 'वृधन्तः'।

वृधन्तः—fr. वृध् *to increase*—वर्धयन्तः, invigorating, strengthening, exalting.

अवभृथम् अच्छ—into the cleansing bath.—*Grfth.* अवभृथम्—is the final purification or ablution of the sacrificer and the sacrificial vessels at the end of a sacrificial ceremony. अवभृथेष्टिः occurs in several passages to mean a supplementary sacrifice to atone for the defects in a principal or preceding one.

असृचत—fr. सृज् ( विसर्गे, *to offer* ). Aor. ( लुङ् ) 3. pl.—offer sacrifice, (Pres. sense) '*have dismissed*'.—*Wils.* 'अवभृथमच्छ···असृचत' may sensibly be rendered as—*the hotṛs offer oblations to Indra in the final Avabhṛtha ceremony.*

इष्टाः—may be taken to mean—*dear, favourite.* होताः—the same as होतारः.

---

वत्सः काण्व ऋषिः ।

३ २उ      २ १र   २र   ३ २   ३ १ २    ३ १ २
अहमिद्धि पितुष्परि मेधामृतस्य जग्रह ।
३ १र    २र
अहं सूर्य इवाजनि ॥ ८ ॥ १५२ ॥

अहम् । इत् । हि । पितुः । परि । मेधाम् । ऋतस्य । जग्रह । अहम् । सूर्यः । इव । अजनि ॥ ८ ॥

भाष्यसारः । पितुः—रक्षकस्य, ऋतस्य—सत्य-स्वरूपस्य, इन्द्रस्य मेधां—अनुग्रह-बुद्धिम्, अहम् इत्—अहमेव नान्यः, परि जग्रह—लब्धवान् । हि—यस्मात्, अहम् सूर्य इव अजनि । सूर्य इव प्रकाशमानोऽहं प्रादुरभूवम् ॥ ८ ॥

I have, indeed (or alone), obtained the favour of the ever-true, eternal father (Indra), as I have been born like the sun.—8.

**सा०-भा० ।** 'पितुः' पालकस्य 'ऋतस्य' सत्यस्यापि तस्येन्द्रस्य 'मेधाम्' अनुग्रहात्मिकां बुद्धिम् 'अहम् इत्' अहमेव 'परिजग्रह' परिगृहीतवानस्मि नान्यः । 'हि' यस्मात् एवं तस्मात् 'अहं सूर्य इव अजनि' सूर्यो यथा प्रकाशमानः सन् प्रादुर्भवति तथा अहमजनिषम् प्रादुरभूवम् ॥ ८ ॥

८ । ऋ० सं० ८ म० ६ सू० १० ऋ० । उ० आर्चि० ७,१,५,१ (2.850)

ऋतस्य पितुः—'true protector'—*Wils.*

परि-जग्रह—rt. ग्रह् perf. 1. sg.

अजनि—I have become bright as the sun—*Wils.*

---

शुनःशेप ऋषिः ।

२ १ २ ३ २ ३ १ २ ३ १ २
रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
३ २ ३ २ ३ १ २
क्षुमन्तो याभिर्मदेम ॥ ९ ॥ १५३ ॥

रेवतीः । नः । सधमादे । इन्द्रे । सन्तु । तुविऽवाजाः । क्षुऽमन्तः । याभिः । मदेम ॥ ९ ॥

भाष्यसारः । क्षुमन्तः—अन्नवन्तः, वयं याभिर्गोभिः मदेम—हृष्येम, इन्द्रे सधमादे—अस्माभिः सह हृष्टे सति, ताः गावः रेवतीः—क्षीरादिधनवत्यः, तुवि-वाजाः —प्रभूतबलाश्च सन्तु—इति सायणसम्मता व्याख्या 'याभि'रित्यस्य परं 'गोभि'रिति ततश्च 'ताः गावः' इति चाप्रस्तुतपदान्तराध्याहारान्न समीचीनतयाऽवभाति । अस्मन्नये तु इन्द्रे तदीयैः सखिभूतैर्देवैर्मरुदादिभिः सह प्रहृष्टे सति, नः—अस्माकम्, रेवतीः—धनाद्युपेताः—लिङ्गव्यत्ययः, तुविवाजाः—प्रभूतान्नानि सन्तु, याभिर्यैरन्नैः—लिङ्गव्यत्ययः, क्षुमन्तोऽन्नवन्तो वयं मदेम हृष्येमेति मन्त्रोक्तपदैरेव साधुव्याख्या सम्भवति ॥ ९ ॥

Indra having been delighted with his associates, let there be our abundant feasts together with ample riches, with which we may rejoice, sufficiently provided with food.—9.

**सा०-भा० ।** 'क्षुमन्तः' अन्नवन्तः वयं 'याभिः' गोभिः 'मदेम' हृष्येम 'इन्द्रे सधमादे' अस्माभिः सह हर्षयुक्ते सति 'नः' अस्माकं ता गावः 'रेवतीः' क्षीराज्यादि-धनवत्यः 'तुवि-वाजाः' प्रभूतबलाश्च 'सन्तु' ॥ ९ ॥

९ । ऋ० सं० १ म० ३० सू० १३ ऋ० । उ० आर्चि० ४, १, १४, १ ।

रेवतीः—रयि धनम्, Ngh. 2. 9—मतुप्, य changed to इ ( सम्प्रसारणम् ) by रयेर्मतौ बहुलम्, रयि + मतु = र - इ + मतु = रे + मत्, मत् changed to वत् by 'छन्दसीरः' Pāṇ. viii. 2. 15, रेवत्,—*fem*. रेवती ।

सधमादे—सह - rt. मद् *to be exhilarated*—घञ् ; सह is changed to सध by 'सधमादस्थयोश्छन्दसि' Pāṇ. vi. 3. 96.

तुवि-वाजाः—तुवि—बहु, Ngh. 3. 1 ; वाजः—अन्नम्, Ngh. 2. 7.

क्षुमन्तः—*Vide* SV. I. 167. क्षु—fr. √ घस्,—food, Ngh. 2. 7, ṚV. ix. 97. 22 ; x. 61. 12. क्षुमत्—abounding in food, sometimes used in the sense of nourishing, nutritious, ṚV. T. Br. ii ; sometimes in the sense of 'strong, powerful, robust. The author of Viv. derives it fr. rt. क्षु शब्दे, 2. p. and means by क्षुमन्तः—शब्दवन्तः कीर्त्तिमन्तः—*glorious*.

Sāyaṇa explains—'Let the cows with whom we, provided with ample food shall rejoice, be full of strength and abound in food in the form of milk. Sāy. perhaps has been tempted, by the words रेवतीः and याभिः in feminine, to supply (after याभिः)—गोभिः and ताः गावः—not found in the text.

Prof. Wilson adopts Sāy.'s explanation and translates—'Indra rejoicing with us, we may have abundant food and cows may be ours, robust and rich in milk with which we may be happy'. This interpretation is rather forced or inconsistent with the text. So we have differed from it. As regards the variation of genders in our interpretation e. g., रेवतीः (fem.) qualifying तुविवाजाः (masc.), our defence is that strictness in such uses is not always observed in the Vedas, *vide* Pāṇ.'s rule 'व्यत्ययो बहुलम्' iii. 1. 85. and the *karika* thereon e. g., 'सुप्-तिङ्-उपग्रह-लिङ्ग-नराणां काल-हल्-अच्-स्वर-कर्तृ-यङाञ्च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि हि सिध्यति बाहुलकेन'॥ Grfth. translates—'...splendid feasts be ours rich in all strengthening things wherewith, wealthy in food, we may rejoice.

---

शुनःशेपो वामदेवो वा ऋषिः।

१ २ ३ १ २ ३ १ २ ३ २
सोमः पूषा च चेततुर्विश्वासां सुक्षितीनाम्।
३ २ क २र ३ २
देवत्रा रथ्योर्हिता ॥ १० ॥ १५४ ॥

सोमः। पूषा। च। चेततुः। विश्वासाम्। सुऽक्षितीनाम्। देवत्रा। रथ्यः। अर्हिता ॥ १० ॥

भाष्यसारः। देवत्रा—देवेषु, रथ्यः—रथयोग्यः, अर्हिता—आरोढा, सोमः, पूषा—सूर्यश्च, विश्वासां—सर्वासाम्, सुक्षितीनाम्—सु-प्रजानां सतामित्यर्थः, चेततुः जानीतः ॥ १० ॥

Soma and Pūṣan, both worthy of being borne in a chariot among the gods, know of all the good men.—10.

**सा०-भा०।** 'देवत्रा' देवेषु 'रथ्यः' रथार्हः 'अर्हिता' आरोढा 'सोमः' तादृशः 'पूषा' सूर्यश्च 'विश्वासां' सर्वासां 'सुक्षितीनां' क्षियन्ति निवसन्तीति क्षितयः प्रजाः। शोभनक्षितीनां मनुष्याणां सम्बन्धीनि हवींषि इन्द्रार्थं कृतानि 'चेततुः' जानीतः ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
द्वितीयस्याध्यायस्य चतुर्थः खण्डः ॥

इति द्वितीयप्रपाठकस्य द्वितीयार्द्धे प्रथमा दशतिः ॥

१० । इयम् ऋक् ऋग्वेदे नास्ति । The metre of this verse is Anuṣṭup. *

There is the only one hymn, in the Ṛg-Veda—(ii. 40), which is addressed jointly to Soma and Pūṣan in the dual.

पूषा—the name etymologically means '*prosperer*' as derived from the rt. *puṣ* (to cause to thrive). This aspect of his character is evident from his epithets—*viśvavedas* (master of all riches), *anaṣṭavedas* (losing no wealth) *puṣṭimbhara* (bringing prosperity). He is frequently invoked to bestow wealth, and protection (ṚV. vi. 48. 15 etc.). He is extolled in eight hymns, five of which occur in the sixth maṇḍal of the Ṛg-Veda. He has braided hair (vi. 55. 2) and a beard (x. 26. 7). He carries a golden spear, an awl, and a goad. His car is drawn by goats *(ajāśva)*—i. 38. 4 ; vi. 55. 3, 4. Karambha (a preparation of curd and fried-barley-powder) is his characteristic food, so he is often called *Karambhād.* He is closely connected with the sun. Yāska explains Pūṣan to be the sun,—Nir. 7. 9. so also Sāy. in the above verse ; and in the post-Vedic literatuie, Pūṣan occurs as a name of the sun. He is a pastoral deity ; he protects cattle, bringing them home uninjured and driving back the lost. *Āghṛṇi* (glowing) is one of his distinctive epithets. He is a guardian of roads removing all dangers from the way (i. 42. 1-3) and is called *vimuco napāt* (son of deliverance)—ib. 4. For his further references *see* ṚV. i. 23. 13, 14 ;—89. 5, 6 ;—90. 4 ; ii. 1. 6 ;—31, 4 ;—40, 6 ; iii. 57. 2 ;—62. 9 ; iv. 30. 24 ;—57. 7 ; v. 41. 4 ;—46. 2, 5 ;—49. 3 ;—51. 11 ;—81. 5 ; vi. 17. 11 ;—24. 5 ; 49. 8 ;—50. 5 ;—51. 11 ;—54. 4 ;—57. 4 ;—58. 2. 4 ; vii. 35. 9 ;—39. 2 ; viii. 31. 11 ; 54. 4 ; ix. 67. 10 ;—81. 4 ;—101. 7 ; x. 17. 3-6 ;—26. 1, 3 ;—59. 7 ;—65. 1 ; 66. 5 ; 85. 14, 26 ;—92. 13 ;—98. 1 ;—139. 1.

चेततु:—rt. चित् ( संज्ञाने, *to know fully*. I. p. ) लिट् (perf.) 3. du. anomalously formed, the class. form is चिचिततु: ; perf. for pres. *See* Pāṇ. iiii. 3. 6. Whitney, Para. 823.

देवत्रा—aff. त्रा is added in the loc. sense, *vide* our notes on SV. 1. 109 ; 112.

रथ्योर्हिता—Vivaraṇam has a particular note on this, e. g.—'रथ्य: अहिता'—इति छेदस्तु पदग्रन्थविरुद्धः । पदकारस्तु 'रथ्योः हिता'—इत्येवं चिच्छेद । रथ्यो:—रथशब्देनात्र यज्ञ उच्यते, रंहतेर्गतिकर्मणः, रथ्यो:—रथस्य यज्ञस्य यौ वोढारौ तौ पत्नीयजमानावत्र रथ्यावुच्येते, तयो: यज्ञं देवान् प्रति प्रापयित्रो: पत्नीयजमानयो: हिता—हितौ द्विवचनस्य रूपन् ( सुपां सुलुगिति )। —*purp.* instead of disjoining रथ्य: अहिता in the pada-text as Sāy. has adopted, Viv. takes it 'रथ्यो: हिता' (for हितौ du.—both benevolent to the sacrificer and his wife)—as a qualifying adj. applicable to Soma and Pūṣan both.

सुक्षितीनाम्—of good men ; क्षिति is a syn. of men, people, Ngh. 2. 3. dr. fr. rt. क्षि, *to dwell.* cf. 'पञ्चक्षिती: परि सद्यो जिगाति' ṚV.

* Anuṣṭup metre has 4 pādas, each consisting of 8 syllables. The rest of the verses of this decade are of Gāyatrī metre, which prevails from the beginning to the end of the second Adhyāya (SV. 1. 115—232).

अथ द्वितीयाध्यायस्य पञ्चमः खण्डः ।

द्वितीयप्रपाठकस्य द्वितीयार्द्धस्य द्वितीया दशतिः ।

श्रुतकक्षः सुकक्षो वा ऋषिः । अनुष्टुप् छन्दः ।

२ ३ २ ३ १ २ ३ १ २ ३ १र २र
पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
२ १ २ ३ १ २ ३ १ २ ३ २
विश्वासाहं शतक्रतुं मंहिष्ठं चर्षणीनाम् ॥ १ ॥ १५५ ॥

पान्तम् । आ । वः । अन्धसः । इन्द्रम् । अभि । प्र । गायत । विश्वऽसहम् । शतऽक्रतुम् । मंहिष्ठम् । चर्षणीनाम् ॥ १ ॥

भाष्यसारः । हे ऋत्विजः, वः—यूयम्, विश्वासहं—सर्वेषां शत्रूनामभिभवितारम्, शतक्रतुं—बहुकर्माणं बहुप्रज्ञं वा, चर्षणीनां मंहिष्ठं—मनुष्याणां (मनुष्येभ्यः) धनदातृतमं यद्वा, यजमानानां पूज्यतमम्, अन्धसः—अन्नं सोमलक्षणम्, आ—आभिमुख्येन, पान्तं—पिबन्तम्, इन्द्रम्, प्र-गायत—अत्यर्थं स्तुत ॥ १ ॥

(O priests), glorify Indra, the drinker of Soma-libation, the subduer of all (enemies), the accomplisher of many wonderful deeds (*Śatakratu*), the most liberal donor to men (or most adorable to men).—1.

**सा०-भा० ।** हे ऋत्विजः ! 'वः' यूयम् 'अन्धसः' सोमलक्षणम् अन्नम् 'आ' पान्तम् आभिमुख्येन पिबन्तम्,—पा पाने (भ्वा०प०), छान्दसः शपो लुक् । 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इति 'न लोकाव्यय०' (पा० २,३,६९) इति षष्ठीप्रतिषेधाभावः । ततोऽन्धस इत्यत्र 'कर्त्तृकर्मणोः०' (पा० २.३,६५) इति षष्ठी, सोममभिमुख्येन पिबन्तम् एतादृशम् 'इन्द्रं' 'प्र गायत' प्रकर्षेण अभिष्टुत । कीदृशम् ? 'विश्वासहम्' सर्वेषां शत्रूणामभिभवितारं भूतजातानां वा, अतएव 'शतक्रतुम्' बहुविधप्रज्ञानं बहुविधकर्माणं वा 'चर्षणीनाम्' मनुष्याणाम् 'मंहिष्ठम्' धनस्य दातृतमं यद्वा, यजमानानां यष्टव्यत्वेन पूजनीयमिन्द्रं प्र गायतेति समन्वयः ॥ १ ॥

१ । ऋ० सं० ८ म० ९२ सू० १ ऋ० । उ० आर्चि० १,२,१,१ ।

पान्तम्—for पिबन्तम्, fr. rt. पा *to drink*, 1. p. शप् is elided and पा is not changed to पिब, which is a vedic peculiarity.

अन्धसः—gen. sg. अन्नस्य, of food, Ngh. 2. 7. अन्ध इत्यन्न-नाम, आध्यानीयं भवति *andhas* is a syn. of food, as it is to be sought. Nir. 5. 1. Gen. is not here barred by 'न लोकाव्यय०' Pāṇ. ii. 3. 69. dr. rt. अद-भक्षणे, by 'अदेर्नुम्धौ' च uṇ. here

*andhas* refers to the Soma-juice, which is the favourite beverage of Indra. see SV. I. 124. 145.

विश्वासाहम्—all-conquering. rt. सह्—*to overcome*—ण्वि by 'छन्दसि सहः' Pāṇ. iii. 2. 63. *vide* सदासाहम् SV. I. 129; नृषाहम् I. 144. or it should be taken for विश्वासहम् ( acc. to pada-text ) which is dervd. with aff. क्विप्, the long vowel in विश्वा can be ascribed to the rule 'नहिवृति···सहि०' Pāṇ. vi. 3. 116.

शतक्रतुम्—*vide* our notes on SV. I. 115.

मंहिष्ठम्—most liberal, or most honoured; fr. rt. मंह *to bestow*, I. A. *See* SV. I. 107, 144.

चर्षणीनाम्—मनुष्याणाम्, of men.; *vide* our notes on the etym. of this word on SV. I. 144.

---

वसिष्ठ ऋषिः। गायत्रीच्छन्दः।

२ ३ १ २ ३ १ २ ३ १ २
**प्र व इन्द्राय मादनं हर्यश्वाय गायत।**
१ २ ३ १ २
**सखायः सोमपाव्ने ॥ २ ॥ १५६ ॥**

प्र। वः। इन्द्राय। मादनम्। हरिऽअश्वाय। गायत। सखायः। सोमऽपाव्ने ॥ २ ॥

भाष्यसारः। हे सखायः ऋत्विजः, वः—यूयम्, हर्यश्वाय—हरिनामकाश्वद्वयस्य स्वामिने, सोमपाव्ने—सोमं पिबते, इन्द्राय, मादनम्—आह्लादकम् स्तोत्रम्, प्रगायत ॥ २ ॥

O friends, sing delighting praises to Indra, the lord of the horses known by the name 'Hari', the drinker of the Soma.—2.

**सा०-भा०।** हे 'सखायः!' 'वः' यूयं 'हर्यश्वाय' हरिनामकाश्वाय 'सोमपाव्ने' सोमानां पात्रे 'इन्द्राय' 'मादनं' मदकरं स्तोत्रं 'प्र गायत' प्र पठत ॥ २ ॥

२। ऋ० सं० ७ म० ३१ सू० १ ऋ०। उ० आर्चि० १,२,२,१ (2.65).

वः stands for यूयम्, *vide* notes on, SV. I. 5, 21, 115.

हर्यश्वाय—Indra's horses are called by the name 'Hari', they are two. 'हरी इन्द्रस्य रोहितोऽग्नेः हरितः आदित्यस्य'—Ngh. I. 15.

सखायः—*see* our notes on SV. I. 133, 136.

सोमपाव्ने (*dat. sg.*) to (Indra) the drinker of the Soma, rt. पा—वनिप्, Pāṇ. iii. 2. 74.

---

काण्वो मेधातिथिऋषिः प्रियमेधश्च ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः ।
१ २ ३ १ २
कण्वा उक्थेभिर्जरन्ते ॥ ३ ॥ १५७ ॥

वयम् । ऊम् इति । त्वा । तदित्ऽअर्थाः । इन्द्र । त्वाऽयन्तः । सखायः । कण्वाः । उक्थेभिः । जरन्ते ॥ ३ ॥

भाष्यसारः । हे इन्द्र, त्वायन्तः—त्वाम् इच्छन्तः त्वत्कामाः, सखायः, तदिदर्थाः—त्वद्विषया प्रीतिरेव प्रयोजनं येषां तथाभूताः, कण्वाः—काण्वगोत्रीया ऋषयः वयं अस्मदीय-पुत्राश्च, उक्थेभिः—उक्थैः स्तोत्रैः, जरन्ते—त्वां स्तुवन्ति, स्तूमहे इत्यर्थः ॥३॥

(We) the Kaṇvas, O Indra, thy friends, longing to have thee as our own, with this very object in view, sing (to thee) with lauding hymns.—3.

**सा०-भा० ।** हे 'इन्द्र' ! 'त्वायन्तः' त्वामात्मनः इच्छन्तः 'सखायः' समानख्यानाः 'वयम्' 'तदिदर्थाः' यत् त्वदविषयं स्तोत्रं तदित् तदेवार्थः प्रयोजनं येषां तादृशाः सन्तः 'त्वा' त्वाम् स्तूमहे । 'उ' इति पादपूरणः । 'कण्वाः' कण्वगोत्रोत्पन्नाः अस्मदीयाः पुत्राश्च 'उक्थेभिः' उक्थैः शस्त्रैः 'जरन्ते' त्वां स्तुवन्ति ॥ ३ ॥

३ । ऋ० सं० ८ म० २ सू० १६ ऋ० । उ० आर्च्चि० १,२,३,१ (2.69)

तत्-इत्-अर्था:—having thy praise for our object—*Sāy.* and *Wils.*

त्वायन्त:—*lit. desiring to have thee as our own*, i. e., devoted to thee. dr. त्वाम्—क्यच्—शतृ ; 'सुप आत्मनः क्यच्' Pāṇ. iii. 1. 8 ; *vide* notes on त्वायवः SV. 1. 132.

सखाय:—*vide* our notes on SV. 1. 133, 136.

उक्थेभि:—उक्थै:, with hymns ; भिस् is not changed to ऐस्. by 'बहुलं छन्दसि' Pāṇ. vii. 1. 10. for dr. and further usages of the word, *vide* notes on उक्थ्ये SV. 1. 48.

जरन्ते—fr. जृ *to sing*. 1. Ā. *Vide*, *Mcdull's Ved. gram. List of vbs.* —glorify thee with prayers ; we have come across with this rt. in the word 'जराबोध' SV. 1. 15. *vide* also Ngh. 3. 14.

---

श्रुतकक्ष ऋषिः ।

१ २ ३ १ २ ३ १र २र ३ १ २
इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।
३ १ २ ३ १ २
अर्कमर्चन्तु कारवः ॥ ४ ॥ १५८ ॥

इन्द्राय । मद्वने । सुतम् । परि । स्तोभन्तु । नः । गिरः । अर्कम् । अर्चन्तु । कारवः ॥ ४ ॥

भाष्यसारः । **मद्वने—मदनशीलाय, इन्द्राय—इन्द्रस्य कृते, सुतम्—अभिषुतं सोमम्, नः—अस्माकम्, गिरः—वाचः, परिष्टोभन्तु—परितः स्तुवन्तु । ततः कारवः—स्तुतिकारिणः, अर्कम्—अर्चनीयं सोमम्, अर्चन्तु—पूजयन्तु ॥ ४ ॥**

Let our songs belaud the Soma, pressed-out for exhilarated Indra ; let the singers glorify the adorable Soma.—4.

**सा०-भा० । 'मद्वने'—माद्यतेः क्वनिप्—मदनशीलाय 'इन्द्राय' तदर्थं 'सुतम् अभिषुतं सोमं 'नः' अस्मदीयाः 'गिरः' स्तुतिलक्षणा वाचः 'परिष्टोभन्तु'—'स्तोभतिः स्तुतिकर्मा' ( निघ० ३,१४,४ )—परितः सोमं स्तुवन्तु । ततः 'कारवः' स्तुतिकारिणः स्तोतारश्च 'अर्कम् सर्वैरर्चनीयं सोमम् 'अर्चन्तु' पूजयन्तु ॥ ४ ॥**

**४ । ऋ० सं० ८ म १२ सू० १६ ऋ० । उ० आर्चि० १,२,४,१ ।**

मद्वने—मद *to be exhilarated*—I.u. वनिप् by 'स्ना-मदि-पद्यर्त्ति-दृ-शकिभ्यो वनिप् । Sāy. derives माद्यतेः ( मद of the दिवादि group )—क्वनिप् ।

अर्कमर्चन्तु—let ( the singers ) adore divine Soma. Grfth renders—'let(the poets) sing the song of praise' ; 'let (the priests) do honour to the (Soma) honoured of all'—*Wils*. Peterson explains अर्कमानृचुः as—*sing their song* (in Ṛ̣V. i. 19. 4.) and quotes 'गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः' (i. 10. 1) in his support. अर्क is taken by Sāyaṇa in the sense of स्तुति (song of praise) in several other passages of the Ṛ̣V. 'मरुतः स्वर्काः' vii. 35. 9. स्वर्काः—शोभनस्तुतयः—*Sāy*. 'तुभ्येदेते मरुतः...अर्चन्त्यर्कम् v. 30. 6. एते स्तोतारः हे इन्द्र तुभ्यमेवार्चनीयं स्तोत्रमर्चन्ति स्तुवन्ति—कुर्वन्तीत्यर्थः—*Sāy*. ; 'अर्चामार्कं नरे विश्रुताय—v. 31. 5. अर्कं मन्त्ररूपं स्तोत्रम् अर्चाम पूजयाम उच्चारयामेत्यर्थः—Sāy. The different mgs of '*Arka*' are given by Yāska in Nir. 5.4. In the com. on Ṛ̣V. i. 7. 1. SV. 1. 198. Sāy. takes *Arka* in the sense of mantra, and adopts Yāska's etymology—'अर्को मन्त्रो भवति यदनेनार्चन्ति—'*Arka*' is *Mantra* inasmuch as gods are worshipped by the same. *Here* he means by अर्कम्—*adorable* ( अर्चनीयम् ) *Soma*.

कारवः—nom. pl. of the *stem* कारु (the singer) ; 'the poets'—*Grfth* ; 'the priests'—*Wils* ; dr. fr. कृ--aff. उण् un i. 1 ; cf. 'आ ते कारो शृणवामा वचांसि', we shall

listen to thy words, O bard. R̥V. iii. 33. 10. again 'कारुरहम्'—ix. 112. 3, 'प्रचोदयन्ता विदथेषु कारू' x. 110. 7. Yāska interprets *kāru* as स्तोमानां कर्त्ता—the singer of hymns.—Nir. 6, 6.

---

इरिमिठ ऋषिः।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अयं त इन्द्र सोमो निपूतो अधि बर्हिषि।
१ २ ३ २उ ३ १ २
एहीमस्य द्रवा पिब ॥ ५ ॥ १५६ ॥

अयम्। ते। इन्द्र। सोमः। निऽपूतः। अधि। बर्हिषि। आ। इहि। ईम्। अस्य। द्रव। पिब ॥ ५ ॥

भाष्यसारः। हे इन्द्र, ते—तव कृते, अयं सोमः, बर्हिषि अधि—वेद्यामास्तीर्णस्य कुशस्य उपरि, निपूतः—सम्यक् शोधितो विद्यते। ईम्—इदानीम्, पादपूरणो वाऽयं निपातः, अस्य—इमं सोमं प्रति एहि आगच्छ, द्रव—द्रुतम् आगच्छ, तदनन्तरं प्रस्तुतं सोमं पिब ॥ ५ ॥

This is for thee, Indra, the Soma-juice clearly refined or duly consecrated on the holy grass; come now, hasten hither and drink (it up).—5.

**सा०-भा०।** हे इन्द्र! 'ते' तुभ्यं त्वदर्थम् 'अयं सोमः' 'बर्हिषि अधि' वेद्यामास्तीर्णे दर्भे 'निपूतः' नितरां दशापवित्रेण शोधितः अभिषवादिसंस्कारैः संस्कृत इत्यर्थः। 'ईम्' इदानीम्, 'अस्य' इमं सोमं प्रति 'एहि' आगच्छ, आगत्य च यत्र रसात्मकः सोमो हूयते तं देशं प्रति 'द्रव' शीघ्रं गच्छ तदनन्तरं तं सोमं 'पिब' ॥ ५ ॥

५। ऋ० सं० ८ म० १७ सू० ११ ऋ०। उ० आर्चि १,२,५,१।

निपूतः—'purified by being filtered through the cloth called *daśāpavitra* over the sacred grass, strewed on the altar.' The elaborate process of the preparation of the Soma and its filtration through the strainer of wool will be described in our notes on the book (पर्व) on the Pavamāna Soma which constitutes the fifth Adhyāya of the Sāma-Veda.

ईम्—*Indec.* mg. *now*; or it may be taken as an expletive, *vide* Yāska's dictum—'पादपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' (कम-ईम्-इत्-उ)—Nir. 1. 9. for the mg. of the quoted extract, *vide* notes on उ SV. 1. 31.

अस्य—इमम्, *gen.* in the place of *accus.* vide, notes on इन्द्रस्य SV. 1. 118, and अस्य 1. 132

द्रवा—fr. द्रु *to run, hasten* 1. p. imp. sg ; the final vowel is lengthened by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135.

---

मधुच्छन्दा ऋषिः ।

२ २ ३ १ २ ३ १ २ ३ १ २
सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
३ २ ३ १ २
जुहूमसि द्यविद्यवि ॥ ६ ॥ १६० ॥

सुरूपऽकृत्नुम् । ऊतये । सुऽदुघाम् इव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥ ६ ॥

भाष्यसारः । **सुरूपकृत्नुं—शोभनकर्मकर्त्तारम्, इन्द्रम्, ऊतये—अस्मद्रक्षणाय, द्यविद्यवि—प्रतिदिनम्, 'जुहूमसि'—आह्वयामः, गोदुहे—गोदोहार्थम्, सुदुघां—दुग्धवतीं गामिव, यथा दोग्धा दोहनार्थं स्वाभिमुख्येन दोहनीयां गामाह्वयति तद्वत् ॥ ६ ॥**

For protection, we invoke, day after day, Indra, the accomplisher of excellent deeds, like a good milch-cow for milking.—6.

**सा०-भा० । 'सुरूपकृत्नुम्' शोभनरूपोपेतस्य कर्मणः कर्त्तारम् इन्द्रम् 'ऊतये अस्मद्रक्षार्थं 'द्यविद्यवि' प्रतिदिनं 'जुहूमसि' आह्वयामः । आह्वाने दृष्टान्तः—'गोदुहे' गोधुगर्थं सुदुघाम् इव सुष्ठु दोग्ध्रीं गामिव, यथा लोके गोर्यो दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत् । वस्तोरित्यादिषु द्वादशस्वहर्नामसु द्यविद्यवीति पठितम् ( निघ० १,६ ; नि० २,३,२८ ) ॥ ६ ॥**

**६ । ऋ० स० १ म० ४ सू० १ ऋ० । उ० आर्चि० ४,१,१५,१ ।**

सुदुघाम्—fr. दुह *to milk* ;—milking well or easily ; yeilding much, abundant, bountiful.—aff. कप् ; ह is changed to घ—Pāṇ iii. 2. 70.

गोदुहे—to the milker,—*Sāy* ; 'for milking'—*Viv.*

जुहूमसि—fr. हु *to call*, 3. p. acc. to Macdnll ; fr. ह्वे, acc. to Sāy.—pres. ( लट् ) 1. pl. मस् becomes मसि, by 'इदन्तो मसि' Pāṇ. vii. 1. 46.

द्यविद्यवि—is read among the twelve synonyms of 'अहः' (day). Ngh. 1. 9.

Sāy's addl. notes in his com., on the corres. ṚV. verse, giving some gram. derivations,— 'करोतीति कृत्नुः—'कृहनिभ्यां क्नुः' uṇ iii. 30. कित्त्वाद् गुणाभावः । तकारोपजनश्छान्दसः । सुदुघाम्—सुष्ठु दुग्धे इति सुदुघा 'दुहः कब्घश्च,' Pāṇ iii. 2. 70. कित्त्वाद् गुणाभावः । गोदुहे—गां दोग्धीति गोधुक्—सत्सूद्विषेत्यादिना (Pāṇ. iii. 2. 61.) क्विप् । जुहूमसि—ह्वयतेर्लड्उत्तम-

पुरुषवहुवचने 'वहुलं छन्दसी'ति शपः श्लु—Pāṇ. ii. 4. 76. 'अभ्यासस्य च' (Pāṇ. vi. 1. 33.) इत्यभ्यासकारणस्य ह्वयतेः प्रागिव द्विर्वचनात् संप्रसारणम्। 'संप्रसारणाच्च' (Pāṇ. vi. 1. 108.) इति पररूपत्वम्। 'हलः' (Pāṇ. vi. 4. 2.) इति दीर्घः। ततः श्लाविति द्विर्वचनम्। अभ्यासस्य ह्रस्वः—Pāṇ. vii. 4. 59. चुत्वजश्त्वे—Pāṇ. vii. 4. 62. ; viii. 4. 53. 'इदन्तो मसि'—(Pāṇ. vii. 1. 46.) इति इकारागमः॥

---

त्रिशोक ऋषिः।

३ १ २ ३ २ ३ १ २ ३ १ २
अभि त्वा वृषभा सुते सुतं सृजामि पीतये।
३ १ २ ३ १ २
तृम्पा व्यश्नुही मदम्॥ ७ ॥ १६१ ॥

अभि। त्वा। वृषभ। सुते। सुतम्। सृजामि। पीतये। तृम्प। वि। अश्नुहि। मदम्॥ ७ ॥

भाष्यसारः। हे वृषभ—कामवर्षणशील अभीप्सितपूरक इन्द्र, त्वा—तुभ्यम्, सुते—सोमे अभिषुते सति, पीतये—तत्पानाय, अभि सृजामि—उत्सृजामि समर्पयामि, तृम्प—तृप्तो भव, मदं—सोमम्, व्यश्नुहि—सम्यक् पिब।

To thee, O showerer (of blessings), the Soma being pressed out, I offer the libation for drinking ; be pleased to drink the exhilarating draught.—7.

**सा०-भा०।** हे 'वृषभ' कामानां वर्षितरिन्द्र! 'त्वा' त्वां 'सुते' सोमेऽभिषुते सति तं 'सुतम्' सोमं पीतये पानाय 'अभिसृजामि', 'तृम्प' तृप्य, 'मदं' मदकरं सोमं 'व्यश्नुहि' विशेषेण प्राप्नुहि॥ ७॥

७। ऋ० सं० ८ म० ४५ सू० २२ ऋ०। उ० आर्चि० १,२,७,१।

वृषभा—for वृषभ *(voc)*—ending in आ by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. for वृषभ *vide* our notes on SV. 1. 19.

अभि-सृजामि—I pour out to thee—*Wils*, fr. rt. सृज (विसर्गे, *to give*). 'अभिमुख्येन ददामि'—*Viv.*

तृम्पा—तृम्प, be pleased ;—rt. तृप् *to be pleased*. 6. p ; imp. ( लोट् ) 2. sg , the final vowel is long in Saṃhitā text by 'द्व्यचोऽतस्तिङः' Pāṇ. vi 3. 135.

व्यश्नुही—व्यश्नुहि, *drink* ; the final vowel is long as a peculiar case in the Saṃhitā text. fr. rt. अश ( व्याप्तौ, to *pervade* ), imp. 2. sg.—व्यत्ययेन परस्मैपदम्—Sāy.'s com. on ṚV. viii. 12. 6. here it is taken in the secondary sense—*drink*, the rt. अश् *to eat*, or *drink*, though parasmaipadi, belongs to cl. 9 ( क्र्यादि ).

कुसीद ऋषिः।

१ २ ३ १र २र ३ १ २ ३ २
य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः।
१र २र ३ १ २
पिबेदस्य त्वमीशिषे ॥ ८ ॥ १६२ ॥

यः। इन्द्र। चमसेषु। आ। सोमः। चमूषु। ते। सुतः। पिब। इत्। त्वम्। ईशिषे ॥ ८ ॥

भाष्यसारः। हे इन्द्र, ते—तव कृते, सुतः—अभिषुतः सोमः, चमसेषु—पात्रविशेषेषु, चमूषु—ग्रहाख्यपात्रेषु च, आ—सर्वतः, अस्ति। अस्य—इमं सोमं त्वं पिब, इत्—एव। यतः त्वम् अस्य—सोमस्य, ईशिषे—ईश्वरो भवसि।

O Indra, drink the ex-pressed Soma-juice which is, for thee, poured on *camasas* and *camūs*, as thou art the lord (of the Soma).—8.

**सा०-भा०।** हे 'इन्द्र!' 'ते' त्वदर्थं 'सुतः' अभिषुतो यः 'सोमः' 'चमसेषु' एतन्नामकेषु पात्रेषु तथा 'चमूषु' चमन्ति अदन्त्यत्रेति चम्वो ग्रहाः, तेषु च 'आ' सर्वतः अस्ति। 'अस्य' तमेतं सोमं 'त्वम्' 'पिब इत्',—इदवधारणे—पिबैव। कथमस्य सोमपानयोग्यता? तत्राह हे इन्द्र! त्वम् 'ईशिषे' तस्य त्वमीश्वरो भवसि खलु, यत एवं ततः पिबेति समन्वयः। ईश ऐश्वर्ये लटि 'ईशः से' (पा० ७,२,७७) इति इडागमः ॥ ८ ॥

८। ऋ० सं० ८ म० ८२ सू० ७ ऋ०।

चमसेषु—fr. rt. चम् *to drink*,—'*camasa*' is a vessel used at sacrifices for drinking the Soma, a kind of flat dish or cup or ladle—generally of a square shape, made of wood and furnished with a handle.

चमूषु—f. loc. pl.—*camū* is a vessel or a part (two or more in number) of the reservoir into which the Soma is poured; '*camū*' as Ved. loc. occurs six times in the ṚV.; once '*cambī*' x. 91. 15., nom. du '*cambū*' iii. 55. 20, nom. pl. viii. 2. 8. '*Cambau*' f. du—means 'the two great receptacles of all living beings'—*heaven and earth.*—Ngh. 3. 30 cf. ṚV. iii. 55. 20, where Sāy. explains—*camanti adanti anayoh* (du.) *deva-manusyah*; this would imply vessels or ladles. The word '*camūṣad*' occurs several times: ṚV. i. 14. 4;—54. 9; x. 43. 4 etc. mg.—lying on the camū vessel.

The Soma-libations are poured from two kinds of vessels the *camasas*, i.e., cups, and the *grahas* or saucers (here called camū), cf. Haug. Ait. Br. transl. p. 118.

ईशिषे—rt. ईश् *to lord over*, pres. 2. sg. *see* Sāy.'s com.

---

शुनःशेप ऋषिः।

१ २ ३ १ २ ३ १ २
योगे योगे तवस्तरं वाजेवाजे हवामहे।
१ २ ३ १ २ ३ १ २
सखाय इन्द्रमूतये॥ ९॥ १६३॥

योगेऽयोगे। तवःऽतरम्। वाजेऽवाजे। हवामहे। सखायः। इन्द्रम्। ऊतये॥ ९॥

भाष्यसारः। योगे योगे—तत्तत्कर्मोपक्रमे वृत्रवधादिव्यापारे सर्वत्र, वाजे वाजे—संग्रामे समुपस्थिते, यद्वा हविर्लक्षणे अन्ने उपकल्पिते, सखायः—स्तोतृ-स्तुत्य-भावेन इन्द्रस्य सखिभूताः प्रियाः वयम्, तवस्तरम्—अतिशयेन बलिनम्, इन्द्रम्, ऊतये—अस्मद्रक्षणाय, हवामहे—आह्वयामः॥ ९॥

Whenever occasion arises, whenever offering of food is made (or in every warfare), we, as friends, call on mightiest Indra for our protection.—9.

सा०-भा०। 'योगे योगे' प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे, 'वाजे वाजे' कर्म-विघातिनि तस्मिन् सङ्ग्रामे 'तवस्तरम्' अतिशयेन बलिनम् 'इन्द्रम्' 'ऊतये' रक्षार्थं 'सखायः' सखिवत् प्रिया वयं 'हवामहे' आह्वयामः॥ ९॥

९। ऋ० सं० १ म० ३० सू० ७ ऋ०। उ० आर्चि० १, २, ११. १।

योगे योगे—on every occasion. rt. युज्—घञ्।

तवस्तरम्—mg.—extremely strong, mightier, com. dg. of तवस्, with aff. विन् (in the sense of मतुप्), which is dropped, *vide* Sāy.'s addl. gram. notes quoted below. fr. rt. तु, *to be strong*, 2. p. cf. तवीयस् RV. x. 92. 8. तवस्तरम् i. 30. 7; spv. dg. तवस्तमः i. 190. 5.—तमः ii. 33. 3; for the use of तवस् in the sense of power, strength, cf. RV. iii. 1. 1.—30. 1. AV. xi. 1. 14; Ngh. 2. 9.

वाजे वाजे—वाजः—अन्नम्, food, Ngh. 2. 7.—संग्रामः, fight, Ngh. 2. 17.

हवामहे—*Vide* notes on SV. 1. 130.

Sayaṇa's addl. notes in his com. on the ṚV. verse:—

योगे योगे—युजिर योगे हलश्चेति घञ्। 'चजोः कु घिण्यतोः' (Pāṇ. vii. 3. 52.) इति कुत्वम्। 'नित्यवीप्सयो'रिति वीप्सायां द्विर्भावः। तवस्तरम्—तवस्-शब्दात् 'अस्मायामेधे'त्यादिना (Pāṇ. v. 2.121.) मत्वर्थीयो विनिः। तस्य छान्दसो लोपः।

---

मधुच्छन्दा ऋषिः।

२उ ३ १ २ ३ १ २ ३ १र २र
**आ त्वेता निषीदतेन्द्रमभि प्र गायत।**
१ २ ३ १ २
**सखायः स्तोमवाहसः॥ १०॥ १६४॥**

आ। तु। आ। इत। नि। सीदत। इन्द्रम्। अभि। प्र। गायत। सखायः। स्तोमऽवाहसः॥ १०॥

भाष्यसारः। हे स्तोमवाहसः—स्तोत्रकारिणः, सखायः ऋत्विजः, तु—क्षिप्रम्, आ-इत आगच्छत, आ—आ-इत आगच्छत,—आदरापेक्षया आङो द्विरुक्तिः, द्वितीय-'आ'-शब्दस्य च परम् 'इत'-पदस्याध्याहारः। निषीदत—उपविशत, च, इन्द्रम् अभि—उद्दिश्य, प्र-गायत—अत्यर्थं स्तुत॥ १०॥

O friends, the offerers of praises, come hither hastily, sit down and sing your songs of praise to Indra.—10.

**सा०-भा०।** तु शब्दः क्षिप्रार्थो निपातः। 'आ तु आ इत' इति द्वाभ्यामाङ्भ्यां मन्त्रे तु इत-शब्दोऽभ्यसनीयः। हे 'सखायः' ऋत्विजः! क्षिप्रमस्मिन् कर्मणि आगच्छतागच्छत। आदरार्थोऽभ्यासः। आगत्य च 'निषीदत' उपविशत उपविश्य च 'इन्द्रम्' 'अभि प्रगायत' सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः? 'स्तोमवाहसः' त्रिवृत्पञ्चदशादिस्तोमान् अस्मिन् कर्मणि वहन्ति प्रापयन्ति॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने

द्वितीयाध्यायस्य पञ्चमः खण्डः।

इति द्वितीयप्रपाठकस्य द्वितीयार्द्धे द्वितीया दशतिः।

१०। ऋ० सं० १ म० ५ सू० १ ऋ०। उ० आर्चि० १, २, १०, १।

स्तोमवाहसः—*lit.* bearing praises. Rosen translates it '*sacra ferentes*'. M. Langloise—vous qui avez un tre sor d' hymnes (sacre's). For स्तोम *see* our notes on SV. I. 44.

Sāyaṇa explains the expression—'presenting in this rite *Trivṛt*, *Pañcadaśa* and others'—that is, collections of laudatory stanzas in the Ṛg-Veda, so denominated ; for स्तोम *vide* notes on SV. 1. 44.

Sāy.'s addl. notes in his com. on the corres. ṚV. verse referred to above.

इता—इन् गतौ। 'द्व्यचोऽतस्तिङः' (Pāṇ. vi. 3. 135.) इति संहितायां दीर्घत्वम्। नि-षीदत—पाघ्राध्मेत्यादिना (Pāṇ. vii. 3. 78.) सदेः सीदादेशः। 'सदिरप्रतेः' (Pāṇ. viii. 3. 66.) इति संहितायां षत्वम्। स्तोमवाहसः—'अर्त्ति-स्तु-सु-हु-सृ-धृ-चि-क्षु-भा-याबापदियक्षिनीभ्यो मन्' (uṇ. i. 139.) इति स्तौतेर्मन्-प्रत्ययान्तः स्तोमशब्दो निष्पन्नः। स्तोमं वहन्तीति—स्तोमवाहसः, 'वहि-हा-धाञ्भ्यश्छन्दसि' (uṇ. iv. 220.) इत्यसुन्। तत्र णिदित्यनुवृत्तेरत उपधायाः (Pāṇ. vii. 2. 116.) इत्युपधाया वृद्धिः।

---

अथ द्वितीयाध्यायस्य षष्ठः खण्डः।

द्वितीयप्रपाठकस्य द्वितीयार्द्धे तृतीया दशतिः।

विश्वामित्र ऋषिः।

३ १र २र ३ १ २
इदं ह्यन्वोजसा सुतं राधानां पते।
३ २ १ २
पिबा त्व३स्य गिर्वणः॥ १॥ १६५॥

इदम्। हि। अनु। ओजसा। सुतम्। राधानाम्। पते। पिब। तु। अस्य। गिर्वणः॥ १।

भाष्यसारः। हे राधानां पते—धनानां स्वामिन्, गिर्वणः गीर्भिः स्तुतिभिर्वन्दनीय इन्द्र, इदम् अनु—अनेन अनुक्रमेण, ओजसा सुतं—बलेन ग्रावभिः अभिषुतम्, अस्य—इमं सोमम्, तु—शीघ्रम्, हि पिब॥ १॥

O lord of wealth, adorable by hymns, soon drink this Soma-juice pressed-out (for thee) with physical energy.—1.

सा०-भा०। हे 'राधानां' धनानां 'पते'! 'गिर्वणः' गीर्भिः स्तुतिभिर्वननीय इन्द्र! 'ओजसा' बलेनोपहितस्त्वम् 'इदम् अनु' अनेनानुक्रमेणेत्यर्थः 'ओजसा' बलेन ग्रावभिः 'सुतम्' अभिषुतम् 'अस्य' इमं सोमं 'तु' क्षिप्रं 'पिब हि'॥ १॥

१। ऋ० सं० ३ म० ५१ सू० १० ऋ०। उ० आर्चि० १, २, ६, १ (2. 86).

राधानाम्—राध is a syn. of धन, wealth, riches—Ngh. 2. 10.

अनु—*Wils.* construes it with ओजसा and translates—(effused) *agreeably to* our strength.

गिर्वणस्—*lit.* entitled to praise ; means god (*here* rfs. to Indra) 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' (सम्भजन्ति—स्वार्थे णिच्)—*Girvaṇas* means a god, as people adore him with hymns.—Nir. 6. 14 ; dr. गीः—rt. वन् (संभक्तौ, *to adore*, 1. p.) caus.—uṇ. aff. असुन्, uṇ. 4. 188. (वनेर्घटादित्वेन मित्संज्ञकत्वात्) ह्रस्वत्वम् Pāṇ. vi 4. 92. गीर्वणा इति प्राप्ते दीर्घाभावश्छान्दसः। न becomes ण by 'पूर्वपदात् संज्ञायामगः' (Pāṇ. viii 4. 3). cf. 'आमासु पक्वमैरय···जुष्टं गिर्वणसे बृहत्'—···(sing) the agreeable Bṛhat-Sāman to him who is to be honoured by songs or praises. —ṚV. viii. 89. 7 ; SV. 2. 778.

———

मधुच्छन्दा ऋषिः।

३ १र २र ३ १ २ ३ १ २ ३ १ २
**महाँ इन्द्रः परश्च नो महित्वमस्तु वज्रिणे।**
१र २र ३ १र २र
**द्यौर्न प्रथिना शवः॥ २ ॥ १६६ ॥**

महान्। इन्द्रः। परः। च। नः। महित्वम्। अस्तु। वज्रिणे। द्यौः। न। प्रथिना। शवः॥ २॥

भाष्यसारः। इन्द्रो हि महान् परश्च—आकारतो गुणतश्च श्रेष्ठः। वज्रिणे—वज्रयुक्ताय इन्द्राय, महित्वं शरीरतो गुणतश्च आधिक्यं सर्वदाऽस्तु। अपि च द्यौर्न—विस्तृतो विशालो वा द्युलोक इव, शवः—बलं सेना इत्यर्थः, प्रथिना—प्रभूतं (क्रि० वि०) भवतु॥ २॥

Great is our Indra and supreme is he ; may the magnanimity be his who wields the thunder ; may his strength (in the form of army) be wide like heaven.—2.

**सा०-भा०।** अयम् 'इन्द्रः' 'महान्' शरीरेण प्रौढः 'परश्च' गुणैरुत्कृष्टः। किञ्च 'वज्रिणे' वज्र-युक्ताय इन्द्राय 'महित्वं' पूर्वोक्तं द्विविधमाधिक्यं सर्वदा 'अस्तु' स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतत्। किञ्च 'द्यौर्न' द्युलोक इव 'शवः' बलम् इन्द्रस्य सेनारूपं 'प्रथिना' प्रथिम्ना पृथुत्वेन युज्यताम् इति शेषः। यथा द्युलोकः प्रभूतः एवमस्य सेना प्रभूता अस्तु। ('नु'-शब्दो यद्यपि क्षिप्र-नामसु नु-मक्षुरित्यादिषु पठितः तथापि अत्र तदर्थत्वासम्भवात् समुच्चयार्थोऽत्र गृहीतः?)। न-शब्दो लोके प्रतिषेधार्थ एव स्वाध्याये तु प्रतिषेधार्थ उपमार्थश्चेति द्विविधः, येन पदेन अन्वीयते तस्मात् पूर्वं प्रयुज्यमानः

प्रतिषेधार्थः, उपरिष्टात् प्रयुज्यमान उपमार्थः। तथा च यास्क उदाहरति—'उभयमन्वध्यायम्, नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति। दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते' (नि० १, ४,) इति। अत्रोपमा-वाचिनो द्यु-शब्दस्योपरि प्रयुक्तत्वादुपमार्थः स्वीकृतः ॥ २ ॥

२। ऋ० सं० १ म० ८ सू० ५ ऋ० ६। ṚV. has **'परश्च नु'** instead or **'परश्च नः'** the above SV. reading ; the Bib. Ind. Ed. of the Sama-Veda has, however, **पुरश्च नः।**

**द्यौर्न**—*like* heaven ; **'न'** here means 'like'. In the Vedas the particle *na*, over and above the sense of negation, has the sense of comparison, Nir. i. 4. e. g. **'दुर्मदासो न सुरायाम्'**—like hard drinkers of wine. ṚV. viii. 2. 12. **'अरान् न नेमिः परिता बभूव'**—he surrounds them as the felly the spokes.—ṚV. i. 32.15. **'पक्वा शाखा न'**—like a branch with ripe fruit, i. 8. 8, **'मृगो न भीमः'**—like a dreadful beast i.154.2 ; in this sense *na* always follows the word with which it compares. Prof. Macdnll has a note on this :—'Na' is used in the Vedas as a particle of comparison exactly like 'iva', *as*, *like*. This meaning seems to be derived from 'not' as negativing the predicate of a thing to which it properly belongs, e. g. 'he (neighs), not a horse neighs' = he, though not a horse, neighs = he neighs like a horse.—*Stu. Ved. Gram.* Para. 180, p. 236. *Vide* our notes on **'रथं न'** SV. 1. 5.

**शवस्**—(*orig.* swelling, increase), strength, power, might.—M. W. S. E. Dict. p. 1059. col. 3. Ngh. 2. 9. **'शवसा'** (with might) occurs severally in the ṚV. and AV. cf. **'सद्यश्चिद्यः शवसा पञ्चकृष्टीः'**—who (Tārkṣya) immediately with might, spread the five tribes.—ṚV. x. 178. 3, A B. iv. 20.

The part of Sāy.'s com.—beginning with **'नु'-शब्दो यद्यपि क्षिप्रनामसु** etc.', is hardly applicable to the above Sāma-Vedic text, where the word **'नः'** occurs instead of **नु**. Perhaps through the carelessness of the scribes,—it has crept into it ; being unnecessary these lines should be rejected here. Note, however, Sāy.'s addl. notes throwing light on grammatical and other obscurities—अष्टाविंशति-संख्याकेषु बलनामसु ओजः पाजः शव इति पठितम्। महाँ इन्द्रः—महानिति नकारस्य संहितायां दीर्घादटि समानपादे (Pāṇ. viii. 3. 9). इति रुत्वम्। आतोऽटि नित्यम् (Pāṇ. viii. 3. 3). इति पूर्वस्याकारस्यानुनासिकः। भोभगोअघोअपूर्वस्य योऽशि (Pāṇ. viii. 3. 17). इति यकारः। तस्य लोपः—लोपः शाकल्यस्य (Pāṇ. viii. 3. 19) तस्यासिद्धत्वात् (Pāṇ. viii. 2. 1). स्वरसन्धिर्न भवति। महित्वम्—महेरिन् uṇ. iv. 117. इत्यौणादिक इन। महतो भावो महित्वम्। प्रथिना—प्रथिम्ना पृथोर्भाव इत्यर्थे 'पृथ्वादिभ्य इमनिज् वा' (Pāṇ. v. 1. 122) इति इमनिच्। 'र ऋतो हलादेर्लघोः' (Pāṇ. vi. 4. 161) इति ऋकारस्य रभावः। 'तुरिष्ठेमेयःसु' (Pāṇ. vi. 4. 154.) इत्यनुवृत्तौ 'टेः' (Pāṇ. vi. 4. 155) इति टि-लोपः। प्रथिमन्-शब्दस्य तृतीयैकवचने 'अल्लोपोऽनः' (Pāṇ. vi. 4. 134) इत्याकार-लोपः। छान्दसो मकारलोपः।

कुसीदः काण्व ऋषिः ।

१र २र ३ १ २ ३ १ ३ १र २र
आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय ।
३ १र २र
महाहस्ती दक्षिणेन ॥ ३ ॥ १६७ ॥

आ । तु । न । इन्द्र । क्षुऽमन्तम् । चित्रम् । ग्राभम् । सम् । गृभाय । महाऽहस्ती । दक्षिणेन ॥ ३ ॥

भाष्यसारः । हे इन्द्र, महाहस्ती—महाहस्तयुक्तः, त्वं तु नः—अस्मभ्यं दातुम्, क्षुमन्तम्—अन्नयुक्तम्, चित्रं—विविधम्, ग्राभं—ग्रहणयोग्यं धनम्, दक्षिणेन हस्तेन, आ संगृभाय—अभिमुखीभूय संगृहाण ॥ ३ ॥

O Indra, having mighty arm, hold for us, with thy right hand, various acceptable presents together with ample food.—3.

**सा०-भा० ।** हे 'इन्द्र' ! 'महाहस्ती' महाहस्तवान् त्वं 'तु' तदानीमेव 'नः' अस्मभ्यं दातुं 'क्षुमन्तं' शब्दवन्तं स्तुत्यमित्यर्थः 'चित्रं' चायनीयं 'ग्राभं' ग्राहकं ग्रहणार्हं वा धनं 'दक्षिणेन' हस्तेन आ संगृभाय आभिमुख्येन संगृहाण ॥ ३ ॥

३ । ऋ० सं० ८ म० ८१ सू० १ ऋ० । उ० आर्चि० १, २, ६, १ ।

तू—for तु, the long vowel in Saṃhitā text by 'ऋचि तु- नु०' Pāṇ. vi. 3. 133.

Sāy. supplies 'धनं' (wealth) and takes 'क्षुमन्तं' as शब्दवन्तं—स्तुत्यम्, *praise-worthy.*

Benfey takes 'ग्राभं' ( ग्रहणार्हं ) as referring to the thunderbolt.

चित्रं क्षुमन्तं ग्राभं—marvellous praise-exciting (riches) worthy to be seized.—*Wils.* after Sāy.

क्षुमन्तम्—*vide* our notes on this word. SV. 1. 153.

---

प्रियमेध ऋषिः ।

३ १र २र ३ १ २ ३ १ २ ३ २
अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
३ २ ३ २ ३ १ २
सूनुं सत्यस्य सत्पतिम् ॥ ४ ॥ १६८ ॥

अभि । प्र । गोऽपतिम् । गिरा । इन्द्रम् । अर्च । यथा । विदे । सूनुम् । सत्यस्य । सत्ऽपतिम् ॥ ४ ॥

भाष्यसारः । गोपतिं—गवां स्वामिनम्, सत्यस्य सूनुं—यज्ञस्य पुत्रं यज्ञानुरक्तमित्यर्थः, सत्पतिं—सज्जनानां यजमानानां पालकम्, इन्द्रम् अभि—उद्दिश्य, गिरा—स्तुत्या प्र-अर्च—प्रकर्षेण पूजय। यथा विदे—यथा स जानीयात् ॥ ४ ॥

Adore Indra with praise, as he may know or appreciate, Indra the lord of the cows, the son of truth (or of sacrifice) and patron of the good (the sacrificers).—4.

**सा०-भा० ।** 'गोपतिं' गवां स्वामिनम् 'इन्द्रम्' 'अभि प्रार्च गिरा' प्रकर्षेण पूजय। 'यथा विदे' स यथा स्वात्मानं स्तुतप्रकारं जानाति, यथा वा यागं प्रति गन्तव्यमिति जानाति तथाऽर्चेति। कीदृशमिन्द्रम्? 'सत्यस्य' यज्ञस्य 'सूनुम्' पुत्रं तत्रानुरक्तत्वात् सूनुरित्युपचर्यते 'सत्पतिं' सतां यजमानानां पालकम् ॥ ४ ॥

४। ऋ० सं० ८ म० ६९ सू० ४ ऋ०। उ० आर्चि० ७, १, १, १।

गोपतिम् (the lord of cows), सत्पतिम् (the cherisher or protector of the pious)—these two epithets are often applied to Indra ; for *gopati*, vide ṚV. i. 101.4 ; iii. 31. 21 ; iv. 24. 1 ; vi. 28. 3 ; vii. 18. 4,—98. 6 ; viii. 21. 3,—62. 7 etc ; for *satpati* vide i. 11. 1,—53. 6,—54. 7 etc.

सत्यस्य सूनुम्—'Indra being ever fond of sacrifice is here called the son of sacrifice ; सत्य is a syn. of यज्ञ—Sāy. West. scholars render—*the son of truth*—*Wils.* and *Grfth.*

——

वामदेव ऋषिः।

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
कया नश्चित्र आ भुवदूती सदावृधः सखा।
३ १ २ ३ २
कया शचिष्ठया वृता ॥ ५ ॥ १६९ ॥

कया । नः । चित्रः । आ । भुवत् । उती । सदाऽवृधः । सखा । कया । शचिष्ठया । वृता ॥ ५ ॥

भाष्यसारः । सदावृधः—सर्वदा वर्धनशीलः, चित्रः—अद्भुतकर्मा, सखा—स्तुत्यतया मित्रभूतः इन्द्रः, कया ऊती—ऊत्या—केन तर्पणेन, नः—अस्मान्, आ-भुवत्

—अभिमुखीभवेत्, शचिष्ठया—प्रज्ञावत्तमया, कया वृता केन वर्त्तनेन कर्मणा प्रज्ञयाऽनुष्ठीयमानेन केन कर्मणा च अभिमुखीभवेत् ॥ ५ ॥

By what act of propitiation, should Indra, the wonderful, ever-growing friend, be inclined to us, by what wisest action ?—5.

**सा०-भा० ।** 'सदावृधः' सर्वदा वर्धमानः 'चित्रः' चायनीयः 'सखा' मित्रभूत इन्द्रः 'कया' 'ऊती' ऊत्या तर्पणेन 'नः' अस्मान् 'आ भुवत्' आभिमुख्येन भवेत्। 'शचिष्ठया' प्रज्ञावत्तमया प्रज्ञासहितमनुष्ठीयमानेन 'कया वृता' केन वर्त्तनेन कर्मणा च अभिमुखो भवेत् ॥ ५ ॥

५ । ऋ० सं० ४ म० ३१ सू० १ ऋ० । उ० आर्चि० १,१,१२,१ (2.31.) ; यजुः २७,३९ ; अथर्व २०,१२४,१ । From these numerous references the stanza appears to be very popular.

Guṇa-viṣṇu's explanation is given below—'चित्रे चयनकर्मणि प्रयोजकः इन्द्रः 'कया ऊती' ऊत्या केन तर्पणेन 'नः' अस्माकं 'सदावृधः' सर्वदा वृद्धिकारी 'आभुवत्' भूयात् ? 'कया' च 'आवृता' क्रियया चित्रेण 'सखा' मित्रम् 'आभुवत्' भूयात् ? किम्भूतया आवृता ? शचिष्ठया शचीति कर्मणो नाम, इष्ठन् सातिशयकर्मवत्या केन तर्पणेन कया वा क्रियापरिपाट्या इन्द्रः अस्माकं वृद्धिकारी सखा च भूयात् इति प्रश्नो वाक्यार्थः । त्वया कथिते वयं तत् अनुतिष्ठामः । पूर्वमनेन राहुरभिषिक्त इति तत्प्रियोऽप्ययं मन्त्रः ।' *purp* :—by what propitiative measure or by what other elaborate process of action, should Indra be our prosperer and friend ? This mantra is also pleasing to *Rāhu* and with this, oblation is made to him.

ऊती—(*Instr. sg.*)—ऊत्या ; this word elsewhere means—*protection*, here means तर्पण propitiative action. rt. अव् *to protect*—क्तिन्—'ऊति-यूति-जूति' Pāṇ. iii.3. 9. 'सुपां सुलुक्०' इति पूर्वसवर्णः, Pāṇ. vii. 1. 39. The case term. is substituted by the final vowel of the stem. ( ऊति+इ=ऊती ).

आ-भुवत्—should be gracious or favourably disposed to us ; may (he) be present with us—*Wils.* rt. भू *to be* लेट्, (Ved. subj) लिङर्थे लेट् Pāṇ. iii. 4. 7. अट् is added by 'लेटोऽडाटौ' Pāṇ. iii. 4. 94. उवङ् ; इ of तिप् drops by 'इतश्च' Pāṇ. iii. 4. 97.

सदावृधः—ever augmenting ; dr. सदा—rt. वृध् (*to grow*, I. Ā.)—कः, by 'इगुपध०' Pāṇ. iii. 1. 135.

सखा—*vide* our notes on SV. I. 133.

शचिष्ठया—'शची' is a syn. of प्रज्ञा (wisdom)—Ngh. 3. 9. also it is a syn. of कर्म (action)—Nir. 2. 1. 22.

'अतिशयेन शची—शचिष्ठा, तया शचिष्ठया वृता—अतिशयकर्मवत्या यागक्रियया इत्यर्थः'—*Viv.*—by what sacrificial service which requires great activity. 'With what most mighty company'—*Grfth.*

---

श्रुतकक्षः सुकक्षो वा ऋषिः ।

१ २ ३ २ ३ १ २ ३ १ २
त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।
१ २ ३ १ २
आ च्यावयस्यूतये ॥ ६ ॥ १७० ॥

त्यम् । ऊम् इति । वः । सत्राऽसहम् । विश्वासु । गीर्षु । आऽयतम् । आ । च्यावयसि । ऊतये ॥ ६ ॥

भाष्यसारः । स्तोतारम् ऋत्विजं प्रति यजमानवाक्यमिदम् । हे स्तोतः, सत्रासहं—बहूनाम् अभिभवितारम्, वः—युष्माकम्, विश्वासु गीर्षु—सर्वेषु स्तोत्रेषु, आयतं—विततं सर्वत्रैव इन्द्रस्य स्तूयमानत्वात्, त्यम् उ—तमेव, इन्द्रम्, ऊतये—अस्मद्रक्षणाय, आ-च्यावयसि—स्तोत्रैः यज्ञं प्रति अभिगमय आनय इत्यर्थः ॥ ६ ॥

Bring down, to the sacrificial place, for our protection, him (Indra), the vanquisher of many, present in all your praises.—6.

**सा०-भा० ।** यजमानः स्तोतारं सम्बोध्याह—हे स्तोतः ! 'सत्रासाहं'—सत्रा-शब्दो बहु-वाची—बहूनामभिभवितारं यद्वा, शत्रून् स्वबलेन सङ्गत्य जेतारम् । 'वः' युष्मदीयेषु 'विश्वासु' गीर्षु सर्वेषु स्तोत्रेषु 'आयतं' विस्तृतम्,—सर्वत्रेन्द्र एव स्तूयते तस्मात्,—तेषु विततं 'त्यम् उ'—उ इत्यवधारणे—तमेवेन्द्रम् 'ऊतये' अस्मद्रक्षणाय 'आ च्यावयसि'—च्युङ् प्लुङ् गतौ—त्वदीयैस्तोत्रैः यज्ञं प्रति आभिमुख्येन गमय ॥ ६ ॥

६ । ऋ० सं० ८ म० ९२ सू० ७ ऋ० । उ० आर्चि० ८,१,१०,१ (2.989).

सत्रासाहम्—ever-conquering—*Grfth.* सत्रा occurs in the Ved. literature to mean sometimes—*together*, *altogether*, *throughout*, sometimes—*always*, *by all means*—ṚV. AV. Br. sometimes—*many* (see Sāy.'s com. above). सत्रासाहम् (dr. rt. सह् + णिव) always overcoming or conquering, irresistible—cf. ṚV. ii. 21. 3, सत्रासाहे (dat. sg.)—ṚV. i. 79. 8 ; ii. 21. 2. *Vide* सदासाहम् SV. 1.129 ; वृषाहम् 1. 144 ; विश्वासाहम् 1.153.—similarly formed, conveying almost the parallel idea.

गीर्षु आयतम्—Sāy. gives the purp.—'*Indra is praised everywhere ; and he presents himself wherever prayers are addressed to him.*

आ-च्यावयसि—fr. rt. च्यु *to move*, caus. bring down to the sacrifice.

---

मेधातिथिरृषिः ।

१ २ ३ २ ३ १ २ ३ १र २र ३ १ २
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
३ २ ३ १ २
सनिं मेधामयासिषम् ॥ ७ ॥ १७१ ॥

सदसः । पतिम् । अद्भुतम् । प्रियम् । इन्द्रस्य । काम्यम् । सनिम् । मेधाम् । अयासिषम् ।

भाष्यसारः—मेधाम् लब्धुमित्यर्थः, अद्भुतम् इन्द्रस्य प्रियं काम्यं—कमनीयम सनिं—दातारम्, सदसस्पतिम् अयासिषं—प्राप्तवानस्मि ॥ ७ ॥

I beg wisdom of munificent Sadasaspati (the lord of the abode) the beloved, wondrous friend of Indra.—7.

**सा०-भा० ।** 'मेधां' लब्धुं 'सदसस्पतिम्' एतन्नामकं देवम् अयासिषम् प्राप्तवानस्मि । कीदृशम् ? 'अद्भुतम्' आश्चर्यकरम् 'इन्द्रस्य प्रियम्' सोमपाने सहचारित्वात् 'काम्यम्' कमनीयं 'सनिं' धनस्य दातारम् ॥ ७ ॥

७ । ऋ० सं० १ म० १८ सू० ६ ऋ० ।

Sāyaṇa gives derivations of the following important words in his addl. notes in his com. on the Ṛ V. verse referred to above:—

(i) सदसः—षद्लृ विशरणादौ—सर्वधातुभ्योऽसुन् ; (ii) काम्यं—कामयतेरचो यत, णेरनिटीति णि-लोपः ; (iii) सनिम्—षणु दाने—'खनि-कष्यं-ज्यसि-वसि-वनि-सनि-ध्वनि-ग्रंथि-चरिभ्यश्च' (uṇ. iv. 139) इति इ-प्रत्ययः ; (iv) अयासिषम्—या प्रापणे—लुङ् (Aor) 1. sg. सिच् । इट् । सक् before the affix by 'यमरमनमातां सक् च', Pāṇ. vii. 2. 73.

सदसस्पतिम्—*properly* the master or protector *(pati)* of the house (*Sadas*) ; it refers, here, to Agni. He is the friend or associate of Indra, on this occasion partaking of the soma oblations. In Ṛ V. i. 21. 5, Indra and Agni both are called *sadasaspati* (the lords of the dwelling). Bṛhaspati, originally an aspect of Agni, is so designated, i. 18. 6.

———

वामदेव ऋषिः ।

२ ३ १ २ ३ २ ३ उ क २र ३ १ २
ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः ।
३ १ २ ३ १ २
उत श्रोषन्तु नो भुवः ॥ ८ ॥ १७२ ॥

ये । ते । पन्थाः । अधः । दिवः । येभिः । विऽअश्वम् ( विश्वम् ) । ऐरयः । उत । श्रोषन्तु । नः । भुवः ॥ ८ ॥

भाष्यसारः । हे इन्द्र, दिवः—द्युलोकस्य, अधः ये पन्थाः—पन्थानः ( वचनव्यत्ययः ), सन्ति, येभिः—यैः, विश्वं—सर्वं जगत्, ऐरयः—प्रेरयसि परिचालयसि, उत—अपिच, भुवः—पृथिव्यः, पृथिवी तत्सम्बन्धिनो लोकाश्च, नः—अस्माकम्, स्तोत्रं श्रोषन्तु—शृण्वन्तु ॥ ८ ॥

Let all the paths that thou hast, below heaven, through which thou sendest the universe, and let all the worlds listen to ours (our songs of praise).—8.

**सा०-भा० ।** हे इन्द्र ! 'दिवः' द्युलोकस्य 'अधः' अधस्तात् 'ये' 'पन्थाः' पन्थानः मार्गाः सन्ति, 'येभिः' यैर्मार्गैः 'विश्वं' सर्वं जगत् 'ऐरयः' प्राप्तवानसि, ते मार्गाः यजमानैः स्तूयन्तामिति शेषः । 'उत' अपि च 'नः' अस्मदीयाः 'भुवः' भूमीः निवासस्थानानि 'श्रोषन्तु' यजमानाः त्वदनुग्रहाच्छृण्वन्तु ॥ ८ ॥

८ । इयम् ऋक् ऋग्वेदे नास्ति । This stanza is not found in the Ṛg-Veda.

पन्थाः—stands for पन्थानः, nom. sg. for pl. by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. cf. 'ये ते पन्थाः सवितः पूर्व्यासः' ṚV. i. 35. 11.

येभिः—यैः ; भिस् (3. pl. term.) is not changed to ऐस्, by 'बहुलं छन्दसि' Pāṇ. vii. 1. 10.

व्यश्वम्—Sāyaṇa reads विश्वम् ; in all other mss. and printed editions व्यश्वं is read. We have followed Sāyaṇa, as this reading conveys a more rational sense—'the paths whereby the universe i. e., all the luminaries are made to pass.' The author of Vivaraṇam, however, interprets 'व्यश्व' as वेगिताश्वं—शीघ्रम् *quickly*. Grfth. curiously calls *Vyaśva* a famous sage.

---

श्रुतकक्षः सुकक्षो वा ऋषिः ।

१ १ २ ३ २ ३ २-३ १ २
भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो ।
१ २ ३ १ २
यदिन्द्र मृडयासि नः ॥ ६ ॥ १७३ ॥

भद्रंऽभद्रम् । नः । आ । भर । इषम् । ऊर्जम् । शतक्रतो इति शतऽक्रतो । यत् । इन्द्र । मृडयासि । नः ॥ ६ ॥

भाष्यसारः । हे शतक्रतो—शतप्रज्ञ शतकर्मन् वा इन्द्र, भद्रं भद्रम्—अतिशयेन कल्याणकरं धनम्, नः—अस्मभ्यम्, आ-भर—विधेहि, तथा इषम् ऊर्जं—बलयुक्तम् अन्नं देहि, यत्—यदि, नः—अस्मान्, मृडयासि—सुखयसि, अस्मान् प्रति तुष्टो भवसि ॥ ९ ॥

If thou art pleased with us, Indra, of hundreds of exploits (Śatakratu), bestow on us, most auspicious wealth, food and strength.—9.

सा०-भा० । हे 'शतक्रतो' शतविधकर्मन् शतप्रज्ञ वा इन्द्र ! भद्रं भद्रं कल्याणतमं सुखोत्पादकं वा धनं 'नः' अस्मभ्यम् 'आभर' सम्पादय देहि, तथा 'इषम्' अन्नम् 'ऊर्जम्' अन्नरसम् यद्वा, बलवदन्नं देहि। 'नः' अस्मान् 'यद्' यदि 'मृडयासि' सुखयसि तर्हि धनादिकं देहीति। मृड सुखने, तस्य ण्यन्तस्य लेटि आडागमः ॥ ९ ॥

९ । ऋ० सं० ८ म० ९३ सू २८ ऋ० ।

भद्रं भद्रम्—what is most auspicious—*Wils.* अभ्यासेन आतिशय्यं लक्ष्यते—the repetition signifies intensity.

आभर—आहर, bring to us, fr. rt. हृ, 'ह' is changed to भ by 'हृग्रहोर्भश्छन्दसि' *Vārtti.* see notes on this word SV. 1. 129. P. 180.

इषम्—अन्नम्, ऊर्जम् also is a synonym of अन्न—Ngh. 2, 7. In order to avoid repetition, the two words being of the same sense, ऊर्जम् is taken to mean रस (essence) by Sāyaṇa ; so इषमूर्जम् is explained by Sāyaṇa as अन्नरसम् । In connection with the interpretation of the mantra 'ऊर्जं वहन्तीरमृतं घृतं पयः' etc. (Ch.M.bh. 8. 48) Guṇ-V. has given 'अन्नरसम्' as the alternate term of ऊर्जम् ।

ऊर्जम् (accus. sg.)—the word 'ऊर्क्' is read among the synonyms of बलम् (strength)—Ngh. 2. 9. So we have taken the two words इषम् and ऊर्जम् in two different senses—'food and strength' (*see* our transl. above). fr. rt. ऊर्ज् *to strengthen, invigorate*, refresh ; Lat. *urge-o.*

मृडयासि—Sāy. derives it thus—rt. मृड् ( सुखने, *to please*. 6. p. ) caus. लेट् (Vedic subj.), आ is added by 'लेटोऽडाटौ' Pāṇ. iii. 4. 94. 'If thou hast favour to us'—*Wils.* to be gracious, cf. 'सोम राजन् मृळया नः स्वस्ति'—RV. viii. 48. 8. 'ऋतस्य नः पतयो मृळयन्तु', iv. 57. 2.

---

बिन्दुऋषिः ।

२ ३ १ २ ३ २ ३ १र २र ३ १ २
अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः ।
३ २ ३ १ २ ३ १ २
उत स्वराजो अश्विना ॥ १० ॥ १७४ ॥

अस्ति । सोमः । अयम् । सुतः । पिबन्ति । अस्य । मरुतः । उत । स्वऽराजः । अश्विना ॥ १० ॥

भाष्यसारः । **अयं—पुरस्तात् स्थितः, सोमः सुतः—अस्माभिः अभिषुतः, अस्ति—विद्यते, अस्य—एनमभिषुतं सोमम्, स्वराजः—स्वयं राजमानाः स्वतेजसा दीप्यमानाः, मरुतः—इन्द्रस्य सहचराः तन्नामकाः देवाः, पिबन्ति। उत—अपिच, अश्विना—अश्विनौ, अभिषुतं सोमं ( प्रातः ) पिबतः ॥ १० ॥**

Here is the Soma ex-pressed; the self-resplendent Maruts drink of this, so also the Aśvins.—10.

**सा०-भा० । 'अयं' पुरोवर्त्ती 'सोमः' 'सुतः' मरुदर्थमस्माभिः अभिषुतः 'अस्ति' विद्यते, तस्मात् 'अस्य'—अन्वादेशे—एनं सुतं सोमं 'स्वराजः' स्वयं दीप्यमानाः स्व-तेजसा नान्यदीयेनेत्यर्थः, तादृशाः 'मरुतः', 'पिबन्ति' 'उत' अपि च 'अश्विना' अश्विनौ च सोमं प्रातःसवने पिबतः ॥ १० ॥**

**इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य षष्ठः खण्डः । द्वितीयप्रपाठकस्य च द्वितीयार्धस्य तृतीया दशतिः ॥**

**१० । ऋ० सं० ८ म० ९४ सू० ४ ऋ० । उ० आर्चि० ६, १, ८, १** (2.1132).

पिबन्ति—पिबन्तु pres. ( लट् ) is used for imp. ( लोट् ),

**अस्य—इमम्**, an instance of विभक्तिव्यत्यय—6th. case term. is anomalously used for 2nd. case. *vide* notes on **अस्य**, SV. 1. 132.

मरुत—Maruts are prominent deities in the Ṛg-Veda. They form a group or troop (gaṇa, śardhas). Their number is thrice sixty or thrice seven. They are the sons of Rudra, their mother is Pṛśni; *pṛśni-mātaraḥ* (i. 85. 2. etc.) being their frequent epithet, sometimes they are called *go-mātaraḥ* in which phrase *go* or cow is identical with Pṛśni (prob. representing the variegated storm-cloud). They are once said to have been generated by Vayu, the Wind-god in the wombs of heaven. They are also said to have sprung from the ocean (i. 38. 9), receiving the epithet *sindhu-mātaraḥ* (x. 78.6). Sometimes they are called self-born. They are brothers equal in age and of one mind. They are associated with Indrāṇī, Sarasvati and Rodasī, the wife of Rudra.

The brilliance of the Maruts is constantly mentioned,—they shine like fires and are self-luminous. Their cars gleam with lightning and are drawn by the Pṛṣatīs (spotted deer, *vide* Ngh. 1.15, ṚV. i. 39. 6). The Maruts are great, mighty, ever young, unaging and fierce. Their roar is distinctly called thunder (i. 23. 11). They cause the mountains to

quake and the two worlds to tremble ; they shake the trees, devour the forests (i. 39. 5 etc.) which bow down before them with fear (v. 60. 2). One of their main functions is to shed rain. Maruts being at the root of the thunderstorm, are closely associated with Indra, as his friends and allies, invigorating him with their songs (which represent the sound of the winds) and generally assisting him in the fight with Vṛtra (the demon of drought).

The Maruts are malevolent like their father Rudra. They are implored to bring healing remedies. These remedies appear to be the waters, for the Maruts bestow medicine by raining.

Yāska's etymology is given in our notes on मरुद्भिः, SV. 1. 16. Nir. 11. 13.

Macdnll. derives the name from the rt. *mar* 'to shine' or 'to die', although he is not sure of either of these two senses. (*Vide* his Ved. Myth. p. 81). Moreover, this root appears to be coined through his own fancy, being not recognized nor included in the list of verbs by any Indian grammarian belonging to the school of Pāṇini.

स्वराजः—The construction would rather indicate that स्वराजः is an epithet of अस्य ( सोमस्य ), not of 'मरुतः'—*Wils* ; so Grfth. renders—(drinks) of self-luminous Soma.

अश्विना—अश्विनौ,—औ(*nom. du.*)-स्थाने डादेशः (औ is changed to आ) by 'सुपां सुलुक्॰' Pāṇ. vii. 1. 39. These two deities are addressed in more than fifty entire hymns in the Ṛg-Veda. They are twins, they are young and yet ancient. They are radiant and beautiful. They are agile and swift. They possess profound wisdom and occult power. They are closely associated with honey (madhu) ; they are fond of honey and are drinkers of it ; they give honey to the bee and are compared with bees ; their car is honey-hued and honey-bearing. They learned *Madhu-Vidyā* from *Dadhyac* (*see* myth. notes on SV. 1. 179). They also love to drink Soma, being invited to drink it. In the above verse (SV. 1. 174) they are mentioned as drinking Soma. Their car is golden, has three wheels, being fashioned by the Ṛbhus. Generally the time of their appearance is dawn ; with Uṣas, the deity of dawn, close is their connexion, she seems to be regarded as their sister.

The Aśvins are children of heaven ; once they are called the twin sons of Vivasvat and Saraṇyu, the daughter of Tvaṣṭṛ (resp. in the form of a horse and a mare). They are the two husbands of Sūryā (the daughter of Sūrya), who is described as mounting their car. In the renowned wedding hymn (x. 85), Aśvins are invoked to conduct the bride home on their car and to bestow fertility on her. The Aśvins are the most benevolent and kindly disposed divinities. They speedily deliver the distressed. They are characteristically divine physicians, healing diseases with their remedies, restoring

sight, curing the sick. Several legends are told about those whom they restored to youth, cured of various physical defects and succoured in many other ways. Bhujyu's name is worth mentioning in this concern as he is described to have been saved in a ship, from the ocean, by the Aśvins. They correspond, in the Grk. myth with two sons of Zeus, brothers of Helena riding on their horses. Hopkins is of opinion that probably the inseparable twins represent the twin-lights or morning twilight, half dark, half light. Other scholars call them identical with the morning and the evening stars. Yāska derives the name fr. rt. अश् *to pervade*, they are so named as they pervade everywhere; acc. to *Aurṇavābha*, they mean *possessed* of *horses*; acc. to some they are Heaven and Earth (*Vide* Ś.Br. iv. 1. 5. 16—'अथ यदश्विनावितीमे ह वै द्यावा-पृथिवी प्रत्यक्षमश्विनाविमे हीदं सर्वमश्नुवाताम्) ; acc. to others they are Day and Night; some took them to be the sun and the moon—(Nir. 12. 1). Ludwig (RV. transl. 3. 334) followed this last view. Roth interprets Yāska's view as identifying Aśvins with Indra and the sun; GOLDSTÜCKER—the transition from darkness to light which corresponds to their dual nature.

---

अथ द्वितीयाध्यायस्य सप्तमः खण्डः।

द्वितीयप्रपाठकस्य च द्वितीयार्धे चतुर्थी दशतिः।

इन्द्रमातरो देवजामय ऋषिकाः।

३ १ २ ३ २ ३ १ २ ३ १ २र

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते।

३ १ २ ३ १ २

वन्वानासः सुवीर्यम्॥ १॥ १७५॥

ईङ्खयन्तीः। अपस्युवः। इन्द्रम्। जातम्। उप। आसते। वन्वानासः। सुऽवीर्यम्॥ १॥

भाष्यसारः। ईङ्खयन्त्यः—इन्द्रसमीपं स्तुतिभिः गच्छन्त्यः, अपस्युवः—अपः कर्म आत्मनः इच्छन्त्यः सततकर्मरता इत्यर्थः, इन्द्रमातरः, जातं—प्रादुर्भूतम् इन्द्रम्, उपासते—परिचरन्ति, सुवीर्यं—शोभनवीर्यम्, वन्वानासः—याचमानाः भवन्ति याचन्ते इत्यर्थः॥ १॥

(The mothers of Indra)—eager for work i. e., ever active, adore Indra, as soon as he is born and pray for excellent valour.—1.

**सा०-भा० ।** 'ईङ्खयन्तीः' गच्छन्त्यः स्तुत्यादिभिः इन्द्रं प्राप्नुवन्त्यः, 'अपस्युवः'—अपः कर्म आत्मन इच्छन्त्यः, इन्द्रमातरः अस्य सूक्तस्य द्रष्ट्र्यः, 'जातं' प्रादुर्भूतं तम् 'इन्द्रम्' 'उपासते' परिचरन्ति, सुवीर्यं शोभनवीर्योपेतं धनं च 'वन्वानासः' तस्मात् इन्द्रात् सम्भक्तवत्यो भवन्ति ॥ १ ॥

१ । ऋ० सं० १० म० १५३ सू० १ ऋ० । R̥V. reads **'भेजानासः'** (enjoy) for **'वन्वानासः'** the above SV. reading.

ईङ्खयन्तीः—fr. rt. ईङ्ख *to go*, 'ईङ्खते' (ईङ्खयति वा) इति गतिकर्मसु Ngh. 2. 14. cf. 'य ईङ्खयन्ति पर्वतान्' R̥V. i. 19. 7.

अपस्युवः—अपः—(=कर्म—Ngh. 2. 1. work, action especially sacrificial act. Lat. *opus*),—आत्मन इच्छन्त्यः । 'सुप आत्मनः क्यच्'—Pāṇ. iii. 1. 8. उ by 'क्याच्छन्दसि' iii. 2. 170. अपस्—क्यच्—उ (fem. nom. pl.) ; 'active ones'—*Grfth* ; 'desirous of fulfilling their functions'—*Wils* ; *see* also R̥V. i. 79. 1 ; ix. 2. 7 ;—76. 2.

वन्वानासः—fr. वन् ( याचने, *to beg*, 8. Ā. )—शानच्—nom. pl. असुक् is added by 'आज्जसेरसुक्' Pāṇ. vii. 1.50. 'वन्वे' (I solicit, l. sg. of the rt.)occurs in x. 96. 1.

सुवीर्यम्—Sāyaṇa has meant—'wealth together with valour' ; 'affluence with male progeny'—*Wils* ; 'heroic might'—*Grfth.*

---

गोधा ऋषिः ।

१ २ ३ १र २र
**नकि देवा इनीमसि नक्या योपयामसि ।**
३ १ २
**मन्त्रश्रुत्यं चरामसि ॥ २ ॥ १७६ ॥**

नकि । देवाः । इनीमसि । नकि । आ । योपयामसि । मन्त्रऽश्रुत्यम् । चरामसि ॥ २ ॥

भाष्यसारः । हे देवाः, नकि इनीमसि—युष्मद्विषये न किमपि हिंस्मः, नकि आ—न च कदापि योपयामसि—योपयामः अननुष्ठानेन अन्यथानुष्ठानेन वा मोहयामः, मन्त्रश्रुत्यं—मन्त्रप्रतिपाद्यं वेदविहितं कर्म, चरामसि—आचरामः ॥ २ ॥

Not in the least, O gods, do we injure (you), never do we cause your annoyance (by non-accomplishing or accomplishing otherwise the action enjoined by Śruti) ; but we perform according as the sanctions of the Mantra or the Veda.—2.

**सा०-भा० ।** हे 'देवाः' इन्द्रादयः ! युष्मद्विषये 'नकि इनीमसि' न

किमपि हिंस्मः। मीङ् हिंसायां क्र्यादिकः। 'मीनातेर्निगमे' (पा० ७,३,८१) इति ह्रस्वः। 'इदन्तो मसिः' (पा० ७.१,४६)। मकारलोपश्छान्दसः। आकारः समुच्चये। 'नकि' न च 'योपयामसि' योपयामः अननुष्ठानेन अन्यथानुष्ठानेन वा मोहयामः। युप विमोहने। किन्तर्हि ? 'मन्त्रश्रुत्यं' मन्त्रेण स्मार्य श्रुतौ विधिवाक्य-प्रतिपाद्यं यद् युष्मद्-विषयं कर्म तत् 'चरामसि' आचरामः अनुतिष्ठामः ॥ २ ॥

२। ऋ० सं० १० म० १३४ सू० ७ ऋ०। ṚV. has—(1) 'नकिर्देवाः' instead of 'नकि देवाः' the above SV.text, (2) मिनीमसि instead of इनीमसि, (3) नकि-रा योपयामसि in the place of नकया योपयामसि।

नकि—न *Indec* 'not', प्रतिषेधे—gives the negative sense, 'कि' *Indec.* is meaningless—( कीति निपातोऽनर्थकः )—*Viv.*

'हिकं नुकं···नकिः माकिः···नकीम् सर्वपदसमाम्नाय' Ngh. 3.12. नकि—'*never*'; '*not at all*'—Macdnll. *Stu. Ved. Gram.* Para 180. p. 237. cf. 'यस्य शर्मन् नकिर्देवा वारयन्ते न मर्त्ताः',—in whose protection the gods and men *never* (or *not at all*) hinder him (the worshipper) ṚV. iv. 17. 19.

इनीमसि—fr. rt. मी ( हिंसायाम्, *to kill*, 9. ) मी is changed into मि i. e., the vowel is shortened by the rule 'मीनातेर्निगमे' Pāṇ. vii. 3. 81. मस् (1. pl. term.) is changed into मसि, by 'इदन्तो मसिः' Pāṇ. vii. 1. 46; म of the verb drops by Vedic anomaly; thus instead of मिनीमसि, we get the form इनीमसि।

योपयामसि = योपयामः; for मसि *vide* Pāṇ. vii. 1. 46. चरामसि—the same rule applies—Pāṇ. vii. 1. 46.

मन्त्रश्रुत्यं चरामसि—'we follow the teaching of the mantra'.—*Wils.*

———

दध्यङ्ङाथर्वण ऋषिः।

३ १२ २र ३ १ २ ३ १
दोषो आगाद्बृहद्गाय द्युमद्गामन्नाथर्वण।
२ ३ ३१ २ ३ १ २
स्तुहि देवं सवितारम् ॥ ३ ॥ १७७ ॥

दोषः। आगात्। बृहद्गाय। द्युमत्ऽगामन्। आथर्वण। स्तुहि। देवम्। सवितारम् ॥ ३ ॥

भाष्यसारः। हे बृहद्गाय—बृहन्नामकसाम्नो गातः, द्युमद्गामन्—द्युमतां दीप्तिमतां स्वरसौष्ठवयुक्तानां साम्नां गातः, आथर्वण—अथर्वऋषेरपत्य, त्वं दोषः—ऋत्विग्-यजमानापराधेन यः दोषः, आगात्—आगच्छति, तत्परिहारार्थं देवं सवितारं स्तुहि ॥३॥

O nobly singing son of Atharvan—singer of 'Bṛhat-Sāman' fault arises, (on the part of the sacrificers and the priests, to redress which) praise God Savitṛ.—3.

**सा०-भा०।** हे 'बृहद्गाय !' बृहदाख्यस्य साम्नो गातः ! द्युमद्गामन् ! दीप्तगमन आथर्वण अथर्वऋषेरपत्य ! ऋषिः स्वात्मानमेवामन्त्रयते। त्वं दोषः ऋत्विग्-यजमानापराधेन यः कश्चिद् दोषः 'आगात्' आगच्छति तत्परिहारार्थं सवितारं प्रेरकम् एतन्नामकं 'देवं' 'स्तुहि'। यद्वा, 'दोषः' दूषयति नाशयति तमांसीति, दुनोति उपतपति रक्षांसीति वा दोषः सः सविता 'आगात्'। अतो हे आथर्वण !' 'बृहत्' स्तोत्रं 'गाय'। तथा 'गामन्'—गायतीति गामा, हे एवंविध स्वात्मन्! 'द्युमत्' दीप्तिमदन्यत् स्तोत्रम् उपगाय। शिष्टं पुनरादरार्थम् ॥ ३ ॥

३। **इयम् ऋक् ऋग्वेदे नास्ति।** This Ṛk is ascribed to Vamadeva acc. to 'Vivaraṇam'. *Vide* S. Sāmaśramin's Ed. Grfth. seems to have followed 'Viv.'

बृहद्गाय—for Sāy.'s explanation see the com. and our transl. above. 'बृहत्' उच्चैः 'गाय' उच्चारय—*Viv*; 'sing loudly'—*Grfth.*

द्युमद्गामन् *voc.*—'द्युमतां स्वरसौष्ठवयुक्तानां साम्नां गामन् ( गै + मनिन् ) गातः !—O singer of glorious Sāman—*Viv.*

दोषो—'दोषा उ' दोषा—रात्रिः, उ इति पादपूरणः an expletive—*Viv*; Grfth. follows Viv. Sāy. gives two-fold explanation of the word 'दोषः'; viz. (1) fault, transgression (*see* our transl. above)—(2) the sun, inasmuch as the sun destroys or dispels the darkness, in this case the mg. is—the sun, the dispeller of darkness or the destroyer of demons, rises,—glorify him with praise.

आथर्वण *voc.*—थर्वतिर्गत्यर्थः, थर्वा गन्ता, न थर्वा अथर्वा, तस्यायं स्तोता स्वभूतः, तेन स आथर्वणः तस्य सम्बोधनम्। हे आथर्वण ! मम वामदेवस्य स्वभूतः—*Viv.* 'अथर्वाणोऽयनवन्तस्थर्वतिश्चरतिकर्मा तस्य प्रतिषेधः—the name etymologically means *motionless*, as it is the negative of the vb. *tharv*, Nir. 11. 18. *Atharvan* was an ancient priest. He first generated Agni by rubbing. ṚV. vi. 16. 13; SV. 1. 9; *vide* our notes on SV. 1. 9; for further details *vide* Macdnll's Ved. Myth. Para 52. p. 141.

———

प्रस्कण्व ऋषिः।

२ २ ३ १र २र क २र ३ २ ३ २
एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः।
३ १ २ ३ २
स्तुषे वामश्विना बृहत् ॥ ४ ॥ १७८ ॥

एषा । ऊम् इति । उषाः । अपूर्व्या । वि । उच्छति । प्रिया । दिवः । स्तुषे । वाम् । अश्विना । बृहत् ॥ ४ ॥

भाष्यसारः । **एषा—पुरतो दृश्यमाना, प्रिया—सर्वेषां प्रीतिहेतुः, अपूर्व्या—प्रथममाविर्भवन्ती उषाः, दिवः—द्युलोकात्, व्युच्छति—तमो विवासयति, हे अश्विनौ, वां—युवाम्, बृहत्—बाहुल्येन, स्तुषे—स्तौमि ॥ ४ ॥**

This Dawn, dear to all, appearing first,—disperses the darkness from the sky. O Aśvins, I glorify you greatly.—4.

**सा०-भा० ।** 'एषा उ' एषैव अस्माभिः परिदृश्यमाना 'प्रिया' सर्वेषां प्रीतिहेतुः 'अपूर्व्या' पूर्वेषु मध्यरात्रादिकालेषु विद्यमाना न भवति किन्त्विदानीन्तना 'उषा' उषोदेवता 'दिवः' द्युलोकस्य सकाशात् आगत्य 'व्युच्छति' तमो वर्जयति । हे अश्विना अश्विनौ ! 'वां' युवां 'बृहत्' प्रभूतं यथा भवति तथा 'स्तुषे' स्तौमि ॥ ४ ॥

**४ । ऋृ० सं० १ म० ४६ सू० १ ऋृ० ।**

एषो उषाः—एषा-उ—उषाः । उ is an expletive.

अपूर्व्या—यतः पूर्वं नास्ति अपूर्वा, अपूर्वा एव अपूर्व्या—स्वार्थे तद्धित-'य'-प्रत्ययः ,—प्रथमा, the first, the earliest ; 'not seen until now'—*Wils.*

व्युच्छति—वि—rt. उच्छ् (विवासे, *to expel, drive away*)—pres. 3 sg. *here* dispels darkness, i. e. rises, shines forth.

उषाः—from rt. वश् ( कान्तौ, *to shine*, 2. p.).

स्तुषे—rt. स्तु *to praise.* pres. 1. sg. तिङां तिङो भवन्तीत्युत्तमैकवचनस्य मध्यमैकवचनादेशः (2. sg. for 1. sg.) ; or—लेट् (subj.) 1. sg. सिप् is added by सिब्बहुलं लेटि । *see* SV. 1. 5.

अश्विनौ—*vide* our notes on अश्विना, with regard to their characteristic features, SV. 1. 174. There the closest relation of the Aśvins with Dawn has been clearly mentioned, the above stanza establishes this truth.

---

गौतम ऋषिः ।

१ २ ३ २ ३ १ २ ३ १र २र
इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
३ १ २ ३ १र २र
जघान नवतीर्नव ॥ ५ ॥ १७९ ॥

इन्द्रः । दधीचः । अस्थऽभिः । वृत्राणि । अप्रतिऽस्कुतः । जघान । नवतीः । नव ॥ ५ ॥

भाष्यसारः । अप्रतिष्कुतः—अप्रतिस्खलितः नास्ति कुतोऽपि प्रतिद्वन्द्वी यस्य तथाभूतः इन्द्रः, आथर्वणस्य—अथर्व-ऋषेरपत्यस्य, दधीचः—एतन्नामकस्य ऋषेः, अस्थिभिः, नव नवतीः—नवगुणिता नवतीः दशोत्तरा अष्टशतसंख्याकाः ( ८१० ), वृत्राणि--असुरान् जघान—हतवान् ॥ ५ ॥

Indra—of irresistible might, with the bones of *Dadhyac* killed the nine-times ninety Vṛtras (the obstructing foes).—5.

**सा०-भा० ।** अत्र शाट्यायनिन इतिहासमाचक्षते 'आथर्वणस्य दधीचो जीवतो दर्शनेन असुराः पराबभूवुः । अथ तस्मिन् स्वर्गतेऽसुरैः पूर्णा पृथिव्यभवत् । अथेन्द्रस्तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन्, स्वर्गं गत इति शुश्राव । अथ पप्रच्छ तत्रत्यान्—'नेह किमस्य किञ्चित् परिशिष्टमङ्गमस्तीति, ते तस्माअवोचन् अस्त्येतदाश्वं शीर्षं, येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत्, तत्तु न विद्मः यत्राभवदिति, पुनरिन्द्रोऽब्रवीत् तदन्विच्छतेति । तद्वा अन्वेषिषुः तच्छर्यणावत्यनुविद्या जहुः, शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्द्धे सरः स्यन्दते । तस्य शिरसोऽस्थिभिरिन्द्रोऽसुरान् जघानेति ।

'अप्रतिष्कुतः' परैरप्रतिशब्दितः प्रतिकूलशब्दरहितः 'इन्द्रः' आथर्वणस्य 'दधीचः' एतत्संज्ञकस्य ऋषेः 'अस्थभिः' पार्श्वशिरःसम्बन्धिभिरस्थिभिः 'नवतीर्नव' नवसंख्याका नवतीः, दशोत्तरा अष्टशतसंख्याकाः [८१०],—तथा हि लोकत्रयवर्त्तिनो देवान् जेतुम् आदावासुरी माया त्रिधा सम्पद्यते, त्रिविधा सा अतीतानागतवर्त्तमानकालभेदेन तत्कालवर्त्तिनो देवान् जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति, एवं नव सम्पद्यन्ते, पुनरपि उत्साहादिशक्तित्रयरूपेण त्रैगुण्ये सति सप्तविंशतिः सम्पद्यते, पुनः सात्त्विकादिगुणत्रयभेदेन त्रैगुण्ये सति एकोत्तराशीतिः सम्पद्यते, एवं चतुर्भिस्त्रिकैर्गुणिताया मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नव नवतयः सम्पद्यन्ते, एवंविधमायारूपाणि 'वृत्राणि' आवरकाणि असुरजातानि 'जघान' हतवान् ॥ ५ ॥

५ । ऋ० सं० १ म० ८४ सू० १३ ऋ० ।

दध्यङ्—Reference to *Dadhyac*, the son of Atharvan, is found—in ṚV. i. 80. 16. (यामथर्वा मनुष्पिता दध्यङ् धियमत्नत) ; in i. 116. 12, where he is described to have taught the mystic sciences *(Madhu-Vidyā* and *Pravargya-Vidyā)* to the

Aśvins ; in i. 117. 22, where it is related that the head of *Dadhyac* was replaced by the Asvins with the head of a horse ; in 1. 119. 9 where Asvins are described to have propitiated *Dadhyac* who, being provided with the head of a horse, taught them the above knowledge (the Vidyās) ; for his further references, *see* 1. 139. 9 ; vi. 16. 14 ; ix. 108. 4 ; x. 48. 2. In the *Mahābhārata*, *Vana Parva*, it is merely related, that the gods, being oppressed by the *Kālakeya Asuras* solicited from the sage *Dadhica* his bones, which he gave them, and from which *Tvaṣṭṛ* fashioned the thunderbolt with which Indra slew Vṛtra and overthrew the *Asuras*. The Vedic version of the legend differs from this:—Indra having taught the sciences called *Pravargya Vidya* and *Madhu Vidyā* to *Dadhyac*, warned him saying that he would cut off his head, if ever he taught them to any one else ; the Aświns prevailed upon him, nevertheless, to teach them the prohibited knowledge, and to evade Indra's threat, took off the head of the sage, replacing it by that of a horse ; Indra, apprised of *Dadhyac's* breach of faith, struck off his horse-head with the thunderbolt ; on which the Aśvins restored to him his own. The *Pravargya-Vidya* is said to imply certain verses of the Ṛk, Yajur and Sama Vedas, and Madhu-Vidyā—a particular chap. of Bṛ. Ār. Up. known by that name dealing with *Brahman*.

Dadhyac is also named Dadhīca and Dadhici—in Puranic legends, of whom, it is said that his bones formed the thunderbolt of Indra. Here the story told by Sāyaṇa also somewhat differs. He relates that while *Dadhyac*, the son of Atharvan, lived, the Asuras were intimidated and tranquillized by his appearance, but when he had gone to *Svarga* (heaven) they overspread the whole earth ; Indra inquiring what had become of him, and whether nothing of him had been left behind, was told that the horse's head with which he had at one time taught the *Madhu-Vidyā* to the Aświns, was somewhere in existence, but no one knew where. Search was made for it and it was found in the lake *Śaryaṇavat* ('इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम्। तद्विदच्छर्यणावति'—ṚV. i. 84. 14) on the skirts of Kurukṣetra ; and with the bones of the skull, Indra slew the Asuras, or, as otherwise explained, foiled the nine-times ninety or eight hundred and ten (810) stratagems or devices of the Asuras or Vṛtras. Sayaṇa accounts for the number, by saying that in the beginning—the *Asuri-maya* or demonic illusion, was practised by the three worlds, for three periods in each—past, present and future, whence it was ninefold ; each being exerted with three *śaktis* or energies made the number twenty seven ; each of these again being modified by the three *guṇas*, they become eighty-one, and the scene of their display extending to each of the ten regions of space, the total reaches the nine-times ninety of the text or eight hundred and ten.

There is another version of the story—related by the author of 'Vivaraṇam'. There were Asuras—'Kāla-ṣanjas' by name. The gods being oppressed by them approached Brahman and said—'we are tormented by the demons Kālaṣanjas, be pleased to devise some means of destroying them.' Brahman told them to go to sage Dadhyac and to request him to find out the measure of killing him. The gods went, accordingly, to the sage and said—'Śukra, the priest of the Asuras, takes away our weapons, keep them at your safe custody'; the sage said—'throw the weapons into my mouth'. The gods did so. Again, after a lapse of time, when the strife between the gods and the demons occurred, the gods came to the sage, asked him to return the weapons, the sage replied—'the weapons have long been digested and can not be got back', but the sage offered to sacrifice himself, so that a thunderbolt might be made of his bones, with which Indra would be able to kill Vṛtras. The gods gladly accepted the offer, and it was done accordingly.

The following derivations are given by Sāyaṇa in his com. on the ṚV. verse—दधीचः—dr. दधि—rt. अञ्च्—क्विन्। अनिदितामिति नलोपः षष्ठ्येकवचनेऽत्र इत्यकारलोपे 'चौ' इति दीर्घत्वम्, *vide* derivation of अपीच्यम् in the notes SV. 1. 147.

अस्थभिः—'छन्दस्यपि दृश्यते' Pāṇ. vii. 1. 36 इत्यनजादावप्यस्थि-शब्दस्यानङादेशः।

अप्रतिष्कुतः—अप्रतिकृतः (unopposed), अथवा संग्रामेषु अप्रतिस्खलितः—unrestrainable, Nir. 6. 16. This word occurs also in ṚV. i. 7. 6. 8;—84. 7. iii. 2. 14; v. 61.13; vii. 32. 6; viii. 93. 12;—97. 13.

---

मधुच्छन्दा ऋषिः।

२उ ३ १र २र ३ १ २ २ १ २
इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः।
३ १ २ ३ १र २र
महाँ अभिष्टिरोजसा॥ ६॥ १८०॥

इन्द्र। आ। इहि। मत्सि। अन्धसः। विश्वेभिः। सोमपर्वऽभिः। महान्। अभिष्टिः। ओजसा॥ ६॥

भाष्यसारः। हे इन्द्र, एहि—आगच्छ, आगत्य च विश्वेभिः—सर्वैः, सोमपर्वभिः सोमरसरूपैः, अन्धसः—अन्धोभिः अन्नैः, मत्सि—माद्य हृष्टो भव। ओजसा—बलेन, महान् अभिष्टिः—शत्रूणामभिभविता भव॥ ६॥

O Indra, come and rejoice with all the feasts offered by us in the form of Soma juice; great in strength, be thou the vanquisher of foes.—6.

**सा०-भा० ।** हे 'इन्द्र !' 'एहि' अस्मिन् कर्मणि आगच्छ, आगत्य च 'विश्वेभिः' सर्वैः 'सोमपर्वभिः' सोमरसरूपैः 'अन्धसः' अन्धोभिः अन्नैः 'मत्सि' माद्य हृष्टो भव, तत ऊर्ध्वम् 'ओजसा' बलेन महान् भूत्वा 'अभिष्टिः' शत्रूणामभिभविता भवेति शेषः । अष्टाविंशतिसंख्याकेषु बलनामसु 'ओजः' 'पाजः' इति ( निघ० २. ९ ) पठितम् ।

**६ । ऋ० सं० १ म० ६ सू० १ ऋ० ।**

Sāyaṇa in his com. on the ṚV. verse referred to above, deals in detail, the derivations of some important words, viz. मत्सि,—मदी हर्षग्लपनयोः । लोटः सिप् । सर्वे विधयश्छन्दसि विकल्प्यन्ते इति सेर्हिरादेशः (Pāṇ. iii. 4. 87) न भवति । दिवादिभ्यः श्यन् (Pāṇ. iii. 1. 69). बहुलं छन्दसि' इति श्यनो लुक् । श्यनि उपधादीर्घो न भवति (Pāṇ. vii. 3. 74) ; Pāṇ. i. 1. 63). अन्धसः—अदेर्नुमधश्च (uṇ. iv. 205) इति असुन् । व्यत्ययेन तृतीया बहुवचनं कर्तव्यम् । विश्वेभिः—अशिप्रुषीत्यादिना क्वन् (uṇ. i. 151). भिस ऐसादेशो बहुलं छन्दसीति न भवति । सोमपर्वभिः—लतारूपं सोमं पृणन्ति पूरयन्ति इति सोमपर्वाणः—सोमरसाः । पॄ पालनपूरणयोः अन्येभ्योऽपि दृश्यन्ते इति वनिप् । अभिष्टिः—अभिगन्ता, इष गतौ । मन्त्रे वृषेत्यादिना (Pāṇ. iii. 3. 96) क्तिन् । अभिशब्दस्येकारः एमनादिषु पररूपं वक्तव्यम् (Pāṇ. vi. 1. 94). इति पररूपत्वम । ओजसा—उब्जे र्बलोपश्च (uṇ. iv. 191). इत्यसुन् ।

मत्सि—be regaled with, for dr. see Sāy.'s addl. notes quoted above.

अन्धसः—stands for अन्धोभिः, an instance of विभक्तिव्यत्यय (anomalous use of nom. for instr. case). 'अन्ध इत्यन्ननाम'—a syn. of food, Ngh. 2. 7.

सोमपर्वभिः—'पर्वाणि अवयवाः, सोमस्य पर्वाणि तैः, इन्द्रस्य कृते अभिषुतैः सोमावयवैः—*Viv.* *See* Sāyaṇa's interpretation in his com. on the ṚV. verse.

अभिष्टिः—'अभि आभिमुख्येन यष्टव्यो वा' इति वि० ।—Be victorious (over thy foes)—*Wils* ; for further notes on this word *see* SV. 1. 33. Sāy. *drvs* fr. rt. इष् *to go* mg.—assailant.

---

वामदेव ऋषिः ।

१र २र ३ २ ३ २३ १ २
**आ तू न इन्द्र वृत्रहन्नस्माकमर्द्धमा गहि ।**
३ २ ३ १ २ ३ १ २
**महान्महीभिरूतिभिः ॥ ७ ॥ १८१ ॥**

आ । तु । नः । इन्द्र । वृत्रहन् । अस्माकम् । अर्द्धम् । आ गहि । महान् । महीभिः । ऊतिभिः ॥ ७ ॥

भाष्यसारः। हे वृत्रहन्—वृत्राणां बाधकानां शत्रूणां हिंसक इन्द्र, त्वं नः—अस्मान् प्रति, आ तु—शीघ्रम्, आगच्छ। त्वं महान्, महीभिः—महतीभिः, ऊतिभिः—रक्षाभिः सह, अस्माकम् अर्द्धं—समीपम्, आ गहि—आगच्छ ॥ ७ ॥

O Indra, the slayer of Vṛtras, come to us, thou who art mighty, with thy mighty protections (aids).—7.

**सा०-भा०।** हे 'वृत्रहन्!' वृत्राणां शत्रूणां हिंसक! इन्द्र! त्वं 'नः' अस्मान् प्रति आ 'तु' क्षिप्रम् आगच्छ, हे 'इन्द्र!' 'महान्' प्रभूतः त्वम् 'महीभिः' महतीभिः 'ऊतिभिः' रक्षाभिः सह 'अस्माकम्' 'अर्द्धं' समीपम् 'आ गहि' आगच्छ ॥ ७ ॥

७। ऋ० सं० ४ म० ३२ सू० १ ऋ०। यजुः ३३, ६५।

तू—stands for तु, the vowel is read long in Saṃhita text acc. to 'ऋचि तु-नु-घ०' Pāṇ. vi. 3. 133.

अर्द्धम्—समीपम्, near.—Sāy. It is rarely found in this sense. Mahīdhara interprets *ardham* as dwelling place (*nivāsa-deśam*) or sacrificial place (*deva-yajana-deśam*); 'it properly means *a half*', hence Benfey renders it *seite*, but 'this is merely inferential'—says Prof. Wilson.

आ-गहि—*vide* notes on the word, SV. I. 16.

ऊतिभिः—rt. अव् *to protect*—क्ति, *vide* notes on ऊतये SV. I. 10; ऊत्या I. 102.

---

वत्स ऋषिः।

३ १ २ ३ २उ २ १ २
ओजस्तदस्य तित्विष उभे यत्समवर्त्तयत्।
२१ २ ३ १ २
इन्द्रश्चर्मेव रोदसी ॥ ८ ॥ १८२ ॥

ओजः। तत्। अस्य। तित्विषे। उभे इति। यत्। सम्ऽअवर्त्तयत्। इन्द्रः। चर्मऽइव। रोदसी इति ॥ ८ ॥

भाष्यसारः। अस्य इन्द्रस्य तत् ओजः—बलम्, तित्विषे—दिदीपे, यत्—येन ओजसा, इन्द्रः उभे रोदसी—द्यावापृथिव्यौ, चर्म इव समवर्त्तयत्—सम्यक् अधीने वर्त्तयति करोतीत्यर्थः ॥ ८ ॥

That might of his (Indra) shines forth brilliantly by which Indra brings together both the worlds, heaven and earth, like a piece of leather.—8.

**सा०-भा०।** 'अस्य' इन्द्रस्य 'तत्' 'ओजः' बलं 'तित्विषे' दिदीपे। त्विष दीप्तौ। 'यत्' येन ओजसा अयम् 'इन्द्रः' 'उभे' 'रोदसी' द्यावापृथिव्यौ 'चर्मेव'

'समवर्त्तयत्' सम्यग् वर्त्तयति। यथा कश्चित् किञ्चित् चर्म कदाचिद् विस्तारयति कदाचित् सङ्कोचयति एवं तदधीने अभूतामित्यर्थः ॥ ८ ॥

८। ऋ० सं० ८ म० ६ सू० ५ ऋ०। उ० आर्चि० ८, १, १३, ३।

Prof. Wilson follows Sāyaṇa's explanation *verbatim* and translates the verse thus:—'His might is manifest, for Indra folds and unfolds both heaven and earth, as one spreads or rolls up a skin.

चर्म—skin ; Yāska gives the etymology—'चर्म चरतेर्वा उच्चृतं भवतीति वा—i. e., drvd. fr. rt. *car* (to move) or it is so called, as it is cut off (from the body). Nir. 2. 5.

---

शुनःशेप ऋषिः।

३ १ २ ३ १ २ २ १ २ १ २
अयमु ते समतसि कपोत इव गर्भधिम्।
३ १ २
वचस्तच्चिन्न ओहसे ॥ ९ ॥ १८३ ॥

अयम्। ऊम्इति। ते। सम्। अतसि। कपोतःऽइव। गर्भऽधिम्। वचः। तत्। चित्। नः। ओहसे ॥ ९ ॥

भाष्यसारः। हे इन्द्र, अयम्, उ—अपि, सोमः ते—तव कृते, सम्पादितः। तं सोमं कपोतः गर्भधिं—गर्भधारिणीं कपोतीमिव, त्वं समतसि—सततं सङ्गच्छसि। तच्चित्—तस्मात् एव कारणात्, नः—अस्माकम्, वचः स्तुतिरूपम्, ओहसे—प्राप्नोषि ॥ ९ ॥

This (Soma juice) is (ready) for thee ; as a pigeon frequently draws near his mate, so dost thou ever approach it, and hence dost thou accept our prayer.—9.

**सा०-भा०।** हे इन्द्र! 'अयम् उ' अयमपि दृश्यमानः सोमः 'ते' त्वदर्थं सम्पादितः यं सोमं 'समतसि' सम्यक् सातत्येन प्राप्नोषि। तत्र दृष्टान्तः—'कपोत इव' यथा कपोताख्यः पक्षी गर्भधारिणीं कपोतीं प्राप्नोति तद्वत्। 'तच्चित्' तस्मादेव कारणात् 'नः' अस्मदीयं 'वचः' 'ओहसे' प्राप्नोषि ॥ ९ ॥

९। ऋ० सं० १ म० ३० सू० ४ ऋ०। उ० आर्चि० ७, ३, १५, १।

समतसि—dr. सम्—rt. अत् (सातत्यगमने, *to go continuously or constantly* i. e., often, frequently, 1. p.)—pres. (लट्) 2. sg.

गर्भधिम्—*rfs.* to the she-pigeon, who bears the womb ; गर्भोऽस्यां धीयते इति गर्भधिः—ताम्, गर्भ-धा-aff. कि by 'कर्मण्यधिकरणे च' ( किः ) Pāṇ. iii. 3. 93.

ओहसे—Sāyaṇa derives fr. rt. उह् (1. p.)—'तुहिर् दुहिर् उहिर् अर्दने'।

तत् चित्—'for, on that account'—*Wils.*

---

वातायन उल ऋषिः।

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
**वात आ वातु भेषजं शम्भु मयोभु नो हृदे।**
२ ३ १ २
**प्र न आयूंषि तारिषत् ॥ १० ॥ १८४ ॥**

वातः । आ । वातु । भेषजम् । शम्ऽभु । मयःऽभु । नः । हृदे । प्र । नः । आयूंषि । तारिषत् ॥ १० ॥

भाष्यसारः । वातः—वायुः, नः—अस्माकम्, हृदे—हृदि, शम्भु—रोगशमनकरम्, मयोभु—सुखकरम्, च भेषजम्—औषधम्, रोगोपशमन-शान्तिकरभेषजरूपेण आ वातु—प्रवहतु ; अपि च नः—अस्माकम्, आयूंषि प्रतारिषत्—प्रवर्धयतु ॥ १० ॥

May Vāta (wind) blow within our heart as a balm wholesome and blissful and prolong the spans of our life.—10.

**सा०-भा०।** 'वातः' वायुः 'नः' अस्माकं 'हृदे' हृदयाय 'भेषजम्' औषधम् उदकं वा 'आ वातु' आ गमयतु। कीदृग्भूतम् ? 'शम्भु' रोगशमनस्य भावयितृ 'मयोभु' मयसः सुखस्य च भावयितृ, अपि च 'नः' अस्माकम् 'आयूंषि' 'प्रतारिषत्' प्रवर्धयतु ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य सप्तमः खण्डः। इति द्वितीयप्रपाठकस्य द्वितीयार्धे चतुर्थी दशतिः ॥

१०। ऋ० सं० १० म० १८६ सू० १ ऋ०। उ० आर्चि० ६, २, ११, १।

वातः—वायुः अन्तरिक्षस्थो देवः—an atmospheric deity. 'वायुर्वेन्द्रो वान्तरिक्षस्थानः'। It is *drvd.* fr. rt. वा *to blow*, Nir. 7. 5. Vāta—is identified with Vāyu ; two short entire hymns ṚV. x. 168 and 186. (resp. of 4 and 3 stanzas) are addressed to him ; the above SV. verse is taken from the latter. Vāta is invoked among the Viśvadevas, as a showerer of rain : *vide* ṚV. vi. 49. 6.—50. 12 ; vii. 40. 6 ; x. 64. 3 ;—65. 9 ;—66. 10 ; his association with Parjanya is also mentioned in some of these stanzas, and he is prayed to send rain.

मयोभु—मयः सुखम्, happiness, Ngh. 3. 6 ; *vide* notes on मयः SV. 1. 102. cf. 'मयोभूर्वातो अभिवातूस्रा ऊर्जस्वतीरोषधीरारिशन्ताम्'—Durga *derives* मयस् fr. मिञ् ( हिंसायाम्, *to destroy*, 5. u.)—with uṇ. aff. असुन् ; ety. sense being—'मिनोति हिनस्ति दुःखमिति मयः',—it means *happiness*, as it destroys sorrow.

हृदे—stands for हृदि ; शे in the place of loc. sg. term. by 'सुपां सुलुक् पूर्वसवर्णाच्छे' Pāṇ. vii.1. 39. Some commentators explain हृदे for हृदयस्य, *dat.* for *gen.* by षष्ठ्यर्थे चतुर्थी Pāṇ. ii. 3. 62 ; in this case the mg. is 'delightful and healthful balm *of* our heart.' Sāy. takes it literally in the *dative*. 'May Vāta breathe into our hearts a healing balm bringing happiness'—*Wils* ; the stanza is explained in Nirukta thus:—'वात आवातु भेषज्यानि,—शम्भु मयोभु च, नो हृदयाय ; प्रवर्धयतु च न आयुः'—May Vāta blow towards us the healing medicines and what is full of bliss and happiness *for* our heart, and may he prolong our life. Nir. 10. 35.

तारिषत्—may he extend ; rt. तॄ—लेट् तिप् (त्) *vide* gram. rules on लेट् Pāṇ. iii. 4. 7 ; iii. 4. 97 ; iii. 4. 94. also सिप् बहुलं णिच्छन्दसि ।

---

अथ द्वितीयाध्यायस्य अष्टमः खण्डः ।

द्वितीयप्रपाठकस्य द्वितीयार्धे पञ्चमी दशतिः ।

कण्व ऋषिः ।

१र २र ३ १ २ ३ १ २ ३ १ २ ३ २
**यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा ।**
३ १ २ ३ १ २
**नकिः स दभ्यते जनः ॥ १ ॥ १८५ ॥**

यम् । रक्षन्ति । प्रऽचेतसः । वरुणः । मित्रः । अर्यमा । नकिः । सः । दभ्यते । जनः ॥ १ ॥

भाष्यसारः । प्रचेतसः—प्रकृष्टज्ञानाः, वरुणादयो देवाः, यम्—यजमानं रक्षन्ति, स जनः—यजमानः, नकिः—न केनापि, दभ्यते—हिंस्यते ॥ १ ॥

He (the sacrificer) whom, Varuṇa, Mitra and Aryaman of supreme wisdom protect, is never injured by anybody else.—1.

**सा०-भा० ।** 'प्रचेतसः' प्रकृष्टज्ञानयुक्ताः वरुणादयो देवाः 'यं' यजमानं 'रक्षन्ति' स यजमानः 'नकिः दभ्यते' केनापि न हिंस्यते ॥१ ॥

१ । ऋ० सं० १ म० ४१ सू० १ ऋ० । ṚV. has 'नूचित्' instead of 'नकिः' mg. there is—'quickly destroys the enemies', दभ्यते is taken *there* in Act. Voice.

न दभ्यते, *pass. voice*—is not harmed ; fr. rt. दभ् *to harm* 1. p. *vide Mcdnll's Stu. Ved. gram. list of verbs, Appendix I. p. 388.*

नकिः—*indec.* stands for न केनापि, by none,—Sāy. ; *never*—West scholars —'हिकं नुकं···नकिः माकिः नकीम्—सर्वपदसमाम्नानाय', Ngh. 3. 12 ; *vide* our notes on SV. 1. 176.

वरुणः, मित्रः, अर्यमा—Varuṇa and Mitra are often invoked together ; Varuṇa alone or mostly in association with Mitra, is frequently called the king (राजा) or universal monarch ( सम्राज् ) ; Varuṇa and Mitra send the dawn (ṚV. iii. 61. 7), make the sun cross the sky, and obscure it with cloud and rain (v. 63. 4), they cause heaven to rain ; much is said about Varuṇa (and Mitra) as the upholder of physical and moral order. Varuṇa conjointly with Mitra rules over the whole world, supports heaven and earth. They are also described as lords of rivers (vii. 64. 2) and are prayed to as bestowers of rain, their power of bestowing rain is dealt in one entire hymn (v. 63). Varuṇa is represented as the supreme moral ruler, and is mentioned in the AVESTA as the supreme god of the Zoroastrians as *Ahura Mazda.* In the Ṛg.-Veda Varuṇa is represented as the lord of light—both by day and by night, while Mitra appears as the god of the light of day only. In the later Vedas—the Brāhmans, however, Varuṇa comes to be connected with the nocturnal heaven—*Muir's Original Sanskrit Texts.* Mitra is said to have produced the day and Varuṇa—the night, *Taittirīya Saṃhitā* 6. 4. 8. 3, also the day is said to belong to Mitra and the night to Varuṇa—*ibid.* 2. 1. 7. 4. Aryaman—is one of the sun gods, and is mentioned among the names of Ādityas (ṚV. ii. 27. 1) ; Aryaman although mentioned several times in the ṚV., has no individual importance, in the *Naighaṇṭuka* he is passed over in the list of gods ; he is often associated with Mitra and Varuṇa. (In ṚV. vii. 60. 1, Varuṇa, Mitra and Aryaman are said to open paths for the sun.) His name is mentioned in the AVESTA.

---

वत्स ऋषिः ।

३ २उ ३ १ २ ३ २ ३ १२ २ १ ३ २
**गव्यो षु णो यथा पुराश्वयोत रथया ।**
३ २ ३ १ २
**वरिवस्या महोनाम् ॥ २ ॥ १८६ ॥**

गव्या । उ । सु । नः । यथा । पुरा । अश्वऽया । उत । रथऽया । वरिवस्य । महोनाम् ॥ २ ॥

भाष्यसारः । हे इन्द्र, यथा पुरा—पूर्वमिव, नः—अस्माकम्, गव्या—गव्यया गवामिच्छया, एवम् अश्वया—अश्वेच्छया, उत—अपि च, रथया—रथेच्छया, आत्मनां

कृते गवादिधनलाभेच्छानुसारत इत्यर्थः। महोनां—महतां धनानां धनानि इत्यर्थः, कर्मस्थाने षष्ठी। वरिवस्य—परिचर, देहि इत्यर्थः ॥ २ ॥

In compliance with our desire for cows, horses and chariots, as of old, favour us (O Indra) with abundant riches.—2.

**सा०-भा०।** हे 'इन्द्र'! 'गव्योषु' गव्या उ सु इति निपातद्वयसमुदायस्य एकवद्भावेन निपातवद्भावात् प्रकृतिवद्भावाभावः। 'नः' अस्माकं गवामिच्छया अस्माकं गां दातुं 'यथा पुरा' पूर्वम् अस्माकं सम्बन्धिनि यागे गवादिदानाय वरिवस्यसि तद्वदद्यापि सुष्ठु 'वरिवस्य' परिचर आगच्छेत्यर्थः। न केवलं गविच्छया किन्तु 'अश्वया' अश्वप्रदानेच्छया 'उत' अपि च 'रथया' रथेच्छया 'महोनां' धनानाम्, कर्मणि षष्ठी, महान्ति पूजाकराणि धनानि दानाय वरिवस्य परिचर देहीत्यर्थः ॥ २ ॥

२। ऋ० सं० ८ म० ४६ सू० १० ऋ०। Ṛ.V. reads **'महामह'** (*voc.* mg. महाधन O master of great wealth) instead of **'महोनाम्'**। Viv.—has **'मघोनाम्'**।

उ-षु-णः—षत्वम् (cerebral ष) by 'सुञः' Pāṇ. viii. 3. 107. and cerebral ण in नः by 'नश्च धातुस्थोरुषुभ्यः' Pāṇ. viii. 4. 27. cf. अभीषु णः।

गव्या *Instr. sg.*—for गव्यया—the case term. is elided after the stem गव्या—by 'सुपां सुलुक्०' Pāṇ. vii.1.39 ; dr. गो—क्यच्—आ = गव्या, mg. गविच्छा or गवां लाभेच्छा—desire for gaining cows, for one's ownself ; क्यच् by 'सुप आत्मनः क्यच्' Pāṇ. iii. 1. 8.

अश्वया *Instr. sg.*—for mg. and gram. as regards case-ending *see* गव्यया just above ; dr. अश्व—क्यच्—आ, the class. Skt. form is अश्वीयया (अश्वीया—being the stem in later Sanskrit). In the Vedas again there is a special rule for the final vowel of अश्व being lengthened with क्यच् following, 'अश्वाघस्यात्' Pāṇ. vii. 4. 37 ; so 'अश्वाया' is the expected form, but the lengthening is barred by 'न छन्दस्यपुत्रस्य' Pāṇ. vii. 4. 35.

रथया—for mg., dr. and gram. notes on case term. etc.—*vide* notes on गव्या, अश्वया above words ; here we refer only to the rules Pāṇ. iii. 1. 8 (क्यच्) and vii. 4. 35 (ईत्व i. e., the change of final अ to ई, is barred).

Pt. S. Sāmaśramin interprets rather inaccurately क्यच् here—by referring to the Vārtti. rule 'छन्दसि परेच्छायामपि क्यच्', but unfortunately there is no occasion for this rule here, as the sacrificers express the desires for gaining kine, horses, chariots for their own selves ; so the original rule of Pāṇ. regarding क्यच् (iii. 1. 8) is to apply here.

वरिवस्या —serve i. e., be gracious to give, favour us with ; nom. vb. Imp. (लोट्) 2. sg. the final vowel is lengthened by 'अन्येषामपि दृश्यते' vi. 3. 137. Pt. S. Sāmaśramin carelessly ascribes the lengthening of the vowel to the rule

'निपातस्य च' Pāṇ. vi. 3.136, which deals with indeclinables only; dr.—वरिवस्—क्यच् by 'नमोवरिवः०'—Pāṇ. iii. 1. 19; the sense is परिचर्या or serving.

महीनाम्—(gen. pl. for accus. pl. by व्यत्यय) obj. of the vb. वरिवस्य—acc. to Sāy.; mg.—महतां धनानां for धनानि, abundant or great wealth. *vide* SV. 1. 6., R̥V. viii. 71. 1.

---

वत्स ऋषिः ।

३ १ २ ३ १ २ ३ १ २ ३ १ २
**इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम्।**
३ २ ३ १ २ ३ १ २
**एनामृतस्य पिप्युषीः ॥ ३ ॥ १८७ ॥**

ते । इन्द्र । पृश्नयः । घृतम् । दुहत । आशिरम् । एनाम् । ऋतस्य । पिप्युषीः ॥ ३ ॥

भाष्यसारः । **हे इन्द्र, तव इमाः ऋतस्य—यज्ञस्य, पिप्युषीः—वृद्धिकर्यः, पृश्नयः—विचित्रवर्णा गावः, घृतं—क्षरणशीलम्, आशिरं—सोमेन मिश्रणीयं दुग्धम्, दुहते—दुहन्ति क्षारयन्ति ॥ ३ ॥**

These, O Indra, thy variegated cows, the promoters of sacrifice, yield streaming milk (to be mixed with the Soma).—3.

**सा०-भा० ।** हे 'इन्द्र !' 'ते' त्वदीयाः 'इमाः' 'पृश्नयः' प्राश्ववर्णा गावः 'घृतं' क्षरणशीलम् 'एनाम्' आशिरम्' आश्रयणद्रव्यं पयः 'दुहते' दुहन्ति क्षारयन्ति । कीदृश्यः पृश्नयः ?—'ऋतस्य' सत्यस्य अवितथस्य इन्द्रस्य यज्ञस्य वा 'पिप्युषीः' वर्धयित्र्यः ॥३॥

३ । ऋ० सं० ८ म० ६ सू० १६ ऋ० ।

पृश्नयः—speckled or variously coloured cows; dr. fr. प्र—अश् ( व्याप्तौ 5. A ). In connection with 'पृश्नि-मातरः' referring to the Maruts (R̥V. i. 85. 2) Sāy. gives the etymology—'प्राश्नुते सर्वाणि रूपाणि (assumes all colours)— इति पृश्निः' ।

घृतम्—it is a syn. of water, Ngh. 1. 12., Nir. 7. 24; *here* means *streaming* like water, drvd. fr. rt. घृ—*to besprinkle*, *to wet*, *to moisten*. Wils. and Grfth. render the word inaccurately by '*butter*'.

आशिरम्—dr. आ—श्रीञ् ( पाके, *to boil*, *to cook*, *to mix*—9. u. )—क्विप् by 'अपस्पृधेथाम्०'. Pāṇ. vi. 1. 36—milk to be mixed with Soma; *vide* आशृणन्ति—R̥V. ix. 71. 4. आश्रीणित *ibid* x. 61. 3; the term आशिर-वत् occurs to mean *the Soma mixed*

*with milk* and आशिर-दुघ—*milking for a mixture with the Soma*, *vide* यवाशिरः—SV. 1. 145 ; 'आशीः आश्रयणाद्वा आश्रपणाद्वा'—*Āśiḥ* (a mixture of milk and Soma) is so called from being mixed (आ *rt.* श्री, *to mix*) or from being slightly cooked (आ—rt. श्रा, *to cook*). Nir. 6. 8. cf. 'इन्द्राय गाव आशिरम्'—for Indra, the cows yield milk (to be mixed with the Soma), ṚV. viii.69.6 ; for further uses of this word *see* ṚV. i. 134. 6 ; iii. 53. 14 ; viii. 2. 10, 11 ;—6. 19 ;—31. 2 ;—ix. 64. 14 ;—70. 1 ;—75. 5 ;—86. 21 ; x. 49. 10 ;—67. 6. आशिरा viii. 31. 5.

Pt. S. Sāmaśramin has committed an unpardonable blunder by deriving it with aff. क्त, perhaps he had not the clear understanding of the mg. of the Pāṇ.'s rule—quoted here.

पिप्युषीः—for पिप्युष्यः, fem. nom. pl. 1. pl. ( जस् ) changed to सु by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39.—dr. rt. प्याय् ( वृद्धौ, *to increase*, *to swell*, 1. Ā )—*aff.* क्वसु ; प्याय् is changed to पी।—The nourishers (of the sacrifice).—*Wils.*

ऋतस्य—this word is a Syn. of *Satya* (truth) Ngh. 3. 10, also of Yajña (sacrifice)—Nir. 4. 19 ; in the latter sense, cf. 'घृतप्रतीकम् वा ऋतस्य धूर्षदम् अग्निम्'—Agni, the upholder of truth or of sacrifice, ṚV. i. 143. 7.

——

श्रुतकक्ष ऋषिः ।

३ २ ३ १ २ ३ १ १ २र
अया धिया च गव्यया पुरुणामन् पुरुष्टुत ।
१र २र ३ १ २
यत्सोमेसोम आभुवः ॥ ४ ॥ १८८ ॥

अया । धिया । च । गव्यया । पुरुऽनामन् । पुरुऽस्तुत । यत् । सोमेऽसोमे । आ । अभुवः ॥ ४ ॥

भाष्यसारः । हे पुरुणामन्—बहुविधनामोपेत, पुरुष्टुत—बहुभिः स्तुत, सोमे-सोमे—सर्वेषु सोमयागेषु, यत्—यदा, त्वम् आभुवः—सोमपानार्थं समन्तात् अभवः आगच्छसि, तदा वयम् अया—अनया, गव्यया—गविच्छया, धिया—बुद्धया, युक्ता भवेम ॥ ४ ॥

O many-named, invoked by many, whenever thou dost present thyself at our every Soma-sacrifice, may we, then, be possessed of the thought longing for cows.—4.

**सा०-भा० ।** हे 'पुरुणामन' ! बहुविध-शक्रवृत्रहादिनामोपेत ! यद्वा बहुस्तुतिमन ! नामयति स्तुत्यं देवं वशं नयतीति नाम स्तोत्रम्, अतएव 'पुरुष्टुत' !

बहुभिरभिष्टुतेन्द्र ! 'सोमे सोमे' मदीयेषु सर्व्वेषु सोमेषु त्वं 'यद्' यदा 'आभुवः' तेषां पानार्थं समन्तादभवः तदा वयं 'अया' अनया ईदृश्या 'गव्यया' गा आत्मन इच्छन्त्या 'धिया' बुद्ध्या युक्ता भवेम। त्वयि सोमं पिबति सति वयं गवादियुक्ता भवेमेत्यर्थः॥

४। ऋ० सं० ८ म० ९३ सू० १७ ऋ०। ṚV. reads 'आभवः' instead of 'आभुवः' the text above.

The import of the verse is that—whenever thou drinkest Soma, we obtain cows and other riches as rewards from thee in return of thy pleasure. So whenever thou attendest our Soma-sacrifice, we cherish the hope of getting cows and other riches ;—so do the priests or sacrificers pray to Indra.

यत्—यदा, whenever ; it must be followed by तदा the cor-relative ; Sāyaṇa explains accordingly. Mr. Grfth. has erroneously taken 'यत्' to mean 'that', and translates—'That thou···mayest come to Soma sacrifice', which makes the sense incomplete.

पुरुणामन्—'पुरु' is a syn. of बहु, Ngh. 3. 1 ; the cerebral ण by 'पूर्वपदात्०' Pāṇ. viii. 4. 3. The author of 'Vivaraṇam' interprets the word पुरुणामन् as—'one causing many foes to bend' ( बहूनां शत्रूणां प्रह्वीकर्त्तः ) or by whom many sacrificers are made to bow down ; in this sense rt. नम् (*to bend*) caus. is to be taken.

अया—for अनया ; न drops by Vedic anomaly ; the form 'अनया' occurs only twice in the ṚV. ix. 65. 12, 27. *Vide* our notes on SV. 1. 52. अया is the frequent form, *vide* : ṚV. i. 128. 2 ;—143. 6 ;—166. 13 ; ii. 6. 2 ;—24. 1 ; iii. 12. 2 ; iv. 4. 15 ; v. 45. 11 ; vi. 17. 15 ; viii. 1. 18 ; ix. 47. 1 ; etc.

पुरुष्टुत—praised by many, 'much lauded'—*Grfth.*

आभुवः—आ—( आभिमुख्येन )—अभुवः ( भवसि )—thou tendest towards,—comest to attend, लङ् (Imperf.) 2. sg. *Vide.* SV. 1. 53,—169.

Prof. Wils. renders—'O thou bearing many names and praised by many, when thou art present at our various Soma libations, may we be endowed with a kine-desiring mind.' Sāyaṇa explains this to mean 'may we obtain kine.' *Gavyayā* should mean—'with a desire for milk' ; might it be rendered—'come with this mind—with this desire for milk, when thou art present at our Soma offerings.'—*Wils.*

———

मधुच्छन्दा ऋषिः ।

३   २   ३ १ २   ३ १ २   ३ १ २
**पावका नः सरस्वती वाजेभिर्वाजिनीवती ।**
३ १ २   ३ १ २
**यज्ञं वष्टु धियावसुः ॥ ५ ॥ १८६ ॥**

पावका । नः । सरस्वती । वाजेऽभिः । वाजिनीऽवती । यज्ञम् । वष्टु । धियाऽवसुः ॥ ५ ॥

भाष्यसारः । पावका—पावनी शोधयित्री, वाजिनीवती—अन्नवत्क्रियाभिर्युक्ता, धियावसुः—कर्मधना कर्मप्राप्यधननिमित्तभूता, सरस्वती वाजेभिः—अन्नैः हविर्भिः यजमानेभ्यो देयैरन्नैः, नः—अस्माकम्, यज्ञं वष्टु—कामयताम् , निर्वहतु इत्यर्थः ॥ ५ ॥

May sanctifying Sarasvatī, full of ceremonies, rich in food, possessed of wealth attainable by action, long for, (i. e., come to complete) the sacrifice with food.—5.

**सा०-भा० ।** 'सरस्वती' देवी 'वाजेभिः' हविर्लक्षणैः अन्नैर्निमित्तभूतैः, यद्वा यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैः 'नः' अस्मदीयं 'यज्ञं' 'वष्टु' कामयतां कामयित्वा च निर्वहत्वित्यर्थः । तथा चैतरेयारण्यकाण्डे श्रुत्यैवं व्याख्यातम् 'यज्ञं वष्टिति यदाह, यज्ञं वहत्वित्येव तदाहेति'—ऐ० आ० १,१.४ । कीदृशी सरस्वती ? 'पावका' शोधयित्री 'वाजिनीवती' अन्नवत्क्रियावती 'धियावसुः' कर्मप्राप्यधननिमित्तभूता वाग्देवतायास्तथाविधधननिमित्तत्वमैतरेयारण्यकाण्डे श्रुत्या व्याख्यातम्—'यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुरिति'—ऐ० आ० १,१,४ । 'श्येनः सोमः' इत्यादिषु पञ्चविंशतिसंख्याकेषु देवताविशेषवाचिषु पदेषु 'सरमा सरस्वती' इति पठितम् । एतामृचं यास्क एवं व्याचष्टे—'पावका नः सरस्वती यज्ञं वष्टु धियावसुः कर्मवसु'रिति ( नि० ११, २६ ) ॥ ५ ॥

५ । ऋ० सं० १ म० ३ सू० १० ऋ० । वाज० सं० २०. ८४ ।

This verse is explained by Yaska in Nir. 11. 26, where कर्म वसु or कर्मधन (as translated by us above)—is given as a synonym of the compd. धियावसु.

पावका—the purifying ; dr. पू—ण्वुल्—fem. आ, not पाविका by Vartti. rule 'पावकादीनां छन्दस्युपसंख्यानम्' under Pan. vii. 3. 45. cf. हिरण्यवर्णाः शुचयः पावकाः—*Kāśikā*.

सरस्वती—*Vide Mcdnll's Ved. Myth. Para* 33. (*On Terrestrial Gods: Rivers.*), the name of the renowned river ; in later times—a deity identified with the goddess of speech.

वाजेभिः—with food , भिस् is not changed to ऐस्—by 'बहुलं छन्दसि' Pāṇ. vii. 1. 10. वाज means अन्न (food), Ngh. 2. 7.

वाजिनीवती—'endowed with plenteous wealth'—*Grfth* ; 'the bestower of food'—*Wils* ; acc. to others—'possessed of or rich in swift horses or mares.' वाज having the sense of अन्न (food),—वाजिनी ought to refer to the ceremonies rich in food.

धिया-वसुः—'enriched with prayer'—*Grfth.* 'the recompenser of worship with wealth.'—*Wils.* 'धीः'—being a syn. of कर्म, work (Ngh. 2. 1.),—it means, here, sacrificial work. Sāy. explains the compd.—'source of riches to be derived from the performances of sacrificial rites.

वष्टु—dr. rt. वश् ( कान्तौ, *to desire*, 2. p. )—लोट् (Imp.) 3. sg.—*lit.* desire, long for ; (*secondarily*)—come to complete or accomplish (*Aranya Kanda—quoted by Sāyaṇa in his com. above*). 'Saraswati' is here, as elsewhere, the *Vāg-devatā*, divinity of speech'.—*Wils.*

Sāyaṇa's addl. notes in his com. on the ṚV. verse giving some important derivations.—पावका—पवनं पावः शुद्धिः। पावं कायतीति पावका। कै गै रै शब्दे। 'आतोऽनुपसर्गे कः' (Pāṇ. iii. 2. 3.) इति क-प्रत्ययः। यद्वा पुनातीत्यर्थे ण्वुलि 'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः' (Pāṇ. vii. 3. 44.) इतीत्वस्याभावः। वाजिनीवती—वाजोऽन्नमास्विति वाजिन्यः क्रियाः। अत इनिठनौ (Pāṇ. v. 2. 115) इतीनि-प्रत्ययः। ताः क्रिया यस्याः सन्ति सा सरस्वती वाजिनीवती, 'छन्दसीरः' (Pāṇ. viii. 2. 15.) इति मतुपो वत्वम्। वष्टु—वश् कान्तौ, कान्तिरभिलाषः। अदिप्रभृतिभ्यः शप इति शपो लुक्। धियावसुः—धिया कर्मणा वसु यस्याः सकाशाद् भवति—सा धियावसुः। छान्दसस्तृतीयाया अलुक्।

---

वामदेव ऋषिः।

२ ३ १र २र ३ २उ ३ १ २
क इमं नाहुषीष्वा इन्द्रं सोमस्य तर्पयात्।
२ ३ २ ३ १ २
स नो वसून्याभरत्॥ ६॥ १९०॥

कः। इमम्। नाहुषीषु। आ। इन्द्रम्। सोमस्य। तर्पयात्। सः। नः। वसूनि। आभरत्॥ ६॥

भाष्यसारः । नाहुषीषु—मानुषीषु प्रजासु, कः इमम् इन्द्रं सोमस्य—सोमेन, तर्पयात् —तर्पयितुं शक्नुयात् । सः इन्द्रः अस्मभ्यं वसूनि अभरत्—आहरतु ॥ ६ ॥

Who amongst men is able to satisfy this Indra with Soma-juice ? May he bring us riches.—6.

**सा०-भा० ।** 'नाहुषीषु' इति मनुष्यनाम ( निघ० २, ३, ६ ) नहुषसम्बन्धिनीषु प्रजासु 'कः' 'इमम् इन्द्रम्' 'सोमस्य' सोमेन 'तर्पयात्' तर्पयति प्रीणाति, 'सः' नाहुषीभिस्तर्पयितुमशक्य इन्द्रः 'नः' अस्माकं सम्बन्धिनि यज्ञे तृप्तः सन् 'वसूनि' धनानि 'आभरत्' आहरत् आहरत्वित्यर्थः ॥ ६ ॥

६ । इयं ऋक् ऋग्वेदे नास्ति । Not found in the Ṛg-Veda.

नाहुषीषु—the word नहुष is read among the synonyms of मनुष्य—man, Nir. 2. 3. 9. Grfth. renders 'amid the Nahuṣa tribes' by which he means—'people apparently distinct from the five great Aryan tribes, and dwellers on or near the Indus. He further comments—'Indra cares not for the offerings of the alien of Nahuṣas but will reward his own Aryan worshippers.' But this interpretation based on communal motive is simply conjectural and is hardly acceptable. The author of Vivaraṇam, however, takes the word to mean—'in the ceremonies such as 'Jyotiṣṭoma' etc., which are performed by men, Nahuṣa being a syn. of man' ( नहुष इति मनुष्यनाम, तेषु भवाः ज्योतिष्टोमाद्याः क्रियाः नाहुष्यः, तासु नाहुषीषु—ज्योतिष्टोमादिक्रियासु इत्यर्थः )—*Viv.*

सोमस्य—for सोमेन, an instance of विभक्तिव्यत्यय i. e., an anomalous use of *gen.* for *instr.*

तर्पयात्—rt. तृप् (*to be pleased*, 4.p. तृप्यति, or 5.p. तृप्नोति ) caus. लेट् (Ved. subj), आट् by 'लेटोऽडाटौ' Pāṇ. iii. 4. 94, इलोपः by 'इतश्च लोपः' Pāṇ. iii. 4. 97.

आ-भरत्—rt. हृ (to bring)—लेट् (Ved. subj.) 3. sg. 'हृग्रहोर्भश्छन्दसि' ( हृ of the root changed to भ ), इ of ति drops by 'इतश्च लोपः'.

———

इरिमिठ ऋषिः ।

१   २   ३ २उ   ३ २ ३ २ ३ १ २   ३ २
आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् ।
२उ   ३ १   २ ३ १ २
एदं बर्हिः सदो मम ॥ ७ ॥ १९१ ॥

आ । याहि । सुसुम । हि । ते । इन्द्र । सोमम् । पिब । इमम् । आ । इदम् । बर्हिः । सदः । मम ॥ ७ ॥

भाष्यसारः । हे इन्द्र, आयाहि—आगच्छ, हि—यस्मात्, ते—तव कृते, सुषुम—अभिषुणुमः सोममभिषुतवन्तः । इमं सोमं पिब, इदं मम बर्हिः—वेद्युपरि आस्तीर्णे दर्भासने, आसदः—आसीद उपविश ॥ ७ ॥

Come, we have pressed out Soma-juice for thee ; O Indra, drink this (Soma) ; sit on this my holy grass.—7.

**सा०-भा० ।** हे 'इन्द्र !' त्वम् 'आयाहि' आगच्छ, वयं 'ते' त्वदर्थं 'सुषुम हि' सोममभिषुतवन्तः खलु, तम् 'इमम्' अभिषुतं 'सोमं' त्वं 'पिब', तदर्थं 'मम' मदीयम् 'इदम्' 'बर्हिः' वेद्यामास्तीर्णं दर्भम् 'आ सदः' आसीद अभिनिषीद ॥ ७ ॥

७ । ऋ० सं० ८ म० १७ सू० १ ऋ० । उ० आर्चि० १,१,६,१ ।

सुषुमा—for सुषुम, mg.—अभिषुणुमः, we have ex-pressed ; fr. rt. सु ( पीडने, *to press out juice*— 5.u).—perf. ( लिट् ) 1. pl ; perf. is used for pres. or imperf. by 'छन्दसि लुङ्लङ्लिटः' Pāṇ. iii. 4. 6, final vowel is lengthened by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137.

पिबा—for पिब ; the final vowel is lengthened by 'द्व्यचोऽतस्तिङः' Pāṇ. iii. 3. 135.

इदं बर्हिः—for अस्मिन् बर्हिषि, accus. for loc.,—*on this sacred grass.*

सदः—acc. to Vivaraṇam, it is better to take it as a noun in the accusative, which again stands for the locative, mg.—सदसि, in the sacrificial assembly i. e., on the altar. Sāy. has taken it as a verb in the imp. mg.—'sit down.'

---

वारुणिः सत्यधृतिर्ऋषिः ।

१ २ ३ १र २र ३ २ ३ १ २ ३ २
महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः ।
३ २ ३ १ २
दुराधर्षं वरुणस्य ॥ ८ ॥ १९२ ॥

महि । त्रीणाम् । अवः । अस्तु । द्युक्षम् । मित्रस्य । अर्यम्णः । दुः आधर्षं । वरुणस्य ॥ ८ ॥

साधनाटः । त्रीणाम्—त्रयाणाम्, मित्रस्य अर्यमणः वरुणस्य, द्युक्षम्—दीप्तम्, दुराधर्षम्—अन्यैर्बाधितुमशक्यम्, महि—महत्, अवः—रक्षणम्, अस्माकम् अस्तु ॥ ८ ॥

Let there be, for us, the mighty glorious indomitable protection of the Three—Mitra, Aryaman, Varuṇa.—8.

**सा०-भा० ।** त्रीणाम् त्रयाणां 'मित्रस्य' 'अर्यमणः' 'वरुणस्य' च 'द्युक्षम्' दीप्तम्, अत एव 'दुराधर्षम्' अन्यैर्धर्षितुं बाधितुमशक्यं 'महि' महत् 'अवर्' अवः रक्षणम् अस्माकम् 'अस्तु'। अवस् इत्यत्र अवःशब्दस्य विसर्जनीयस्य रेफादेशश्छान्दसः ॥ ८ ॥

८। ऋ० सं०—१० म० १८५ सू० १ ऋ०। यजुः ३, ३१। In ṚV. we find the right reading **अवोऽस्तु** instead of **'अवरस्तु'** above, in which the Sandhi rule is violated; the informal change of **विसर्ग** to **र्** here is a Vedic peculiarity.

महि—महत् Nir. 11. 9. cf. इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ṚV. x. 50. 1. तत् सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं संजभार —i. 115. 4.

त्रीणाम्—Vedic form for त्रयाणाम्; *vide* Ved. Gram. McDnll, para 105, declension of cardinals. 'त्रीणामित्यपि छन्दसि दृश्यते इति वचनात्' का० ७. १. ५३, १ त्रयादेशाभावः—Sāy.'s addl. notes in his com. on the ṚV. verse referred to above.

द्युक्षम्—dr. fr. rt. 'द्यु' mg. resplendence (Nir. 1.6. 1.)—rt. क्षि—to dwell 9. p. Grfth. takes द्युक्षं to mean 'heavenly'; perhaps he has taken द्यु in the sense of heaven, which, however, is not obtainable from Ngh. or Nir.

मित्रस्य, अर्यमणः, वरुणस्य—*vide* our notes on SV. 185.

दुराधर्षम्—irresistible, 'unassailable'—*Grfth.* and *Wils.*

---

वत्स ऋषिः ।

१ २ ३ १ २
त्वावतः पुरूवसो वयमिन्द्र प्रणेतः ।
१ २
स्मसि स्थातर्हरीणाम् ॥ ९ ॥ १९३ ॥

त्वाऽवतः । पुरुवसो इति पुरुऽवसो । वयम् । इन्द्र । प्रणेतरिति प्रऽणेतः । स्मसि । स्थातः । हरीणाम् ॥ ९ ॥

भाष्यसारः। हे पुरुवसो—बहुधन, प्रणेतः—कर्मणां प्रकर्षेण पारं नेतः, हरीणाम् एतदाख्यानामिन्द्रस्वामिकानामश्वानाम्, स्थातः--अधिष्ठातः, हे इन्द्र, त्वावतः--उपमानान्तराभावात् त्वत्सदृशस्यैव तव, वयं स्मसि--स्मः भवामः ॥ ६ ॥

O Indra, lord of abundant wealth, the guide (of our actions), the lord of the horses called '*Haris*', we are dependent on thee who art like thy own self.—9.

**सा०-भा०।** हे 'पुरुवसो'! बहुधन! इन्द्र! 'प्रणेतः!' कर्मणां पारं प्रकर्षेण नेतः! 'इन्द्र'! 'त्वावतः' त्वत्सदृशस्य इन्द्रसमानस्यान्यस्याभावात् तवेत्यर्थः, तव स्वभूताः 'वयम्' 'स्मसि' स्मः। हे 'हरीणाम्' एतत् सञ्ज्ञकानामश्वानां 'स्थातः!' अधिष्ठातः! ॥ ६ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयस्याध्यायस्य अष्टमः खण्डः। द्वितीयप्रपाठकस्य च द्वितीयार्द्धे पञ्चमी दशतिः।

इति द्वितीयः प्रपाठकः समाप्तः ॥

६। ऋ० सं० ८ म० ४६ सू० १ ऋ०।

त्वावतः—dr. युष्मत्—aff. वतुप् (in the sense of similarity by Vārtti. rule 'युष्मदस्मदोः सादृश्ये वतुप् वाच्यः' युष्मत् takes the form त्व with the aff. वतुप् following, by 'प्रत्ययोत्तरपदयोश्च'—Pāṇ. vii. 2. 91., next त्व becomes त्वा by 'आ च सर्वनाम्नः'। The idea is—as thou hast no parallel, thou art thy own prototype. 'We belong to one like thee; since none other is like thee, we are thine.'—*Wils.*

स्मसि = स्मः (fr. rt. अस् *to be*, 2. p.) —*we are*; मस् becomes मसि by 'इदन्तो मसि' Pāṇ. vii. 1. 46, it occurs also in ṚV. viii. 92. 32—'त्वमस्माकं तव स्मसि'.

हरीणाम्—'हरी इन्द्रस्य रोहितोऽग्नेः हरित आदित्यस्य', Ngh. 1. 15; the horses of Indra are called by the name 'Hari'. *Vide* our notes on 'हरिभिः' SV. 150; also on 'हर्यश्वाय' 1. 156.

प्रणेतः—the leader of rites or sacrificial actions.

---

अथ द्वितीयाध्यायस्य नवमः खण्डः। तृतीयप्रपाठकस्य च प्रथमार्द्धे प्रथमा दशतिः।

प्रगाथ ऋषिः।

१ २ ३ १ २ ३ १ २ २ १
उत् त्वा मदन्तु सोमाः कृणुष्व राधो अद्रिवः।
१ २ ३ १ २
अव ब्रह्मद्विषो जहि ॥ १ ॥ १९४ ॥

उत् । त्वा । मदन्तु । सोमाः । कृणुष्व । राधः । अद्रिऽवः । अव । ब्रह्मऽद्विषः । जहि ॥ १ ॥

भाष्यसारः । हे इन्द्र, त्वा सोमाः उत् मदन्तु—मादयन्तु. हे अद्रिवः—वज्रयुक्त, अस्मभ्यं राधः—धनम्, कृणुष्व—प्रयच्छ । ब्रह्मद्विषः अवजहि ॥ १ ॥

Let Somas exhilarate thee, bestow on us riches, O one possessed of the thunder, disperse the enemies of the Brāhmaṇas.—1.

**सा-भा० ।** हे इन्द्र ! 'त्वा' त्वाम् 'सोमाः' 'उत्' उत्कृष्टं 'मदन्तु' मादयन्तु हे 'अद्रिवः' वज्रवन् ! इन्द्र ! त्वमस्मभ्यं 'राधः' धनं 'कृणुष्व' कुरु प्रयच्छ । किञ्च, 'ब्रह्मद्विषः' ब्राह्मणद्वेष्टॄन् 'अव जहि' विदारयेत्यर्थः ॥ १ ॥

**१ । ऋ० सं० ८ म० ६४ सू० १ ऋ० ।** The ṚV. reads **'स्तोमाः'** (hymns, songs of praise) instead of **'सोमाः'** the above reading, (2) **'मन्दन्तु'** for **'मदन्तु'** । **उ० आर्चि० ६, १, ३, १ ।**

कृणुष्व—rt. कृ *to make*, 5. u. imp. Ā.—make, for us riches i. e., give.

राधः—धनम्, Ngh. 2. 10. राध इति धनम्, Nir. 4. 4. 'राध्नुवन्ति—सिध्यन्ति अनेन' *so called, as success is attained by this* (wealth).

अद्रिवः—(*voc.* of the *stem* अद्रिवत्; न् is changed to विसर्ग (रु) by 'मतुवसो रु सम्बुद्धौ छन्दसि' Pāṇ. viii. 3. 1. म of मतुप् is changed to व by 'छन्दसीरः' Pāṇ. viii. 2. 15. The word अद्रिवः in the sense of holder of the *thunderbolt* occurs in 'इन्द्रा धावन्तमद्रिवः काण्वम्' ṚV. viii. 2. 40.

अव-जहि—fr. rt. हन् *to kill*, imp. (लोट्) 2. sg.—Vivaraṇam has taken हन् in the sense—*to go*,—'हन्तिर्गत्यर्थस्येदं रूपम्—अधोगमय, नरकं नय' send down to hell. —*Viv.*

---

विश्वामित्र ऋषिः ।

गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे ।
इन्द्र त्वादातमिद्यशः ॥ २ ॥ १९५ ॥

गिर्वणः । पाहि । नः । सुतम् । मधोः । धाराभिः । अज्यसे । इन्द्र । त्वाऽदातम् । इत् । यशः ॥ २ ॥

भाष्यसारः। **हे गिर्वणः—स्तुतिभिः सम्भजनीय, इन्द्र, नः—अस्माकम्, सुतं—सोमम्, पाहि—पिब, मधोः—सोमस्य, धाराभिः अज्यसे—प्रक्ष्यसे सिच्यसे। त्वादातं—त्वया दत्तम्, इत्—एव, यशः—अन्नम्, अस्मासु भवति॥ २॥**

O Indra, adorable by hymns, drink our pressed-out Soma juice ; thou art besprinkled with streams of mead-like exhilarating Soma ; our wealth (or food) is thy gift.—2.

**सा०-भा०। 'गिर्वणः' गीर्भिः वाग्भिः स्तुतिभिः वननीय! तथा च यास्कः—'गिर्वणा देवो भवति गीर्भिरेनं वनयन्तीति' (नै० ६, १४)। तादृश हे इन्द्र! 'नः' अस्मदीयं 'सुतम्' अभिषुतम् इमं सोमं 'पाहि' पिब, यतः 'मधोः' मदकरस्य सोमस्य 'धाराभिः' 'अज्यसे' सिच्यसे। हे 'इन्द्र'! 'त्वादातम् इत्' त्वया शोधितं विशदीकृतमेव 'यशः' अन्नम् अस्मासु भवति॥ २॥**

**२। ऋ० सं० ३ मं ४० सू० ६ ऋ०।**

गिर्वणः (Voc. of the *stem* गिर्वणस्) : गिरः—स्तुतिरूपा वाचः—(*Songs of praise*). ताभिः वन्यते सम्भज्यते स गिर्वणाः—*One who is adored with praises* i. e., god ; *vide*, SV. I. 165.

पाहि—for पिब। शप् common in भ्वादि (cl. I.) roots is elided, पा is not changed to पिब, this is a Vedic peculiarity.

अज्यसे—fr. rt. अञ्ज् *to anoint*, 7. p.—(thou) art bedewed with.

त्वादातम् '*given by thee*'—'त्वा' stands for त्वया, *vide* notes on त्वा SV. I. 128 ; दातम् is the pp. of rt. 'दा' *to give*, 3. u ; *vide* Mcdnll's Ved. Gram. List of vbs. p. 389. Sāy. derives it from the rt. 'दै' (शोधने, *to purify*) pp. of which gives the form दातम्, mg.—(food) *sanctified* by thee.

यशः—धनम्, Ngh. 2. 10, or अन्नम्, Ngh, 2. 7.

Sāyaṇa's addl. notes in his com. on the Ṛ̣V. verse :—

गिर्वणः—वन् संभक्तावित्यस्मादसुन्। गिर उपधाया दीर्घाभावश्छान्दसः। त्वादातं—दैप् शोधने। आदेच इत्यात्वम्। अस्मात् कर्मणि क्तः। घुसंज्ञाया अभावाद् ददादेशो न भवति। त्वेति युष्मच्छब्दस्य तृतीया कर्तृकरणे कृता बहुलमिति समासः। यशः—अशू—व्याप्तौ अशेर्युट् चेत्यसुन्—तत्सन्नियोगेन धातोर्युडागमः।

---

वामदेव ऋषिः।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ २र ३ २
सदा व इन्द्रश्चर्कृषदा उपो नु ससपर्यन्।
३ २ ३ २उ ३ १ २
नः देवो वृतः शूर इन्द्रः॥ ३॥ १९६॥

सदा। वः। इन्द्रः। चर्कृषत्। आ। उप। ऊम् इति। नु। ससपर्यन्। न। देवः। वृतः। शूरः। इन्द्रः॥ ३॥

भाष्यसारः। **हे ऋत्विजो यजमानाश्च, इन्द्रः सदा उपो नु—युष्मत्सकाशम् एव, ससपर्यन्—'माम् यज्ञे हविर्भोजने आमन्त्रयत' इति अत्यर्थम् अनुनयं कुर्वन्, वः—युष्मान्, चर्कृषत्—यज्ञानुष्ठानाय प्रवृत्तान् कर्त्तुमिच्छति। वृतः—यज्ञे हविर्भिरर्च्चितः, देवः इन्द्रः, न शूरः—यजमानानां न बाधको भवति।**

**विवरणमते—यः देवः वृतः—अभ्यर्थितः, शूरः—विक्रान्तः, स इन्द्रः सपर्यन्—परिचारकः, न—इव, यथा कश्चित् परिचारकः प्रभोः प्रीतिमुत्पादयति तद्वत् सदा वः—युष्माकम्, चर्कृषत्—अत्यर्थं करोतु बलं धनं दीर्घञ्च जीवितम्॥ ३॥**

(O priests and sacrificers), Indra does ever desire you to perform sacrifice, imploring you intensely (for offering him oblations). Indra the resplendent, being entertained (with offerings) is not obstructive (to his worshippers), *or* may Indra the divine hero, being served with oblations, like a devoted attendant, do us immense benefit (in wealth, strength and long life).—3.

**सा०-भा०। हे ऋत्विग्यजमानाः! 'इन्द्रः' 'सदा' सर्वदा 'वः' युष्मान् 'आ चर्कृषत्' यज्ञानुष्ठानार्थम् अत्यर्थं कर्त्तुमिच्छति। किं कुर्वन् 'उपो नु' युष्माकं समीप एव 'ससपर्यन्' पुनः पुनः भृशं वा सपर्यां कुर्वन् हविर्भोक्तुं मामाह्वयध्वमिति प्रार्थयमान इत्यर्थः, अत एव श्रुत्यन्तरे देवानां यजमानप्रदत्तहविरुपजीवित्वं श्रूयते—'इतो दानाद्धि देवा उपजीवन्ती'ति। अतः अस्मत्सपर्याकर्त्तृत्वात् 'इन्द्रः देवः' 'न' 'शूरः' यजमानानां बाधक इत्यर्थः॥ ३॥**

३। **इयम् ऋक् ऋग्वेदे नास्ति।** Not found in the Ṛgveda.

चर्कृषत्—fr. rt. कृ—with यङ्लुक् (Int.)—लेट् (Ved. subj.). सिप् (स्) in लेट् by Pāṇ. iii. 1. 34. and अट् is added to it by Pāṇ. iii. 4. 94. Sāy. seems to derive the word with सन् (des.) after यङ्लुक्; mg.—(*Indra*) *desires* (*you*) *intensely to do* (sacrifices for him). This word occurs in the Ṛg.veda, i. 23. 15;—176. 2; viii. 20. 19; चर्कृषे x. 22. 1;—74. 1;—105. 4.

ससपर्यन्—rt. सपर् (of the कण्ड्वादि cl.)—*to adore, to serve*, with यङ्लुक् (Int.)—pres. part.—*soliciting you exceedingly for* (*your*) *oblations*. *Vir.*—separates 'सः' from 'सपर्यन्' treating them as two different words; for mg. in this case *see* Bhāṣyasāra and the translation.

उप-उ-नु—these *indecs* are expletives, acc. to *Vir.* Sāy. means—*near you.*

श्रुतकक्ष ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २
आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।
२उ ३ १ २
न त्वामिन्द्रातिरिच्यते ॥ ४ ॥ १९७ ॥

आ । त्वा । विशन्तु । इन्दवः । समुद्रम्ऽइव । सिन्धवः । न । त्वाम् । इन्द्र । अति । रिच्यते ॥ ४ ॥

भाष्यसारः । हे इन्द्र, इन्दवः—स्रवन्तः सोमाः, त्वाम् आविशन्तु, समुद्रं सिन्धवः—नद्यः, इव । त्वां न कोऽपि देवः अतिरिच्यते—त्वत्तोऽधिको भवति ॥ ४ ॥

Let the streaming Somas enter thee, as the rivers flow into the sea ; O Indra, nobody prevails over thee.—4.

**सा०-भा० ।** हे इन्द्र ! 'इन्द्रवः' स्रवन्तः अस्माभिर्दीयमानाः सोमाः 'त्वा' त्वाम् 'आविशन्तु' सर्वतः प्रविशन्तु । तत्र दृष्टान्तः—'समुद्रम् इव सिन्धवः' स्यन्दनशीला नद्यो यथा समुद्रं जलाशयं सर्वतः प्रविशन्ति तद्वत् । यत एवं तस्मात् हे 'इन्द्र !' त्वां कश्चिदपि देवः धनेन बलेन वा 'न अतिरिच्यते' नातिरिक्तोऽस्ति सामर्थ्यवान् त्वत्तोऽधिको नास्तीत्यर्थः ॥ ४ ॥

४ । ऋ० सं० ८ म० ९२ सू० २२ ऋ० । उ० आर्चि० ८, २, २, १ ।

इन्दवः—Soma juice is frequently termed 'Indu'—the bright shining drop, ṚV. iv. 50. 10 ; viii. 48. 2,4,8,12,13,15. इन्दुरिन्धेरुनत्तेर्वा—i. e., drvd. either from rt. इन्ध् *to shine, to kindle* 7. Ā. or from rt. उन्द् ( क्लेदने, *to moisten* 7. p. )—Nir. 10. 41 ; *vide* our notes on इन्दुभिः SV. 1. 7.

इन्दु is read in the list of the synonyms of 'उदक' (*water*) Ngh. 1. 12. also of 'Yajña' *sacrifice*—Ngh. 3. 17 ; *here* 'Indu' having the sense of water, as shown above, refers to Soma juice *flowing or streaming* like water.

समुद्रमिव सिन्धवः—This simile seems to be very favourite to the Vedic poets, cf. 'समुद्रायेव सिन्धवः' SV. 1. 137. सिन्धु is a syn. of river, Ngh. 1. 13.

न त्वाम् इन्द्र अतिरिच्यते—None, Indra, surpasses thee.

---

मधुच्छन्दा ऋषिः। प्रउगे सारस्वते च हविषि विनियोगः।

३ २ ३ १ २ ३ १र १ २र ३ १ २ ३ १ २
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः।
३ १ २
इन्द्रं वाणीरनूषत ॥ ५ ॥ १९८ ॥

इन्द्रम्। इत्। गाथिनः। बृहत्। इन्द्रम्। अर्केभिः। अर्किणः। इन्द्रम्। वाणीः। अनूषत ॥ ५ ॥

भाष्यसारः। **गाथिनः—सामगायिनः उद्गातारः, इन्द्रम् इत्—एव, बृहत्—बृहता —बृहन्नामकेन साम्ना, अनूषत—स्तुवन्ति। अर्किणः—अर्चनार्थ-मन्त्रोपेताः होतारः ऋग्वेदीया ऋत्विज इत्यर्थः, अर्केभिः—मन्त्रैः ऋग्भिरित्यर्थः स्तुवन्ति। अपरे ऋत्विजः अध्वर्यवः, वाणीः—वाग्भिर्यजूरूपाभिः इन्द्रं स्तुवन्ति ॥ ५ ॥**

The Sāma-singers (Udgātṛs, the Sāma-Veda priests) glorify Indra with Bṛhat-Sāmans, the reciters of mantras (Hotṛs, the Ṛgveda priests) with lauding hymns, others (Adhvaryus, the priests of the Yajur-Veda) with praising songs.—5.

**सा०-भा०।** 'गाथिनः' गीयमानसामयुक्ता उद्गातारः 'इन्द्रम् इत्' इन्द्रमेव 'बृहत्' बृहता 'त्वामिद्धि हवामहे' ( ऋग्वे० ६म० ४६ सू० १ ऋ० ) इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन साम्ना 'अनूषत' स्तुवन्ति। 'अर्किणः' अर्चनहेतुमन्त्रोपेता होतारः 'अर्केभिः' उक्थरूपैर्मन्त्रैरनूषत। ये त्ववशिष्टा अध्वर्यवः ते 'वाणीः' वाग्भिर्यजूरूपाभिः 'इन्द्रम्' अनूषत। अर्कशब्दस्य मन्त्रपरत्वं यास्केनोक्तम्—'अर्को मन्त्रो भवति यदनेनार्चन्ति' ( नि० ५,४ ) इति ॥ ५ ॥

५। ऋ० सं० १ म० ७ सू० १ ऋ०। उ० आर्चि० २, १, ८, १।

गाथिन:—the singers of the Sāma-Veda ; गाथा is a synonym of वाक् (word) Ngh. I. 11. Nir. 2. 23. I. गाथा:—सामानि.

अर्केभि:—fr. rt. अर्च् *to worship*, I. p. 'अर्को देवो भवति यदेनमर्चन्ति—अर्को मन्त्रो भवति यदनेनार्चन्ति'—Nir. 5. 4. अर्केभि: for अर्कै:, mg.—मन्त्रै: with prayers. *Vide* our notes on 'अर्कमर्चन्तु', SV. I. 158 ; भिस् (Instr. pl. term.) is not changed to ऐस— Pāṇ. vii. I. 10. (*See* Sāy.'s addl. notes quoted below.) अर्किण:—reciters of the Ṛk verses.

Prof. Wilson has esp. notes on the words गाथिन:, वाणी:, अर्केभि:, अर्किण: etc.—'Sāyaṇa supplies the specification of the several Vedas. The first term, *Gathinah*, merely means singers, although he renders it 'the Udgatṛs with Samans to be chanted', an interpretation he thinks, confirmed by the next term (songs) . Bṛhat for Bṛhata (Instr.)—mg.—*with the Bṛhat Sāman*'. The

next phrase अर्कैभि: अर्किण:—is more akin to Ṛk ;—'those (the priests of the *Ṛg-Veda*, with stanzas : but it is not necessarily confined to that sense ; and as अर्क is a synonym of Mantra, a prayer, the sense may be—those who pray or praise *Indra* with prayers. For the अध्वर्युs or priests of the *Yajus*, we have nothing at all in the original ; and the term वाणी: for वाणीभि:—'with texts or words,' which occurs apparently without any grammatical connexion, may be referred either to the singers or the reciters of the prayers. It is applied by Sāyaṇa to the texts of the Yajus, apparently, only because he had connected the preceding expressions with the other two *Vedas*'.

Sāyaṇa's addl. notes in his com. on the corres. verse of the Ṛgveda—

वाणी:—श्लोक इत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु वाशी वाणीति पठितम्। गाथिन:—'उषि कुषिगार्तिभ्यस्थन्' uṇ. ii. 4. इति गायतेस्थन्प्रत्यय:। गाथा एषां सन्तीति गाथिन:। व्रीह्यादिभ्यश्च—(Pāṇ. v. 2. 116.) इतीनि:। बृहत्—बृहता, तृतीयैकवचनस्य सुपां सुलुगिति लुक्। अर्कैभि:—अर्च पूजायाम्, अर्च्यत एभिरित्यर्का मन्त्रा:। 'बहुलं छन्दसि' Pāṇ. vii. I. 10. इति भिस ऐसादेशो न भवति। अर्किण:—अर्का:—स्तुतिसाधनभूता मन्त्रा एषां सन्तीति अर्किण:। वाणी:—'दीर्घाज्जसि च' (Pāṇ. vi. I. 105) इति पूर्वसवर्णदीर्घनिषेधस्य 'वा छन्दसि' (Pāṇ. vi. I. 106) इति विकल्पितत्वाद् दीर्घत्वम्। तृतीयार्थे प्रथमा ( for वाणीभि: )।

अनूषत—glorify, praise, extol ; णु स्तुतौ, *to praise* ; लुङ् (aor.) 3. pl., in the pres. sense.

---

श्रुतकक्ष ऋषि:।

१ २ ३ १ २ ३ २ ३ ३ २ ३ २

**इन्द्र इषे ददातु न ऋभुक्षणमृभुं रयिम्।**

३ १ २ ३ १ २

**वाजी ददातु वाजिनम्॥ ६ ॥ १९९ ॥**

इन्द्र। इषे। ददातु। न:। ऋभुक्षणम्। ऋभुम्। रयिम्। वाजी। ददातु। वाजिनम्॥ ६॥

भाष्यसार:। इन्द्र: ऋभुक्षणं—महान्तम्, रयिं—धनदातारम्, ऋभुम् एतन्नामकं सुधन्वन आङ्गिरसस्य ज्येष्ठं पुत्रम्, न:—अस्मभ्यम्, इषे—अन्नार्थम्, ददातु—प्रयच्छतु। वाजी—बलवान्, इन्द्र: वाजिनं—बलवन्तं वाज-नामानं सुधन्वन: कनिष्ठपुत्रं च, अस्माकमन्नलाभाय प्रयच्छतु॥ ६॥

May Indra bring to us mighty munificent '*Ṛbhu*' with the object of giving us food (or wealth) ; may he, the mighty, bring the strong *Vāja*.—6.

**सा०-भा० ।** 'इन्द्रः' एवास्माभिः स्तुतः इष्टः सन् 'ऋभुक्षणम्' 'वा षपूर्वस्य निगमे' (पा० ६,४,९) इति दीर्घाभावः । यागादिकर्मकरणेन महान्तम् सर्वेषां भ्रातॄणां श्रेष्ठं सौधन्वनं वा । अथवा तृतीयसवने प्रजापतिसवित्रोर्मध्ये सोमपानेन महान्तम् । रयिं दातारं 'ऋभुम्' सोमपानेनाऽमर्त्यत्वं देवत्वं प्राप्तं तादृशम् एतन्नामकं देवं 'नः' अस्मभ्यम् 'इषे' अन्नार्थं 'ददातु' प्रयच्छतु । तथा 'वाजी' बलवान् इन्द्रः 'वाजिनं' बलवन्तं वाजनामानं कनीयांसं वा भ्रातरं सौधन्वनम् अस्माकमन्नलाभाय ददातु ॥ ६ ॥

६ । ऋ० सं० ८ म० ९३ सू० ३४ ऋ० ।

इषे—अन्नाय, for the purpose of supplying us food—as gift from bounteous 'Ṛbhu'. इष is a synonym of अन्न Ngh. 2. 7 ; *vide* notes on इषम् SV. 1. 173.

ऋभुक्षणम् (*Accus. sg.*)—optionally in the Vedas—ऋभुक्षाणम्, by the gram. rule quoted by Sāy. in his com. above, Pāṇ. vi. 4. 9 ; in Class. Skt. the form is always ऋभुक्षाणम्. The word ऋभुक्षा is also a syn. of महत् , great, as an adj. Ngh. 3. 3. In this sense we find the expression 'ऋभुक्षाणम् इन्द्रम्' (I invoke *mighty* Indra)—ṚV. i. 111. 4.

Ṛbhukṣaṇa, sometimes the name of Ṛbhu—is the eldest and Vāja the youngest of the three brothers. The Ṛbhus have a share in the evening libation between Prajāpati and Savitṛ, *see* Ait. Br. iii. 30. This verse is addressed to the Ṛbhus in the evening libation on the ninth day of the Dvādaśāha ceremony, *ib.* v. 21.

ऋभुम्—refers to the eldest son of 'Sudhanvan' of the Aṅgirasa family who had three sons 'Ṛbhu', 'Vibhu' and 'Vāja'. They were originally mortal but by constant performances of sacrifices acquired immortality : 'they were the three ancient skilful sacrificers who became immortals'—*BERGAIGNE La Religion Védique*, 2. 412. *Vide* ṚV. i. 110. 4—'विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः—सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः' ॥ Yāska explains this verse in Nir. 11. 16. mg. being—having performed holy rites, the institutors of sacrifice, they the Ṛbhus, the sons of Sudhanvan originally though mortals, attained immortality ; also in ṚV. iii. 60. 1—3, iv. 35. 8. they are described to have obtained divinity or acquired the rank of gods in consequence of their wondrous skilful deeds. The same incident is alluded to in the verses iv. 33. 3-4,—35. 3,—36. 4 etc.

The etym. is given by Yāska—'ऋभव उरु भान्तीति वा ऋतेन भान्तीति वा ऋतेन भवन्तीति वा—they are so called, as *they shine widely* (उरु—rt. भा), *they shine* or live *with ṛta* or *holy* service or sacrifice, *Nir.* 11. 15. they were the artificers of the gods, they fashioned a car which is horseless and reinless (ṚV. i. 111. 1,—161. 3. iv. 36. 1. etc.) ; they made the car for the Aśvins ; for Indra they fashioned his two

horses *(hari)*—ṚV. iv. 33. 10, etc. ; they also made a cow which yields nector (i. 20. 3) ; they rejuvenated their parents (i. 20. 4 ; iv. 35. 5—36. 3) by which *prob.* is meant that they made heaven and earth to thrive, the latter being conceived to be their parents.

**रयिम्**—**धनम्**, *here* **दातारम्**, 'bounteous'—*Sāy.* and *Wils.*

वाजिनम्—strong '*Vāja*'—Sāy. Wilson adopts Sāy.'s explanation and translates—mighty Vāja. Vāja is the youngest of the Ṛbhus forming the triad.

The import of the verse is—Ṛbhu and Vāja the sons of Sudhanvan are noble, liberal-minded and munificent, bounteously parting with riches and food in the sacrifices which they perform constantly, in consequence of which they have attained immortality. For sending these two princely donors among men and thus making provision of ample wealth and food, through their agency, for the sacrificers and priests,—Indra is here prayed in this verse.

Mr. Grfth., following no ancient authority, translates the verse differently—'may Indra give, to aid us, wealth handy that rules the skilful ones. Yea, may the strong give potent wealth'. He seems to have followed Prof. Macdnll's etym. and mg. (dr. fr. rt. *rabh*, to grasp, mg.—'handy', 'dexterous'.—*Macdnll. Ved. Myth. P. 133, Para 46 on Ṛbhus*). This is hardly acceptable.

———

गृत्समद ऋषिः ।

१ २ ३ २ ३ २ ३ २ ३ १र २र
**इन्द्रो अङ्ग महद्भयमभीषदपचुच्यवत् ।**
२उ ३ १ २र
**स हि स्थिरो विचर्षणिः ॥ ७ ॥ २०० ॥**

इन्द्रः । अङ्ग । महत् । भयम् । अभि । सत् । अप । चुच्यवत् । सः । हि । स्थिरः । विऽचर्षणिः ॥ ७ ॥

भाष्यसारः । **इन्द्रः महत् अभीषत्—अभिभवकरम्, भयम्—भयकारणम्, अङ्ग—क्षिप्रम्, अपचुच्यवत्—अपच्यावयति । हि—यस्मात्, स स्थिरः—अचलः, विचर्षणिः—विश्वस्य द्रष्टा ॥ ७ ॥**

Indra disperses great fear which overcomes all, as he is firm and the observer of all.—7.

**सा०-भा०। 'इन्द्रः' 'महत्' अधिकम् 'भयं' साध्वसं भयकारणं वा। 'अङ्ग' क्षिप्रम् 'अभीषत्' अभिभवति, 'अपचुच्यवत्' अपच्यावयति च। यद्वा अभीषद् अभिभवद् भयकारणम् अपच्यावयेत्। 'हि' यस्मात् कारणात् 'स स्थिरः' केनापि चालयितुमशक्यः 'विचर्षणिः' विश्वस्य द्रष्टा ॥ ७ ॥**

**७। ऋ० सं० २ म० ४१ सू० १० ऋ०।**

अप-चुच्यवत्—fr. rt. च्यु to move. लङ् without the augment अ, by 'बहुलं छन्दस्यमाङ्योगेऽपि' Pāṇ. vi. 4. 75, or acc. to West. scholars—Injunctive Mood, which corresponds to an unaugmented past tense and represents a very primitive verbal form which originally expressed an action irrespective of tense or mood, the context showing which was meant, Mcdnll's Ved. Gram, Para 215. 'May Indra dissipate'—*Wils.*

अभीषत्—अभिभवति, dr. अभि rt. इ—लिट्, 3. sg.; in the case it is an adj. mg. *overcoming* or *bewildering*, अभि-सद्-क्विप् in caus. sense, the long vowel in अभि (अभी) is peculiar in the Saṃhitā text.

विचर्षणिः—the beholder of all; 'पश्यत्यर्थः विचर्षणिर्विश्वचर्षणिरिति'—Sāyaṇa. *vide* his com. on ṚV. 1. 35. 9.—Ngh. 3. 11; *vide* our notes on विचर्षणे SV. 1. 84.

---

भरद्वाज ऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ १ २
**इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः।**
१ २ ३ २उ ३ १ २
**गावो वत्सं न धेनवः ॥ ८ ॥ २०१ ॥**

इमाः। ऊम्इति। त्वा। सुतेऽसुते। नक्षन्ते। गिर्वणः। गिरः। गावः। वत्सम्। न। धेनवः ॥ ८ ॥

भाष्यसारः। **हे गिर्वणः—गीर्भिर्वननीय सम्भजनीय इन्द्र, सुते सुते—सोमेऽभिषुते सति, इमाः अस्मदीयाः गिरः—स्तुतयः, त्वा—त्वां प्रति, नक्षन्ते—गच्छन्ति। धेनवः—गावः, वत्सं न—इव, यथा अभिगच्छन्ति तद्वत् ॥ ८ ॥**

In each extraction of Soma juice, O one adorable by hymns, these our songs of praise tend to thee, as the milch cows to the young calves—8.

**सा०-भा० ।** हे 'गिर्वणः' गीर्भिर्वननीयेन्द्र ! 'सुते सुते' सोमेऽभिषुते सति 'इमाः' अस्मदीयाः 'गिरः' स्तुतयः 'त्वा' त्वां 'नक्षन्ते' व्याप्नुवन्ति । 'धेनवः' दोग्ध्र्यः 'गावः न' गाव इव, वत्सं यथा शीघ्रं व्याप्नुवन्ति तद्वत् ॥ ८ ॥

८ । ऋ० सं० ६ म० ४५ सू० २८ ऋ० । ascribed to Saṃyu—acc. to Viv.

The simile and phraseology are similar to those of SV. I. 146, the text of which runs thus : 'इमा उ त्वा पुरूवसोऽभि प्रणोनवुर्गिरः । गावो वत्सं न धेनवः ।'

गिर्वणः—*voc* of the stem गिर्वणस्, *vide* notes on SV. I. 165 ; I. 195.

नक्षन्ते—fr. rt. नक्ष *to pervade, to go*, Ngh. 2. 18. *vide* our notes on नक्षन्त SV. I. 47.

न—इव, like ; *vide* our notes on 'रथं न' SV. I. 5 ; 'द्यौर्न' I. 166.

---

भरद्वाज ऋषिः ।

२ ३ २ ३र२ ३ २ ३ र २ ३ १-२
**इन्द्रा नु पूषणा वयं सख्याय स्वस्तये ।**
३ २ ३ १ २
**हुवेम वाजसातये ॥ ९ ॥ २०२ ॥***

इन्द्रा । नु । पूषणा । वयम् । सख्याय । स्वस्तये । हुवेम । वाजऽसातये ॥ ९ ॥

भाष्यसारः । **इन्द्रापूषणा—इन्द्रश्च पूषा च देवौ, नु वयम्, स्वस्तये—विनाशराहित्याय, सख्याय—सखित्वाय, वाजसातये—वाजस्य अन्नस्य बलस्य वा लाभाय, हुवेम—आह्वयामः ॥ ९ ॥**

We invoke Indra and Pūṣan for their friendship, for (our) welfare and for gaining strength (or food)—9.

**सा०-भा० ।** इतरेतरयोगादिन्द्रपूषशब्दयोरुभयत्र द्विवचनम् । 'इन्द्रापूषणा' देवौ 'नु' अद्य च 'वयम्' 'स्वस्तये सख्याय' शोभनाय सखित्वाय 'वाजसातये' वाजस्यान्नस्य बलस्य वा सातये सम्भजनाय च 'हुवेम' आह्वयामस्तवामो वा ॥ ९ ॥

९ । ऋ० सं० ६ म० ५७ सू० १ ऋ० ।

इन्द्रापूषणा—for इन्द्रापूषणौ, औ (nom. accus. dual) is changed to आ (डा) by 'सुपां सुलुक्०' Pāṇ. vii.1. 39. आनङ् in the place of the last vowel of the first member,

* इयम् ऐन्द्री गायत्री इन्द्राक्षीदृष्टा मार्जने विनियुक्ता । *Guṇ-V.* in Chh.M.Bh. vi. 35.

by 'देवताद्वन्द्वे च' Pāṇ. vi. 3. 26. The peculiarity lies in the fact that the two members of the Dvanda cd. in the Vedas are often separated by the intervention of other word or words, as here नु occurs between 'इन्द्रा' and 'पूषणा' for other examples, cf. 'आ नक्ता बर्हिः सदताम् उषासा'—let *Night and Dawn sit themselves upon holy grass.* द्यावा चिदस्मै पृथिवी. Another peculiarity is that both the parts ( इन्द्रा and पूषणा ) of the Dvanda cd. separated by नु, are in dual.

वाजसातये—वाजः—अन्नम् Ngh. 2. 7 ; साति is drvd. fr. rt. सन् *to gain* 8. p.—क्ति ; *vide* our notes on सनिम् SV. 1. 28 ; cf. 'देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये' (may the willing wives of the gods…befriend us for offspring and for winning food) ṚV. v. 46. 7, explained in Nir. 12. 45.

नु—several senses are assigned to this indeclinable. 'नु इत्येषोऽनेककर्मा'—Nir. i. 4. Sāyaṇa here takes it to mean 'now,—to-day' ; for this sense, cf. 'नु च पुरा च सदनं रयीणाम्' to-day and of yore etc., ṚV. 1. 96. 7, explained by Yāska, Nir. 4. 17.

हुवेम—we call on, fr. ह्वे—Sāy., fr. hū—Mcdnll. *vide* his Stu. Ved. Gram. App. 1, list of vbs., p. 434.

---

वामदेव ऋषिः ।

१ २ ३ १र २र ३ १ २र
न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् ।
२ ३ २उ ३ २
न क्येव यथा त्वम् ॥ १० ॥ २०३ ॥

नकि । इन्द्र । त्वत् । उत्ऽतरम् । न । ज्यायः । अस्ति । वृत्रऽहन् । नकि । एव । यथा । त्वम् ॥ १० ॥

भाष्यसार । हे वृत्रहन् इन्द्र, त्वदुत्तरं—तव उपरि, त्वत्तः उत्कृष्टतरः इत्यर्थः, नकि अस्ति—न कोऽपि भवति । न च त्वत्तो ज्यायः—श्रेष्ठं वस्तु किमपि अस्ति । नकि एव—नैव कोऽपि, यथा त्वम्—त्वत्सदृशः भवति । सर्व एव त्वत्तो हीन इत्यभिप्रायः । एतेन इन्द्रस्य अतिशयितो महिमा सूचितः ॥ १० ॥

O Indra, slayer of Vṛtra, there is none superior to thee, none mightier than thou, even none equal to thee.—10.

**सा०-भा०।** हे 'वृत्रहन्'! वृत्रस्य नाशक! 'इन्द्र! लोक एकोऽपीति शेषः। 'त्वत्' त्वत्तः 'उत्तरः' उत्कृष्टतरः 'नकि अस्ति' न भवति त्वत्तो 'ज्यायान्' प्रशस्ततर एकोऽपि नास्ति। हे इन्द्र! 'त्वं' लोके 'यथा' प्रसिद्धो भवसि तथाविध एकोऽपि 'नकिरेवास्ति' नैव भवति। कश्चिदपि लोके इन्द्रसदृशो नास्तीत्यर्थः॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने

द्वितीयाध्यायस्य नवमः खण्डः। तृतीयप्रपाठकस्य प्रथमार्धे प्रथमा दशतिः॥

१०। ऋ० सं० ४ म० ३० सू० १ ऋ०। Ṛ.V. reads (1) **नकिरिन्द्र** instead of **नकि इन्द्र** (2) **त्वदुत्तरः** (masc.) instead of **त्वदुत्तरं** (neu.) here (3) **ज्यायान्** (masc.) instead of **ज्यायः** (*neu*) above (4) **नकिरेवम्** instead of **नक्येव** the SV. text. *Guṇ*-V. in his Chh.M.Bh. has followed the mixed reading both of the ṚV. and SV,—he has taken **उत्तरं** and **ज्यायः** in (neu) from the SV. In Benfey's text, these two words are also in the neuter and **नक्येवं** which is partly (**नकि**) taken from SV. and partly (**एवं**) from ṚV.

नकि—'न' is a negative particle,—'कि' stands for किम्; सु (nom. sg. term.) and म् are dropped—*Guṇa-viṣṇu* in his Chh. M. Bh. vi. 35. *Vide* Ngh. 3. 12. SV. 1. 176; 1. 184.

With regard to उत्तरः and ज्यायान् in the com., Sāy. seems to have followed ṚV. reading.

---

अथ द्वितीयाध्यायस्य दशमः खण्डः। तृतीयप्रपाठकस्य च प्रथमार्धे द्वितीया दशतिः।

त्रिशोक ऋषिः*।

३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
**तरणिं वो जनानां त्रदं वाजस्य गोमतः।**
३ २ ३ १ २
**समानमु प्रशंसिषम्॥ १॥ २०४॥**

तरणिम्। वः। जनानाम्। त्रदम्। वाजस्य। गोऽमतः। समानम्। ऊम्इति। प्र। शंसिषम्॥ १॥

भाष्यसारः। हे ऋत्विजः यजमानाश्च वः—युष्माकम्, जनानाम्—पुत्रपौत्रादीनाम्, तरणिम्—तारकम्, त्रदं—शत्रूणां तर्दयितारम्, गोमतः—पशुयुक्तस्य, वाजस्य—धनस्य—दातारमिति शेषः—इन्द्रम्, समानम् उ—साधारणमेव, प्रशंसिषम्—प्रकर्षेण स्तौमि॥ १॥

* Acc. to *Viv.* the Ṛṣi is 'विरूप'.

I praise Indra, our common lord, the deliverer of your folk, the destroyer of enemies, the bestower of wealth in cows.—1.

**सा०-भा० ।** हे अस्मदीया जनाः ! 'वः' युष्माकं 'जनानां' पुत्रपौत्रादीनां 'तरणिं' तारकम् 'त्रदं' शत्रूणां तर्दयितारं 'गोमतः' पशुमतः 'वाजस्य' अन्नस्य दातारं च इन्द्रं 'समानम् उ' साधारणमेव 'प्रशंसिषम्' प्रकर्षेण स्तौमि ॥ १ ॥

१। ऋ० सं० ८ म० ४५ सू० २८ ऋ०।

तरणिम्—carrying over, saving, helping, benevolent to ; dr. fr. rt. तॄ ; this word is found to mean *quick, swift*, in ṚV. i. 50. 4,–112. 4, Ngh. 2. 15. *Conveying across the sea of life or the world*, in i. 128, 6 ; तरणित्वेन occurs in i. 110. 4, 6. quoted in our notes on *Ṛbhum* SV. 1. 199 ; तरणिम्—iii. 29. 13 , iv. 45. 7 ; viii. 45.28 ; तरणे in *voc.—O thou who extricatest us from evil*, vi. 1.5. त्रदम्—fr. rt. तृद् ( हिंसायाम्, *to destroy*, 7. p.) the slayer of your enemies—*Wils.*

वाजस्य गोमतः—'wealth in kine'—*Grfth* ; the bestower of riches in cattle.

प्र-शंसिषम्—fr. rt. शंस् *to praise*, Ngh. 3. 4. Aor. (लुङ्) 1. sg. सिप्, इट् ; aug. अ is not added by 'बहुलं छन्दस्यमाङ्योगेऽपि' Pāṇ. vi. 4. 75.

———

मधुच्छन्दा ऋषिः ।

१ २ ३ २३ २ ३ १र २र
**अस्रग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।**
३ १ २ ३ १र २र
**सजोषा वृषभं पतिम् ॥ २ ॥ २०५ ॥**

अस्रग्रम् । इन्द्र । ते । गिरः । प्रति । त्वाम् । उत् । अहासत । सजोषाः । वृषभम् । पतिम् ॥ २ ॥

भाष्यसारः । हे इन्द्र ! ते गिरः—तव स्तुतीः, असृग्रम् अहं सृष्टवान् । ताः गिरः, वृषभं—कामानां वर्षितारम्, पतिं—सोमस्य पातारं यजमानानां पालयितारं वा, त्वां प्रति, उदहासत—उद्गच्छन्ति । ता गिरः त्वं सजोषाः—सेवितवान् ॥ २ ॥

I have put forth, O Indra, songs for thee, these songs go forth upwards to thee, the showerer of blessings, the drinker of Soma (or the guardian of sacrificers). These songs thou dost accept.—2.

**सा०-भा० ।** हे 'इन्द्र' ! 'ते गिरः' त्वदीयाः स्तुतीः 'अस्रग्रं' सृष्टवानस्मि । ता गिरः स्वर्गेऽवस्थितं 'त्वां प्रति' 'उदहासत' 'उद्गत्य प्राप्नुवन् । तादृशीर्गिरस्त्वं

'सजोषाः' सेवितवानसि। कीदृशं त्वाम्? 'वृषभं' कामानां वर्षितारं 'पतिं' सोमस्य पातारं यजमानानां पालयितारं वा, 'पाता वा पालयिता वेति' (नि० ४-२३) यास्केनोक्तत्वात् ॥ २ ॥

२। ऋ० सं० १ म० ६ सू० ४ ऋ०। RV. has 'अजोषाः' instead of 'सजोषाः' mg. in both the Vedas is the same.

असृग्रम्—I send forth i. e., I offer, fr. rt. सृज् *to emit*, 6. u. (see Sāyaṇa's addl. gram. notes quoted below).

उदहासत—उत्—rt. हा (ङ्) गतौ, *to go forth.* 3. Ā. Aor. 3. pl. for pres. by 'छन्दसि लुङ्लङ्लिटः' Pāṇ iii. 4. 6.

सजोषाः—fr. rt. जुष् (प्रीतिसेवनयोः, *to enjoy*).

वृषभम्—*vide* notes on SV. I. 119.

पतिम्—either from rt. पा *to drink*, I. u. or fr. rt. पा *to protect*, 2. u.

Sāyaṇa's addl. notes in his com. on the Ṛgvedic verse referred to above—असृग्रम्—असृजम्—सृज विसर्गे। लङि मिप् तुदादिभ्यः शः (Pāṇ. iii. I. 77). 'बहुलं छन्दसि' (Pāṇ. vii. I. 8) इत्यत्र विकरणस्य रुडागमः जकारस्य गकारः। अहासत—ओहाङ् गतौ। लुङ्। झस्यादादेशः (Paṇ. vii. I. 5). 'च्लेः सिच्' (Pāṇ iii. I. 44). वृषभम्—वृषु-वृषु-मृषु सेचने। ऋषभजित्यनुवृत्ताद्वृषिवृषिभ्यां कित् (uṇ. iii. 132) इत्यभच्-प्रत्ययः। कित्त्वाद् गुणाभावः।

---

वत्स ऋषिः।

३ २ ३ २उ ३ ३ २ ३ २ ३ १ २ ३ २
**सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा।**
३ २उ ३ १ २
**मित्रास्पान्त्यद्रुहः ॥ ३ ॥ २०६ ॥**

सुऽनीथः। घ। सः। मर्त्यः। यम्। मरुतः। यम्। अर्यमा। मित्राः। पान्ति। अद्रुहः ॥ ३ ॥

भाष्यसारः। सः मर्त्यः—यजमानः, सुनीथः—सुयज्ञः सुप्रशस्तः सुनयनो वा भवति, यम् अद्रुहः—अद्रोग्धारो मरुतः देवाः पान्ति—रक्षन्ति, यम् अर्यमा पाति, यं च मित्राः—मित्रादयो देवा पान्ति ॥ ३ ॥

That mortal man becomes the good performer of sacrifices (or is praiseworthy) whom benevolent Maruts, Aryaman and Mitra protect.—3.

**सा०-भा० ।** 'सः' 'मर्त्यः' मनुष्यः यजमानः 'सुनीथः' सुयज्ञः सुनयनो वा भवति। 'घ' इति प्रसिद्धौ। स इत्युक्तं कमित्याह 'यं' यजमानं 'मरुतः' देवाः 'पान्ति' रक्षन्ति 'अद्रुहः' अद्रोग्धारो मरुतः। तथा 'यम्' 'अर्यमा' पाति, यं 'मित्राः' पान्ति स एवं भवतीति ॥ ३ ॥

३। ऋ० सं० ८ म० ४६ सू० ४ ऋ०। ṚV. reads **'मित्रः'** (sg.) instead of **'मित्राः** (pl.) the SV. reading.

सुनीथः—n. rt. नीञ् (प्रापणे, *to guide, to lead*)—क्थन् by 'हनि-कुषि-नी-रमि-काशिभ्यः' un. ii. 2; cf. ṚV. i. 35. 7, 10. 'सुनीथः प्रशस्यः। सुनीथः पाक इति प्रशस्यनामसु पाठात्'—Sāy. on ṚV. i. 35. 10. Ngh. 3. 8.

घा—for घ; the vowel is lengthened by "ऋचि तु-नु-घ-मक्षु०" Pāṇ. vi. 3. 133. *vide* notes on SV. i. 133.

मित्राः—in plural, perhaps refer to Mitra, Varuṇa and Aryaman,—the gods closely associated with one another.

अर्यमा, मित्राः—*Vide* our notes on SV. i. 185.

अद्रुहः—not ill disposed, unmalicious or not maleficent; 'void of guile'—*Grfth.*

---

**त्रिशोक ऋषिः।**

१ २ १ २ १ २ ३ १र २ २र ३ १ २
**यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम्।**
१ २ ३ १र २र
**वसु स्पार्हं तदाभर ॥ ४ ॥ २०७ ॥**

यत्। वीडौ। इन्द्र। यत्। स्थिरे। यत्। पर्शाने। पराऽभृतम्। वसु। स्पार्हम्। तत्। आ। भर ॥ ४ ॥

भाष्यसारः। **हे इन्द्र त्वया यत् वसु—धनम्, विडौ—सुदृढे स्थाने, पराभृतम्—संरक्षितम्, यत् च स्थिरे स्वयमचले पर्वतादौ पराभृतम्—संस्थापितमित्यर्थः। यत् अपि पर्शाने—कूपादौ अथवा मेघे, पराभृतम्—संरक्षितं तत् स्पार्हम्—स्पृहणीयम्, धनम् आभर—अस्मभ्यम् आहर ॥ ४ ॥**

Bring us, O Indra, the covetable wealth, which is treasured up in a strong place, (stored up) in a firm hill or (concealed) in the cloud or well.—4.

**सा०-भा० ।** हे 'इन्द्र' ! त्वया च 'वीडौ' दृढे परैः कम्पयितुमशक्ये 'यत्' धनं 'पराभृतं' विन्यस्तं, 'यत्' च 'स्थिरे' स्वयमचले पराभृतं, 'यत्' च अपि 'पर्शाने' विमर्शनक्षमे पराभृतं, यद् 'वसु' 'स्पार्हं' स्पृहणीयं 'तत्' धनम् 'आभर' आहर ॥ ४ ॥

४ । ऋ० सं० ८ म० ४५ सू० ४१ ऋ० । उ० आर्चि० ४, १, ६, ७ ।

Grfth. translates—the wealth which is concealed in strong, firm precipitous place. Stevenson—'whether in some strong chest or in some hill or well'.

वीडौ ( loc. of वीडु )—fr. rt. वीड् ( the same as व्रीड् )—mg. 'to be hard' 'वीडयतिश्च व्रीडयतिश्च संस्तम्भकर्माणौ', to make strong or firm, Nir. 5. 16. वीडिता is also drvd. from the same root cf. 'अव्रदन्त वीडिता' ṚV. ii. 24. 8, also 'वनस्पते वीड्वङ्गो हि भूयाः—वीडयस्व'.—O Lord of forests—be firm in body, make us strong, ṚV. vi. 47. 26 ; AV. 6. 125. 1 ; VS. 29. 52, see also ṚV. viii. 45. 6 ; ii. 37. 3 etc.

पर्शाने—the word is a syn. of cloud—Sāy. कूपादौ—Viv ; a precipice, a chasm ; fr. rt. pṛś=spṛś M. W's. S. E. Dict. p. 609. col. 2. पर्शाने is read परिशाने in the Saṃhitā text—in the Kauthumī Branch acc. to the rules of the Prātiśākhya.

स्पार्हम्—स्पृहणीयम्, covetable ; this occurs also in ṚV. ii. 23. 9 ; viii. 45. 40 ; *vide* SV. 1. 134.

Prof. Wilson translates,—'Bestow on us that desirable wealth which is deposited in strongholds, in fortresses and in places which can stand an attack', and comments—Sāyaṇa explains *parśāne* as *vimarśanakṣame* cf. Müller *var. lect.* p. 32. Benfey takes it as 'a well', and quotes a note from Stevenson—'when the English took Poonah, ten lakhs of rupees belonging to the Peshwa were found built into the side of a well. B. and R. take it as '*Abgrund Kluft.*'

---

वत्स ऋषिः ।

२ १ २ ३१ २३ १२ २र ३ १
श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् ।
३ २३ १२ ३२
आशिषे राधसे महे ॥ ५ ॥ २०८ ॥

श्रुतम् । वः । वृत्रऽहन्तमम् । प्र । शर्धम् । चर्षणीनाम् । आशिषे । राधसे । महे ॥ ५ ॥

भाष्यसारः। हे ऋत्विजः यजमानाश्च, श्रुतम्—प्रसिद्धम् वृत्रहन्तमम्—अतिशयेन वृत्रस्य हन्तारम्, शर्धम्—बलिनम् इन्द्रम्, चर्षणीनाम्—मनुष्याणाम्, वः—युष्माकम्, महे—महति, राधसे—धनाय, प्र आशिषे—युष्मत्कृते प्रकर्षेण प्रार्थयामि ॥ ५ ॥

(O priests) I fascinate the renowned mighty slayer of Vṛtra for the great wealth of you, men.—5.

**सा०-भा०।** हे ऋत्विग्यजमानाः 'श्रुतं' विख्यातं 'वृत्रहन्तमम्' अतिशयेन वृत्रस्य हन्तारं 'शर्धं' बलभूतं वेगवन्तं वा एतादृशमिन्द्रं 'चर्षणीनां' मनुष्याणां 'वः' युष्माकम् 'आशिषे' अश्नोतेर्लेटि उत्तम इटि सिप्प्रत्ययः, 'छन्दस्यपि दृश्यते' (पा० ६,४,७३) इत्यडागमः, तमिन्द्रं स्तुतिभिः प्रीणयित्वा युष्मभ्यं प्रकर्षेण अश्नवै प्रयच्छानीत्यर्थः। किमर्थम्? 'महे' महते 'राधसे' धनाय धनं युष्मभ्यं दातुम् ॥५॥

५। ऋ० सं० ८ म० ९३ सू० १६ ऋ०। ṚV. reads **'आशुषे'** whereas we have **'आशिषे'** above, both being the forms in लेट् (subj. 1. sg.).

शर्धम्—the word is a syn. of बलम्, strength or power, Ngh. 2. 9; here it means strength personified i. e., mighty, powerful.

चर्षणीनाम्—fr. rt. कृष्, of men, Ngh. 2. 3. *Vide* our notes on the word, SV. 1. 144.

आशिषे—Sāy. derives it from rt. अश् *to pervade* 5. Ā.—in लेट् (subj.) 1. sg. सिप् is added in लेट् by सिब्बहुलं (लेटि), aug. अ is prefixed to the verb by 'छन्दस्यपि दृश्यते' Pāṇ. vi. 4. 73. It is better to take it in लुङ् which is used in present tense in the Vedas by Pāṇ. iii. 4. 6.

राधसे महे—'to great munificence'—*Grfth.*

---

वामदेव ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
**अरं त इन्द्र श्रवसे गमेम शूर त्वावतः।**
१ २ ३ १ २
**अरं शक्र परेमणि ॥ ६ ॥ २०६ ॥**

अरम्। ते। इन्द्र। श्रवसे। गमेम। शूर। त्वावतः। अरम्। शक्र। परेमणि ॥ ६ ॥

भाष्यसारः। हे शूर इन्द्र, त्वावतः—त्वत्सदृशस्य ते तव (इन्द्रसमानस्य अन्य

देवस्याभावात्, इन्द्र एव आत्मनः उपमानम् ) परेमणि—परत्वे श्रेष्ठत्वे, श्रवसे—कीर्त्तिं श्रोतुम्, अरम्—अलं पर्याप्तं द्रुतम्, गमेम—गच्छेम ॥ ६ ॥

Let us hasten quickly to hear, O Indra, Śakra (the hero), the fame of thee, who art thy own prototype, (placed) in pre-eminence.—6.

**सा०-भा०।** हे 'शूर'! वीर! 'इन्द्र'! 'ते' तव 'श्रवसे' श्रवणीयां त्वदीयां कीर्त्तिं श्रोतुम्। 'अरम्' अलं पर्याप्तं यथा भवति तथा 'गमेम' प्रवृत्ता भवेम। हे 'शक्र'! शक्तियुक्तेन्द्र! 'त्वावतः' त्वत्सदृशस्य 'परेमणि' परत्वे उत्कर्षनिमित्तम् 'अरं' गमेम, त्वत्कीर्त्तिवदन्यस्यापि त्वत्सदृशस्य देवस्य कीर्त्तिं गच्छेमेत्यर्थः ॥ ६ ॥

६। इयम् ऋक् ऋग्वेदे नास्ति।

अरम्—अलम्, *sufficiently*—Mcdnll. Ved. Gram. para 178a.

श्रवसे—(*dat. sg.*)—to hear thy fame; श्रवः—कीर्त्तिः, fame; or it is a Ved. inf. (श्रु—*aff.* असेन्, by 'तुमर्थे से-सेन०' Pāṇ. iii. 4. 9.—mg. श्रोतुं *to hear* (thy fame); Viv. interprets श्रवसे गमेम as सोमलक्षणमन्नं गमयेम दद्याम—may we offer food (Soma) to you.

त्वावतः—of thee who art like thy own self,—cf. 'त्वावतः पुरूवसो' SV. 1. 193; for gram. *vide* our notes thereon.

परेमणि—dr. पर—*aff.* इमन्, loc. sg.—in supreme position. Grfth. opines—'the meaning of *paremaṇi* is uncertain, and translates—'at highest feast'; 'in our most solemn sacrifice'—*Stevenson*.

We have differed from Sāyaṇa whose interpretation seems to be inconsistent with the text inasmuch as he here supplies अन्यदेवस्य, which has rendered his explanation unintelligible, whereas in 'त्वावतः पुरूवसो' (1. 193) he explains, as shown in our translation and Bhāṣyasāra.

---

विश्वामित्र ऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ १ २
धानावन्तं करम्भिणमपूपवन्तमुक्थिनम्।
१ २ ३ १ २
इन्द्र प्रातर्जुषस्व नः ॥ ७ ॥ २१० ॥

धानाऽवन्तम्। करम्भिणम्। अपूपऽवन्तम्। उक्थिनम्। इन्द्र। प्रातः। जुषस्व। नः ॥ ७ ॥

भाष्यसारः। हे इन्द्र, धानावन्तं—भृष्टयवयुक्तम्, करम्भिणं—दधिमिश्रसक्तु-

समेतम्, अपूपवन्तं—पुरोडाशसहितम्, उक्थिनं—स्तोत्रसनाथम्, नः—अस्मदीयम्, इमं सोमम्, प्रातः—प्रातःसवने, जुषस्व—सेवस्व, गृहाण स्वदस्व च ॥ ७ ॥

O Indra, accept, in the morning ceremony, our Soma mixed with fried barley grains, mingled with the mixed preparation of curds and fried barley flour, along with cakes, accompanied with lauding hymns.—7.

**सा०-भा० ।** यजमानो ब्रूते हे 'इन्द्र' ! 'धानावन्तं' धाना भृष्टयवाः तद्वन्तं 'करम्भिणं' करम्भो दधिमिश्राः सक्तवः तद्वन्तम् 'अपूपवन्तम्' सवनीयपुरोडाशोपेतम् 'उक्थिनं' स्तोत्रिणं 'नः' अस्मदीयमिमं सोमं 'प्रातः' सवने 'जुषस्व' सेवस्व । करम्भ-शब्दात् तदस्यास्तीत्यत इनिः । तस्य प्रत्ययस्वरः । प्रातः स्वरादिष्वन्तोदात्तत्वेन पठितत्वादन्तोदात्तः ॥ ७ ॥

७ । ऋ० सं० ३ म० ५२ सू० १ ऋ० ।

धाना—fem. *Ori.* the grains of seed from their being 'laid' into and conceived by the earth, fr. rt. धा, but usually = fried barley or rice or any grain fried and reduced to powder.

करम्भ—*masc.* flour or meal mixed with curds ; a kind of gruel. करम्भिणम् mingled with gruel i. e., a preparation of curds and fried barley powder.

अपूप—*masc.* ( the same as पूप )—cake of flour.

The last part of Sāy.'s com. 'प्रातः स्वरादिषु etc.'—स्वर्, अन्तर and प्रातः, are *indecs* and their final vowels get *udātta* accent, *see* under Pāṇ. i. 1. 37.

---

गोपूक्त्यश्वसूक्तिनौ ऋषी ।

३ १र २र ३ १ २ ३ १ २ ३ १ २
**अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः ।**
३ १र २र १ १ २
**विश्वा यदजयः स्पृधः ॥ ८ ॥ २११ ॥**

अपाम् । फेनेन । नमुचेः । शिरः । इन्द्र । उत् । अवर्त्तयः । विश्वाः । यत् । अजयः । स्पृधः ॥ ८ ॥

भाष्यसारः । हे इन्द्र, यत्—यदा, त्वं विश्वाः—सर्वाः, स्पृधः—स्पर्धमाना आसुरीः सेनाः, अजयः—जितवान्, तदा त्वम् अपां फेनेन वज्रीभूतेन नमुचेः असुरस्य शिरः उत्-अवर्त्तयः—शरीरात् ऊर्ध्वम् उत्कृत्य विच्छिन्नवान् ॥ ८ ॥

With the foam of water (fashioned into a thunderbolt), Indra, thou cut off the head of *Namuci*, when thou vanquished all the defying fiends.—8.

**सा०-भा०।** पुरा किलेन्द्रोऽसुरान् जित्वा नमुचिमसुरं ग्रहीतुं न शशाक। स च युध्यमानस्तेनासुरेण जगृहे। स च गृहीतमिन्द्रमेवमवोचत्—'त्वां विसृजामि रात्रावह्नि च शुष्केणार्द्रेण चायुधेन यदि मां मा हिंसी'रिति। स इन्द्रस्तेन विसृष्टः सन् अहोरात्रयोः सन्धौ शुष्कार्द्र-विलक्षणेन फेनेन तस्य शिरश्चिच्छेद, अयमर्थोऽस्यां प्रतिपाद्यते। 'इन्द्र' त्वम् 'अपां फेनेन' वज्रीभूतेन 'नमुचेः' असुरस्य 'शिरः' 'उद्-वर्त्तयः' शरीरादुद्गतमवर्त्तयः अच्छैत्सीरित्यर्थः। कदेति चेत्? 'यत्' यदा 'विश्वाः' सर्वाः 'स्पृधः' स्पर्धमानाः आसुरीः सेनाः 'अजयः' जितवानसि। 'इन्द्रो वृत्रहन्ता असुरान् परास्य नमुचिमसुरं नालभत' इत्यादिकमध्वर्युब्राह्मणमनुसन्धेयम्॥ ८॥

८। ऋ० सं० ८ म० १४ सू० १३ ऋ०। यजुः १९, ७१।

अपां फेनेन—with a thunderbolt made of the foam of waters. The legend goes that in yore Indra vanquished all the demons but could not get hold of Namuci. But on the contrary, while engaged in warfare, Indra was seized by that demon, but was released on his giving assurance that he would not kill the latter in day-time or in night, with a dry (solid) or a moist (watery) weapon. According to this promise, Indra slew Namuci at morning twilight—between day and night, with a thunderbolt made up of foam which was neither dry nor watery. This story is related in 'Adhvaryu Brāhmaṇa'—'इन्द्रो वृत्रहन्ता असुरान् परास्य नमुचिमसुरं नालभत', etc. *See* also Muir's Original Sanskrit Texts, Vol. V. p. 94.

नमुचेः शिरः--Namuci is one of the numerous demons of drought conquered by Indra. The etymology of the name, according to Pāṇini's rule vi. 3. 75, is 'न-मुचि'—*not releasing not letting go*. In that case it would mean 'the demon withholding the waters'.—KUHN'S Zeitschrift.

In ṚV. v. 3. 7-8, vi. 20. 6 Indra is described to have twisted off the head of Namuci, while he is said to have pierced that of Vṛtra. The Brāhmaṇas also allude to Indra's cutting off Namuci's head with the foam of the waters.—Bloomfield *Journal of the American Oriental Society*. A story is told by the commentator on the Vaj. S. x. 33. Namuci, it seems, was a friend of Indra, and taking advantage of his friend's confidence, he drank up Indra's strength along with a draught of wine and soma. Indra then told the Aśvins and Sarasvatī, that Namuci had drunk up his strength. The Aśvins and Sarasvatī, in consequence, gave Indra a thunderbolt in the form of foam, with which he smote off the head

of Namuci. The Aśvins then drank the soma, mixed with blood and wine, from the belly of Namuci and transferred it pure to Indra, and by transferring it they delivered Indra. The story is taken from Śat. Br. xii. 7, 3, 1. The version of the Śat. Br. runs thus—'The Asura Namuci carried off Indra's strength *(indriya)*, the essence of food, and the draught of soma, together with wine. He (Indra) hastened to the Aśvins and Sarasvati and said, 'I have sworn to Namuci, I will neither slay thee by day or by night; neither with club, nor with bow,—neither with dry, nor with moist; and he has carried off the strength, etc. of mine; will ye recover it for me'? They answered in the affirmative. Then the Aśvins and Sarasvati anointed the thunderbolt with the foam of the waters, saying, 'It is neither dry nor moist'. With that Indra struck off the head of Namuci, when night was passing into dawn, and the sun had not yet risen. ( तावश्विनौ च सरस्वती च अपां फेनं वज्रम् असिञ्चन् 'न शुष्को न आर्द्र:' इति तेन इन्द्रो नमुचेरसुरस्य व्युष्टायां रात्रौ अनुदिते आदित्ये न दिवा न नक्तमिति शिर उदवासयत् )—*See* also Ś. Br. xii. 7, 1, 10 and xii. 8, 3, 1 quoted by the commentator on Vaj. S. 19, 12. The legend regarding the decapitation of Namuci by Indra is related in the *Gada* section of the *Śalya Parvan* of the Mbh. It is also told in the Tait. S. 1. 8. 7.

---

वामदेव ऋषिः ।

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २

**इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः ।**

१ २

**तेषां मत्स्व प्रभूवसो ॥ ९ ॥ २१२ ॥**

इमे । ते । इन्द्र । सोमाः । सुतासः । ये । च । सोत्वाः । तेषाम् । मत्स्व । प्रभूऽवसो ॥ ९ ॥

भाष्यसारः । हे इन्द्र, ते—तव कृते, इमे सोमाः सुतासः—अभिषुताः, ये च—अन्ये सोमाः, सोत्वाः—अतः परम् अभिषोतव्याः, हे प्रभूवसो—प्रभूतधन इन्द्र, तेषां—तैः सोमैः, मत्स्व—प्रहृष्टो भव ॥ ९ ॥

These for thee, Indra, are the Somas pressed out, and those to be ex-pressed: rejoice with them, Lord of boundless wealth.—9.

**सा०-भा०** । हे 'इन्द्र' ! 'ते' त्वदर्थम् 'इमे' पुरतो दृश्यमानाः 'सोमाः' 'सुतासः' अभिषुताः 'ये च' अन्ये सोमाः 'सोत्वाः' इत ऊर्ध्वमभिषोतव्याः हे 'प्रभूवसो' ! प्रभूतधनवन्निन्द्र ! 'तेषाम्' अभिषुतानाम् अभिषोतव्यानामर्थे 'मत्स्व' हृष्टो भव ॥ ९ ॥

८। इयम् ऋक् ऋग्वेदे नास्ति ।

सुतासः—सुताः, *nom. pl.* असुक् is added by 'आज्जसेरसुक्' Pāṇ. vii. 1. 50.

सोत्वाः—to be pressed out; *nom. pl.* adj. of सोमाः;—rt. सु *to press out juice*, 5.—aff. त्व (an affix with which Future Passive Participle is formed in the Vedas). This Future Passive Participle corresponds in sense to the Lat. Gerundive. 'tva' is generally to be read *tua*, thus कर्त्व *to be made*, हेत्व (rt. हि) *to be driven on*, वक्त्व *to be said*, सनित्व *to be won*.

मत्स्व—rt. मद् *to be exhilarated*, 2. sg. Imp.

प्रभूवसो *voc.*—प्रभू for प्रभूत; प्रभूतं वसु धनं यस्य—master of abundant riches.

———

श्रुतकक्ष ऋषिः ।

१ २ ३ २ ३ १ २ ३ २ ३ १ २
**तुभ्यं सुतासः सोमाः स्तीर्णं बर्हिर्विभावसो ।**
३ १ २
**स्तोतृभ्य इन्द्र मृडय ॥ १० ॥ २१३ ॥**

तुभ्यम् । सुतासः । सोमाः । स्तीर्णम् । बर्हिः । विभावसो इति विभाऽवसो । स्तोतृऽभ्यः । इन्द्र । मृडय ॥ १० ॥

भाष्यसारः । हे विभावसो—दीप्तिधन, इन्द्र, तुभ्यं—तव कृते, सोमाः सुतासः—अभिषुताः तथा बर्हिः स्तीर्णं—प्रसारितम् । त्वं स्तोतृभ्यः अस्मभ्यं मृडय—स्तोतॄन् अस्मान् सुखय ॥ १० ॥

For thee, Somas have been ex-pressed, holy grass has been spread, O Indra, rich in effulgence, make (us) the worshippers happy—(or be merciful to us).—10.

**सा०-भा० ।** हे 'विभावसो'! दीप्तिधन! दीप्तिव्यापक वा इन्द्र! 'तुभ्यं' त्वदर्थं 'सोमाः' 'सुतासः' अभिषुताः तथा 'बर्हिः' 'स्तीर्णं' प्रसारितम् । अतः हे 'इन्द्र'! त्वं बर्हिषि निषद्य सोमान् पीत्वा 'स्तोतृभ्यः' अस्मभ्यं 'मृडय' दयां कुरु, यद्वा अस्मान् सुखय । 'क्रियाग्रहणं कर्त्तव्यम्' इति चतुर्थी ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य दशमः खण्डः । इति तृतीयप्रपाठकस्य प्रथमार्धे द्वितीया दशतिः ॥

१०। ऋ० सं० ८ म० ६३ सू० २५ ऋक्। RV. reads **'सोमाः सुताः इमे'** instead of **'सुतासः सोमाः'** and **'इन्द्रमावह'** (bring Indra hither for his worshippers) for **'इन्द्र मृडय'** ; in the RV. *it is addressed to Agni.*

विभावसो—'विशेषेण भासमान वसुमन् यद्वा विशिष्टा भाः—विभाः प्रकृष्टदीप्तयः निवसन्त्यत्रे ति विभावसुरग्निः'—possessed of particularly glittering riches, or where dazzling radiance rests, *rfs.* to Agni—Sāy.'s com. on the RV. verse.

मृडय—rt. मृड् ( सुखने, *to make happy* ), Imp. 2. sg. West. scholars render it—'be gracious', cf. सोम राजन् मृलया नः स्वस्ति RV. viii. 48. 8. मृड ( मृल ) of cl. 6. (तुदादि) occurs in ii. 33. 11, 14. *See* our notes on मृडयासि, SV. I. 173.

———

**अथ द्वितीयाध्यायस्य एकादशः खण्डः। तृतीयप्रपाठकस्य च प्रथमार्धे तृतीया दशतिः।**

**शुनःशेप ऋषिः।**

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २

**आ व इन्द्रं कृविं यथा वाजयन्तः शतक्रतुम्।**

१ २ ३ १ २

**मंहिष्ठं सिञ्च इन्दुभिः ॥ १ ॥ २१४ ॥**

आ। वः। इन्द्रम्। कृविम्। यथा। वाजऽयन्तः। शतऽक्रतुम्। मंहिष्ठम्। सिञ्चे। इन्दुऽभिः ॥ १ ॥

भाष्यसारः। **वाजयन्तः—हे ऋत्विग्यजमानाः, अन्नमिच्छन्तः वयम्, वः—युष्माकं शतक्रतुम्, मंहिष्ठं—दातृतमम्, इन्द्रम्, इन्दुभिः—स्रवद्भिः सोमैः, कृविं यथा—यथा कृविं जलेन सिञ्चन्ति तद्वत् आसिञ्चे—सर्वतः सिञ्चामहे ॥ १ ॥**

We, longing for food, pour forth Soma-juice to your most munificent Indra, the performer of a hundred sacrifices, as a peasant drenches or irrigates the agricultural field.—1.

**सा०-भा०।** 'वाजयन्तः' अन्नमिच्छन्तो वयं शुनःशेपाः हे ऋत्विग्यजमानाः! 'वः' युष्माकं सम्बन्धिनम् 'इन्द्रम्' 'इन्दुभिः' सोमैः 'आ सिञ्चे'—वचनव्यत्ययः ( पा० ३, १, ८५ )—सर्वतः सिञ्चामहे सपर्यामः। कीदृशम्? 'शतक्रतुं' शतसङ्ख्याककर्मोपेतम्, 'मंहिष्ठम्' अतिशयेन महान्तम्। सेचने दृष्टान्तः—'कृविं यथा'—कृती छेदने, कृन्यते छिद्यते खन्यते इति—कृविः कूपिः, तां जलेन पूरयन्ति तद्वत् ॥ १ ॥

१। ऋ० सं० १ म० ३० सू० १ ऋ०। ṚV. reads **'क्रिविः'** instead of **'कृविः।'**

क्रिविः—अवटः, a well ; क्रिविशब्दो वव्रिः काटुरित्यादिषु चतुर्दशसु कूपनामसु क्रिविः कूपः सूद इति पठितम्—Sāy. on the ṚV. verse, where क्रिवि is read ; the text of Ngh. 3. 23 is—'कूपः कातुः कर्त्तः वव्रः काटः खातः अवटः (अवतः) क्रिविः सूदः उत्सः ऋश्यदात् कारोतरात् कुशयः केवट इति चतुर्दश कूपनामानि।' कृवि (in SV.) is differently interpreted and derived by Sāy.—fr. rt. कृत्—छेदने, *to cut* ; mg.—the tilled ground.

वाजयन्तः—वाज—क्यच् pres. part.—seeking food or strength.

शतक्रतुम्—बहुकर्माणं बहुयज्ञं वा।—शतं—बहु Ngh. 3. 1. क्रतुः—कर्म, Ngh. 2. 1. or यज्ञः, क्रतु also means प्रज्ञा, wisdom, Ngh. 3. 9. *Vide* notes on सुक्रतुम्, SV. 1. 3. and शतक्रतो, SV. 1. 116.—'having a hundred powers'—Mcdnll ; 'lord of boundless might'—*Grfth.*

मंहिष्ठम्—अतिशयेन दातारम् अथवा पूज्यतमम्,—most liberal or most adorable—*Viv* ; fr. rt. मंह *to give*, Ngh. 3. 20. or fr. महि *to worship*, 10. p.—तृच्—इष्ठन् (spv. dg.) by तुश्छन्दसि pāṇ. v. 3. 59. तृ is dropped by 'तुरिष्ठेमेयःसु' (aff. तृ drops with इष्ठ, इमन् and ईयस् following) Pāṇ. vi. 4. 154,—*vide* SV. 1. 107, 144, 155 ; 'most mighty'—Sāy.

आ-सिञ्चे—1. sg. in form, *pl. in sense*, वयं being the subject, by 'व्यत्ययो बहुलम्' pāṇ. iii. 1. 85.

इन्दुभिः—*vide* our notes on इन्दुभिः SV. 1. 7, इन्दवः 1. 197.

---

श्रुतकक्ष ऋषिः।

१ २ ३ १२ २र ३ १ २
**अतश्चिदिन्द्र न उपा याहि शतवाजया।**
३ २ ३ १ २
**इषा सहस्रवाजया ॥ २ ॥ २१५ ॥**

अतः। चित्। इन्द्र। नः। उप। आ। याहि। शतऽवाजया। इषा। सहस्रऽवाजया ॥ २ ॥

भाष्यसारः। **हे इन्द्र, अतश्चित्—अस्मात् द्युलोकात्, शतवाजया—शतप्रकारबलयुक्तेन, सहस्रवाजया—सहस्रप्रकारबलयुक्तेन बहुलबलकारकेणेत्यर्थः, इषा—अन्नेन युक्तः सन्, अस्मान् उपायाहि—अस्माकं समीपमागच्छ ॥ २ ॥**

From there, O Indra, come to us with food—yielding a hundred or a thousand powers.—2.

**सा०-भा०।** हे इन्द्र! 'अतश्चित्' अस्मात् द्युलोकादेव यद्वा अस्माच्छत्रु-स्थानात् 'शतवाजया' शतसंख्याकबलयुक्तेन तथा 'सहस्रवाजया' वाजोऽन्नम् (निघ० २, ७) सहस्रसंख्याकान्नवता बहुलान्नेन 'इषा' अन्नरसेन युक्तः सन् 'नः' अस्मान् 'उपायाहि' अधिकमाभिमुख्येनागच्छ ॥ २ ॥

२। ऋ० सं० ८ म० ९२ सू० १० ऋ०।

अतश्चित्—from that place, i. e., from heaven where thou dost dwell.

उप-आयाहि—समीपमागच्छ—come near.

शतवाजया, सहस्रवाजया—Sāyaṇa has taken वाज in the first compound to mean *strength* while in the second *food*; इषम् having the same sense—*food*; (Ngh. 2. 7) we have taken the word in both the compounds to mean *strength* to avoid repetition; for वाज in the sense of strength, *vide* Nir. 2. 28.

इषा—*vide* our notes on इषम् SV. 1. 173, on इषे 1. 199.

---

त्रिशोक ऋषिः।

२ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
**आ बुन्दं वृत्रहा ददे जातः पृच्छाद्वि मातरम्।**
३ १र २र
**क उग्राः के ह शृण्विरे ॥ ३ ॥ २१६ ॥**

आ। बुन्दम्। वृत्रऽहा। आ। ददे। जातः। पृच्छात्। वि। मातरम्। के। उग्राः। के। ह। शृण्विरे ॥ ३ ॥

भाष्यसारः। जातः—जात एव, वृत्रहा—इन्द्रः, बुन्दम्—इषुं बाणम्, आददे—जग्राह, गृहीत्वा च स्वीयां मातरं वि पृच्छात्—पृष्टवान्, के उग्राः के च शृण्विरे—श्रूयन्ते शौर्येण यागादिकर्मसु वा विश्रुता इति ॥ ३ ॥

The Vṛtra-slayer, as soon as he was born, took the arrow and asked the mother who were turbulant and who were far-famed.—3.

**सा०-भा०।** 'जातः' उत्पन्नः 'वृत्रहा' इन्द्रः 'बुन्दम्' इषुं तथा च यास्कः—'बुन्द इषुर्भवतीति' (नि० ६, ३२) 'आददे' आदाय चेषुम् 'उग्राः' उद्गूर्णबलाः 'के' के वह—वा 'शृण्विरे' वीर्येण विश्रुता इति स्वीयां 'मातरं' 'वि पृच्छात्' अप्राक्षीत् ॥ ३ ॥

३। ऋ० सं० ८ म० ४५ सू० ४ ऋ०। RV. reads 'पृच्छत्' (for अपृच्छत् imprf. लङ्)।

बुन्दम्—shaft, arrow ; 'बुन्द इषुर्भवति', Nir. 6. 32. Yāska gives the etym. there —'भिन्दो वा भयदो वा भासमानो द्रवतीति वा, *so called* as it pierces, or causes fright, or shines when it flies. cf. 'साधुर्बुन्दो हिरण्ययः' (Indra) thy golden arrow is unfailing R̥V. viii. 77. 11.

मातरम्—अदितिम् ; 'अदितिरदीना देवमाता'—Nir. 4. 22. Indra's mother is often mentioned, *vide*. R̥V. iii. 48. 2, 3 ; Pischel, *Vedische Studien*. She is once spoken of as gr̥ṣṭi ( a cow ), Indra being her calf ( *gārṣṭeya* ) R̥V. iv. 18. 10. Niṣṭigrī is once called the mother of Indra, R̥V. x. 101. 12. Sāyaṇa identifies her with Aditi. According to the Atharva-Veda, 3. 10. 12, 13, Indra's mother is Ekāṣṭakā, the daughter of Prajāpati.

That Indra was a warrior and showed his warlike disposition, as soon as he was born, is alluded to in several passages of the R̥V. iii. 51. 8 ; v. 30. 5 ; viii. 45. 4 ; x. 113. 4.

The import of the verse, according to Viv., is that Indra wanted to know who were the wicked and violent people to be chastised by him and who were the righteous men to be rewarded by him. Grfth. comments—'Indra asked his mother, the mighty Aditi what worthy opponents he should have.'

वि-पृच्छात्—enquired, interrogated ; rt. प्रच्छ्—लेट्. 3. sg. an archaic use in imprf. sense ; *vide* rules 'लेटोऽडाटौ' Pāṇ. iii. 4. 94 ; 'इतश्च लोपः' Pāṇ. iii. 4. 97. पृच्छत् ( अपृच्छत् ) seems to be the modified rdg. in the R̥V.

शृण्विरे—for शुश्रुविरे, लिट् *perf. pass. 3 pl.*—are heard of, are renowned, widely talked of.

---

मेधातिथिर्ऋषिः ।

३ १ २ ३ १ २ ३ १ २
बृवदुक्थं हवामहे सृप्रकरस्नमूतये ।
१ २ ३ २ ३ १ २
साधः कृण्वन्तमवसे ॥ ४ ॥ २१७ ॥

बृवत्ऽउक्थम् । हवामहे । सृप्र ऽ करस्नम् । ऊतये । साधः । कृण्वन्तम् । अवसे ॥ ४ ॥

भाष्यसारः । ऊतये—लोकस्य रक्षणाय, सृप्रकरस्नं—प्रसृतबाहुम्, अवसे—लोकस्य पालनाय, साधः—साधकम् धनमित्यर्थः, कृण्वन्तं—कुर्वन्तं प्रयच्छन्तम्, बृवदुक्थं—बृहदुक्थम् अत्यर्थं स्तुतम्, इन्द्रम् हवामहे—आह्वयामः ।

We invoke (Indra), the highly lauded, who stretches forth his

hands to the defence (of people) and gives wealth, the means of livelihood, for protection.—4.

**सा०-भा०।** 'ऊतये' लोकस्य रक्षणाय 'सुप्रकरस्नं' प्रसृतबाहुं—'करस्नौ बाहू कर्मणां प्रस्नातारौ' (नि०, ६, १७) इति यास्कवचनात्। 'अवसे' लोकस्य पालनाय 'साधः' साधकं धनं 'कृण्वन्तं' प्रयच्छन्तं 'बृवदुक्थं' महदुक्थम् इन्द्रम् 'हवामहे' आह्वयामः। तथाच यास्कः—'बृवदुक्थो महदुक्थः, वक्तव्यमस्मा उक्थमिति वा' (नि० ६, ४) इति ॥ ४ ॥

४। ऋ० सं० ८ म० ३२ सू० १० ऋ०। ṚV. reads **'साधु'**—instead of **'साधः'**।

बृवदुक्थम्—बृवत् stands for बृहत्; ह becomes व, उक्थं—स्तोत्रम्। Yāska's quotation means *Bṛbadukthaḥ* is a sublime hymn, or one to whom a sublime hymn is addressed, here the latter sense is meant; for उक्थ *vide*: our notes on SV. I. 48; I. 58; I. 157.

सुप्रकरस्नम्—सुप्री—प्रसृती (fr. सृप् *to extend*) करस्नौ बाहू यस्य, with hands stretched forward; the word करस्नौ (du.) occurs in the list of the synonyms of बाहु (hand)—Ngh 2. 4. Yāska, quoted in Sāy.'s com. above—gives the etym. 'the hands are so called, as they are the accomplishers (*lit.* bathers) of actions'; (combination) of rt. कृ *to do*, and rt. स्ना *to bathe.*

साधः—rt. साध—aff. असु, the means of living, i. e., wealth. Instead of this word conveying a laboured mg. साधु (acting *nobly*) seems to be the modified rdg. in the ṚV.; साधः in its present sense does not occur elsewhere; साधसे (for the *attainment*, fulfilment) is found in ṚV. viii. 71. 12.

अवसे—रक्षणाय, for protection; an instance of Ved. inf. with aff. असे by Pāṇ. iii. 4. 9. हवामहे—we invoke; *vide* SV. I. 130.

---

गोतम ऋषिः। वरुणो मित्रोऽर्यमा च देवताः।

३ २ ३ १ २ ३ १ २ ३ २
**ऋजुनीती नो वरुणो मित्रो नयति विद्वान्।**
३ २ ३ २ ३ १ २
**अर्यमा देवैः सजोषाः ॥ ५ ॥ २१८ ॥**

ऋजुऽनीती। नः। वरुणः। मित्रः। नयति। विद्वान्। अर्यमा। देवैः। सऽजोषाः ॥ ५ ॥

भाष्यसारः। विद्वान्—सर्वज्ञः, मित्रश्च वरुणश्च, नः—अस्मान्, ऋजुनीती—ऋजुनीत्या, अकुटिलमार्गेण, नयति—अभिमतस्थानं प्रापयति, देवैः—अन्यदेवैः, सजोषाः—समानप्रीतिः, अर्यमा च तथा नयति ॥ ५ ॥

Straight-way lead us Varuṇa, Mitra, the omniscient and Aryaman, in association or alliance with other gods.—5.

**सा०-भा०।** अहरभिमानी देवः 'मित्रः', 'वरुणः' रात्र्यभिमानी। मित्रश्च वरुणश्च, 'विद्वान्' नेतव्यमुत्तमं स्थानं जानन्, 'नः' अस्मान् 'ऋजुनीती' ऋजुनीत्या ऋजुनयनेन कौटिल्यरहितेन गमनेन 'नयति' अभिमतं फलं प्रापयति। तथा 'देवैः' अन्यैः इन्द्रादिभिः 'सजोषाः' समानप्रीतिः 'अर्यमा' अहोरात्रविभागस्य कर्त्ता सूर्यश्च अस्मानृजुगमनेनाभिमतं स्थानं प्रापयतु ॥ ५॥

**५। ऋ० सं० १ म० ६० सू० १ ऋ०।** ascribed to Śaunaka acc. to Viv. The Ṛ̣V. has **'नयतु'** for **'नयति'**; **नयतु** (imp.) is the modified rdg. in the Ṛ̣V.

ऋजुनीती—for ऋजुनीत्या, *Instr. case*; the final vowel ( इ of—नीति ) gets lengthened by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39, this contracted form in ई is very often found in the Vedas; *vide* our notes on सुनीती SV. 1. 127, on ऊती 1. 169.

Sāyaṇa adds in the com., on the Ṛ̣V. verse in his notes on ऋजुनीती—'सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वम्'।

वरुणः, मित्रः, अर्यमा—*vide* our notes on SV. 1. 185. Aryaman, says Sāyaṇa, is the sun, in his function of separating day from night. Yāska gives the etym. 'अर्यमा आदित्यः—अरीन् नियच्छति',—Aryaman is the sun *so called*, as he chastises the enemies, i. e., dispels darkness—(Durga). Nir. 11. 23.

---

ब्रह्मातिथिर्ऋषिः।

२र ३२३ २ ३ २ ३ २ ३१र
**दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत्।**
३ २ ३ १ २
**वि भानुं विश्वथातनत् ॥ ६ ॥ २१६ ॥**

दूरात्। इह। इव। यत्। सतः। अरुणऽप्सुः। अशिश्वितत्। वि। भानुम्। विश्वथा। अतनत् ॥ ६ ॥

भाष्यसारः। दूरात्—नभसो दूरवर्त्तिप्राचीमूले, सतः—सती विद्यमाना अपि, इह समीपे वर्त्तमाना इव, उषा अरुणप्सुः—शोभमानरूपा, यदा अशिश्वितत्—अश्वेतयत् उद्भासयति, तदा भानुं—दीप्तिम्, विश्वथा—सर्वतः, व्यतनत्—विस्तारयति ॥ ६ ॥

When from afar, as if present here, the Dawn of glowing beauty shines forth brightly, she spreads light on all sides.—6.

**सा०-भा० ।** 'दूरात्' दूरत एव विप्रकृष्टे एव नभसः प्राक्प्रदेशे वर्त्तमाना 'इह' 'सतः' सती समीपे विद्यमाना 'इव' 'अरुणप्सुः' आरोचमानरूपा ईदृशी उषा 'यत्' यदा 'अशिश्वितत्' अश्वेतयत्। श्विता वर्णे अस्मात् ण्यन्तात् लुङि चङि रूपम्। 'यद्वृत्तान् नित्यम्' ( पा० ८,१,६६ ) इति निघातप्रतिषेधः। तदा भानुं दीप्तिं विश्वथा विश्वधा बहुविधम्। 'व्यतनत्' विस्तारयति। तनोतेर्व्यत्ययेन शप् ( पा० ३,१,८५ ) प्रातरनुवाके उषस्येन काण्डेन ( १, २४, २ ) उषाः स्तुता सती प्रादुर्बभूव। हे अश्विनौ ! शंसिष्यमाणम् आश्विनं क्रतुं श्रोतुं युवामपि प्रादुर्भवतमित्यध्याहारेण वाक्यं पूरणीयम् ॥ ६ ॥

६। ऋ० सं० ८ म० ५ स० १ ऋ०। The Ṛ̣V. has (1) **'विश्वधा'** instead of **'विश्वथा',** (ii) **'सती'** instead of **'सतः'।**

दूरात्—From far away, i. e., from the remotest eastern horizon, when radiant Dawn with glowing beauty appears at the distant end of the East.

सतः—for सती, being present; an archaic use, which seems to have been rectified later in the Ṛ̣V. text; by similar examples we shall show that the Sāma-Veda is anterior to the Ṛg-Veda.

अरुणप्सुः—of resplendent beauty, shining; 'प्सु' is a syn. of रूप, *beauty*.—Ngh. 3. 7.

अशिश्वितत्—Sāyaṇa derives it from rt. श्वित्, *to be bright*, caus. Aor. ( लुङ् ) 3. sg. pres. sense; *lit.* whitens; श्वेत is drvd. fr. this rt.

व्यतनत्—rt. तन् is here conjugated anomalously like verbs of cl. 1. ( भ्वादि ), by 'व्यत्ययो बहुलम्' Pāṇ. iii. 1. 85.—शप् being added. भानुं व्यतनत्—spreads the light.

---

विश्वामित्रो जमदग्निर्वा ऋषिः।

१ २ ३ १र २र
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्।
३ १ २
मध्वा रजांसि सुक्रतू ॥ ७ ॥ २२० ॥

आ। नः। मित्रावरुणा। घृतैः। गव्यूतिम्। उक्षतम्। मध्वा। रजांसि। सुक्रतू इति सुऽक्रतू॥ ७॥

भाष्यसारः। **हे सुक्रतू—शोभनकर्माणौ मित्रावरुणौ, नः—अस्माकम्, गव्यूतिं—गोष्ठं—गोनिवासस्थानम्, घृतैः—क्षरणशीलैः पयोभिः, आ—समन्तात्, उक्षतं—सिञ्चतम्। रजांसि—लोकान् अस्माकम् आवासस्थानानि, मध्वा—मधुरेण दुग्धरसेन सिञ्चतम्॥ ७॥**

O Mitra and Varuṇa, the doers of noble benevolent deeds, sprinkle our pasture lands with dripping milk and sprinkle our abodes (on high) with mead (eternal bliss).—7.

**सा०-भा०। 'सुक्रतू' शोभनकर्माणौ हे 'मित्रावरुणौ!' 'नः' अस्माकं 'गव्यूतिं गवां मार्गं गोनिवासस्थानं घृतैः क्षरणसाधनैः पयोभिः आ उक्षतम् आ समन्तात् सिञ्चतम्, अस्मभ्यं दोग्ध्रीः गाः प्रयच्छतमिति भावः। रजांसि पारलौकिकान्यस्मदावासस्थानानि 'मध्वा' मधुरेण दुग्धरसेन सिञ्चतम्। गव्यूति—'गोर्यूतौ छन्दसि' (पा० ६,१,१२३) इत्यवादेशः। मध्वा—सर्वविधीनां छन्दसि विकल्पितत्वादत्र नुमभावः॥ ७॥**

**७। ऋ० सं० ३ म० ६२ सू० १६ ऋ०। उ० आर्चि० १, १, ५, १।**

मित्रावरुणा—मित्रावरुणौ (du); औ *nom. accus. du.* is changed to आ by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. आनङ् is added (मित्रा) by 'देवताद्वन्द्वे च' Pāṇ. vi. 3. 26.

गव्यूतिम्—गो-यूति, गो becomes गव् by 'गोर्यूतौ छन्दसि' Pāṇ. vi. 1. 123. उक्षतम्—fr. rt. उक्ष् (सेचने, *to sprinkle*, 1. p.) imp. 2. du.

The import of the first line of the verse—'give us milch cows in abundance, by the dripping milk of whom the pastures will be wet.

रजांसि—लोका रजांस्युच्यन्ते—Nir. 4. 19;—the worlds—*Wils.* Sāyaṇa takes रजांसि here to mean—'the regions to be dwelt by us, after death.

मध्वा—for मधुना, *Instr. case;* by the maxim that all gram. rules optionally work on the formation of Vedic words, नुम् is not here added, as is usual with the stems ending in 'i', 'u' and 'ṛ' by the rule 'इकोऽचि विभक्तौ' Pāṇ. vii. 1. 73; the form मधुना also occurs as frequently as मध्वा cf. 'यस्य त्री पूर्णा मधुना पदानि', ṚV. i. 154. 4.

सुक्रतू—du. क्रतु has the sense—कर्म, *deed*, Ngh. 2. 1; also प्रज्ञा, *wisdom.* Ngh. 3. 9. Grfth. renders—'sapient,' wise; 'performers of good works'—*Wils.*

The prayer implies, acc. to Sāy.—'give us cows abounding in milk : the verse occurs in the *Yajur* and Sāma Vedas ; गव्यूति means either *pastures* ( गवां मार्गं ) or *cowstalls* ( गोनिवासस्थान ) ; घृतैः—with waters (*see* our notes on घृतम् SV. 1. 187.—Ngh. 1. 12.—syns of water, Nir. 7. 24.—etym. of घृतम् )—sprinkle our pastures with rain ; Mr. Stevenson renders it—'irrigate the pasture lands with showers, and refresh with waters the two worlds.

———

प्रस्कण्व ऋषिः । मरुतो देवताः ।

२ ३ २ ३ २ ३ २ ३ १ २ ३ २ १
**उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत ।**
३ १ २ ३ १२ ३२
**वाश्रा अभिज्ञु यातवे ॥ ८ ॥ २२१ ॥**

उत् । ऊम् इति । त्ये । सूनवः । गिरः । काष्ठाः । यज्ञेषु । अत्नत । वाश्राः । अभिऽज्ञु । यातवे ॥ ८ ॥

भाष्यसारः । त्ये—ते प्रसिद्धाः, गिरः सूनवः—वाच उत्पादकाः, मरुतः, यज्ञेषु—स्वकीययागेषु, काष्ठाः—अपः जलानि, उत् उ—सम्यक् एव, अत्नत—विस्तारितवन्तः । वाश्राः—शब्दायमानाः, गाः, अभिज्ञु—जानुपर्यन्तम्, यातवे—गन्तुं प्रेरयन्ति ॥ ८ ॥

The celebrated Maruts, the generators of voices, in their sacrifices, spread (swelled) the waters, making the bellowing cows walk in water upto their knees.—8.

**सा०-भा० ।** 'त्ये' ते प्रसिद्धाः 'गिरः सूनवः' वाच उत्पादकाः मरुतः वायवो हि ताल्वोष्ठादिषु सञ्चरन्तो वाचमुत्पादयन्तो 'यज्ञेषु' स्वकीयेषु यागेषु वर्त्तमानेषु सत्सु 'काष्ठाः' अपः ;—आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति ( नि० २,२४ )—यास्कः । 'उत् उ' उत्कर्षेणैव 'अत्नत' अतनिषत विस्तारितवन्तः । उदकं विस्तार्य तत्पानार्थं 'वाश्राः' हम्भारवोपेताः गाः 'अभिज्ञु' जान्वभिमुखं यथा भवति तथा 'यातवे' गन्तुं प्रेरितवन्त इति शेषः ॥ ८ ॥

८ । ऋ० सं० १ म० ३७ सू० १० ऋ० । The ṚV. has the reading **'अज्मेषु'** (*in their racings, courses*) instead of **'यज्ञेषु'** ।

सूनवो गिरः—producers of vocal sounds, generators of speech ; we quote lines from Śikṣā, the science of phonetics as to how sound is uttered through

vocal organs and what part the wind plays in it.—'आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्, मारुतस्तूरसि चरन् मन्द्रं जनयते स्वरम्' (...the wind moving within the heart generates sound).

Sāyaṇa takes सूनवः in the sense of *generators*, *progenitors*, but other commentators take the word in its usual sense—*'the sons'* ; Grfth. interprets—'the sons of Pṛśni', the author of *Viv.*—*'the sons of Rudra'*.

काष्ठाः—waters ; this word has several senses, acc. to Yāska :—

काष्ठा दिशो (quarters) भवन्ति क्रान्त्वा स्थिता भवन्ति। काष्ठा उपदिशो (intermediate quarters) भवन्ति इतरेतरं क्रान्त्वा स्थिता भवन्ति। आदित्योऽपि (the sun) काष्ठोच्यते क्रान्त्वा स्थितो भवति। ...आपोऽपि (the waters) काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति स्थावराणाम्, waters are so called, as they exceed the solid or landed portion of the earth,—Nir. 2. 15 ; 'bounds' —*Grfth.*

The purport of the verse seems to be that the Maruts spread themselves over the sky and cause so much rain to fall that the cows in the pastures might walk in knee-deep water. Prof. Ludwig's interpretation is somewhat different—'So dass brullend sie (uns) ganzn ahe kamen'—so that bellowing they (the Maruts) come quite close (to us). Wils. renders—'they urge the lowing cattle to enter the water, up to their knees, to drink' ; similar prayer is met with 'घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः' sprinkle heaven and earth with water, let there be abundant drinking for the cattle, ṚV. v. 83. 8.

अत्नत—for अतन्वत, लङ् imprf. 3. pl. fr. rt. 'तनु विस्तारे बहुलं छन्दसीति विकरणस्य लुक्। तनिपत्योश्छन्दसीत्युपधालोपः'—Sāy.'s com. on 'यामथर्वा मनुष्पिता दध्यङ् धियमत्नत' ṚV. i. 80. 16.

वाश्राः—bellowing, from rt. वाश् (शब्दे, *to bellow*, *to roar* 4. Ā. 1. p.—aff. रक् —by 'स्फायितञ्चि०' uṇ. ii. 11.

अभिज्ञु—up to the knees ;—जानुनोर्ज्ञुः Pāṇ. v. 4. 129.

यातवे—to walk ; Ved. Inf., rt. या—तवेङ् by तुमर्थे से-सेन्० Pāṇ. iii. 4. 9.

---

मेधातिथिर्ऋषिः। विष्णुर्देवता*।

२ ३उ ३ १ २ ३ १र २र ३ २
इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्।
१ २ ३ २
समूढमस्य पांसुले ॥ ६ ॥ २२२ ॥

---

* गायत्रीयं विष्णुदेवताका, अयज्ञिय-वाग्वचननिमित्तजपे विनियुक्ता,—This verse in Gāyatrī metre has for its deity—God Viṣṇu. *Application* :—It is to be muttered for expiating the fault caused by using unholy words or language during the celebration of a sacrifice—*Guṇa-viṣṇu*, in his Chh. M. Bh. 1. 5.

इदम् । विष्णुः । विऽचक्रमे । त्रेधा । निदधे । पदम् । समूढम् । अस्य । पांसुले ॥ ९ ॥

भाष्यसारः । विष्णुः—व्यापकः स भगवान्, इदं—परिदृश्यमानं सर्वं जगत्, विचक्रमे—पद्भिराक्रान्तवान् । कथमित्युच्यते, त्रेधा पदं निदधे—शाकपूणिनामक-निरुक्तकार-मतेन पृथिव्यामन्तरिक्षे दिवि च क्रमेण पार्थिवाग्नि-वैद्युताग्नि-सवितृरूपेण पादत्रयन्यासं कृतवान्, अथवा और्णवाभ-मतेन समारोहणे विष्णुपदे गयशिरसि—क्रमात् उदयगिरौ मध्ये नभसः अस्तगिरौ चेत्यर्थः, पदत्रयं विन्यस्तवान् । अस्य विष्णोः पांसुले—धूलियुक्ते पादस्थाने समूढम्—इदं जगत् सम्यगन्तर्भूतम् । अथवा पांसुले—पांसुमय्यां भूमौ अस्य पदं समूढं सम्यक् निविष्टम् । अथवा यास्कमते—पांसुयुक्ते धूलिमये स्थाने इव अस्य विष्णोः मध्यमं पदं वैद्युताग्निरूपम् अन्तर्हितम-नित्यदर्शनम् ॥ ६ ॥

All-pervading Viṣṇu strode on this (universe), in a three-fold way he took his steps, all is merged in his dusty foot.—9.

**सा०-भा० ।** 'विष्णुः' त्रिविक्रमावतारधारी इदं प्रतीयमानं सर्वं जगत् उद्दिश्य विचक्रमे विशेषेण भ्रमणं कृतवान् । तदा त्रेधा त्रिभिः प्रकारैः 'पदं' निदधे स्वकीयं पादं प्रक्षिप्तवान् । 'अस्य' विष्णोः 'पांसुले' पांसुरे धूलियुक्ते पादस्थाने 'समूढम्' इदं सर्वं जगत् सम्यगन्तर्भूतम् । सेयमृग् यास्केनैवं व्याख्याता—'विष्णुर्विशतेर्वा व्यश्नोतेर्वा यदिदं किञ्च यद्विक्रमते विष्णुः, त्रेधा निधत्ते पदम् । त्रेधाभावाय, पृथिव्या-मन्तरिक्षे दिवीति शाकपूणिः । समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः । समूढमस्य पांसुरेप्यायनेऽन्तरिक्षे पदं न दृश्यते । अपि वोपमार्थे स्यात् ,—समूढमस्य पांसुल इव पदं न दृश्यते इति । पांसवः पादैः सूयन्त इति वा । पन्नाः शेरत इति वा । पंसनीयाः ( पिंशनीयाः—दुर्गाचार्यधृतपाठः ) भवन्तीति वा', ( नि० १२, १९ ) इति ॥ ६ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
द्वितीयाध्यायस्य एकादशः खण्डः । इति तृतीयप्रपाठकस्य प्रथमार्धे तृतीया दशतिः ॥

६ । ऋ० सं० १ म० २२ सू० १७ ऋ० । यजु०—५,१५, अथर्वब्राह्मणम् १,१७ । ṚV. and Yajur V. have the reading **'पांशुरे'** instead of **'पांसुले'** ।

Guṇa-viṣṇu interprets—'Viṣṇu occupies the universe in the form of the earth, the sky and the heaven by his footsteps ; his foot has been firmly fixed on the earth ; by this contact, the earth is absolutely sanctified ; this pure holy earth makes atonement for the sin of uttering unsacred words.—

Here are the lines quoted from his com.—'अयमर्थः विष्णुर्भूम्याकाशस्वर्गात्मकं जगत् पादेनाक्रान्तवान्,—तस्य पदं भूम्यां सम्यक् निविष्टम्,—एतेन विष्णुपदसम्बन्धेन भूमिरतीव शुद्धेति सा भूमिरस्मिन् सदने दुरुक्तादिकं समाधास्यति ॥'

त्रेधा निदधे पदम्—The essential characteristic of Viṣṇu is his three strides or steps which are mentioned about a dozen times in the ṚV.; in i. 154. 1, he is described to have stridden triply ( 'विचक्रमाणस्त्रेधोरुगायः' ); again in verse 3 of the same hymn he is said to have measured out universe with these three steps ( 'एको विममे त्रिभिरित् पदेभिः'), in these three strides all beings dwell ( 'यस्योरुषु त्रिषु विक्रमणेषु अधिक्षियन्ति भुवनानि विश्वा'—i. 154. 2 ), they are full of honey or eternal bliss ( 'यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति',—i. 154. 4). His third or highest step is beyond the flight of birds or mortal ken, i. 155. 5; vii. 99. 2. His highest step is seen by the wise like the eye (the sun) in heaven, 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयो दिवीव चक्षुराततम्',—i. 22. 20.

In the Purāṇas, these three steps of Viṣṇu have given rise to the legend of his dwarf incarnation in which he is said to have assumed the form of a dwarf and recovered, from the demon-king Vali, the three worlds for the gods strategically, by covering or occupying them with his three strides.

Viṣṇu's three steps are explained by Śākapūṇi, an old author of Nirukta, (whom Yāska very often quotes), as the three-fold manifestation of light in the forms of (1) fire on the earth, (2) lightning in the sky and (3) the sun in heaven. This view is adopted by BERGAIGNE and Prof. Macdonell. Aurṇavābha, another old author of Nirukta (Yāska's predecessor) takes the three steps to mean the three daily positions of the sun—in the rising, in the meridian and setting. Nir. 12. 19. This purely naturalistic interpretation is accepted by most West. scholars, e. g. Whitney, Maxmüller, Haug, Kaegi, Deussen and others.

निदधे—निधत्ते; perf. ( लिट् ) for pres. ( लट् ), Pāṇ. iii. 4. 6.

पांसुले(रे)—पांसुलत्वात् पांसुलशब्देन पृथिव्युच्यते। 'Pāṃsula' refers to the earth, as the earth is full of dust. *Pāṃsu* is dust; *See* Guṇ-V.'s explanation above, or it *may mean*—as on a dusty place the foot-steps are effaced away and leave no marks, so his three strides remain invisible—( तच्च पदत्रयमस्य पांसुले इव देशे समूढम् ). पांसुर (ल) = पांसु—*aff.* र or ल ( in the sense of मतुप् ).

समूढम्—dr. सम्—rt. वह्—क्त; is firmly fixed, or is concealed, lies hidden, i. e., remains invisible.

Yāska (quoted by Sāy. in his com. above), gives the etym. of Viṣṇu, —the god who *pervades everywhere* (fr. rt. विष् व्याप्तौ, *to pervade*, 3. u. or fr. वि + अश् of the same sense, 5), or *enters* i. e., *exists in all* (fr. rt. विश् *to enter*, 6. p.). Yāska explains समूढमस्य पांसुरे—(1) in the wide extensive ( पांसुरे =

व्यायने ) firmament, his footstep is hidden, lies invisible (which Durga means the middle light i. e., the lightning is very transiently seen ; in support of his interpretation, quotes—'स्वप्रमितत् मध्यमं ज्योतिरनित्यदर्शनम्' ), or (2) metaphorically, his foot is not visible as if in a dusty place. Etym. of पांसु (dust)—*so called*, as it is produced (fr. rt. सू. 2. Ā) by feet, or it lies ( पन्ना:=पतिता: ) on the ground, or it is trodden down, or it is pulverized, i. e., reduced to fine particles ( पिंशनीया:, fr. rt. पिंश् *to grind to powder*. 1. p.).

This verse is explained by Yāska in Nir. 12, 19.

---

अथ द्वितीयाध्यायस्य द्वादशः खण्डः । तृतीयप्रपाठकस्य प्रथमार्धे चतुर्थी दशतिः ।

[मेधातिथिर्ऋषिः ।]

१ २ ३ १ २ ३ २ ३ १ ३२ ३१
**अतीहि मन्युषाविणं सुषुवांसमुपेरय ।**
३ २ ३२ ३१ २
**अस्य रातौ सुतं पिब ॥ १ ॥ २२३ ॥**

अति । इहि । मन्युऽसाविनम् । सुसुऽवांसम् । उप । ईरय । अस्य । रातौ । सुतम् । पिब ॥ १ ॥

भाष्यसारः । हे इन्द्र, मन्युषाविणं—क्रोधपूर्वकम् अनादरपूर्वकमिति यावत् सोमाभिषवकारिणम्, अतीहि—अतिगच्छ अतिक्रम्य उपेक्ष्य वा गच्छ । तथा सुषुवांसं—भक्त्या श्रद्धापूर्वकं सुष्ठु सोममभिषुण्वन्तम्, उपेरय—समीपे याहि । अस्य—यजमानस्य, रातौ—दाने यज्ञे इत्यर्थः, सुतम्—अभिषुतं सोमं पिब ॥ १ ॥

Pass over one who presses out (soma-juice) in an angry mood (i. e., with disregard) and keep close to the person who presses well (with a particular regard or devotion), drink the pressed juice in his sacrifice.—1.

सा०-भा० । हे इन्द्र ! 'मन्युषाविणं' क्रोधेन सोमं सुन्वन्तम् 'अतीहि' अतिगच्छ, तथाऽस्मिन् देशे 'सुषुवांसं' सोमं सुन्वन्तम् 'उपेरय' समीपे प्रेरय । 'अस्य' यजमानस्य 'रातौ' यज्ञाख्ये दाने 'सुतम्' अभिषुतं सोमं 'पिब' ॥ १ ॥

१ । ऋ० सं० ८ म० ३२ सू० २१ ऋ० । RV. reads 'उपारणे' instead of 'उपेरय' ; 'इमं रातं' (this offered by us) instead of 'अस्य रातौ' ।

मन्युषाविणम्—मन्यु—rt. सु—णिन्—one who presses soma in anger or contempt. अतीहि—pass by ; dr. अति—rt. इ *to go*—imp. 2. sg. सुषुवांसम्—rt. सु—aff. क्वसु, for *pres. part.* ( सुन्वन्तम् ).

राति—gift, here sacrifice ; fr. rt. रा *to give.*

---

वामदेव ऋषिः ।

२ ३ १ २ ३ १ २र ३ १ २
कदु प्रचेतसे महे वचो देवाय शस्यते ।
१ २र ३ १ २
तदिद्ध्यस्य वर्धनम् ॥ २ ॥ २२४ ॥

कदु (कत्ऽउ) । प्रऽचेतसे । महे । वचः । देवाय । शस्यते । तत् । इत् । हि । अस्य । वर्धनम् ॥ २ ॥

भाष्यसारः । महे—महते, प्रचेतसे—प्रकृष्टज्ञानाय, देवाय इन्द्राय, कदु वचः—कुत्सितम् अस्मदीयं स्तोत्रम्, शस्यते—पठ्यते, कुत्सितमप्यस्माकं स्तोत्रम् अनुग्रहेणाङ्गीकरोतु । तत् इत्—तदेव, अस्य यजमानस्य वर्धनं—वृद्धिकरं भवतु । यद्वा विवरणमते—'कत्' कस्मात् हेतोः, 'उ' इति पादपूरणः, इन्द्राय स्तोत्रमुच्चार्यते ? तस्योत्तरं तृतीयपादे उपन्यस्यते तदिदिति । हि यस्मात् तत् स्तोत्रम् अस्य देवस्य वर्धनम् । स्तूयमानो हि देवता वर्धते ॥ २ ॥

Let our ill-addressed praise be acceptable to the great, sapient, glorious god (Indra). That would, indeed, be the source of (sacrificer's) prosperity ; or that (prayer) is, indeed, stimulant to him (Indra). 2.

सा०-भा० । 'महे' महते 'प्रचेतसे' प्रकृष्टज्ञानाय 'देवाय' द्योतनादिगुणयुक्तायेन्द्राय 'कदु' कुत्सितम् अस्मदीयं 'वचः' स्तोत्ररूपं 'शस्यते' प्रशस्तं यथा भवति देवस्तथाऽनुगृह्णात्वित्यर्थः । 'तदित्' तदेव 'अस्य' यजमानस्य 'वर्धनं हि' प्रवृद्धिसाधनं खलु ॥ २ ॥

२। इयम् ऋक् ऋग्वेदे नास्ति ।

कदु—ill, defective ;—Sāy. This word is found no-where else in this sense, in the Vedas, nor mentioned in Ngh. or Nir. ; acc. to *Viv.* कत्—उ—why (is prayer addressed to Indra) ? महे—for महते, *vide* SV. I. 10, 93. त-लोपश्छान्दसः ।

---

मेधातिथिप्रियमेधावृषी ।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २र
उक्थं च न शस्यमानं नागो रयिरा चिकेत ।
१ २ ३ २ ३ १ २
न गायत्रं गीयमानम् ॥ ३ ॥ २२५ ॥

उक्थम् । च । न । शस्यमानम् । न । अगोः । अयिः । आ । चिकेत । न । गायत्रम् । गीयमानम् ॥ ३ ॥

भाष्यसारः । अगोः—अस्तुतिकर्त्तुः, अयिः—अरिः शत्रुः, इन्द्रः शस्यमानं—होत्रा पठ्यमानम्, उक्थं च—स्तोत्रमपि, आ चिकेत—जानाति अङ्गीकरोति । न—सम्प्रति, गीयमानं गायत्रं—गातव्यं साम, आ—सम्यक्, चिकेत एव ॥ ३ ॥

Indra, the enemy of non-praiser, appreciates the laud enchanted and the Sāman now being sung.—3.

**सा०-भा० ।** गायतेर्गौः 'अगोः' (?) अस्तोतुः 'अयिः' अरिः—व्यत्ययेन यकारः ( पा० ३, १, ८५ )—शत्रुः इन्द्रः 'शस्यमानं' होत्रा पठ्यमानम् 'उक्थं च' न शस्त्रमपि 'आ चिकेत' अभिजानाति । कित् ज्ञाने, छान्दसो लिट् ( पा० ३, ४. ७ ) । नेति सम्प्रत्यर्थे । 'न' सम्प्रति प्रस्तोत्रादिभिर्गीयमानं 'गायत्रम्' गातव्यं साम यद्वा गायत्राख्यम् आचिकेतेत्येव । अतः कारणाद् वयमपि तमिन्द्रं स्तुम इत्यर्थः ॥ ३ ॥

३ । ऋ० सं० ८ म० २ सू० १४ ऋ० । The ṚV. has (1) 'अगोः' instead of 'नागोः' and (2) 'अरिः' instead of 'अयिः' । उ० आर्चि० ६,१,१५,२ ।

*Grfth.* translates the verse differently—'His wealth who hath no store of kine hath never found out recited laud ; he also comments—the meaning is that Indra will not accept worship without oblation. '*His wealth who has no store of kine*' is periphrasis for the poor man who is unable to offer libations of milk ;'—this interpretation is simply conjectural. West. scholars have, through mistake, accepted रयिः (wealth) instead of अयिः (=अरिः) and have rendered, thereby, the text incomprehensible.

नागोः—Sāy. has adopted, here, the ṚV. rdg. ( अगोः ) ; Viv. drvs. नागोः—कुङ्गङ् अव्यक्ते शब्दे, गुः—अव्यक्तभाषी, अगुः—व्यक्तभाषी, न अगुः—अव्यक्तभाषी, तस्य नागोः शत्रुः—the enemy of one who does not praise distinctly, i. e., heartily.

अयिः—an archaic form of अरिः, shows the anteriority of the SV. text.

चिकेत—knows, appreciates ; rt. कित् *to know*, *perf.* ( लिट् ) for *pres.* ( लट् ).

---

विश्वामित्र ऋषिः ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
**इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः ।**
१ २ ३ २ ३ १ २
**हरिवांत्सुतानां सखा ॥ ४ ॥ २२६ ॥**

इन्द्रः । उक्थेभिः । मन्दिष्ठः । वाजानाम् । च । वाजऽपतिः । हरिऽवान् । सुतानाम् । सखा ॥ ४ ॥

भाष्यसारः । **वाजानाम्—अन्नानाम्, वाजपतिः—अन्नपतिः, हरिवान्—हरिनामकाश्वयुक्त इन्द्रः उक्थेभिः—होतृप्रयुक्तैः स्तोत्रैः, मन्दिष्ठः—अतिशयेन वन्दनीयस्तर्पितो वा, सुतानाम्—अभिषुतानां सोमानाम्, सखा—प्रियः, सोमप्रिय इत्यर्थः ॥ ४ ॥**

Indra is highly delighted with songs of praise, the lord of the excellent food of all foods, possessed of the horses named 'Hari', fond of the pressed soma-juice.—4.

**सा०-भा० । 'वाजानाम्' अन्नानां मध्ये 'वाजपतिः' उत्कृष्टान्नपतिः 'हरिवान्' हरिनामकाश्ववान् 'इन्द्रः' 'उक्थेभिः' होतृप्रयुक्तैः उक्थनामकैर्वा शस्त्रैः 'मन्दिष्ठः' अतिशयेन तृप्तः सन् 'सुतानाम्' अभिषुतानां सोमानां 'सखा' सखिवत् प्रीतिकरः सोमैः प्रीयत इत्यर्थः ॥ ४ ॥**

**४ । इयम् ऋक् ऋग्वेदे नास्ति ॥ 'वामदेवस्यार्षम्'—वि०,** Grfth. follows it.

उक्थेभिः—for उक्थैः । भिस् not changed to ऐस्, by 'बहुलं छन्दसि' Pāṇ. vii. 1. 10.

मन्दिष्ठः—who delights most (in lauds), or most adorable ; fr. rt. मदि स्तुतिमोद-···गतिषु, 1. Ā. 'मन्दी मन्दतेः स्तुतिकर्मणः' Nir. 4. 24 ; dr. मदि—भावे घञ् Pāṇ. iii. 3. 18,—मन्द,—*aff.* इन् ( मत्वर्थे ) Pāṇ. v. 2. 115.—मन्दिन्, इष्ठन् spv. dg ; cf. 'प्र मन्दिने पितुमदर्चता वचः'—offer worship to (Indra) *the adorable*, with oblations SV. 1. 380 ; ṚV. 1. 101. 1.

वाजानाम्—in *Viv.* the word दाता is supplied after वाजानाम्,—the giver of food.

वाजः—अन्नम्, food. Ngh. 2. 7. वाजानां वाजपतिः—'lord of each thing that gives strength'—*Grfth.*

हरिवान्—Indra's horses are called by the name 'Hari', Nir. 2. 28. *Vide* our notes on हरीणाम् SV. 1. 193. हरिवान् + सुतानाम् = हरिवांत्सुतानाम्, *vide* the Sandhi rule Pāṇ. viii. 3. 30. वतुप् in हरिवान् by 'छन्दसीरः' Pāṇ. viii. 2. 15.

---

मेधातिथिप्रियमेधावृषी* ।

२ १ २ २ १ २र ३ १ २
आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः ।
३ १ २ ३ १ २
महाँ इव युवजानिः ॥ ५ ॥ २२७ ॥

आ । याहि । उप । नः । सुतम् । वाजेभिः । मा । हृणीयथाः । महान्ऽइव । युवऽजानिः ॥ ५ ॥

भाष्यसारः । हे इन्द्र, नः—अस्मदीयं सुतम्—अभिषुतं सोमम्, उप—प्रति समीपे, आ याहि आगच्छ, वाजेभिः—वाजैः, अपरप्रदत्तहवीरूपैरन्नैः, मा हृणीयथाः—न ह्रियस्व । अथवा वाजेभिः धनैरन्नैर्वा सह आयाहि । मा हृणीयथाः—मा क्रुधः । युवजानिः—युवती जाया यस्य तथाभूतः, महान्—प्रभुः राजा इव ॥ ५ ॥

Come to our pressed soma-juice, be not enticed by the oblations (of others), like a rich man having a youthful wife.—5.

**सा०-भा० ।** हे इन्द्र ! 'नः' अस्मदीयं 'सुतम्' अभिषुतं सोमम् 'उप याहि' प्रत्यागच्छ, किञ्च 'वाजेभिः' अन्यदीयैर्हवीरूपैरन्नैः 'मा हृणीयथाः' मा क्रुध्यस्व हृणीयतिः क्रुध्यतिकर्मा, यद्वा मा लज्जां प्राप्नुहि, हृणीङ् लज्जायामिति कण्ड्वादौ पठ्यते । तत्र दृष्टान्तः—'युवजानिः' यौवनोपेता जाया यस्यासौ युवजानिः । 'जायाया निङ्' (पा० ५, ४, १३४) इति समासान्तः । 'महान् इव' प्रभुरिव, यथा रूपवद्भार्योपेतः प्रभुः अन्याभिर्नापह्रियते किन्तु तामेव युवतिं प्रत्यागच्छति तद्वत् ॥ ५ ॥

५ । ऋ० सं० ८ म० २ सू० १६ ऋ० । RV. has 'ओषु प्र याहि वाजेभिर्मा हृणीथा अभ्यस्मान्'.

Sāyaṇa here explains the simile—just as a king or a rich man having many wives adheres only to the young wife and is not enticed by other wives, so Indra is here prayed not to be tempted by the libations offered by others.

Wilson translates.—'be not bashful ( हृणीयथाः ), like the ardent ( महान् ) husband of a new bride'.

Grassman—'Like a rich man, newly married'.

Stevenson—'Do not get angry with us (but bear with us), as an elderly man does with a young wife'.

* शुनकचस्यार्षम्—Viv.

Benfey—'Wie ein erhabener Bräutigam'—like a noble bridegroom.

Vivaraṇam—Just as the husband of a young wife, does not get annoyed with her in her slight offence, so do not be angry with us. ( 'स यथा तरुण्या भार्यायाः स्तोकेऽपराधे हि न रुष्यति, तद्वन्मा रोषो'रित्यर्थः । )

हृणीयथाः—imp. 2. sg. fr. rt. हृणी, य is added, being of the कण्ड्वादि class, *to be angry*, Ngh. 2. 12 ; *elsewhere* to be ashamed ( लज्जायाम् ).

महान्—Sāyaṇa in his com. on the Ṛ̥V. explains it by 'गुणैरधिकः' '*eminent on account of his good qualities*'. prob. sense is—a rich man.

---

कौत्सो दुर्मित्र ऋषिः ।

२ १ २ ३ १ २र ३ १ २र ३ १ २ ३ २
**कदा वसो स्तोत्रं हर्यत आ अव श्मशा रुधद्वाः ।**
३ २ ३ २ ३ १ २
**दीर्घं सुतं वाताप्याय ॥ ६ ॥ २२८ ॥**

कदा । वसो इति । स्तोत्रम् । हर्यते । आ । अव । श्मशा । रुधत् । वारिति वाः । दीर्घम् । सुतम् । वाताप्याय ॥ ६ ॥

भाष्यसारः । **हे वसो—निवासकारण इन्द्र, स्तोत्रं हर्यते—कामयमानाय कामयमानं त्वाम्, कर्मस्थाने चतुर्थी । कदा—कः कालः, अवारुधत्—अवरोत्स्यति, कदा च वाः—वारयिष्यति । श्मशा—कुल्या, यथा कुल्या उदकानि अवरुणद्धि वारयति च तथा । वाताप्याय—उदकाय वृष्ट्यर्थम्, तव कृते दीर्घं सुतं—चिरं सोमः अभिषुतः प्रस्तुतश्च रक्षितः, तं सुतं सोमं प्रति उद्दिश्य इति पूर्वत्रान्वयः ॥ ६ ॥**

Which time, O the cause of our habitation, will captivate and enchain thee, the lover of the laud, like the canal (as the canal shuts up water), for the sake of rain, towards the soma-juice which has been long pressed out (and ready for thee) ?—6.

**सा०-भा० ।** हे 'वसो' ! वासयितः ! इन्द्र ! 'स्तोत्रम्' अस्मत्कर्तृकं 'हर्यते' कामयमानाय कामयमानं त्वाम् । 'क्रियाग्रहणं कर्त्तव्यम्' इति कर्मणः सम्प्रदानत्वाच्चतुर्थी । 'कदा' कस्मिन् काले 'अवारुधत्' अवरोत्स्यति, अवरुध्य च कदा 'वाः' वारयिष्यति, तादृशः कालः कदा अस्माकं सम्भविष्यतीत्याशास्ते । तत्र दृष्टान्तः,—अश्नुते क्षेत्रमिति 'श्मशा' कुल्या । लुप्तोपममेतत्—यथा कुल्या इतस्तत उदकान्यव-

रुणद्धि, अवरुध्य च वारयति तथेत्यर्थः। किमुद्दिश्यावरोध इति तत्राह—'दीर्घं' सवनत्रयरूपेणायतं 'सुतम्' अभिषुतं सोमं प्रति। किमर्थमिति तदाह—'वाताप्याय' वातेनाप्यते अधस्तान्निपात्यत इति वाताप्यमुदकं तस्य प्रदानायेत्यर्थः ॥ ६ ॥

६। ऋ० सं० १० म० १०४ सू० १ ऋ०।

हर्यते—longing for, desiring i. e., loving, rt. हर्य—गतिकान्त्योः, here *to love or long for*, 1. p.—शतृ (pres. part.), *dat. sg.* 'हर्यति इति कान्तिकर्मसु पठ्यते'—Ngh. 2. 6. Mcdnll. has the rt. '*har*' to be gratified. 4.

ग्मना—perhaps refers to the canal with lock-gates at either end for shutting up waters for irrigation or so. Yāska gives the etym. 'ग्न (आप्न) अश्न त इति वा, ग्मान्न त इति वा'—that which runs quickly, or runs through the body (ग्मन्),—a small river or a vein—(Durga), Nir. 5. 12; the word occurs only here. 'It is probably connected with *aśman* and means 'an elevated bank' or 'embankment', cf. Roth, *op. cit.*, p. 63.

वाताप्याय—वातेन आप्यते अधस्तात् निपात्यते, (fr. rt. आप्) rain is *so called*, as it is driven or poured down by the wind.—Sāy. above 'वाताप्यमुदकं भवति, वात एतदाप्याययति'—the word means water (rain), as vāta (wind) causes it to swell (fr. rt. प्याय्). Nir. 6. 28; cf. 'पुनानो वाताप्यं विश्वश्चन्द्रम्' RV.

वाः—वारिति वृणोतेर्ण्यन्तात्क्विप् छान्दसः णपो लुक्। छन्दस्युभयथेति तिप आर्धधातुकत्वात् णेरनिटीति लोपे हल्ङ्याब्भ्यः इति तिलोपः।—Sāy. in his addl. notes in the com. on the RV. verse.

———

मेधातिथिर्ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २ ३ २ १र २र
ब्राह्मणादिन्द्र राधसः पिबा सोममृतूंरनु।
३ २ ३ १र २र
तवेदं सख्यमस्तृतम् ॥ ७ ॥ २२९ ॥

ब्राह्मणात्। इन्द्र। राधसः। पिब। सोमम्। ऋतून्। अनु। तव। इदम्। सख्यम्। अस्तृतम् ॥ ७ ॥

भाष्यसारः। हे इन्द्र, ब्राह्मणात्—सोमपात्रधारकात् ब्राह्मणाच्छंसिनः, राधसः—धनस्वरूपात् महार्हात् पात्रात्, सोमं पिब, ऋतून् अनु—सर्वेषु ऋतुषु। यतस्तव इदं सख्यमस्तृतम्—अविच्छिन्नम् ॥ ७ ॥

From the precious vessel of the Brahmana, Indra, drink the soma-juice in all seasons; thy friendship is inseparable.—7.

**सा०-भा०।** हे 'इन्द्र'! 'ब्राह्मणात्' ब्राह्मणाच्छंसि-सम्बन्धात् 'राधसः' धनभूतात् पात्रात् 'सोमं' 'पिब'। किं कृत्वा? 'ऋतून् अनु' देवाननुसृत्य ऋतवोऽपि पिबन्त्वित्यर्थः। हि यस्मात् 'तव' इदं सख्यम् 'अस्तृतम्' ऋतूनामविच्छिन्नम्, तस्माद्दृतुभिः पानं युक्तम्॥ ७॥

७। ऋ० सं० १ म० १५ सू० ५ ऋ०। The deity of the orig. ṚV. hymn is Ṛtu associated, in each stanza, with some other familiar divinity.

ब्राह्मणात्—ब्राह्मण *here* refers to ब्राह्मणाच्छंसी—one of the sixteen priests employed at sacrifices, *namely* (1) होता, (2) मैत्रावरुण, (3) अच्छावाक, (4) ग्रावस्तुत्, —these are the Ṛg-veda priests; (5) प्रतिप्रस्थिता, (6) नेष्टा, (7) उन्नेता, (8) अध्वर्यु—these are the Yajur-veda priests; (9) उद्गाता, (10) प्रस्तोता, (11) सुब्रह्मण्य, (12) प्रतिहर्त्ता —these are the Sāma-veda priests; (13) ब्रह्मा, (14) ब्राह्मणाच्छंसी, (15) पोता, (16) अग्नीध्र—these are the Atharva-veda priests. The duty of the ब्राह्मणाच्छंसी was perhaps to hold the vessel containing soma-juice from which Indra is here invited to drink the soma. *See* our notes on होता SV. 1. 61.

ऋतूंरनु—in all seasons; (ऋतून्+अनु) न् is changed to रु (र्) by 'दीर्घादटि समानपादे' Pāṇ. viii. 3. 9. अनुस्वार after the vowel preceding रु, by 'अनुनासिकात् परोऽनुस्वारः' Pāṇ. viii. 3. 4.—'throughout all the seasons'—Stevenson; 'after Ṛtu'—*Wils*; 'after the seasons or the Ṛtus'—*Grfth.* Ṛtu is, properly a season, a sixth part of a year, *here* personified as a divinity.

तव इदं सख्यम् अस्तृतम्—(since) thy friendship is uninterrupted.

Prof. Wilson comments on this verse—the text is obscure. *Rādhasa* is explained—a costly vessel (धनभूतात् पात्रात्).

---

मेधातिथिर्ऋषिः।

३ १ २ ३ १ २ ३ १ २
**वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः।**
१ २
**त्वं नो जिन्व सोमपाः॥ ८॥ २३०॥**

वयम्। घ। ते। अपि। स्मसि। स्तोतारः। इन्द्र। गिर्वणः। त्वम्। नः। जिन्व। सोमऽपाः॥ ८॥

भाष्यसारः। हे गिर्वणः—गीर्भिः स्तुत्य इन्द्र, वयं घ—खलु, ते—तव, अपि स्तोतारः, स्मसि—स्मः भवामः। हे सोमपाः,—सोमस्य पातः, इन्द्र, त्वं नः—अस्मान्, जिन्व—प्रीणय॥ ८॥

O Indra, adorable by songs of praise, we are the singers of thy praise. O soma-drinker, make us happy.—8.

**सा०-भा० ।** हे 'गिर्वणः' गीर्भिर्वननीय ! 'इन्द्र !' 'ते' तवापि 'वयं घ' वयं खलु 'स्तोतारः' 'स्मसि' स्मः भवामः । हे 'सोमपाः' सोमस्य पातरिन्द्र ! 'त्वं' 'नः' अस्मान् 'जिन्व' प्रीणय ॥ ८ ॥

८ । ऋ० सं० ८ म० ३२ सू० ७ ऋ० ।

घा—घ, an *indec.* the vowel is lengthened by 'ऋचि तु-नु-घ०' Pāṇ. vi. 3. 133.

स्मसि—for स्मः, *we are* ; rt. अस् *to be*, pres. ( लट् ) 1. pl. मस् becomes मसि, by 'इदन्तो मसि' Pāṇ. vii. 1. 46. *vide* our notes on the word, SV. 1. 193.

गिर्वणः—*vide* SV. 1. 65 ; 1. 195.

जिन्व—imp. 2. sg. of the rt. जिन्व ( प्रीणने *to please*, 1. p. ) Mcdnll has 'Jinv' *to quicken*, 1. u, in his list of vbs. App. 1. p. 384. Stu. Ved. Gram ; *Grfth.* following Mcdnll, translates '*quicken us*' ; 'be generous unto us'—*Wils.*

---

विश्वामित्रो गाथिनोभीपाद उदलो वा ऋषिः ।

१ २ ३ १र २र ३ २ ३ १ २
**एन्द्र पृत्तु कासु चिन्नृमणं तनूषु धेहि नः ।**
१ २ ३ १ २
**सत्राजिदुग्र पौंस्यम् ॥ ९ ॥ २३१ ॥**

आ । इन्द्र । पृक्षु । कासु । चित् । नृमणम् । तनूषु । धेहि । नः । सत्राऽजित् । उग्र । पौंस्यम् ॥ ९ ॥

भाष्यसारः । हे इन्द्र, पृत्तु—सम्पृक्तासु, कासुचित् नः—अस्माकम्, तनूषु—अङ्गेषु, नृमणं—बलम्, आधेहि—प्रयच्छ । हे उग्र, सत्राजित्—सदा शत्रूणां जेतः, पौंस्यं—बलम्, आधेहि—प्रयच्छ ॥ ९ ॥

O Indra, give strength to some of our inseparably connected limbs, O mighty, give us manly vigour, capable always of vanquishing the enemies.—9.

**सा०-भा० ।** हे 'इन्द्र' ! 'पृत्तु' सम्पृक्तासु 'कासुचित्' कास्वपि 'नः' अस्माकं 'तनूषु' अङ्गेषु 'नृमणं' बलम् 'आ धेहि' आ समन्तात् स्थापय । हे 'उग्र'

उद्गूर्णबल ! इन्द्र ! 'सत्राजित्' द्वादशाहादिभिः सत्रैः जीयमानो वशीक्रियमाणः सन् 'पौंस्यम्' पुंसे हितं फलम् 'आ धेहि' प्रयच्छेत्यर्थः ॥ ६ ॥

६। इयम् ऋक् ऋग्वेदे नास्ति*।

पृत्सु—in our bodies which are inseparably connected with us, fr. rt. पृच् सम्पर्के, 2. Ā., *to come in contact with.*

In Vivaraṇam the word is differently explained—'सम्पृच्यन्ते यस्यां यागक्रियायां यजमाना देवैः सह सा पृक्, तासु पृत्सु यागक्रियासु',—In the sacrificial ceremonies, where the sacrificers come in contact with the gods.

नृम्णम्—धनम्, wealth Ngh. 2. 10; this sense is taken by Viv.—बलं strength, Ngh. 2. 9,—adopted by Sāyaṇa and others.

सत्राजित्—adj., quals. नृम्णम्; सदा शत्रूणां जेतृ, ever-conquering. For सत्रा *vide* our notes on सत्रासाहम्, SV. 1. 170. Here Sāyaṇa explains differently—'(Indra) to be won by the '*satras*' lasting twelve days. पौंस्यम्—बलम्, vigour, Ngh. 2. 9.

---

श्रुतकक्ष ऋषिः।

३ १र १र ३ २ ३ १र २र ३ २ ३ २
**एवा ह्यसि वीरयुरेवा शूर उत स्थिरः।**
३ २ ३ २ ३ १ २
**एवा ते राध्यं मनः ॥ १० ॥ २३२ ॥**

एव। हि। असि। वीरऽयुः। एव। शूरः। उत। स्थिरः। एव। ते। राध्यम्। मनः ॥ १० ॥

भाष्यसारः। हे इन्द्र, त्वं वीरयुः—वीरान् शत्रून् इच्छुः हन्तुं कामयमान इत्यर्थः, एव असि, त्वं—शूरः स्वयं वीरः एव भवसि, उत—अपि च, स्थिरः—संग्रामे धीरो भवसि। अतः, ते—तव, मनः, राध्यं—स्तुतिभिराराधनीयम् ॥ १० ॥

Thou longest for the valorous foes, indeed, thyself a hero, steady (in fight); so thy mind is to be propitiated with praises.—10.

**सा०-भा**। हे इन्द्र ! त्वं 'वीरयुः' वीरान् युद्धकर्मणि समर्थान् शत्रून् हन्तुं कामयमानः 'एव असि' भवसि खलु। 'हि' प्रसिद्धौ। अत एव त्वं 'शूरः' सामर्थ्यवानेव भवसि। 'उत' अपि च 'स्थिरः' संग्रामे धैर्यवान् भवसि। एकत्र स्थित्वैव शत्रून्

* Ascribed to Vāmadeva—Viv. Grfth. follows it.

सम्प्रहरसीत्यर्थः। एवं सति 'ते' तव 'मनः' 'राध्यं' स्तुतिभिराराधनीयमेव। यतोऽनेन मनसा त्वं शत्रुबधं संग्रामे धैर्यादिकं करोषीति। तत एव तव मनः सर्वैः स्तुत्यमित्यर्थः॥ १०॥

इति द्वितीयाध्यायस्य द्वादशः खण्डः। इति तृतीयप्रपाठकस्य प्रथमार्धे चतुर्थी दशतिः।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण
सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
ऐन्द्रकाण्डे द्वितीयोऽध्यायः॥

१०। ऋ० सं० ८ म० ६२ सू० २८ ऋ०। उ० आर्चि० २, १, १८, १।

एवा=एव, the last vowel is lengthened by 'निपातस्य च', Pāṇ. vi. 3. 136.

वीरयुः—longing for horses i. e., mighty opponents in order to chastise them, dr. वीर—क्यच् (इच्छार्थे) nom. vb. उ—by 'क्याच्छन्दसि' Pāṇ. iii. 2. 170. वीर ending in अ should have changed its last vowel to ई—with क्यच् following, but this is barred by 'न च्छन्दस्यपुत्रस्य' Pāṇ. vii. 4. 35.—'thou verily lovest to smite the mighty'—*Wils.* Grfth. renders—'thou art the brave man's friend.'

Sāyaṇa gives the import of the last line:—thy mind is to be pleased, as with this mind thou killest the enemies, and assumest fortitude in battles.

शूरः—an epithet very often applied to Indra, *vide* our notes on वीराय, शूराय, SV. 1. 123.

---

# सामवेदसंहिता

## अथ तृतीयोऽध्यायः ।

अस्मिन्नध्यायेऽपि इन्द्रः स्तूयते ।

### अथ प्रथमः खण्डः ।

वशिष्ठ ऋषिः । बृहती छन्दः* ।

३ १ २ ३ १ २ ३ १ २
**अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।**
१ २ ३ १ २र ३ २ ३ १ २ ३ १ २
**ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ १ ॥२३३॥**

अभि । त्वा । शूर । नोनुमः । अदुग्धाःऽइव । धेनवः । ईशानम् । अस्य । जगतः । स्वःऽदृशम् । ईशानम् । इन्द्र । तस्थुषः ॥ १ ॥

भाष्यसारः । हे शूर इन्द्र, अस्य जगतः—जङ्गमस्य, ईशानम्—ईश्वरम्, तस्थुषः—स्थावरस्य च ईशानमीश्वरं चराचराधिपम्, स्वर्दृशं—सर्वद्रष्टारम्, त्वा—त्वाम्, अदुग्धा धेनव इव—दुग्धपूर्णोधन्यः गाव इव, वयं त्वदर्थं सोमपूर्णचमसाः अभि नोनुमः—अभितोऽत्यर्थं स्तुमः, यद्वा स्तुतिभिराभिमुख्येन आह्वयामः ॥ १ ॥

O valorous Indra, the lord of this moving world, the lord of the immovable, the beholder of all, like unmilked cows (with udders full of milk), (with *camasas* filled with soma-juice)—we exceedingly sing thy praise (or invoke thee).—1.

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

---

* For Bṛhatī metre *see* the footnote under SV. 1. 35 ; orig., of 8+8+12+8 syllables severally of the 4 pādas, as here shown ; later, of any metre of 36 syllables totally.

ऋचोऽशीतिरभित्वेति *बृहत्यः सकला अपि।
नहि वो मारुती तत्र प्रमित्रायेति संस्तुतिः।
आदित्यानामथेन्द्राग्नी अपादिन्द्राग्निसंस्तुतिः।
अश्वियुक्ता शचीभिर्नः कुष्ठश्चेमा उ वामिति।
यदा कदा वारुणी स्यात्त्वष्टानो बहुदेवता।
उषस्या प्रत्यु इत्येषा ब्रह्म वट् सूर्यसंस्तवः।
इत्येकादश ताभ्योऽन्या ऐन्द्र एकोनसप्ततिः॥

**सा०-भा०।** हे 'शूर!' 'इन्द्र!' 'अस्य' 'जगतः' जङ्गमस्य 'ईशानम्' ईश्वरं 'तस्थुषः' स्थावरस्य चेशानम् ईशानपदस्यावृत्तिरादरार्था। 'स्वर्दृशं' सर्वदृशं 'त्वा' त्वाम् 'अदुग्धा इव धेनवः'—यथा अदुग्धा धेनवः क्षीरपूर्णोधस्त्वेन वर्त्तन्ते, तद्वत् सोमपूर्णचमसत्वेन वर्त्तमाना वयम् 'अभि नोनुमः' भृशमभिष्टुमः॥ १॥

१। ऋ० सं० ७ म० ३२ सू० २२ ऋ०। उ० आर्चि० १, १, ११, १। यजुर्वेद० —२७, ३५।

नोनुमः—Intens. (यङ्लुक्) of rt. नु to *praise*.

अदुग्धा इव धेनवः—Sāyaṇa explains the simile—'as the cows, before milking, have their udders full of milk, so we have our 'camasas' (ladles) full of soma-juice, when we invoke and praise thee. The author of Viv. explains—'as the milch cows, before milking, call aloud their calves, so we call thee aloud' (in this case rt. नु means *to call* शब्दे). *Grfth.* follows this interpretation.

Mahīdhara explains—'we praise thee as unmilked kine praise their calves', which is not very intelligible; in order to make sense of it, Sāyaṇa inserts the fulness of the ladles.

स्वर्दृशम्—'स्वः' = आदित्यः, the sun, 'स्वरादित्यो भवति'—Nir. 2. 14. स इव य पश्यति स

* The first 80 Ṛks or verses (forming the first 8 Khaṇḍas) of this Adhyaya.—fr. 'अभि त्वा शूर नोनुमः···'(SV. 1.233) to 'प्रयोरिरिच्व ओजसा···ववक्षिथ' (1.313) are all in Bṛhatī metre; of these 80,—eleven are addressed to different deities, namely (1) 'न हि वो···' (1. 241)—to Maruts; (2) 'प्र मित्राय प्रार्यमणे···' (1. 256)—to Ādityas; (3) 'इन्द्राग्नी अपात्···' (1. 282)—to Indra and Agni; (4-6) 'शचीभिर्नः शचीवसू···' (1. 288); 'कुष्ठः को वामश्विना···' (1. 306); and 'इमा उ वाम···' (1. 305)—to Aśvins; (7) 'यदा कदा च मीढुषे···' (1. 289)—to Varuṇa; (8) 'त्वष्टा नो दैव्यं वचः...' (1. 300)—to many gods; (9) 'प्रत्यु अदर्श्यो...' (1. 304)—to Uṣas; (10-11) 'ब्रह्मयुजो हरय...' (1. 246); and वट् i. e.,—'वण्महाँ असि...' (1. 277)—to Sūrya; except these eleven, the rest 69 verses of this group are all addressed to Indra.

स्वर्दृक्—all-seeing like the sun—Viv.; seeing light—Mon. Wilms; Grfth. adopts this meaning. *Vide* also our notes on स्वर्णरम्, SV. 1. 109.

ईशानं जगतः ईशानं तस्थुषः—'the lord of all movable and stationary things'.

---

भरद्वाज ऋषिः* ।

१र २र ३ १र २र ३ १ २
**त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।**

३ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
**त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ २ ॥ २३४ ॥**

त्वाम् । इत् । हि । हवामहे । सातौ । वाजस्य । कारवः । त्वाम् । वृत्रेषु । इन्द्र । सत्ऽपतिम् । नरः । त्वाम् । काष्ठासु । अर्वतः ॥ २ ॥

भाष्यसारः । **हे इन्द्र, कारवः—स्तोतारः, वयं वाजस्य—अन्नस्य, सातौ—लाभाय, त्वाम् इत् हि—त्वामेव, हवामहे—स्तुतिभिराह्वयामः । नरः—अन्ये जनाः, सत्पतिं —सतां पालयितारं त्वाम्, वृत्रेषु—शत्रुषु सत्सु, त्वां हवन्ते—आह्वयन्ति, अर्वतः— अश्वस्य, काष्ठासु—अश्वक्रान्तस्थानेषु युद्धेषु इत्यर्थः, त्वामेव आह्वयन्ति ॥ २ ॥**

It is thyself, whom we, the singers of praise, invoke in order to gain food (or strength), as men call on thee the guardian of the good, against the obstructing foes, and in battles where horses are engaged.—2.

**सा०-भा० ।** 'कारवः' स्तोतारो वयं 'वाजस्य' अन्नस्य 'सातौ' सम्भजने निमित्तभूते सति, हे 'इन्द्र!' 'त्वामिद्धि' त्वामेव 'हवामहे' स्तुतिभिराह्वयामः । हे इन्द्र! 'सत्पतिं' सतां पालयितारं श्रेष्ठं त्वां 'नरो' नेतारोऽन्येऽपि मनुष्याः 'वृत्रेषु' आवरकेषु शत्रुषु सत्सु 'हवन्ते' आह्वयन्ति तज्जयार्थम् । अपि च 'अर्वतः' अश्वस्य सम्बन्धिनीषु 'काष्ठासु' यथाऽश्वः क्रान्त्वा तिष्ठति तासु काष्ठासु संग्रामेषु युद्धकामाश्च त्वामेवाह्वयन्ति अतो वयं त्वामेवाह्वयाम इत्यर्थः ॥ २ ॥

२ । ऋ० सं० ६ म० ४६ सू० १ ऋ० । ṚV. reads **'साता'** instead of **'सातौ'** both being the forms of loc. sg. of the stem **साति** ending in **इ**, *vide* Pāṇ. vii. 1. 39. Mcdnll's Stu. Ved. Gram. para 98. B. **उ० आर्चि० २,१,१२,१ ।**

---

* Ascribed to Saṃyu—acc. to Viv.; Grfth. follows this view.

हवामहे—*Vide.* our notes on the word, SV. 1. 130 ; 163.

सातौ—for gaining (food or strength) 'सातिः' = लाभः, gain ; loc. in the sense of निमित्त *(for the sake of).*

कारवः—the singers of praise ; *nom. pl.* of कारु dr. fr. कृ *to praise* 3. p. कीरि (praiser), कीर्त्ति are derived from the same root. *Vide* our notes on the word, SV. 1. 158.

सत्पतिम्—cherisher, protector or patron of the pious ; *vide* our notes on the word. SV. 1. 168.

अर्वतः—fr. rt. ऋ *to go.* अर्वा—अश्वः horse, Ngh. I. 14.

काष्ठासु—In Vivaraṇam, this word is taken to mean—'for the sake of rain' i. e., men call on thee for rain ; the word काष्ठा is used in this sense (waters) in SV. 1. 221. Wils. renders काष्ठासु अर्वतः—in places where horses encounter ; acc. to Say.—in the quarters or regions of the horse i. e., in the battle-fields where horses are engaged. Mahīdhara in Yajur-Veda, 27. 37, separates the two words and explains—'men invoke thee for victory'.

———

वालखिल्या ऋषयः* ।

३ १र २र ३ १ २ ३ १ २ ३ १ २ ३ २
**अभि प्र वः सुराधसमिन्द्रमर्च्च यथा विदे ।**
१ २ ३ १ २ ३ १ २ ३ १ २ २ १ २ ३ १ २
**यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥३॥२३५॥**

अभि । प्र । वः । सुऽराधसम् । इन्द्रम् । अर्च । यथा । विदे । यः । जरितृऽभ्यः । मघऽवा । पुरुऽवसुः । सहस्रेणऽइव । शिक्षति ॥ ३ ॥

भाष्यसारः । पुरुवसुः—प्रभूतधनोपेतः, मघवा—इन्द्रः, जरितृभ्यः—स्तोतृभ्यः अस्मभ्यम्, सहस्रेण—सहस्रप्रकारैः बहुप्रकारैरित्यर्थः अथवा सहस्रपरिमितधनेन बहुधनमित्यर्थः, शिक्षति—ददाति । यथा विदे—यथा स जानीयात्, तथा हे ऋत्विजः, वः—यूयम्, सुराधसं—परमैश्वर्ययुक्तम्, तम् इन्द्रम् अभि—आभिमुख्येन, प्रार्च—प्रकर्षेण अर्चत ॥ ३ ॥

(O priests,) Offer praises, as he may appreciate, to Indra, the lord of ample excellent riches, who gives, in thousand ways, wealth to the singers of praises.—3.

---

* Ascribed to Vāmadeva according to *Vivaraṇam.*

**सा०-भा० ।** 'पुरुवसुः' पश्वादिधनोपेतः यज्ञादिबाहुल्यवद्बहुनिवासको वा 'मघवा' 'यः' इन्द्रः 'जरितृभ्यः' स्तोतृभ्यः अस्मभ्यं 'सहस्रेणेव' सहस्रसंख्याकेन धनेनेव 'शिक्षति' पश्वादिबहुधनमस्मभ्यं प्रयच्छतीत्यर्थः । स इन्द्रः 'यथा विदे'—यथा अस्माभिर्विज्ञायते तथा हि—ऋत्विजः ! 'वः' यूयं 'सुराधसं' शोभनधनोपेतम् 'इन्द्रं' परमैश्वर्ययुक्तं देवम् 'अभि' आभिमुख्येन 'प्रार्च०' प्रकर्षेणार्चत ॥ ३ ॥

३ । ऋ० सं० बालखिल्यम् १ सू० (८ म० ४९ सू०) १ ऋ० । उ० आर्च्चि० २,१,१३,१ ।

वः—for यूयम् *nom. pl.*; the concise form वः is generally used for युष्मान् (*accus. pl.* of युष्मद्), युष्मभ्यम् (*dat. pl.*) and युष्माकम् (*gen. pl.*). But here it stands for यूयम्, often found in the Vedas. *Vide* : SV. I. 5 ; 21 ; 115.

सुराधसम्—राधः = धनम्, Ngh. 2. 10.—possessed of excellent wealth ; for etym. of राधस् *see* SV. I. 194.

मघवान्—the lord of wealth, a common name of Indra.

यथा विदे—a parenthetical clause often used in the Vedas, cf. 'इन्द्रमर्च यथा विदे', SV. I. 168, ṚV. viii. 69. 4 ; 'सोमो जैतस्य चेतति यथा विदे', ix. 106. 2.

जरितृभ्यः—जरितृ = स्तोतृ, an invoker, a singer of praise, Ngh. 3. 16 ; fr. rt. जॄ *to praise, to invoke*. *Vide* notes on जरन्ते, SV. I. 157.

शिक्षति—ददाति, gives ; it is read in the list of verbs mg. '*to give*' Ngh. 3. 20.

सहस्रेण—'thousand-fold'—*Grfth.*

---

नोधा ऋषिः ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १र २र
## तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
३ २ ३ २र ३ २ ३ १ २ ३ १ २
## अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥४॥२३६॥

तम् । वः । दस्मम् । ऋतिऽसहम् । वसोः । मन्दानम् । अन्धसः । अभि । वत्सम् । न । स्वसरेषु । धेनवः । इन्द्रम् । गीःऽभिः । नवामहे ॥ ४ ॥

भाष्यसारः । हे ऋत्विजः यजमानाश्च, दस्मम्—दर्शनीयं शत्रूणामुपक्षपयितारं वा, ऋतीषहम्—शत्रूणाम् अभिभवितारम्, वसोः—दुःखस्य विवासयितुः, अन्धसः—अन्नस्य पानेन, मन्दानम्—मोदमानम्, वः—युष्मत्सम्बन्धिनम्, तम् इन्द्रं स्वसरेषु—

गोष्ठेषु धेनवः वत्सं न—इव, यथा धेनवः वत्सं हम्बारवेण आह्वयन्ति तथा स्वसरेषु—दिवसेषु वयं गीर्भिः—स्तुतिभिः, नवामहे—अभिष्टुमः ॥ ४ ॥

(O priests and sacrificers,) We invoke with praises, every day, Indra the destroyer of enemies, the vanquisher of foes, delighting in the food or the libation (of soma juice) removing dismay, as the cows low to their calves in the pastures.—4.

**सा०-भा०।** 'दस्मम्' दर्शनीयम् 'ऋतीषहम्' ऋतयो बाधकाः शत्रवः तेषामभिभवितारम्; पुनः कीदृशम्? 'वसोः' वासयितुर्दुःखस्य विवासयितुः यद्वा वसोः पात्रे निवसतः, तादृशस्य 'अन्धसः' सोमलक्षणस्यान्नस्य पानेन 'मन्दानम्' मोदमानं 'वः' यष्ठ्यत्वेन युष्मत्सम्बन्धिनं तं तादृशमिन्द्रम्। 'गीर्भिः' स्तुतिलक्षणाभिर्वाग्भिः 'अभिनवामहे'—नु स्तवने, नु शब्दे,—अभिष्टुमः। कुत्र? 'स्वसरेषु'। अत्र यास्कः ( नि० ५,४ )—'स्वसराण्यहानि भवन्ति स्वयं सारीण्यपि वा स्वरादित्यो भवति स एनानि सारयतीति सूर्यनेतृकेषु दिवसेषु वयमभिष्टुमः अभितः शब्दयामः। तत्र दृष्टान्तः,—'वत्सं न' यथा धेनवो नवप्रसूता गावः स्वसरेषु सुष्ठु अस्यन्ते प्रेर्यन्ते गावोऽत्रेति स्वसराणि गोष्ठानि तेषु वत्समभिलक्ष्य शब्दयन्ति तद्वत् ॥ ४ ॥

४। ऋ० सं० ८ म० ८८ सू० १ ऋ०। उ० आर्चि० १,१,१३,१।

दस्मम्—'wondrous'—*Grfth*; 'fr. rt. दंस—accomplishing wonderful deeds, wonderful—Mon Wilms. S. E. Dict. p. 473, col. 1; in the sense of *beautiful, handsome*, it occurs in ṚV. iv. 1. 3; v. 31. 7. etc. Viv. derives fr. rt. दम् *to destroy*, 4. p. and explains—'the destroyer of enemies'.

ऋतीषहम्—subduing or conquering assailants or enemies. The word occurs also in ṚV. i. 64. 15; vi. 14. 4; viii. 45. 35;—68. 1. The word ऋति (hostile attack, fr. rt. ऋ *to go*) does not occur separately. ऋति—सह् क्विप्, *vide* 'नहिवृति०' Pāṇ. vi. 3. 116.

वसोः—adj. quals. अन्धसः, removing sorrow.—Sāy; 'excellent'—*Wils.*

मन्दानम्—rt. मन्द् *to be glad*—pres. pt. ( शानच् ). The word occurs several times in the ṚV. to mean—*exulting, being exhilarated.*

अन्धसः—अन्नस्य, Ngh. 2. 7; here refers to the soma-juice, the favourite beverage of Indra. For dr. and etym. *vide* our notes on the word, SV. 1. 155.

स्वसरेषु—all days, on every day; स्वसराण्यहानि भवन्ति स्वयं सारीण्यपि वा। स्वरादित्यो भवति स एनानि सारयति—*Svasarāṇi* means days, as they move of their own accord, or else *svar* means the sun, he causes them to move, Nir. 5. 4. The author of *Viv.* takes the word स्वसरेषु to mean 'in the sacrificial houses'

(यागगृहेषु); स्वसराणि is found among the synonyms of house, Ngh. 3. 4. Perhaps fr. Sva+sara—one's own resort—one's own place, home. Sāyaṇa also assigns another mg.—'*the pastures*' (see the com. above).

---

कलिः प्रगाथ ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
**तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।**
३ १र २र ३ १ २ ३ २ ३ २उ ३ २ ३ १ २
**बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥५॥२३७॥**

तरःऽभिः । वः । विदत्ऽवसुम् । इन्द्रम् । सऽबाधः । ऊतये । बृहत् । गायन्तः । सुतऽसोमे । अध्वरे । हुवे । भरम् । न । कारिणम् ॥ ५ ॥

भाष्यसारः । हे ऋत्विजः, सबाधः—बाधासहिताः ऋत्विजो वा, सबाध इति बहुवचनान्तस्य पदस्य ऋत्विङ्नामसु रूढत्वात्, वः—यूयम्, ऊतये—रक्षणाय, तरोभिः—वेगवद्भिरश्वैरुपेतं वेगैः बलैरित्यर्थः वा उपेतम्, विदद्वसुम्—धनदातारम्, इन्द्रम्, बृहत्—एतत्संज्ञकं साम, गायन्तः सन्तः परिचरत। सुतसोमे अध्वरे—सोमयागे अहं च तम् इन्द्रं हुवे—आह्वयामि, भरं न कारिणम्—हितकारिणं भर्त्तारं कुटुम्बपरिपालकं यथा परिजना आह्वयन्ति तद्वत् ॥ ५ ॥

(O priests,) Being in distress (or impeded by obstructions) adore Indra, the bestower of wealth, endowed with strength (or attended with swift horses), by singing Bṛhat Sāman. I invoke Indra at the sacrifice where the soma is pressed out, like (the members of a house) the benovolent maintainer.—5.

**सा०-भा० ।** हे ऋत्विजः! 'वः' यूयं 'तरोभिः' वेगवद्भिरश्वैरुपेतं वेगैरेव वा 'विदद्वसुम्' वेदयद्वसुं धनावेदकम् 'इन्द्रम्' 'सबाधः' बाधासहिताः 'ऊतये' रक्षणाय 'बृहत्' सामैतत्संज्ञकं 'गायन्तः' सन्तः परिचरतेति शेषः । कुत्रेत्युच्यते—'सुतसोमे' अभिषुतसोमके 'अध्वरे' यज्ञे सोमयागे। अहं च तमिन्द्रं 'हुवे' आह्वयामि । कमिव? 'भरं न' भर्त्तारं कुटुम्बपोषकं 'कारिणम्' हितकरणशीलं यथा, स्वहितकरणायाह्वयन्ति पुत्रादयः तद्वत् तथाभूतमिन्द्रं हुवे इति ॥ ५ ॥

५ । ऋ० सं० ८ म० ६६ सू० १ ऋ० । उ० आर्चि० १, १, १४, १ ।

तरोभिः—तरस्=बलम्, Ngh. 2. 9;—strength, energy.

विदद्वसुम्—granting wealth.

सबाधः—according to *Viv*, the word is here taken in the sense of 'priests' as सबाधः *in pl.* is read among the syns. of ऋत्विक्, Ngh. 3. 18.

हुवे—Prof. Ludwig takes हुवे as equivalent to the I. pers, pl. Grith. follows him, and translates—'we priests invoke'.

भरं न कारिणम्—Viv. reads 'भरे न कारिणम्' and takes 'भरे' in the sense of war, Ngh. 2. 17 and 'कारिणम्' to mean—a combatant (सग्रामकारिणम्), a rival hero, and explains—'as in the war a hero calls his rival with great regard, so do the priests most reverentially invoke Indra.

बृहत्—Name of various Sāmans composed in the metrical form Bṛhatī (also with Āgneyam, Bharadvājasya, Bhāradvājan, Vāmadevyam, Sauram).

---

वशिष्ठ ऋषिः।

३ २ ३ १ २　३ २ ३ १ २　३ २
तरणिरित्सिषासति वाजं पुरन्ध्या युजा ।
३ १ २ ३ १ २　३ २ ३ १र २र ३ १ २
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥६॥२३८॥

तरणिः । इत् । सिषासति । वाजम् । पुरन्ध्या । युजा । आ । वः । इन्द्रम् । पुरुऽहूतम् । नमे । गिरा । नेमिम् । तष्टा । इव । सुऽद्रुवम् ॥ ६ ॥

भाष्यसारः। तरणिरित्—त्वरावान् अनलस एव पुरुषः, युजा—सहायभूतया, पुरन्ध्या—महत्या धिया, वाजम्—अन्नम्, सिषासति—संलभते। पुरुहूतम् बहुभिराहूतम्, इन्द्रं गिरा—स्तुत्या, हे यजमानाः, वः—युष्मदर्थम्, आ नमे—अभिमुखीकरोमि। तष्टा—वर्धकिः सूतः सूत्रधर इत्यर्थः, सुद्रुवम्—सुदृढकाष्ठनिर्मितं नेमिं चक्रवलयमिव,—यथा सूत्रधरः काष्ठनेमिम् आनमयति तद्वत् ॥ ६ ॥

The smart active man gains food with the help of his supreme wit. For you, (O sacrificers), I bend down, with songs of praise, Indra invoked by many, as a carpenter does the rim of a wheel made of strong wood.—6.

**सा०-भा०।** 'तरणिरित्' युद्धादौ कर्मणि त्वरित एव पुमान् 'पुरन्ध्या' महत्या धिया 'युजा' सहायभूतया 'वाजम्' अन्नं 'सिषासति' सम्भजते। 'पुरुहूतम्' बहुभिराहूतम् 'इन्द्रम्' 'गिरा' स्तुत्या हे यजमानाः! 'वः' युष्मदर्थम् 'आ नमे' तमभि-

मुखं कुर्वे । तत्र दृष्टान्तः,—'नेमिम्' चक्रस्य बलयं 'सुद्रुवम्' शोभनदारुं 'तष्टेव' यथा वर्धकिः दारुनेमिमानमयते तद्वदित्यर्थः ॥ ६ ॥

६ । ऋ० सं० ७ म० ३२ सू० २० ऋ० । ṚV. reads 'सुद्र्वम्' instead of 'सुद्रुवम्' । उ० आर्चि० २, २, १३, १ ।

तरणिः—moving forward (as the sun, the word often mg. the sun.)—quick, untired, energetic, (AV. xiii. 2. 4. & 36). *Vide* our notes on तरणिम्, SV. I. 204. Wils. renders the first line as—'the prompt offerer of praise ( तरणिः ) with solemn rites combined ( पुरन्ध्या युजा ), acquires food.'

सिषासति—des. ( सनन्त ) of rt. सन् *to gain*, 8. p.

पुरन्ध्या युजा—Grfth renders 'with plenty (*the deity Purandhi*) for his true ally'.

सुद्रुवम्—*stem* सुद्रू—accus. sg ; made of strong wood.

---

मेधातिथिर्ऋषिः ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
३ १ २ ३ १ २ ३ २ १ २ ३ १ २
आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवन्तु ते धियः ॥७॥२३९॥

पिब । सुतस्य । रसिनः । मत्स्व । नः । इन्द्र । गोऽमतः । आपिः । नः । बोधि । सधऽमाद्ये । वृधे । अस्मान् । अवन्तु । ते । धियः ॥ ७ ॥

भाष्यसारः । हे इन्द्र, रसिनः—रसयुक्तस्य, गोमतः—गव्यक्षीरमिश्रितस्य, नः—अस्मदीयस्य, सुतस्य अभिषुतस्य अभिषुतं सोममित्यर्थः—कर्मस्थाने षष्ठी, पिब । ततो मत्स्व—हृष्टो भव । अपि च सधमाद्ये—यज्ञे, त्वम् आपिः—बन्धुः सन्, नः—अस्माकम्, वृधे—वर्धनाय, बोधि—बुध्यस्व । ते—तव, धियः—अनुग्रहबुद्धयः, अस्मान् अवन्तु—रक्षन्तु ॥ ७ ॥

Drink of our delicious pressed out soma juice and rejoice with the draught mixed with milk, at the sacrifice where the gods rejoice together ; as our friend, be wakeful to our prosperity, may thy favourable disposition guard us.—7.

सा०-भा० । हे 'इन्द्र' ! 'रसिनः' रसवतः । 'गोमतः' गोविकारैः पयः-प्रभृतिभिः श्रय(प ?)णद्रव्यैर्युक्तस्य 'नः' अस्मदीयस्य 'सुतस्य' अभिषुतस्य—क्रियाग्रहणं

कर्त्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। ईदृशं सोमं 'पिब' पीत्वा च 'मत्स्व' तृप्तो भव। अपि च 'सधमाद्ये' सह माद्यन्ति देवा अत्रेति सधमाद्यो यज्ञः, तस्मिन सहमादयितव्ये यज्ञे त्वम् 'आपिः' आपयिता 'बन्धुः' सन् 'नः' अस्माकं 'वृधे' वर्धनाय 'बोधि' बुध्यस्व। 'ते' त्वदीयाः 'धियः' बुद्धयः अनुग्रहात्मिकाः अस्मान् स्तोतॄन् 'अवन्तु' रक्षन्तु ॥ ७ ॥

७। ऋ० सं० ८ म० ३ सू० १ ऋ०। ṚV. reads 'सधमाद्यः' instead of 'सधमाद्ये'। उ० आर्चि० ६, २, १६, १।

पिबा—for पिब, drink ; the final vowel is lengthened by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135.

गोमतः—Sāyaṇa explains the word in ṚV. viii. 82. 6, where it occurs as an adj. to सोमस्य—'as mixed with the cow's milk'.

सधमाद्ये—at the sacrifice where the gods are exhilarated together or along with the sacrificers. सह is changed to सध by 'सधमादस्थयोश्छन्दसि' Pāṇ. vi. 3. 96. सह—together, jointly.

आपिः—a friend ; fr. rt. आप् *to obtain*, caus. *lit.* causing to gain wealth or benefit.

वृधे—for our welfare, to our weal. धियः—thy good intentions.

---

भर्ग ऋषिः।

२उ ३ १ २ ३ २उ ३ १ २
त्वं ह्येहि चेरवे विदा भगं वसुत्तये।
१ २ २ १ २ १ २ ३ २ ३ १ २
उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥८॥२४०॥

त्वम्। हि। आ। इहि। चेरवे। विदाः। भगम्। वसुत्तये। उत् वावृषस्व। मघवन्। गोऽइष्टये। उत्। इन्द्र। अश्वम् इष्टये ॥ ८ ॥

भाष्यसारः। हे इन्द्र, त्वं हि वसुत्तये—धनदानाय, एहि चेरवे—परिचर्याकारिणे मह्यम्, भगम्—धनम्, विदाः—देहि। हे मघवन्, गविष्टये—गाम् इच्छते, मह्यम् उद्वावृषस्व—गाम् अत्यर्थम् आसिञ्चस्व भूरिशो देहि, अश्वमिष्टये—अश्वान् इच्छते, मह्यम्, अश्वान् उद्वावृषस्व—भृशं देहि ॥ ८ ॥

Thou, come to (me) the worshipper, give me wealth to make me rich. Shower in abundance, Maghavan, cows to me who long for cows, shower horses to me longing for horses.—8.

**सा०-भा०।** हे 'इन्द्र'! 'त्वं हि' त्वं खलु सामर्थ्याद्दातेति गम्यते। अत 'एहि' आगच्छ। आगत्य च 'चेरवे' परिचरते मह्यं 'भगम्' भजनीयं धनं विद्राः लभस्व दत्स्व। किमर्थम्? 'वसुत्तये' अस्माकं वसुदानाय। हे 'मघवन्'! धनवन्निन्द्र! 'गविष्टये' गाः इच्छते मह्यम् 'उद्वावृषस्व' आसिञ्चस्व गामिति शेषः। तथा, हे इन्द्र! 'अश्वमिष्टये' अश्वैषणावते मह्यम् अश्वान् 'उद्वावृषस्व' आसिञ्चस्व देहीत्यर्थः॥ ८॥

८। ऋ० सं० ८ म० ६१ सू० ७ ऋ०। उ० आर्चि० ७, ३, ४, १।

चेरवे—to the worshipper; dat. sg. of the *stem* चेरु, drvd. fr. rt. चाय्, behaving respectfully, worshipping. This word occurs only here, and in the ṚV. rfd. to here; St. Petersb. Dict. gives it as—*begehend* (*ein heiliges Werk*). उद्वावृषस्व = उत्—rt. वृष्—यङ्लुक्—लोट्, 2. sg. anomalously formed.

गविष्टये, अश्वमिष्टये—to one desiring cows, and desiring horses, the word अश्वमिष्टि also occurs in ṚV. ii. 6. 2—mg. differently.

वसुत्तये—for वसुदत्तये,—dat. sg. of वसुत्ति (the same as वसुदत्ति, cf. भगत्ति, नघत्ति) for granting wealth; also occurs in ix. 44. 6.

---

वशिष्ठ ऋषिः।

१ २र ३ २ ३ १र २र ३ १ २
**न हि वश्चरमं चन वशिष्ठः परिमंसते।**
३ १ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
**अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः॥६॥२४१॥**

न। हि। वः। चरमम्। चन। वशिष्ठः। परिऽमंसते। अस्माकम्। अद्य। मरुतः। सुते। सचा। विश्वे। पिबन्तु। कामिनः॥ ९॥

भाष्यसारः। हे मरुतः, वशिष्ठनामा ऋषिः वः—युष्माकं मध्ये, चरमं चन—निकृष्टमपि, न परिमंसते—अपमन्यते, किन्तु सर्वान् एव युष्मान् तुल्यबहुमानेन स्तौति। अद्य अस्माकं सोमे सुते—अभिषुते सति, विश्वे—सर्वे मरुतः, कामिनः—सोमं कामयमानाः, सचा—एकत्र मिलिताः सन्तः, पिबन्तु॥ ६॥

(O Maruts,) Vaśiṣṭha does not ignore even the humblest of you all; to-day our soma-juice being pressed out, let all the Maruts longingly drink (of it) together.—9.

**सा०-भा०।** हे मरुतः! वशिष्ठ ऋषिः 'वः' युष्माकं मध्ये 'चरमं चन' अवरमपि 'न हि परिमंसते' वर्जयित्वा न स्तौति किन्तु सर्वानेव युष्मान् स्तौतीत्यर्थः। 'अद्य' अस्मिन् दिने 'अस्माकम्' अस्मदीये 'सुते' सोमे अभिषुते सति मरुतः 'कामिनः' सोमं कामयमानाः 'विश्वे' सर्वे 'सचा' सङ्गत्य 'पिबन्तु' पानं कुर्वन्तु ॥ ६ ॥

६। ऋ० सं० ७ म० ५६ सू० ३ ऋ०। ṚV. has **'पिबत'** (imp. 2. pl.—O Maruts, drink all of you) instead of **'पिबन्तु'** the SV. text. The Maruts are the deities of the verse, as it is addressed to them.

चन—*indec.*—*not even* ; this particle is placed after the word to which it gives emphasis ; in Vedic language, it is generally but not always, found without any other neg. particle, whereas in the later language another neg. is usually added, cf. 'आपश्चन प्र मिनन्ति व्रतं वाम्'—*not even* the waters violate your ordinance.

परि-मंसते—rt. मन्—Ved. subj. (लेट्)—does not overlook, neglect or slight. सिप् in लेट्।

सचा—*Indec.*—together ; *vide* our notes on the word, SV. 1. 115, 148.

———

प्रगाथः काण्व ऋषिः।

१ २ ३ १ २र ३ १ २ ३ १ २
**मा चिदन्यद्वि शंसत सखायो मा रिषण्यत।**
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २
**इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत॥१०॥२४२॥**

मा। चित्। अन्यत्। वि। शंसत। सखायः। मा। रिषण्यत। इन्द्रम्। इत्। स्तोत। वृषणम्। सचा। सुते। मुहुः। उक्था। च। शंसत॥ १०॥

भाष्यसारः। प्रगाथ आत्मीयान् ऋत्विज आह—हे सखायः—सखिभूताः स्तोतारः, अन्यत्—इन्द्रादन्यमुद्दिश्य स्तोत्रं मा चिद् विशंसत—मैव उच्चारयत। मा रिषण्यत—इन्द्रादन्यं प्रस्तूय आत्मनां हिंसितारो न भवत वृथा आत्मनां क्षयं न विधत्त, सुते—सोमे अभिषुते, वृषणम्—कामानां वर्षितारम्, इन्द्रमित्—इन्द्रमेव, सचा—सह मिलिता भूत्वा, स्तोत—स्तुत, उक्था—उक्थानि इन्द्रविषयाणि शस्त्राणि च यूयं मुहुः—पुनः पुनः, शंसत—उच्चारयत॥ १०॥

O friends, do not speak other praise (than that of Indra), do not cause your own destruction by doing so. The soma being pressed out, pray together to Indra, the showerer of blessings; sing (to Indra) ever and anon.—10.

**सा०-भा०।** हे 'सखायः' समानख्यानाः स्तोतारः! इन्द्रस्तोत्राद् 'अन्यत्' स्तोत्रं 'मा चिद्विशंसत' मैवोच्चारयत। 'मा रिषण्यत' मा हिंसितारो भवत। अन्यदीयस्तोत्रोच्चारणेन वृथोपक्षीणा भवत। 'सुते' अभिषुते सोमे 'वृषणम्' कामानां वर्षितारम् 'इन्द्रमित्' इन्द्रमेव, हे प्रस्तोत्रादयः! 'सचा' सह सङ्घीभूय 'स्तोत' स्तुत। 'उक्था च' उक्थानि शस्त्राणि चेन्द्रविषयाणि यूयं 'मुहुः' पुनः पुनः 'शंसत' उच्चारयत ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य प्रथमः खण्डः। तृतीयप्रपाठकस्य च प्रथमार्द्धे पञ्चमी दशतिः ॥

१०। ऋ० सं० ८ म० १ सू० १ ऋ०। उ० आर्चि० ६, १, ५, १।

रिषण्यत—orig. the rt. is 'रिष्' *to injure*, from which रिषण्य is derived; next we get the nominal vb. p. रिषण्यति; the word in question is the form in imp. (लोट्), 2. pl; mg.—do not be injurious, ruinous or hurtful to yourselves; occurs also in viii. 20. 1.

सचा—see notes on SV. 1. 241. मुहुः—repeatedly.

---

अथ तृतीयाध्यायस्य द्वितीयः खण्डः। तृतीयप्रपाठकस्य च द्वितीयार्द्धे प्रथमा दशतिः।

आङ्गिरसः पुरुहन्मा ऋषिः।

१ ३ १र २र २ २ ३ १ २ ३ १ २
**नकिष्टं कर्मणा नशद्यश्चकार सदावृधम्।**
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र
**इन्द्रं न यज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ १ ॥ २४३ ॥**

नकिः। तम्। कर्मणा। नशत्। यः। चकार। सदाऽवृधम्। इन्द्रम्। न। यज्ञैः। विश्वऽगूर्तम्। ऋभ्वसम्। अधृष्टम्। धृष्णुम्। ओजसा ॥१॥

भाष्यसारः। तम्—यजमानम्, कर्मणा—हिंसादिकर्मणा, नकिः—नैव न कोऽपि वा, नशत्—व्याप्नोति अभिभवतीत्यर्थः, यः सदावृधम्—सततवृद्धिकरम्, विश्वगूर्त्तम्—सर्वैः स्तुत्यम्, ऋभ्वसम्—महान्तम्, ओजसा—बलेन, अधृष्टम्—परैरपराजितम्, धृष्णुम्—शत्रुधर्षणशीलम्, इन्द्रम् यज्ञैः चकार—अनुकूलं करोति ॥ १ ॥

No one can ever prevail, by (malicious) deed, upon him who by sacrifices, propitiates mighty, ever-prospering Indra, welcome to all, unassailable himself but assailer of enemies by force.—1.

**सा०-भा०।** 'तम्' यजमानं 'कर्मणा' हननादि-व्यापारेण 'नकिर्नशत्' नैव व्याप्नोति। यः 'इन्द्रम्' 'चकार' इन्द्रमेवानुकूलं 'यज्ञैः' साधनैः कृतवान्। कीदृशमिन्द्रम्? 'सदावृधम्' सर्वदा वर्धकम्। 'विश्वगूर्त्तम्' सर्वैः स्तुत्यम्। 'ऋभ्वसम्' महान्तम् 'ओजसा' बलेन 'अधृष्टम्' अन्यैर्धर्षितुमशक्यम्। 'धृष्णुम्' शत्रूणां धर्षकम्॥

१। ऋ० सं० ८ म० ७० सू० ३ ऋ०। ṚV. reads 'धृष्णोजसम्' instead of 'धृष्णुमोजसा'। उ० आर्चि० ४, २, ८, १।

नकिः—no one, not any one, cf. 'नकिरिन्द्र त्वदुत्तरः' *no one, O Indra, is superior to thee*, ṚV. iv. 30. 1, SV. 1. 203. 'यथा क्रमीणां नकिरुच्छिष्यातै'—*that none of the worms shall be left*. (AV. ii. 31. 3); sometimes नकिः is used as a negative adv. mg.—*never*, e. g., 'यस्य शर्मन् नकिर्देवा वारयन्ते न मर्त्ताः'—*in whose protection gods never hinder him nor mortals*, ṚV. iv. 17. 12. 'नकि देवाः इनीमसि' SV. 1. 176. (ṚV. नकिर्देवा मिनीमसि—x. 134. 7)—*never, or not a bit, O gods, do we injure you.*

नशत्—fr. rt. नश् *to attain*, Ngh. 2. 18. लेट् (Ved. subj). Nobody overcomes him.

चकार—perf. (लिट्) is used for pres. (लट), *vide* Whitney. Para 823. 'छन्दसि लुङ्-लङ्-लिटः' Pāṇ. iii. 4. 6, here means '*propitiates*'.

Prof. Wils. renders—'नकिष्टं कर्मणा नशत्'—as 'he cannot be approached by any action'.

विश्वगूर्त्तम्—approved by all; welcome or agreeable to everybody. गूर्त्त (Lat. gratus) is drvd. fr. rt. गुर्, *to raise, lift up* cl. 6—aff. क्त (Pāṇ. viii. 2. 61). गूर्त्तमनस्—with grateful mind, ṚV. vi. 63. 4. गूर्त्तवचस्—speaking agreeably, x. 61. 1. गूर्त्तश्रवस्—one of agreeable praise—i. 61. 5; 122. 10. गूर्त्तवसु—one whose treasures are welcome, x. 132. 1.

सदावृधम्—'giver of increasing strength'—*Wils*; it may be better rendered—'promoters of prosperity, ever-prosperer.

ऋभ्वसम्—(ऋभ्व, ऋभ्वन्, ऋभ्वस्—all of the same sense, fr. rt. रभ्)—clever, skilful, prudent,—used often as an epithet of Indra, Tvaṣṭṛ, Agni, etc.

— ——

मेधातिथिर्मेध्यातिथिश्च ऋषी* ।

२ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्त्ता विह्रुतं पुनः ॥२॥२४४॥

यः । ऋते । चित् । अभिऽश्रिषः । पुरा । जत्रुऽभ्यः । आऽतृदः । सम्ऽधाता । सम्ऽधिम् । मघऽवा । पुरुऽवसुः । निःऽकर्त्ता । विऽह्रुतम् । पुनरिति ॥ २ ॥

भाष्यसारः । **यः—इन्द्रः, अभिश्रिषः—सन्धानद्रव्यात्, ऋते चित्—विनाऽपि, जत्रुभ्यः—ग्रीवाभ्यः, आतृदः—आरुधिरनिस्रवणात्, पुरा—पूर्वम्, सन्धिं सन्धाता—संयोजयिता भवति । मघवा—धनवान्, पुरुवसुः—बहुधनः, स इन्द्रः विह्रुतम्—विच्छिन्नं तम्, पुनः निष्कर्त्ता—संस्कर्त्ता संयोजयिता भवति ॥ २ ॥**

Maghavan, the lord of abundant wealth, the healer of the dissevered parts, who, even without ligament, closes up the wound before blood is shed from the neck.—2.

**सा०-भा० ।** 'यः' इन्द्रः 'अभिश्रिषः' अभिश्लिषः अभिश्लेषणात् सन्धानद्रव्यात् 'ऋते चित्' विनापि 'जत्रुभ्यः' ग्रीवाभ्यः सकाशात् 'आतृदः' आतर्दनात् आरुधिरनिस्रवणात् 'पुरा' पूर्वमेव 'सन्धिम्' सन्धातव्यं तं 'सन्धाता' संयोजयिता भवति । 'मघवा' धनवान् 'पुरुवसुः' बहु-धनः स इन्द्रः 'विह्रुतम्' विच्छिन्नं तं 'पुनः' 'निष्कर्ता' संस्कर्ता भवति ॥ २ ॥

२ । ऋ० सं० ८ म० १ सू० १२ ऋ० । ṚV. has **'इष्कर्त्ता'** for **'निष्कर्त्ता'** ।

On the ceremonial application of this mantra, Gobhila has a Sūtra (Gṛhya, ii. 4.3.), which runs thus :—'अक्षभङ्गे नद्धविमोक्षे यानविपर्यासेऽन्यासु चापत्सु यमेवाग्निं हरन्ति तमेवोपसमाधाय व्याहृतिभिर्हुत्वाऽन्यद्द्रव्यमाहृत्य—**'य ऋते चिदभिश्रिषः'** इत्याज्यशेषेणाभ्यञ्जेत्'—*purp.*—when the cart, carrying the newly married couple, is broken or otherwise distressed, after oblations being made in the fire carried along, with *vyāhṛtis* ( भूः, भुवः, स्वः ), with the residue of the ghee the injured part of the cart is to be besmeared.

चित्—*Indec.* Acc. to *Viv*, used, here, as an expletive ( चिदिति पादपूरणः —वि० ), acc. to Mcdnll चित् is an enclitic participle frequently used to

* Ascribed to Pragātha—acc. to Viv.

emphasize the preceding word. It has often the sense—*even*, *vide* his Stu. Ved. Gram. para 80.

ऋते चित् अभिश्रिषः—'without even healing-materials.'—*Wils.*; 'without ligature'—*Grfth.*

जत्रुभ्यः—*m. pl.* the continuations of the vertebræ, collar bones and cartilages of the breast bones (16 are mentioned Ś. Br. xii. 2. 4. 11.) the word occurs also in AV. xi. 3. 10. VS. xxv. 8. Taṇḍya Br. ix. 10. 1. etc.

आतृदः—fr. rt. तृद्, *to pierce*, *to sever* (तृणत्ति, तृन्ते)।

पुरा जत्रुभ्य: आतृदः—Prof. Wilson translates 'before the flow of blood from the necks', and comments 'to what this alludes is not explained, but possibly it intends to describe the restoration of *Etaśa* Indra's favourite, wounded in his conflict with the sun', (the allusion is found in ṚV. viii. 1. 11). The translations of Langois, Benfey, Stevenson are very curious. According to Benfey and Stevenson, the meaning of the verse is—that Indra repaired his *vajra* (the thunderbolt), which had been injured in his combat with the demons.

विह्रुतम्—dislocated, dis-severed (part); once more only this word occurs in ṚV. viii. 20. 26. cf. 'इष्कर्त्ता विह्रुतं पुनः'। निष्कर्त्ता—the healer; dr. निः—rt. कृ *to set in order*, *to restore*, *to cure*.

सन्धाता सन्धिम्—the effecter of the re-union.

पुरुवसुः—this is a common epithet of Indra, *vide* SV. 1. 193; 1. 146.

---

मेधातिथिर्मेध्यातिथिश्च ऋषी ।

१ २ ३ २ ३ २ ३ २ ३ १ २र ३ १ २
आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ ३ ॥ २४५ ॥

आ । त्वा । सहस्रम् । आ । शतम् । युक्ताः । रथे । हिरण्यये । ब्रह्मऽयुजः । हरयः । इन्द्र । केशिनः । वहन्तु । सोमऽपीतये ॥३॥

भाष्यसारः । त्वा—त्वाम्, सहस्रम्—सहस्रसंख्याकाः, तथा शतम्—शतसंख्याकाश्च, हिरण्यये—सुवर्णमये, रथे युक्ताः ब्रह्मयुजः—ब्रह्मणा अस्मदीयस्तोत्रेण अस्मत्प्रदत्तहविषा वा युक्ताः, केशिनः—केसरयुक्ताः, हरयः—अश्वाः त्वाम् अस्मद्यज्ञं सोमपीतये—सोमपानाय, अवहन्तु—आनयन्तु ॥ ३ ॥

May the thousand, the hundred horses with long manes, yoked to thy golden car, attended with our prayer (or served with oblations) bring thee to drink the soma.—3.

**सा०-भा०।** हे 'इन्द्र'! 'त्वा' त्वां 'सहस्रम्' सहस्रसङ्ख्याका हरयस्त्वदीया अश्वाः 'आ वहन्तु' आ नयन्तु अस्मद्यज्ञम्। तथा 'शतम्' शतसङ्ख्याकाश्च भवदीया अश्वास्त्वामावहन्तु। यद्यपि द्वावेवास्य हरी, तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदनेकैरश्वैः कथं यातुं शक्यते? इत्यत आह— 'युक्ताः' इति। 'हिरण्यये' हिरण्मये स्वर्णविकारे हिरण्यशब्दाद्विकारार्थे विहितस्य मयटः 'ऋत्व्यवास्त्व्ये'त्यादौ मलोपो निपात्यते। तादृशे 'रथे' 'युक्ताः' सम्बद्धाः बहूनामश्वानां शीघ्रगमनाय रथे नियुक्तत्वात् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः। कीदृशा हरयः? 'ब्रह्मयुजः' ब्रह्मणा परिवृढेनेन्द्रेण युक्ताः, यद्वा ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः। 'केशिनः' केशाः ग्रीवायाम् उपरि वर्त्तमानाः सटाः तैर्युक्ताः। किमर्थमिन्द्रस्यावहनम्? तत्राऽऽह 'सोमपीतये' सोमपानाय। यथाऽस्मदीयं सोमं पिबेत् तथा आवहन्त्वित्यर्थः॥ ३॥

३। ऋ० सं० ८ म० १ सू० २४ ऋ०। उ० आर्चि० ६, २, ५, १।

हरयः—Although Indra has only two horses ( हरी इन्द्रस्य···Ngh. I. 15. *vide* SV. I. 150; I. 193). Sāyaṇa remarks that these two horses have numerous manifestations which are, here, mentioned as a thousand and a hundred.

हिरण्यये—made of gold; हिरण्य is derived from rt. हर्य ( गतिकान्त्योः, here *to glitter*, I. p.) with affix कन्यन् by 'हर्यतेः कन्यन् हिर च' uṇ. v. 44. Next हिरण्य—मयट् (in the sense of *transformed from*, *made of*), म of मयट् drops anomalously by 'ऋत्व्यवास्त्व्य०' Pāṇ. vi. 4. 175.

ब्रह्मयुजः—ब्रह्म means either 'prayer' or 'oblation'; the compd. means harnessed by prayer (i. e., bringing Indra in response to prayer)—said of his horses.

---

विश्वामित्र ऋषिः।

२ ३ १ २ ३ १ २ ३ २ ३ १ २

**आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः।**

३ २ ३ १ २ ३ २उ ३ २उ ३ १ २ ३ १ २

**मा त्वा केचिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि॥४॥२४६॥**

आ। मन्द्रैः। इन्द्र। हरिऽभिः। याहि। मयूररोमऽभिः। मा। त्वा। के। चित्। निऽयेमुः। इत्। न। पाशिनः। अति। धन्वऽइव। तान्। इहि ॥४॥

भाष्यसारः। हे इन्द्र, मन्द्रैः—समुल्लसितैः, मयूररोमभिः—मयूरपुच्छतुल्यविचित्र-कोमलकेसरयुक्तैः, हरिभिः—अश्वैर्युक्तस्त्वम् धन्व इव मरुभूमिमिव, यथा पान्थाः मरुभूमिं शीघ्रमतिक्रामन्ति, तद्वत् शीघ्रं आ याहि--आगच्छ। केचित् इत् पाशिनः न—व्याधा इव, केचनापि जनाः त्वा—त्वाम्, मा नियेमुः—न निरुद्धं कुर्युः ॥ ४ ॥

Come hither, (in haste) as travellers cross a desert, Indra, with thy merry horses having hair like peacock's plumes; let no persons restrain thy course, as do the fowlers the birds.—4.

**सा०-भा०।** विश्वामित्रो यथार्थमिन्द्रमाह्वयति। हे 'इन्द्र'! 'मन्द्रैः' मादयितृभिः 'मयूररोमभिः' मयूररोमसदृशरोमयुक्तैः 'हरिभिः' अश्वैरुपेतस्त्वम् 'आयाहि' यज्ञं प्रत्यागच्छ। केचिदपि जनाः 'त्वा' त्वां 'मा नियेमुः' मा नियच्छन्तु। गमनप्रतिबन्धं मा कुर्वन्तु इत्यभिप्रायः। तत्र दृष्टान्तः—'पाशिनो न' पाशिनः इव, यथा पाशहस्ता व्याधाः पक्षिणं नियच्छन्ति तद्वन्मा नियच्छन्तु। किञ्च, 'धन्वेव' यथा पान्थाः धन्व मरुदेशं शीघ्रमतिगच्छन्ति तद्वद्गमनप्रतिबन्धकारिणस्तानतीत्य शीघ्रम् 'एहि' आगच्छ ॥ ४ ॥

४। ऋ० सं० ३ म० ४५ सू० १ ऋ०। उ० आर्चि० ८, ३, ३, १।

मन्द्रैः—pleasant, agreeable, charming.

मयूर-रोमभिः—peacock-haired (said of Indra's horses). The tawny horses of Indra with manes like peacock's feathers are the clouds with golden skirts.

धन्व इव—as if in a desert, *stem* धन्वन्; often found in compds. *viz.*, धन्वग, धन्वचर—going in a desert, Ṛ.V. v. 36. 1; धन्वच्युत्—i. 168. 5. धन्वतरुः—a desert tree, a kind of soma plant.

---

गौतमो गोतमो वा ऋषिः।

३ १र २र ३ १ २ ३ १ २
त्वमङ्ग प्रशंसिषो देवः शविष्ठ मर्त्यम्।
२उ ३ १ २ ३ २ ३ १ २ ३ १ २
न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥५॥२४७॥

त्वम् । अङ्ग । प्र । शंसिषः । देवः । शविष्ठ । मर्त्यम् । न । त्वत् । अन्यः । मघऽवन् । अस्ति । मर्डिता । इन्द्र । ब्रवीमि । ते । वचः ॥५॥

भाष्यसारः । अङ्ग—हे, शविष्ठ—बलिनां श्रेष्ठ, इन्द्र, देवस्त्वं मर्त्यम्—तव स्तोतारं जनम् , प्रशंसिषः—प्रशस्तं करोषि बहुमन्यसे। हे मघवन् इन्द्र, त्वदन्यः—त्वत्तोऽन्यः कोऽपि मर्डिता—सुखयिता, न अस्ति। अतः ते--तुभ्यम् इदं वचः स्तुतिरूपम्—ब्रवीमि—उच्चारयामि ॥ ५ ॥

O mightiest (Indra), thou, the resplendent, dost favour the mortal (who adores thee); there is no other giver of bliss than thyself, so, Indra, I say thy laud.—5.

**सा०-भा०।** अङ्गेत्यभिमुखीकरणे। 'अङ्ग' 'शविष्ठ'! हे बलवत्तम! इन्द्र! 'देवः' द्योतमानस्त्वं 'मर्त्यम्' मरणधर्माणं त्वां स्तुवन्तं पुरुषं 'प्रशंसिषः' सम्यगनेन स्तुतमिति प्रशंस। हे 'मघवन्'! धनवन्! 'इन्द्र'! 'त्वदन्यः' त्वत्तोऽन्यः कश्चित् 'मर्डिता' सुखयिता नास्ति। अतः कारणात् तुभ्यमिदं स्तुतिलक्षणं 'वचः' 'ब्रवीमि' उच्चारयामि ॥ ५ ॥

५। ऋ० सं० १ म० ८४ सू० १९ ऋ०। उ० आर्चि० ८, ३, ५, १।

अङ्ग—*Indec.* A particle used in addressing or inviting attention.

शविष्ठ *voc.*—the word शवम् is the syn. of strength (बलम्), Ngh. 2. 9. अतिशयेन शवस्वी—शविष्ठः, इष्ठनि विन्मतोर्लुक्। 'टेरिति टिलोपः'।

मर्डिता—fr. rt. मृड्—सुखने, *to make happy*, मृड्—aff. तृच्, इट् is added; for the use of this rt. cf. 'यदिन्द्र मृडयासि नः' SV. I. 173; for further uses, *vide* notes thereon.

प्रशंसिषः—प्र—rt. शंस्—लेट् (Ved. subj.) 2. sg. *see* प्रशंसिषम् SV. I. 204. शन्स् स्तुतौ लेटि सिप्यडागमः। सिब्बहुलं लेटीति सिप् तस्यार्धधातुकत्वादिडागमः।—Sāy.'s addl. notes in his com. on Ṛ V. verse.

---

नृमेधः पुरुमेधश्च ऋषी*।

१ २ ३ १ २ ३ १ २र ३ १ २
त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः।
२ ३ १ २ ३ २उ ३ २ ३ १ २ ३ १ २
त्वं वृत्राणि हंस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः॥ ६॥ २४८॥

* According to *Viv.*—ascribed to 'Purumedha' only.

त्वम् । इन्द्र । यशाः । असि । ऋजीषी । शवसःऽपतिः । त्वम् । वृत्राणि । हंसि । अप्रतीनि । एक । इत् । पुरू । अनुत्तः । चर्षणीऽधृतिः ॥६॥

भाष्यसारः । हे इन्द्र, त्वं शवसस्पतिः—बलस्वामी, ऋजीषी—अभिषुतसोमपाता यशाः—यशस्वी, असि—भवसि. अप्रतीनि—अप्रधर्षणीयानि, पुरू—पुरूणि बहूनि, वृत्राणि—आवरकान् शत्रून्, अनुत्तः—अखण्डितः, चर्षणीधृतिः—मनुष्याणां यजमानानामित्यर्थः पालकः, एक इत्—एक एव, हंसि प्रहरसि ॥ ६ ॥

O Indra, thou art the renowned lord of power, recipient of the libation of the effused soma, the cherisher of men, thou, invincible as thou art, alone smitest down the irresistible obstucting enemies.—6.

**सा०-भा० ।** हे 'इन्द्र'! 'शवसस्पतिः' बलस्य पालयिता 'ऋजीषी' ऋजीषम् उपार्जितोऽभिषुतः सोमः, तद्वान् 'त्वम्' 'यशाः' यशस्वी 'असि' भवसि । कथमस्य यशस्वित्वम् तदाह । 'अप्रतीनि' बलिभिरप्यप्रतिगतानि 'पुरू' पुरूणि 'शेश्छन्दसि बहुलम्' ( पा० ६, १, ७० ) इति शेर्लोपः बहूनि 'वृत्राणि' रक्षांसि 'अनुत्तः' न केनापि प्रेरितः, 'चर्षणीधृतिः' चर्षणीनां यजमानमनुष्याणां धारकः । 'एक इत्' असहाय एव त्वं 'हंसि' सम्प्रहरसि । अत एवास्य यशस्वित्वम् ॥ ६ ॥

६ । ऋ० सं० ८ म० ९० सू० ५ ऋ० । R̥V. reads **'शवसस्पते'** (*voc*). instead of **'शवसस्पतिः'** *nom.* ; (2) **'अनुत्ता'** (*adj. to* **वृत्राणि**) ; (3) **'चर्षणीधृता'** ( **वज्रेण** ) instead of **'अनुत्तश्चर्षणीधृतिः'** (*adj. to* **त्वम्** ) । **उ० आर्चि० ६, २, १२, १ ।**

ऋजीषी—the possessor of the soma ; *lit.* receiving the residue of soma or the juice produced by the third pressure of the plant ; name of Indra and of the Maruts, as they receive soma juice as their beverage. ऋजीषम्—(rt. अर्जं un. iv. 28. or fr. rt. ऋज् *to expel, to extract juice*), the sediment or residue of soma ; or the soma plant after the juice has been pressed out ; AV. ix. 6. 16, VS. xix. 72. Ts. vi.—here *rfs.* simply *to* the extracted soma juice—Sāy.

वृत्राणि—*vide* our notes on the word, SV. I. 4. पुरू—पुरूणि, Pāṇ. vi. 1. 70.

शवसस्पति.—शवस is strength, Ngh. 2. 9 ; the 6th. case of the first part of the compd. is not elided by 'षष्ठ्याः पतिपुत्र०' Pāṇ. viii. 3. 53.

अप्रतीनि—अप्रतिगतानि, resistless, adj. to वृत्राणि ; whom none else can withstand or turn away.

चर्षणीधृति —चर्षणी is a syn. of मनुष्य (man), Ngh. 2. 3 ; also *vide* our notes on चर्षणीनाम्, SV. I. 144 ;—guardian of mankind, granter of protection to men.

अनुत्तः—'अखण्डितः'—Viv ; परैरनभिभूतः—Sāy. ; irresistible, not cast down, invincible ; cf. अनुत्तमन्यु—of irresistible wrath (*rfs. to* Indra), Ṛ̣V. vii. 31. 12 ; viii. 6. 35 ; viii. 96. 19.

---

मेधातिथिर्मेध्यातिथिर्वा ऋषिः ।

२ ३ २३ १ २ ३ १ २ ३क २र ३ २
**इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।**
१ २र ३ ३ १ २ ३ २ ३ १ २ ३ १ २
**इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥७॥२४६॥**

इन्द्रम् । इत् । देवतातये । इन्द्रम् । प्रयति । अध्वरे । इन्द्रम् । सम्ऽईके । वनिनः । हवामहे । इन्द्रम् । धनस्य । सातये ॥७॥

भाष्यसारः । **देवतातये—यज्ञे यज्ञस्य प्रारम्भे इत्यर्थः, इन्द्रमित्—इन्द्रमेव, हवामहे—आह्वयामहे, अध्वरे—यज्ञे, प्रयति—प्रसरति सति, यज्ञस्य मध्यभागे, तथा समीके—सम्पूर्णे यागे यज्ञस्य अन्ते संग्रामे वा, वनिनः—सम्भजमानाः, वयम् इन्द्रमेव आह्वयामहे ॥ ७ ॥**

We call Indra in the (beginning of) sacrifice, and when the sacrifice is proceeding, also we, the adorers, call him at the close of the sacrifice (or in war) ; we call him for gaining wealth.—7.

**सा०-भा० ।** 'देवतातये' देवैः स्तोतृभिः तायते विस्तार्यते इति देवतातिर्यज्ञः । तदर्थम् 'इन्द्रमित्' देवेषु मध्ये इन्द्रमेव 'हवामहे' आह्वयामहे । 'अध्वरे' यज्ञे 'प्रयति' प्रगच्छति उपक्रान्ते सति इन्द्रं हवामहे । तथा 'समीके' सम्यग्जाते सम्पूर्णे च यागे 'वनिनः' सम्भजमानाः वयम् इन्द्रमेवाह्वयामहे, यद्वा समीकमिति सङ्ग्रामनाम ( निघ० २,१७, ११ ) । समीके सङ्ग्रामे इन्द्रमेवाह्वयामहे । धनस्य सातये लाभाय इन्द्रमेव आह्वयामहे । अतः शीघ्रमिन्द्र आगच्छतु इत्यर्थः ॥ ७ ॥

७ । ऋ० सं० ८ म० ३ सू० ५ ऋ० । उ० आर्चि० ७, ३, ८, १ ।

देवतातये—*stem* देवताति *fem.* divine service, i. e., sacrifice, cf. Ṛ̣V. i. 127. 9 ; iii. 19. 1, 2 ; iii. 26. 2 ; iv. 6. 1 ; v. 29. 1 ; vi. 4. 1 ; vii. 1. 18 ; ix. 15. 2.

समीके—dr. सम्-अच्, Pāṇ. vi. 3. 93 ; hostile encounter, fight ; or at the close of the rite—Sāy. ; in the sense of battle, it occurs also in Ṛ̣V. iii. 30. 11. etc.

वनिनः—the worshippers, fr. rt. वन् संभक्तौ, *to honour.* सातये—*stem* साति, fr. rt. सन् *to gain* ; *vide* notes on सनिम्, SV. 1. 28. सातौ (*loc.*) occurs in SV. 1. 234.

---

ऋषिच्छन्दसी पूर्ववत् ।

३ १ २ ३ १ २ ३ १ २र

इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।

३ १ २ ३ १ २ ३ २ ३ १र २र

पावकवर्णाः शुचयो विपश्चितोऽभिस्तोमैरनूषत ॥८॥२५०॥

इमाः । ऊँ इति । त्वा । पुरुवसो इति पुरुऽवसो । गिरः । वर्धन्तु । याः । मम । पावकऽवर्णाः । शुचयः । विपःऽचितः । अभि । स्तोमैः । अनूषत ॥८॥

भाष्यसारः । **हे पुरुवसो—बहुधन इन्द्र, मम इमाः गिरः—स्तोत्ररूपा वाचः, त्वा—त्वाम्, वर्धन्तु । पावकवर्णाः—अग्नितुल्यतेजस्काः, शुचयः—शुद्धाः, विपश्चितः—विद्वांसः उद्गातारः, स्तोमैः—स्तोत्रैः, अभि अनूषत—त्वामभिष्टुवन्ति ॥ ८ ॥**

May these my praises exalt thee, Indra, lord of immense riches ; the wise, immaculate sages, resplendent like fire, praise thee with hymns.—8.

**सा०-भा० ।** हे 'पुरुवसो' बहुधनेन्द्र ! 'मम' मदीयाः 'इमाः' 'गिरः' शस्त्ररूपा वाचः 'त्वा' त्वां 'वर्धन्तु' वर्धयन्तु । तथा 'पावकवर्णाः' अग्निसमानतेजस्काः अत एव 'शुचयः' शुद्धाः 'विपश्चितः' विद्वांसः उद्गातारश्च 'स्तोमैः' स्तोत्रैर्बहिष्पवमानादिभिः 'अभ्यनूषत' त्वामभिष्टुवन्ति, नु स्तुतौ कुटादिः ॥ ८ ॥

८ । ऋ० सं० ८ म० ३ सू० ३ ऋ० । यजुर्वेद० ३३, ८१ । उ० आर्चि० ७, ३, १८, १ । (II. 957).

ऊँ इति in the pada text—*vide* Pāṇ. i. 1. 18. पुरूवसो—long vowel in Saṃhitā by Pāṇ. vi. 3. 137.

Mahīdhara renders after Sāyaṇa *pāvakavarṇāḥ* as—'radiant like fire' ( अग्निसमानतेजस्काः ). *Vide*, notes on दैवेभिः, the shining priests, SV. 1. 2 ; and विवस्वभिः, 1. 19.

विपश्चितः—the wise, Ngh. 3. 15. अनूषत—for mg. and dr. *see* notes on SV. 1. 198.

---

ऋषिच्छन्दसी पूर्ववत् ।

२ ३ १ २र ३ २ ३ १ २

उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते ।

३ १ २ ३ १ २र ३ २ ३ १ २

सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥९॥२५१॥

उत् । ऊँ इति । त्ये । मधुमत्ऽतमाः । गिरः । स्तोमासः । ईरते । सत्राऽजितः । धनऽसा । अक्षितऽऊतयः । वाजऽयन्तः । रथाः इव ॥ ९ ॥

भाष्यसारः । त्ये—ते प्रसिद्धाः, मधुमत्तमाः—अतिशयेन मधुराः, गिरः--स्तोत्ररूपा वाचः, स्तोमासः—स्तोत्राणि च, उदीरते--ऊर्ध्वं प्रसरन्ति । सत्राजितः—सततजयशीलाः, धनसा--धनानि सम्भजन्तः धनवन्त इत्यर्थः, अक्षितोतयः—क्षयरहितरक्षोपेताः, वाजयन्तः--धनम् अन्नं वा इच्छन्तः अर्जयन्तः, रथा इव । ते रथा यथा इतस्तत उद्गच्छन्ति तथाऽस्मत्स्तुतयस्त्वामुद्दिश्य ऊर्ध्वं गच्छन्ति ॥ ६ ॥

These our most sweet songs of praise ascend to thee like ever victorious chariots abounding in wealth, provided with unfailing protections, meant to earn wealth (or food).—9.

**सा०-भा० ।** 'त्ये' ते प्रसिद्धाः 'मधुमत्तमाः' अतिशयेन मधुराः 'गिरः' अप्रगीताः शस्त्ररूपा वाचः । 'स्तोमासः' प्रगीतानि बहिष्पवमानादीनि स्तोत्राणि च 'उदीरते' इन्द्र ! त्वामुद्दिश्योद्गच्छन्ति ऊर्ध्वं प्रसरन्ति । ईर गतौ आदादिकः । तत्र दृष्टान्तः —'सत्राजितः' सहैव शत्रून् जयन्तः, अत एव 'धनसा' धनानि सम्भजन्तः । वनु षणु सम्भक्तौ । 'जन-सन-खन-क्रम-गमो विट् । 'विड्वनोरनुनासिकः स्यात्' इत्यात्वम् । 'अक्षितोतयः' अक्षिताः क्षयरहिता ऊतयो रक्षा येषां ते तथोक्ताः । क्षियो भावे निष्ठा । निष्ठायामण्यदर्थे इति पर्युदासाद्दीर्घाभावः । अत एव 'क्षियो दीर्घात्' इति निष्ठानत्वाभावश्च । 'वाजयन्तः' वाजमन्नमिच्छन्तः । क्यचि 'न च्छन्दस्यपुत्रस्ये'ति ईत्वदीर्घयोः प्रतिषेधः । एवंगुणविशिष्टा रथा इव, ते यथा विविधमितस्तत उत्तिष्ठन्ति तद्वदुदीरत इत्यर्थः ॥ ६ ॥

१ । ऋ० सं० ८ म० ३ सू० १५ ऋ० । उ० आर्चि० ६, १, ६, १ । (II. 712).

The epithets वाजयन्तः (vājayantaḥ) etc., are somewhat inapplicable to a car, but they are all masc. pl. and can only agree with *Rathāḥ*.

सत्राजितः—ever triumphant ; for सत्रा *see* notes on SV. I. 170.

---

देवातिथिः काण्व ऋषिः ।

१ २ ३ २ ३ २ ३ २उ ३ १र २र
यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २उ ३ १ २
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥१०॥२५२॥

यथा । गौरः । अपा । कृतम् । तृष्यन् । एति । अव । इरिणम् । आऽपित्वे । नः । प्रऽपित्वे । तूयम् । आ । गहि । कण्वेषु । सु । सचा । पिब ॥१०॥

भाष्यसारः । **यथा गौरः मृगः तृष्यन्—पिपासितः, अपा—अद्भिः, कृतम्—पूर्णम्, इरिणम्—निस्तृणं तडागम्, अवैति—अभिगच्छति, तथा आपित्वे—बन्धुत्वे, प्रपित्वे—प्राप्ते सति, हे इन्द्र, त्वं नः—अस्मान्, तूयम्—शीघ्रम्, आ-गहि—आगच्छ, कण्वेषु—कण्वपुत्रेषु अस्मासु, सचा—सह, सु—सुष्ठु पिब ॥ १० ॥**

As the thirsty *Gaura* deer runs towards the watery pool in the desert, so, Indra, our friendship being well established, hasten hither and drink, to thy satiety, the *soma* together with us, the Kaṇvas.—10.

**सा०-भा० । 'गौरः' गौरमृगः 'तृष्यन्' पिपासितः सन् 'अपा' अद्भिरुदकैः व्यत्ययेनैकवचनम् । 'ऊडिदमि'त्यादिना ( पा० ६, १, १७१ ) विभक्तेरुदात्तत्वम् । 'कृतम्' सम्पूर्णत्वं कृतम् 'इरिणम्' निस्तृणं तडागदेशं 'यथा' येन प्रकारेण 'अवैति' अभिगच्छति । अवशब्दोऽभिशब्दस्यार्थे, अभिमुखः सन् शीघ्रं गच्छति । तथा 'आपित्वे' बन्धुत्वे 'प्रपित्वे' प्राप्ते सति, हे 'इन्द्र !' त्वं 'नः' अस्मान् 'तूयम्' क्षिप्रनामैतत्, शीघ्रम् 'आ-गहि' आगच्छ । आगत्य च 'कण्वेषु' कण्वपुत्रेष्वस्मासु 'सचा' सह एकप्रयत्नेनैव विद्यमानं सर्वं सोमं 'सु' सुष्ठु 'पिब' ॥ १० ॥**

**इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य द्वितीयः खण्डः । तृतीयप्रपाठकस्य च द्वितीयार्धे प्रथमा दशतिः ॥**

**१० । ऋ० सं० ८ म० ४ सू० ३ ऋ० ।**

गौरः—Grfth. renders—'the wild bull' and states—'it is a kind of buffalo *Bos Gaurus*'.

अपा—for अद्भिः—*sg.* for *pl.* by व्यत्यय or Vedic anomaly.

इरिणम्—watery pool in the desert.

आपित्वे प्रपित्वे—Grassman interprets 'both at morning and at eve'. Grfth. adopts this meaning but remarks that this interpretation is not satisfactory. Prof. Ludwig translates—'ob in der nahe, ob in der ferve'—be thou near or far away. Besides the usual meaning *bandhutve* (in friendship), author of Viv. assigns to आपित्वे a different meaning—āpānakāle (at the time of the banquet). the word *prapitva* is discussed by Prof. Geldner in *Vedische Studien* II. pp. 115-159. 'आपि' occurs in the sense of बन्धु (friend), in SV. I. 239.

आपि—*masc.* An ally, a friend, an acquaintance (acc. to Sāy. on ṚV. ii. 20. 4.) ; dr. fr. the caus. of rt. आप् *to obtain* ; *lit.* causing to obtain or gain wealth. आपित्व—(mg. friendship) occurs *here* and in viii. 20. 22.

तूयम्—quickly ; cf. 'आ नो यज्ञं···हरिभिर्याहि तूयम्' ṚV. iii. 43. 3 ; 'तूयं यथी मधुना' iv. 26. 5. etc. ;—a syn. of क्षिप्र (quick), Ngh. 2. 15 ; Nir. 5. 2 ; 8 13 ; dr. rt. तुद्—*aff.* यत्, uṇ. iv. 108, anom. the vowel is long, द् drops.

---

अथ तृतीयाध्यायस्य तृतीयः खण्डः । तृतीयप्रपाठकस्य द्वितीयार्द्धे द्वितीया दशतिः ।

भर्गः प्रागाथ ऋषिः ।

३ २ १ २ ३ २ ३ १ २ ३ १ २
**शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः ।**
३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
**भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥१॥२५३॥**

शग्धि । ऊँ इति । सु । शचीपते । इन्द्र । विश्वाभिः । ऊतिभिः । भगम् । न । हि । त्वा । यशसम् । वसुऽविदम् । अनु । शूर । चरामसि ॥ १ ॥

भाष्यसारः । **हे शचीपते—शचीनां कर्मणां ज्योतिष्टोमादीनामधिपतिभूत, इन्द्र, शग्धि—अभिमतम्, अभिप्रायानुरूपां सिद्धिमित्यर्थः, देहि । विश्वाभिः—सर्वाभिः, ऊतिभिः—रक्षाभिः सह, हे शूर, भगं न—भाग्यमिव, यशसम्—यशस्विनम्, वसुविदम्—धनस्य प्रापकं त्वाम्, अनुचरामसि—परिचरामः ॥ १ ॥**

Indra, lord of ceremonies, grant us the desired success with all protection ; as the good luck, hero, we adore thee, the glorious, the ordainer of wealth.—1.

**सा०-भा० ।** हे 'शचीपते' ! 'इन्द्र' ! 'शग्धि' देह्यभिमतम् । 'विश्वाभिः' 'सर्वाभिः' 'ऊतिभिः' रक्षाभिः सह हे 'शूर' ! 'भगं न' भाग्यमिव 'यशसम्' यशस्विनम् । 'वसुविदम्' धनस्य लम्भकं 'त्वा' 'त्वाम्' 'अनु-चरामसि' परिचराम इत्यर्थः ॥ १ ॥

१ । ऋ० सं० ८ म० ६१ सू० ५ ऋ० । उ० आर्चि० ७,३,३,१ ।

शचीपते—the word शची is read among the synonyms of कर्म, Ngh. 2. 1.* 'Lord of rite'—*Wils* ; 'Lord of might'—*Grfth.*, *Mcdnll.* ; cf. 'विश्वमेको

---

* अपः, अप्नः, दंसः, वेषः, वेपः—···शची···शिल्पमिति षड्विंशतिः कर्म-नामानि ।

अभिचष्टे शचीभिः'—one beholds the entire universe *with its power*—ṚV. 1. 164. 44; AV. 9. 10. 26; Bṛh. D. i. 95.

शग्धि—fr. rt. शक्, imp. ( लोट् हि ). 2. sg.; it may also mean—we pray or beg, as शग्धि is found in the list of verbs mg.—to beg, Ngh. 3. 19.

भगं न—as bliss; as happiness. भग fr. rt. भज् *to enjoy*,—भजनीयं सौभाग्यं धनं वा *vide* SV. 1. 240; 'न' is used as a particle of comparison, *vide*, notes on 'रथं न', SV. 1. 5; 'द्यौर्न', 1. 166.

वसु-विदम्—'finder-out of wealth'—*Grfth*; 'the obtainer of wealth'—*Wils.*

अनुचरामसि—rt. चर्—pres. ( लट् ) 1. pl. मस् is changed to मसि by 'इदन्तो मसि' *vide*, SV. 1. 176.

---

रेभः काश्यप ऋषिः ।

१ २ ३ २ ३ १ २क २र ३ १ २
या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः ।
३ २ ३ १ २ ३ २ ३ २ ३ १ २
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥२॥२५४॥

याः । इन्द्र । भुजः । आभरः । स्वर्वान् । असुरेभ्यः । स्तोतारम् । इत् । मघवन् । अस्य । वर्धय । ये । च । त्वे । वृक्तऽबर्हिषः ॥ २ ॥

भाष्यसारः । हे इन्द्र, स्वर्वान्—स्वर्गाधिपतिः सर्वभूतजातानामधिपतिर्वा, त्वं याः—यानि, भुजः—भोक्तव्यानि धनानि, असुरेभ्यः आभरः—आहृतवानसि, हे मघवन् इन्द्र, तस्य एतस्य आहृतस्य धनस्य दानेन स्तोतारमित्—तव स्तोत्रकारिणमेव वर्धय—वृद्धिमन्तं कुरु । ये च अन्ये यजमानाः त्वे—त्वदर्थे, वृक्तबर्हिषः—स्तीर्णकुशा भवन्ति, तांश्च धनेन वर्धय ॥ २ ॥

Indra, lord of heaven (or lord of all), Maghavan (lord of wealth), with the riches thou hast brought from the Asuras, make the singer of thy praise thrive, also those who spread *kuśa* for thee (in sacrifice).—2.

सा०-भा० । हे 'इन्द्र' ! 'स्वर्वान्' सुखवान् स्वर्गवान् वा, अथवा स्वःशब्दः सर्वपर्यायः, सर्वं भूतजातम् आत्मन एवोत्पन्नत्वात् तद्वान् एवंगुणस्त्वं 'याः' यानि 'भुजः' भोक्तव्यानि धनानि 'असुरेभ्यः' बलवद्भ्यो राक्षसेभ्यः 'आभरः' आहरः तान् हत्वा आहृतवानसि । 'हृ-ग्रहो'रिति भकारादेशः । अत एव हे 'मघवन्' ! धनवन्निन्द्र ! 'अस्य', अन्वादेशे अशादेशः, एतस्य आहृतस्य धनस्य दानेन 'स्तोतारमित्' तव स्तोत्रकारिणमेव

'वर्धय' वृद्धिमन्तं कुरु। 'ये च' अन्ये यष्टारः 'त्वे' त्वदर्थं 'वृक्तबर्हिषः' स्तीर्णबर्हिषो भवन्ति, अतस्तांश्च धनेन वर्धय॥ २॥

२। ऋ० सं० ८ म० ६७ सू० १ ऋ०।

स्वर्वान्—the word occurs also in 'यो अस्कृधोयुरजरः स्वर्वान्' he who is not short-lived or undecaying who is *brilliant* or source of fecility ṚV. vi. 22. 3; Nir. 6. 3. Sāyaṇa, here, assigns several interpretations to the word 'स्वः' *viz.*, (1) सर्व—all, (2) स्वर्ग—heaven, (3) सुख—happiness; in the first sense—'all', we find स्वर्दृशम् (beholder of all) in SV. 1. 233; स्वर्णरम्, 1. 109.

*Svar*—denotes the 'sun' and the heaven or light (ṚV. i. 71. 2;—105, 3; 148, 1; Nir. 2. 14) in the Ṛg-veda and later; ṚV. iii. 2. 7; v. 83. 4; x. 66. 4,—9; AV. iv. 11. 6; 14. 2 etc.—*Mcdnll's Ved. Index.*

———

जमदग्निर्ऋषिः।

३ २ ३ २ ३ १ २ क २र
प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो।
३ ३ १ २ ३ २ ३ १ २ ३ १ २र
वरूथ्ये३वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत॥३॥२५५॥

प्र। मित्राय। प्र। अर्यम्णे। सचथ्यम्। ऋतऽवसो। वरूथ्ये। वरुणे। छन्द्यम्। वचः। स्तोत्रम्। राजसु। गायत॥ ३॥

भाष्यसारः। हे ऋतवसो—यज्ञधन, मित्राय सचथ्यम्—सेवार्हम्, छन्द्यम्—छन्दानुसारमित्यर्थः वचः—स्तोत्रं प्र-गायत—प्रकर्षेण पठत। अर्यम्णे च प्रगायत। वरूथ्ये—वरणीये, यद्वा वरूथवद् गृहवद् आश्रयभूते वरुणे च प्रगायत। राजसु—राजमानेषु मित्रादिषु, स्तोत्रम् गायत—पठत॥ ३॥

O sacrificer, rich in rites, sing in praise of Mitra and Aryaman with a propitiating hymn, sing a pleasing hymn to adorable Varuṇa, (who is our shelter), sing a song of praise to the kings.—3.

**सा०-भा०।** हे 'ऋतावसो' यज्ञधन! 'मित्राय' 'सचथ्यम्' सेवार्हं 'छन्द्यम्' यज्ञगृहभवम् अभिप्रायानुसारं वा 'वचः' स्तोत्रं 'प्र-गायत' प्रकर्षेण पठत। 'अर्यम्णे' च प्रगायत। 'वरूथ्ये' यज्ञगृहावस्थिते 'वरुणे' च प्रगायत। प्रगायतेति बहुवचनं पूजार्थम्, एतदेव दर्शयति 'राजसु' राजमानेषु मित्रादिषु स्तोत्रं गायत पठत। मित्रादीन् त्रीन् राज्ञः स्तुतेति समुदायार्थः॥ ३॥

३। ऋ० सं० ८ म० १०१ सू० ५ ऋ०। ṚV has **'वरूथ्यम्'** ( produced in the sacrificial chamber ; adj. to वचः ) for **'वरूथ्ये'** (adj. to Varuṇa).

मित्राय, अर्यम्णे, वरुणे—these three gods are closely associated in the Vedas, *vide* our notes on SV. I. 185.

सचथ्यम्—reverential ; fr. rt. सच् *to serve, to attend*, I. Ā. Ngh. 3. 29.

छन्द्यम्—following the desire, in accordance with the intention, i. e., pleasant, agreeable.

वरूथ्ये—वरणीये, adorable,—Viv. 'वरूथ्ये वरुणे'—to Varuṇa who shelters us. वरूथ—is a synonym of गृह ( house ), shelter—Ngh. 3. 4, fr. वृ—to cover.

ऋतवसो—*voc*. 'O thou, rich in offerings'—*Wils* ; 'one whose wealth ( वसु ) is piety ( ऋत ), pious, faithful' ; the long vowel in Saṃhitā by Pāṇ. vi. 3. 137.

राजसु—*rfs*. to Mitra, Aryaman and Varuṇa—the three princely or illustrious gods.

———

मेधातिथिर्ऋषिः।

३ २ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम् ॥४॥२५६॥

अभि। त्वा। पूर्वऽपीतये। इन्द्र। स्तोमेभिः। आयवः। समीचीनासः। ऋभवः। सम्। अस्वरन्। रुद्राः। गृणन्त। पूर्व्यम् ॥ ४ ॥

भाष्यसारः। हे इन्द्र, आयवः—मनुष्याः स्तोतारः, पूर्वपीतये—सर्वदेवेभ्यः प्राक् सोमपानाय, स्तोमेभिः—स्तोमैः स्तोत्रैः त्वामभिष्टुवन्ति। समीचीनासः—सङ्गताः सम्मिलिताः, ऋभवः ऋभुर्विभ्वावाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्राः, समस्वरन्—त्वामेव सम्यग् अस्तुवन्, रुद्राः—रुद्रपुत्रा मरुतश्च, पूर्व्यम्—पुरातनं त्वामेव, गृणन्त—अस्तुवन् ॥ ४ ॥

Men (the singers of thy praise) are lauding thee with hymns that thou mayest drink the soma first. The Ṛbhus, united together, sing thy praise, the Rudras sing to thee as the first or the oldest.—4.

**सा०-भा०।** हे 'इन्द्र'! 'आयवः' मनुष्याः स्तोतारः 'स्तोमेभिः' स्तोत्रैः त्वामभिष्टुवन्ति। किमर्थम्? 'पूर्वपीतये' सर्वेभ्यो देवेभ्यः पूर्वं प्रथमत एव सोमस्य

पानाय सवनमुखे हि चमसगणैः इन्द्रस्यैव सोमो हूयते। तथा 'समीचीनासः' सङ्गताः ऋभवः प्रथमवाचकेन शब्देन त्रयोऽप्युपलक्ष्यन्ते ऋभुर्विभ्वावाज इत्येते च 'समस्वरन्' त्वामेव सम्यगस्तुवन्। स्वृ शब्दोपतापयोः। 'रुद्राः' रुद्रपुत्रा मरुतश्च 'पूर्व्यम्' पुरातनं वृद्धं त्वामेव 'गृणन्त' अभ्यस्तुवन् वृत्रवधसमये—'प्रहर भगवो जहि वीरयस्वे'त्येवंरूपया वाचा त्वां स्तुतवन्त इत्यर्थः ॥ ४ ॥

४। ऋ० सं० ८ म० ३ सू० ७ ऋ०।

स्तोमेभिः—for स्तोमैः, भिस् is not changed to ऐस्, Paṇ. vii. 1. 10. 'स्तोमः स्तवनात्'—*stomas* are the hymns from praising, fr. rt. स्तु, Nir. 7. 12. *Stoma* denotes—'song of praise' in the ṚV. (i. 144. 9 ; iii. 5. 2 ; 58.1). Later, the term has the technical sense of the typical forms in which the stotras are chanted (7 such forms are usually enumerated, but acc. to Lāṭy. Scho. the *stoma* consists of 5 parts, viz., *prastāva*, *udgītha*, *pratihāra*, *upadrava*, and *nidhana*.) *vide* TS. iii. 1. 2. 4 ; VS. ix. 33 ; x. 10. etc.. Cf. Weber : *Indische studien*, 7. 229, 276 ; 10, 355, HILLEBRANDT : Ritual litteratur, 101.

---

नृमेध-पुरुमेधौ ऋषी।

३ १ २ ३ १र २र ३ १ २
प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥५॥२५७॥

प्र। वः। इन्द्राय। बृहते। मरुतः। ब्रह्म। अर्चत। वृत्रम्। हनति। वृत्रऽहा। शतऽक्रतुः। वज्रेण। शतऽपर्वणा ॥ ५ ॥

भाष्यसारः। हे मरुतः स्तोतारः, बृहते—महते, वः—युष्मदीयाय, इन्द्राय ब्रह्म—स्तोत्रम्, प्रार्चत—प्रगायत, वृत्रहा—वृत्रघाती, शतक्रतुः—शतकर्मा शतप्रज्ञो वा इन्द्रः शतपर्वणा—शतधारेण वज्रेण, वृत्रं हनति—हन्तु ॥ ५ ॥

O priests, sing hymn to your mighty Indra ; may Śatakratu, the slaughterer of Vṛtra, slay Vṛtra with his hundred-edged thunderbolt.—5.

**सा०-भा०।** हे 'मरुतः'! मितराविणः स्तोतारः! 'बृहते' महते वः स्तुत्यस्तोतृत्वलक्षणेन सम्बन्धेन युष्मदीयायेन्द्राय। 'ब्रह्म' सामलक्षणं स्तोत्रं 'प्रार्चत' प्रोच्चारयत। ततो 'वृत्रहा' वृत्रस्य मेघस्य पापस्य वा हन्ता। 'शतक्रतुः' शतविध-

कर्मा बहुविधप्रज्ञो वा इन्द्रः 'शतपर्वणा' शतसंख्याकधारेण वज्रेण एतन्नामकेनायुधेन वा 'वृत्रम्' अपामावरकं वृत्राख्यमसुरं वा 'हनति' युष्माभिरभिष्टुतः सन् हन्तु। हन्तेर्लेट्यडागमः ॥ ५ ॥

५। ऋ० सं० ८ म० ८६ सू० ३ ऋ०। यजुः ३३, ६६।

मरुत:—in this verse and in the next, means—the singers of praise, the priests, Ngh. 3. 18.* 'O etherial priests'—*Stevenson.*

हनति—may he slay or strike down; हन्—लेट् (Ved. subj.)-ति, अ is added to the root in लेट्, by 'लेटोऽडाटौ' Pāṇ. iii. 4. 94.

ब्रह्म—prayer, Nir. 6. 22; cf. हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम्' —send forth our sacrifice for worshipping the gods, send forth our *prayer* for the attainment of wealth, Ṛ̣V. x. 30. 11. *vide* ब्रह्मणस्पते—(lord of prayer)—Nir. 3. 11; 6. 10. ब्रह्मणस्पतिः—Nir. 5. 4; 10. 13.

शतक्रतु:—the god of hundred powers, *rfs. to* Indra, Nir. 4. 6; 5. 5. 'गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे॥'—'chanters chant thy praises, singers sing the song, Brāhmaṇas raised thee up like a pole, O God of a hundred powers'—Ṛ̣V. i. 10. 1; SV. i. 342; 2. 694; as for क्रतु, *vide* our notes on सुक्रतु, SV. 1. 3. *vide* notes on शतक्रतो, SV. 1. 116.

---

नृमेध-पुरुमेधौ ऋषी।

२ १र २र ३ १ २ ३ १ २
**बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम्।**
३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
**येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥६॥२५८॥**

बृहत्। इन्द्राय। गायत। मरुतः। वृत्रऽहन्तमम्। येन। ज्योतिः। अजनयन्। ऋतावृधः। देवम्। देवाय। जागृवि ॥ ६ ॥

भाष्यसारः। हे मरुतः—स्तोतारः, वृत्रहन्तमम्—पापनाशकम्, बृहत्साम इन्द्राय गायत, येन साम्ना ऋतावृधः—सत्यस्य वर्धकाः विश्वेदेवाः, देवाय—इन्द्राय, देवम्—देवनशीलम्, जागृवि—सर्वेषां जागरणशीलम्, ज्योतिः—सूर्यरूपम्, अजनयन्—उत्पादितवन्तः ॥ ६ ॥

Sing to Indra the Bṛhat-Sāman (the mighty Sāma hymn), remov-

---

* 'भरताः; कुरवः, वाघतः, वृक्तबर्हिषः, यतस्रुचः, मरुतः, सबाधः, देवयव इत्यष्टावृत्विङ्नामानि' —these eight are the synonyms of ऋत्विक् (priest).

ing sin, by which (the Viśvedevās) the upholders of truth or law (or promoters of sacrifice), generated the divine all-awakening light (the sun) for the God (Indra).—6.

**सा०-भा० ।** हे 'मरुतः' रु शब्दे, मितं रुवन्तीति मरुतः, हे मितभाषिणः स्तोतारः! 'वृत्रहन्तमम्' अतिशयेन पापविनाशनं 'बृहत्' साम 'इन्द्राय' इन्द्रार्थं 'गायत' अस्मदीये यज्ञे गानं कुरुत । 'ऋतावृधः' ऋतस्य यज्ञस्य सत्यस्य वा वर्धका विश्वेदेवाः अङ्गिरसो वा ऋषयः, 'देवाय' द्योतमानायेन्द्राय 'देवम्' देवनशीलं 'जागृवि' सर्वेषां जागरणशीलं 'ज्योतिः' सूर्यं येन साम्ना 'अजनयन्' इन्द्रार्थमुदपादयन् तत्साम गायतेति ॥ ६ ॥

६। ऋ० सं० ८ म० ८९ सू० १ ऋ० ।

मरुतः—priests ; *see* notes on the preceding verse where this word occurs.

ऋतावृधः—fostering truth or sacrifice ; dr. ऋत-वृध-क्विप्, the long vowel in ता by 'नहि-वृति०' Pāṇ. vi. 3.116 ; cf. 'य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा'—O Indra and Agni, promoters of sacrifice,—partake of the oblation of him who praises you when the somas are pressed, ṚV. vi. 59. 4. Sāyaṇa has supplied विश्वे-देवाः (the all-gods), as the epithet 'ऋता-वृधः' is generally applied to them. Cf. 'विश्वे देवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु'—may the all-gods, the promoters of truth or of sacrifice, who are invoked and praised and the mantras uttered by wise men, protect us, ṚV. vi. 50. 14 ; VS. 34. 53. ऋतम्—truth, Ngh. 3. 10,—sacrifice, Nir. 3. 4 ; 4. 19 ; 6. 22.

जागृवि—dr. जागृ—aff. क्विन्, Pāṇ. vii. 3. 85. wakeful 'जागृविर्जागरणात्'—*so called* from keeping awake. Nir. 9. 8 ; cf. 'सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान्'—the ever-wakeful berry of the Vibhīdaka tree appears to me like a draught of soma that grows on the Mūjavat mountain—ṚV. x. 34.1 ; Ṛ. Vidh. 3. 10. 1 ; Bṛh. D. vii. 36.

---

वसिष्ठ ऋषिः ।

२ ३ १२ ३ १ ३ ३२ ३२ ३ १२
इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
१२ ३ १ २ ३ १ २ ३ १ २र
शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥७॥२५९॥

इन्द्र । क्रतुम् । नः । आ । भर । पिता । पुत्रेभ्यः । यथा । शिक्ष । नः । अस्मिन् । पुरुहूत । यामनि । जीवाः । ज्योतिः । अशीमहि ॥ ७ ॥

भाष्यसारः। हे पुरुहूत—बहुभिराहूत, इन्द्र, नः—अस्मभ्यम्, क्रतुम्—कर्म, प्रज्ञानं वा आभर—प्रयच्छ, यथा पिता पुत्रेभ्यः धनं यच्छति, तथा नः—अस्मभ्यम्, शिक्ष—धनं देहि। यामनि—यज्ञे, जीवाः—जीवन्तः, वयं ज्योतिः अशीमहि—प्राप्नुयाम ॥ ७ ॥

Grant us, Indra, invoked by many, wisdom, as a father gives to his sons, confer on us wealth on this occassion, so that we, living at the solemn rite, may enjoy the light.—7.

**सा०-भा०।** हे 'इन्द्र'! 'नः' अस्मभ्यम् 'क्रतुम्' कर्म वा प्रज्ञानं वा 'आभर' आहर। अपि च, यथा 'पिता पुत्रेभ्यः' धनं प्रयच्छति तथा 'नः' अस्मभ्यं 'शिक्ष' धनं देहि। हे पुरुहूत! बहुभिराहूतेन्द्र! 'यामनि' यज्ञे 'जीवाः' वयं 'ज्योतिः' सूर्यम् 'अशीमहि' प्रतिदिनं प्राप्नुयाम। यद्वा, हे इन्द्र! भूतानि प्रकाशयितरिन्द्र! तथा च यास्कः—'इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयत इति वेरां धारयत इति वेन्दवे द्रवतीति, वेन्दौ रमत इति, वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते' (नि० १०,८) इति। एवं-गुणविशिष्ट! परमात्मन्! त्वं क्रतुं कर्म स्वविषयज्ञानं वा नः अस्मभ्यम् आभर आहर प्रयच्छेत्यर्थः। तत्र दृष्टान्तः,—पिता पुत्रेभ्यो यथा लोके विद्यां धनं वा प्रयच्छति तथा नोऽस्मभ्यं विद्यां धनं वा प्रयच्छ। हे पुरुहूत! बहुभिराहूतेन्द्र! यामनि सर्वैः प्राप्तव्ये अस्मिन् प्रकृते ब्रह्मणि जीवा वयं ज्योतिः परं ज्योतिरशीमहि सेवेमहि ॥ ७ ॥

७। ऋ० सं० ७म० ३२ सू० २६ ऋ०।

इन्द्रः—Yāska's etym. is quoted above by Say., which can be rendered as—'Indra is so called, as he divides food (*ira + dṛ*) or he gives food (*irā + dā*), or ordains food (*ira + dha*), or sends food (*ira + daraya*), or he holds food (*irā + dhāraya*), or he runs for *Indu* i. e., soma (*indu + dru*), or rejoices at soma (*indu + ram*), he enkindles all beings with fire (of life), or because they animate him with vital breaths, this is the characteristic of Indra. Here in this connection, the views of older authorities can be cited :—acc. to Āgrāyaṇa—'Indra is so called from doing everything (इदं करणात्); acc. to Aupamanyava—from seeing every thing (इदम् दर्शनात्, इदं + दृश); or the word is dervd fr. rt. *ind*, mg.—to be powerful, i. e., being powerful, he tears asunder the enemies or puts them to flight (दारयिता शत्रूणाम्), or he honours the sacrificers (आदरयिता यज्वनाम्).

शिक्षा—for शिक्ष, give; *vide* शिक्षति. SV. I. 235. the final vowel is prolonged by 'द्व्यचोऽतस्तिङः', Pāṇ. vi. 3. 135.

यामनि—यान्ति देवा यत्र स यामा यज्ञः—a sacrifice, where the gods attend.

Yāman denotes, several times, in the ṚV. a march or expedition in war. (ṚV. iv. 24. 2, vii. 66. 5 ; 85. 1 ; ix. 64. 10 ; x. 78. 6,—80. 5.)—*Macdnll. Ved. Index.*

---

रेभ ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २
**मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।**
१ २ ३ २उ ३ २ ३ १ २ ३ १ २
**त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परावृणक् ॥८॥२६०॥**

मा । नः । इन्द्र । परा ऽ वृणक् । भव । नः । सधमाद्ये । त्वम् । न । ऊती । त्वम् । इत् । न । आप्यम् । मा । नः । इन्द्र । परा ऽ वृणक् ॥ ८ ॥

भाष्यसारः । हे इन्द्र ! नः—अस्मान् हविर्दत्तवतो यजमानान्, मा परावृणक्—न परित्यज, नः—अस्माकम्, सधमाद्ये—यज्ञे, सोमपानाय भव—आगत्य तिष्ठ । हे इन्द्र, त्वं नः—अस्माकम्, ऊती—रक्षिता, त्वम् इत्—एव, आप्यम्—ज्ञातव्यम्, बन्धुरित्यर्थः । अतः मा परित्याक्षीः ॥ ८ ॥

Do not, Indra, forsake us, be here at our sacrifice (to drink the soma), thou art our protector, our friend, do not forsake us.—8.

**सा०-भा० ।** हे 'इन्द्र' ! 'नः' हविषां प्रदातॄन् अस्मान् 'मा परावृणक्' मा परित्याक्षीः । वृजो वर्जने रौधादिकः । लङि रूपम् । तदेवाह त्वं नोऽस्माकं 'सधमाद्ये' सह-मादनहेतुभूते यज्ञे सोमपानाय भव । किञ्च, हे 'इन्द्र' ! नोऽस्मान् त्वमेव 'ऊती' ऊत्यां स्थापय । यद्वा, ऊती व्यत्ययेन कर्त्तरि क्तिचा निपातितः । त्वमेवास्माकं रक्षिता खलु । तथा 'त्वमित्' इदवधारणे त्वमेव नोऽस्माकम् 'आप्यम्' ज्ञातव्यम् । त्वमेव बन्धुरित्यर्थः । अत एव मा न इन्द्रः परावृणगिति गतार्थः ॥ ८ ॥

८ । ऋ० सं० ८ म० ६७ सू० ७ ऋ० ।

परा-वृणक्—rt. वृज् *to forsake*, 7. u.—imperf. ( लङ् ) 2. sg

भवा—the final vowel is prolonged by 'द्व्यचोतस्तिङः' Pāṇ. 3. 135.

'भवा नः सधमाद्ये'—'be a partner with us in our joy'—*Wils.* Sāyaṇa interprets 'सधमाद्ये'—as 'in a sacrifice', where the gods rejoice together. *Vide* SV. 1. 239.

ऊती—Sāyaṇa assigns two explanations (i) ऊती—for ऊत्याम् (*loc.*)—पूर्वसवर्णदीर्घः by 'सुपां सुलुक०' Pāṇ. vii. 1. 39.—'place us in (under) thy protection, (ii)

ऊती—अव + क्ति, in Act. voice, anomalously formed, mg.—the protector, the shelter.

आप्यम्—fr. rt. आप्, 'आप्यमाप्नोतेः', Nir. 6. 14. ; *vide* आपिः, SV. 1. 239 ; 1. 252 ; drvd. from the same root, mg.—a friend. आप्यम् mg. 'alliance' or 'friendship is found in—'अस्ति हि वः···देवा सो अस्त्याप्यम्', O gods there is friendship (among you), ṚV. viii. 27. 10.

———

मेधातिथिर्ऋषिः ।

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २

**वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।**

३ १ २ ३ १ २ ३ १ २ ३ १ २

**पवित्रस्य प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते ॥९॥२६१॥**

वयम् । घ । त्वा । सुतऽवन्तः । आपः । न । वृक्तऽबर्हिषः ।
पवित्रस्य । प्रस्रवणेषु । वृत्रऽहन् । परि । स्तोतारः । आसते ॥ ९ ॥

भाष्यसारः । हे वृत्रहन्, त्वा—त्वाम्, वयं घ—खलु, सुतावन्तः—सोममभिषुतवन्तः, आपो न—निम्नगामीनि जलानि इव, भवन्तं प्रति प्रह्वीभवामः । पवित्रस्य—दशापवित्रेण परिशोधितस्य सोमस्य, प्रस्रवणेषु वृक्तबर्हिषः—विस्तीर्णकुशाः स्तोतारः, त्वां पर्युपासते ॥ ९ ॥

O Vṛtra-slayer, we have pressed soma-juice for thee, like waters (streaming downwards), we shall bow down to thee ; on the effusion of the sacred soma, the worshippers, who have spread kuśa-grass (for sacrificial purpose), adore thee.—9.

**सा०-भा०** हे 'वृत्रहन्'! 'त्वा' त्वां वयं 'घ' खलु 'सुतवन्तः' सोममभिषुतवन्तः 'आपो न' आप इव प्रस्रवणमभिगच्छामः । 'पवित्रस्य' सोमस्य प्रस्रवणेषु 'वृक्तबर्हिषः' स्तीर्णबर्हिषः 'स्तोतारश्च' त्वां पर्युपासते ॥ ९ ॥

९ । ऋ० सं० ८ म० ३३ सू० १ ऋ० ।

पवित्रस्य प्रस्रवणेषु—'where the filter pours its stream.'—*Grfth.* ; Sāyaṇa interprets 'pavitrasya' simply as '*the sacred soma*'.

परि-आसते—sit round thee—*Grfth* ; 'worship thee'—*Wils.*—(after Sāyaṇa).

वृक्त-बर्हिषः—ऋत्विजः, priests, Ngh. 3. 18. fr. rt. वृज्, 1 7. p. *to gather* (esp. sacrificial grass). The phrase *lit.* means—those who have gathered and spread the sacrificial grass and so are prepared to receive the gods ; sacrificing or loving to sacrifice, i. e., the devoted worshippers.

———

भरद्वाज ऋषिः ।

१ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु ।
३ १ २ ३ २ ३ १ २र ३ १ २र ३ १ २
यद्वा पञ्चक्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥१०॥२६२॥

यत् । इन्द्र । नाहुषीषु । आ । ओजः । नृम्णम् । च । कृष्टिषु । यत् । वा । पञ्चऽक्षितीनाम् । द्युम्नम् । आ । भर । सत्ना । विश्वानि । पौंस्या ॥ १० ॥

भाष्यसारः । **नाहुषीषु—मनुष्यसम्बन्धिनीषु, कृष्टिषु—प्रजासु, यत् आ—यच्च, ओजः—बलम्, नृम्णम्—धनञ्च, यत् वा—यच्च, पञ्चक्षितीनाम्—निषादपञ्चम-चातुर्वर्ण्य-समाजान्तर्भूत-निखिल-नराणां सनिषादानाम् आर्याणामित्यर्थः, द्युम्नम्—धनम्, तत्सर्वम् अस्मभ्यम् आ-भर—प्रयच्छ। सत्रा—महान्ति, विश्वानि—सर्वाणि, पौंस्यानि—बलानि, च आ-भर—अस्मभ्यं देहि ॥ १० ॥**

Whatever strength and wealth exist among men, whatever glorious riches are found in the five tribes of men, confer on us, Indra, and also all great manly powers.—10.

**सा०-भा० ।** हे 'इन्द्र'! 'नाहुषीषु'—नहुष इति मनुष्यनाम ( नि० २, ३,६) तत्सम्बन्धिनीषु 'कृष्टिषु' प्रजासु। आकारः समुच्चये, 'यच्च 'ओजः' बलं 'नृम्णम्'—धनं च विद्यते। यद्वा, यच्च 'पञ्चक्षितीनाम्' निषादपञ्चमाश्चत्वारो वर्णाः—पञ्चक्षितयः, तेषां स्वभूतं 'द्युम्नम्' द्योतमानमन्नं तत्सर्वमस्मभ्यम् 'आ-भर' आ-हर प्रयच्छ। तथा 'सत्रा' महान्ति 'विश्वानि' सर्वाणि 'पौंस्यानि' बलानि अस्मभ्यमाहर ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य तृतीयः खण्डः। तृतीयप्रपाठकस्य द्वितीयार्धे द्वितीया दशतिः ॥

१०। ऋ० सं० ६ म० ४६ सू० ७ ऋ०।

नाहुषीषु—Grfth. renders 'in tribes of Nahuṣas' and comments—'Nahuṣas' refer to the people—apparently distinct from the five Aryan tribes—*par excellence*—the Turvaśas, Yadus, Anavas, Druhyus and Pūrus. According to Sāyaṇa—men in general are meant, and Prof. Roth explains the word as men generally but with the special sense of strangers or neighbours. *See* Muir. orig. Sans. Texts Vol. I. pp. 179, 180. नहुष is a syn. of man—Ngh. 2. 3; for further notes on नाहुषीषु *vide* SV. 1. 190.

क्रष्टिषु—*vide* notes on क्रष्टयः, SV. 1. 11 ; Nir. 10. 22 ; द्युम्नम्—wealth, Ngh. 2. 10 ; *vide* SV. 1. 81. पौंस्या—*for* पौंस्यानि, Pan. vi. 1. 70 ; mg.—manly vigour, strength. Ngh. 2. 9 ; *vide* SV. 1. 131.

पञ्चचितीनाम्—चितयः = men, Ngh. 2. 3 ;—so पञ्च-चितीनां means the same as पञ्च-जनानां—of the five tribes—Nir. 3. 8.—*rfs. to*, acc. to Aupamanyava, the old author of Nirukta, whom Yāska quotes,—the whole Indo-Aryan community in the Vedic age together with the aborigins newly incorporated into it, later, the Hindus divided into five tribes—the frour higher castes and the Niṣādas—or the out-castes belonging to that community. (cf. 'चत्वारो वर्णा निषादः पञ्चम' इत्यौपमन्यवः ) :—Prof. Roth has a spec. note on पञ्चजनाः :—'The Aryans as the middle point and the people of the North, the East, the West and the South by whom they are surrounded'—Roth's note in S. L ; Max Müller, on the other hand, following the view of Aupamanyava, speaks of the 'Āryas as the people of the five nations.'—'*India : what can it teach us ?*' p. 95. note. Compare Muir's remarks on the phrase, Sanskrit Texts, i. p. 176 ;—'The phrase *five races* is a designation of all nations, not merely of the Aryan tribes.'

---

अथ तृतीयाध्यायस्य चतुर्थः खण्डः। तृतीयप्रपाठकस्य च द्वितीयार्द्धे तृतीया दशतिः।

मेधातिथिर्ऋषिः।

३ २ ३ १र २र ३ १ २ ३ २
सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता।
क २र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥१॥२६३॥

सत्यम् । इत्था । वृषा । इत् । असि । वृषऽजूतिः । नः । अविता । वृषा । हि । उग्र । शृण्विषे । पराऽवति । वृषा । ऊँ इति । अर्वाऽवति श्रुतः ॥ १ ॥

भाष्यसारः। हे उग्र—बलवन् इन्द्र ! त्वं सत्यम् इत्था—सत्यमेव, वृषा इत्—अभीष्टवर्षक एव, असि, वृषजूतिः—सोमरसवर्षिभिः सोमाभिषवकारिभिः ऋत्विगभिः सेवितः सन्, नः—अस्माकम्, अविता—रक्षकोऽसि। परावति—दूरेऽपि वृषा हि—इष्टप्रद एव, शृण्विषे—श्रूयसे, अर्वावति—समीपेऽपि, वृषा उ—कामद एव श्रुतः भवसीति शेषः ॥ १ ॥

Truly thou art the showerer of the desired blessings—being served by (the sacrificers) the offerers of the libations of the soma juice—thou art our guardian ; thou, O fierce one, art renowned as the showerer of the desired benefits while far,—and showerer of blessings while near.—4.

**सा०-भा०।** हे 'उग्र'! उद्गूर्णेन्द्र! त्वं 'सत्यम्' 'इत्था' इत्थं 'वृषा इत्' कामानां वर्षक एवासि। 'वृषजूतिः' वृषभिः सेक्तृभिः सोमरसस्य सोतृभिश्चाहूतो 'नः' अस्मान् 'अविता' रक्षिता भवसि। 'वृषा हि' सेचक एव 'शृण्विषे' श्रूयसे। 'परावति' दूरेऽपि 'वृषेव' कामानां सेचक एवासि। 'अर्वावति' समीपेऽपि 'वृषा' सेचक एव 'श्रुतः' अश्रूयत ॥ १ ॥

१। ऋ० सं० ८ म० ३३ सू० १० ऋ०। ṚV. reads '**अवृतः**' (unresisted; whom none may stay)—instead of '**अविता**' (the protector).

इत्था—truly, cf. 'कृणोति यश्मै वरिवो य इत्था इन्द्राय सोमम् उशते सुनोति', *he* (*Indra*) *gives happiness to him that truly presses the soma for Indra who longs for it*—ṚV. iv. 24. 6. Mcdnll. renders 'सत्यमित्था'—as '*truly so*', *vide* Stu. Ved. Gram. Para 180. on indeclinables.

वृषजूतिः—our transl. is based on Sāyaṇa's explanation,—वृष in this phrase means, acc. to him,—'the showerer or offerer of soma-juice'—(rfs. to the sacrificers). Acc. to Viv., however, the phrase means '*having the motion like that of a bull*' (*Jūti* mg.—speed, motion, fr. rt. जु *to go*). Grfth. has adopted this interpretation and renders 'rushing like a bull' (rfs. to Indra); 'the universal perambulator'—*Stevenson*.

परावति—far, Ngh. 3. 26. Nir. 7. 26; 11. 48; cf. 'वैश्वानरं मातरिश्वा परावतः,' Mātariśvan brought fire *from afar*, ṚV. vi. 8. 4, also 'ससार सीं परावतः', she (Uṣas) has fled *afar*, vi. 30. 11. अर्वावति—near, the antonym of परावति।

---

रेभ ऋषिः।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
यच्छक्रासि परावति यदर्वावति वृत्रहन्।
१ २ ३ २ ३ १ २ ३ १ २ २ ३ ३ १ २
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आविवासति॥२॥२६४॥

यत्। शक्र। असि। पराऽवति। यत्। अर्वाऽवति। वृत्रऽहन्। अतः। त्वा। गीःऽभिः। द्युऽगत्। इन्द्र। केशिऽभिः। सुतऽवान्। आ। विवासति ॥२॥

भाष्यसारः। हे शक्र, यत्—यदा, परावति—दूरे द्युलोके, असि, हे वृत्रहन्, यत्—यदा, अर्वावति—ततोऽपि अन्तिकतरे अन्तरिक्षे भवसि, अतः—अस्मात् दूरात् अन्तिकाद् वा तव अवस्थितिस्थानात्, सुतवान्—सुतसोमयुक्तः प्रस्तुतसोमः

यजमान इत्यर्थः, द्युगत्—दिवं गच्छद्भिः, केशिभिः—केसरयुक्तैस्तवाश्वैरिव, गीर्भिः—स्तुतिवाक्यैः, त्वा—त्वाम्, आ विवासति—परिचरति ॥ २ ॥

O Śakra, whether thou be afar (in distant heaven) or, O destroyer of Vṛtra, near (in this earth), thy worshipper, who has pressed out the soma juice, serves thee, with heaven-reaching hymns, as if with thy long-maned horses.—2.

**सा०-भा० ।** हे 'शक्र'! शत्रुहननसमर्थेन्द्र! 'यद्' यदा 'परावति' विप्रकृष्टे दूरे द्युलोकदेशे 'असि' विद्यसे। हे 'वृत्रहन्'! वृत्रस्य हन्तरिन्द्र! 'यद्' यदा वा 'अर्वावति' अर्वाचीने तस्मादधस्तात् स्थिते तदपेक्षया समीपे देशेऽन्तरिक्षे भवसि तस्मादपि। 'अतः' अस्माद् भूलोकाद्वा हे 'इन्द्र!' 'द्युगत्'—गमॢ, सृपॢ गतौ। क्विपि 'गमः क्वौ' इति अनुनासिकलोपः। तुक्। 'सुपां सुलुगिति' भिसो लुक्। द्युलोकं प्रति गच्छद्भिः स्वभासा सर्वतो गच्छद्भिः 'केशिभिः' केशवद्भिः हरिभिरिव स्थिताभिः 'गीर्भिः' स्तुतिभिः 'त्वा' त्वां 'सुतवान्' अभिषुतसोमवान् यजमानः 'आविवासति' आत्मीयं यज्ञं प्रति आगमयति। त्वामेतैः स्तोत्रैः परिचरति वा ॥ २ ॥

२। ऋ० सं० ८ म० ९७ सू० ४ ऋ०।

परावति, अर्वावति—*see* our notes on these words in the preceding verse.

द्युगत्—'running with you in heaven'—*Wils*. Sāyaṇa derives द्यु—गम्—क्विप्, —Instr. pl. (see the com. above). भिस्—drops by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39, or it means, acc. to Viv.—क्षिप्रम् = speedily, quick, Ngh. 2. 15, द्युगत् आ विवासति—speedily brings thee to the rites.

सुतवान्—one who has extracted the soma-juice, i. e., the sacrificer. As to 'सुतवाँ आविवासति', *vide* Pān. viii. 3. 9, and viii. 3. 3. *Vide*, notes on 'देवाँ उषर्बुधः' SV. 1. 40; 'महाँ असि' 1. 23; 39: 'महाँ इव' 1. 227.

केशिभिः—*rfs. to* the horses of Indra, having long manes; cf. 'ब्रह्मयुजो हरय इन्द्र केशिनः', SV. 1. 245. 'आमन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः', 1. 246.

आविवासति—attends upon, serves; Ngh. 3. 5: 'विवासति परिचर्यायाम्'—Nir. 11. 23. cf. 'हविष्माँ आविवासति' ṚV. i. 12. 9; also 'त्वां विप्रासः आ विवासन्ति वेधसः', SV. 1. 42; *vide* our notes thereon; it may also mean—'brings thee down from thy home (to the sacrifice).

वत्स ऋषिः । पिपीलिकामध्या बृहतीच्छन्दः ।

३ १ २ ३ १र २र ३ १ २ ३ २ ३ १र २र
**अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।**
२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
**इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥ ३ ॥ २६५ ॥**

अभि । वः । वीरम् । अन्धसः । मदेषु । गाय । गिरा । महा । विऽचेतसम् । इन्द्रम् । नाम । श्रुत्यम् । शाकिनम् । वचः । यथा ॥ ३ ॥

भाष्यसारः । हे उद्गात्रादय ऋत्विजः, अन्धसः—अन्नरूपस्य सोमस्य, मदेषु—सोमपानजनिते हर्षे जायमाने, महा—महत्या, गिरा—स्तुत्या, वीरम्, विचेतसम्—विशिष्टज्ञानम्, नाम—शत्रूणामवनमनकरम्, श्रुत्यम्—स्तुत्यम्, शाकिनम्—शक्तिमन्तम्, इन्द्रम् अभि—उद्दिश्य, वः—युष्माकम्, वचः—वाक्, यथा—येन प्रकारेण प्रवर्त्तते, तथा गाय—गायत स्तुत ॥ ३ ॥

(O singers of praise,) In the exhilaration of the Soma, sing, with noble praise, to most wise Indra, the illustrious mighty hero, the vanquisher of enemies, as much as the speech can express.—3.

**सा०भा० ।** इयं पिपीलिकामध्या बृहतीति बह्वृचाः आद्यन्त्यौ पादौ त्रयोदशाक्षरौ, मध्यमोऽष्टाक्षर इति त्रिपदा । हे उद्गात्रादयः 'वः' यूयम् अथवा हे यजमानाः ! वो युष्माकं 'हिताय' 'अन्धसः' सोमस्य 'मदेषु' उत्पाद्यमानेषु सत्सु 'वीरं' शत्रूणाम् ईरयितारम् । 'नाम' शत्रूणां नामकम् । 'विचेतसं' विशिष्टप्रज्ञं 'श्रुत्यं' सर्वत्र श्रोतव्यं स्तुत्यम् । 'शाकिनं' शक्तिमन्तम् ईदृशम् 'इन्द्रम्' 'महा' महत्या 'गिरा' स्तुत्या 'वचो' वाचो युष्मदीया 'यथा' येन प्रकारेण प्रवर्त्तते गायत्र्या त्रिष्टुभा वा तथा 'गाय' गायत स्तुतिं कुरुत ॥ ३ ॥

३ । ऋ० सं० ८ म० ४६ सू० १४ ऋ० ।

अन्धसो मदेषु—'when Indra is exhilarated by drinking soma'—*Wils*; 'in the wild raptures of the juice'—*Grfth.* वीरम्—for etym. *vide* notes on सुवीरम् SV. I. 26.

महा गिरा—'with high laud'—*Grfth*; 'with that high flow of praises.'

नाम—rt. नम् caus.—'subduer of enemies'—*Wils.*

शाकिनम्—mighty, powerful; also occurs in ṚV. iii. 51. 2; शाकिने—i. 54. 2; vi. 45. 22; SV. I. 115.

विचेतसम्—विशिष्टं चेतः प्रज्ञा यस्य, wise ; occurs also in ṚV. iv. 7. 3 ; विचेताः—i. 190. 4 ; ii. 10. 1 ; iv. 5. 2 ; vi. 24. 2. etc. विचेतसः—i. 45. 2 ; v. 17. 4 ; vii. 7. 4. etc.

वचो यथा—'as the hymn allows it.'—*Grith.* गाय—for गायत, *sg.* for *pl.* an instance of वचनव्यत्यय, Pāṇ. iii. 1. 85.

———

भरद्वाज ऋषिः ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तये ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ ४ ॥ २६६॥

इन्द्र । त्रिऽधातु । शरणम् । त्रिऽवरूथम् । स्वस्तये । छर्दिः । यच्छ । मघवद्भ्यः । च । मह्यम् । च । यवय । दिद्युम् । एभ्यः ॥ ४ ॥

भाष्यसारः । हे इन्द्र, त्वं स्वस्तये—अस्मत्कल्याणाय, त्रिधातु—काष्ठप्रस्तरेष्टकादि-त्रिविधपदार्थनिर्मितम् , त्रिवरूथम्—शीतातपवर्षादिभ्यस्त्रिविधोत्पातेभ्यस्त्रिप्रकार-रक्षणोपाय-युक्तम् , छर्दिः—सम्यक् आच्छादनयुक्तम् , शरणम्—गृहम् , मघवद्भ्यः—हवीरूपधनयुक्तेभ्यः यजमानेभ्यः, मह्यं च यच्छ । एभ्यः—यजमानेभ्यः, च दिद्युम्—प्रदीप्तं विपक्षास्त्रम् , यवय—वियोजय दूरम् अपसारय ॥ ४ ॥

O Indra, give to the princely sacrificers as well as to me, for our welfare, a well-roofed dwelling, (constructed) of three sorts of materials, proof against three atmospheric conditions ; and keep off from them the flashing (weapon of the enemies, or thunder).—4.

**सा०भा० ।** हे 'इन्द्र !' 'त्रिधातुं' त्रिप्रकारं त्रिभूमिकम् । 'त्रिवरूथं' त्रयाणां शीतातपवर्षाणां वारकम् । 'स्वस्तये' अविनाशाय 'छर्दिः' छर्दिष्मत् आच्छादनयुक्तम् । एवंगुणविशिष्टं 'शरणं' गृहम् । 'मघवद्भ्यश्च' मघं हविर्लक्षणं धनं तद्वद्भ्यश्चास्मदीयेभ्यो यजमानेभ्यः 'मह्यं' भरद्वाजाय 'च' 'प्रयच्छ' देहि । अपि च, 'एभ्यः' सकाशात् 'दिद्युं' शत्रुप्रेरितं द्योतमानमायुधं 'यवय' पृथक्कुरु ॥ ४ ॥

४ । ऋ० सं० ६ म० ४६ सू० ९ ऋ० । ṚV. has 'स्वस्तिमत्' (prospering, *adj.* to छर्दिः) instead of 'स्वस्तये' ।

त्रिधातु, त्रिवरूथम्—'combining three elements, defending in three ways'—*Wils*; 'a triple refuge—triply strong'—*Grfth*. 'Acc. to Sāy.—made of three kinds of articles; *three-storied* ( त्रिभूमिकम् ); more properly refers to the fact that in those days, the houses were constructed of more than one material—wood, brick and stone. Acc. to Viv.—(1) pleasing to three kinds of beings—gods, men and manes ( देव-पितृ-मनुष्योपभोग्यम् ); or (2) rich in three precious things—gold, silver and gems ( सुवर्ण-रजत-माणिक्यैः त्रिभिर्धातुभिर्युक्तम् ); or (3) free from—desire, anger, avarice, ( काम-क्रोध-लोभादिभिर्विमुक्तम् ) । त्रिवरूथम्—is explained as sheltering or protecting from three conditions of the atmosphere—cold, heat, rain. वरूथम् is drvd. fr. rt. वृ *to shelter*. *Vide* our notes on वरूथ्यं, SV. 1. 255.

मघवद्भ्यः—'to the affluent'—*Wils*. 'On our rich lords'—*Grfth*.

स्वस्तये—for our weal or welfare.

छर्दिः—house, Ngh. 3. 4. occurs in ṚV. i. 48. 15; iv. 53. 1; vi. 15. 3. etc. *Vide* SV. 1. 49;

यवय—dr. यु—णिच् (caus), nom. vb; imp. ( लोट् ), 2. sg.

दिद्युम्—*rfs*. to the dazzling weapon (of the enemies), or the thunder; in the latter sense, mg. is—let our houses be thunder-proof; the word occurs also in ṚV. i. 71. 5; iv. 41. 4; vii. 56. 9; x. 48. 9.

---

नृमेध ऋषिः ।

१ २ ३ २ ३ १ २र
**श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।**
१ २ ३ १र २र ३ १ २ ३ १ २ ३ १र २र
**वसूनि जाते जनिमान्योजसा प्रति भागं न दीधिम ॥५॥२६७॥**

श्रायन्तः ऽ इव । सूर्यम् । विश्वा । इत् । इन्द्रस्य । भक्षत । वसूनि । जाते । जनिमानि । ओजसा । प्रति । भागम् । न । दीधिम ॥ ५ ॥

भाष्यसारः । हे जनाः, यूयं सूर्यं श्रायन्त इव—सूर्यमाश्रिताः रश्मय इव, इन्द्रस्य विश्वा इत्—विश्वानि सर्वाण्येव धनानि, भक्षत—भजत । यथा रश्मयः सूर्यं भजन्ते, तद्वद् यूयमपि इन्द्रप्रदेयधनानि भजध्वमित्यर्थः । स इन्द्रः यानि वसूनि—धनानि, जाते—उत्पन्ने, जनिमानि—जायमाने जनिष्यमाणे च, जाताय जनिष्यमाणाय च मनुष्याय तदर्थम् इत्यर्थः, ओजसा—बलेन करोतीति शेषः, तानि धनानि भागं न—पैतृकं रिक्थांशमिव, प्रतिदीधिम—प्रतिधारयेम वयं लभेमहि ॥ ५ ॥

As the rays, dependent on the sun, converge to the sun, so do you enjoy the riches which Indra, by his power, creates for the good of men who have been or will be born ; may we acknowledge these treasures as an inheritance.—5.

**सा०-भा०।** हे अस्मदीया जनाः! 'श्रायन्त इव सूर्यं' यथा समाश्रिता रश्मयः 'सूर्यं' भजन्ते तथा 'इन्द्रस्य विश्वेत्' विश्वान्येव धनानि 'भक्षत' भजत। स च यानि 'वसूनि' धनानि 'जाते' उत्पन्ने 'जनिमानि' जायमाने जनिष्यमाणे च 'ओजसा' बलेन करोति अतो 'भागं न' पित्र्यं भागमिव तानि धनानि 'प्रति दीधिम' प्रतिधारयेमेति, यद्वा 'श्रायन्त इव सूर्यं' यथा समाश्रिता रश्मयः सूर्यमुपतिष्ठन्ते तथा 'इन्द्रस्य' 'विश्वा विश्वानि धनानि विभक्तुमिच्छन्तः समाश्रिता मरुतः इन्द्रमुपतिष्ठन्त इति शेषः। उपस्थाय च मरुतो 'वसूनि' उदकलक्षणानि धनानि 'जाते' जायमानाय 'जनिमानि' जनिष्यमाणाय मनुष्याय 'ओजसा' बलेन 'भक्षत' विभजन्ते। तत्र चास्माकं यो भागः तं 'भागम्'। नेति सम्प्रत्यर्थे प्रतीत्येषः अनु इत्येतस्य स्थाने। 'अनुदीधिम' वयमनुध्यायाम। तथा च यास्कः ( नि० ६,८ )—'समाश्रिताः सूर्यमुपतिष्ठन्ते। अपित्रोपमार्थे स्यात् सूर्यमिवेन्द्रमुपतिष्ठन्त इति सर्वाणीन्द्रस्य धनानि विभक्ष( क्ष्य ? )माणाः स यथा धनानि विभजति जाते जनिष्यमाणे च, तं वयं भागमनुध्यायामौजसा बलेनेति॥ ५॥

५। ऋ० सं० ८ म० ६६ सू० ३ ऋ०। यजुः ३३,४१। उ० आर्चि० ५,२,१४,१ (II. 669) ; AV. 20. 58. ṚV. reads 'जाते जनमाने' instead of 'जातो जनिमाने'।

This verse has been variously interpreted by different interpreters ; Mahidhara's explanation appears to be the best :—'The gathering rays proceed to the sun—distributing all treasures of Indra to all beings : may we obtain our shares and leave them behind to our sons who have been and will be born'. Say. has taken the liberty of borrowing the ṚV. rdg. 'जाते' instead of 'जातः' ; so also Prof. Cowell (*see* his note in Wils. Transl. of the ṚV. v. 201) ; we have followed Sâyaṇa. Grfth. holds—'this stanza is difficult and obscure'. Prof. Ludwig remarks that the reading of the Samaveda ( with 'जातो जनिमाने' ) is almost impossible to interpret. This verse is explained by Yâska in Nir. 6. 8 ; his explanation, as quoted by Sây. above, may be rendered as—'the rays, wholly dependent on the sun, approach the sun ; or, it may be taken in the sense of comparison, i. e., they (the rays) approach Indra, as if he were the sun, distributing all the treasures (rain waters) of Indra, as he distributes treasures among those who

are born or who are yet to be born; let us think of that portion with vigour, with strength'.

आयन्तः—rt. श्रिञ् सेवायाम्, *to serve*,—pres. pt. (शतृ)—समाश्रिताः, dependent.

भक्षत—rt. भज्—सन् (des.)—distribute or divide.

जाते जनिमाने—*loc.* for *dat.* can be justified like 'समब्राह्मणे दानम्'।

---

पुरुहन्मा ऋषिः।

न सीमदेव आप तदिषं दीर्घायो मर्त्यः।

एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते ॥६॥२६८॥

न। सीम्। अदेवः। आप। तत्। इषम्। दीर्घायो इति दीर्घऽआयो। मर्त्यः। एतऽग्वा। चित्। यः। एतशः। युयोजते। इन्द्रः। हरी इति। युयोजते ॥ ६ ॥

भाष्यसारः। **दीर्घायो—हे चिरजीविन् इन्द्र, यः इन्द्रः एतग्वा चित्—विचित्रावेव, एतशः—एतशौ अश्वौ, युयोजते—रथे योजयति, यश्च हरी—तदीयाश्वौ, युयोजते—रथे योजयति, तं त्वामिन्द्रं न स्तौतीति शेषः, सः अदेवः—इन्द्रहीनः, मर्त्यः—मानवः, तत् सीम्—सर्वम्, इषम्—अन्नम्, न आप—प्राप्नोति ॥ ६ ॥**

O immortal Indra, the godless man, (who does not worship thee or he who praises not Indra) who yokes his twain differently coloured horses,—the Haris to his car, does not gain all the food.—6.

**सा०-भा०।** हे 'दीर्घायो!' नित्येन्द्र! सः 'अदेवः' इन्द्राख्यदेवरहितः 'मर्त्यः' मरणधर्मा मनुष्यः 'सीं' सर्वम् 'इषम्' तत् प्रसिद्धम् अन्नं 'नाप' न प्राप्नोति। 'यो मर्त्यः' अस्येन्द्रस्य 'एतग्वा चित्' एतद्वर्णाविचाश्वौ भवतोऽभिमतदेशगमनाय 'एतशः' एतशौ अश्वौ 'युयोजते' योजयति रथे, यज्ञं गन्तुम्। यश्चेन्द्रो हरी युयोजते तं न स्तौति स न प्राप्नोतीति समन्वयः ॥ ६ ॥

६। ऋ० सं० ८ म० ७० सू० ७ ऋ०। ṚV. reads (1) 'आपत्' instead of 'आप तत्'; (2) 'एतशा' in the place of 'एतशः'; (3) 'हरी इन्द्रः' for 'इन्द्रो हरी'।

सीम्—is an enclitic particle; originally the accus. sg. of a pronoun, related to *Sa* as *Kim* to *Ka*; it is generally used (much like *im*) as an accus. of all numbers and genders in the 3rd. pers.—*him*, *her*, *it*, *them*.—Macdnll. Stu. Ved. Gram. Here सीम् means सर्वम्, *all*: Nir. has—'सीमिति परिग्रहार्थीयो वा, पदपूरणो वा'—it means *all* or is used as an expletive, Nir. 1. 7; cf. 'प्र सीमादित्यो असृजत्'—the sun made the streams flow *on all sides*, ṚV. ii. 28. 4.

इषम्—अन्नम्, food, Ngh. 2. 7.

एतग्वा, एतशः—both these words mean 'horse', Ngh. 1. 14. एतग्वा for एतग्वौ du. डा in the place of औ, एतशः for एतशौ (du), सु (:) in the place of औ,—both these functions take place by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. ṚV. reads एतशा in dual (for एतशौ).

---

नृमेध-पुरुमेधावृषी ।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आ नो विश्वासु हव्यमिन्द्रं समत्सु भूषत ।
३ १ २ ३ १ २ २ ३ १ २
उप ब्रह्माणि सवनानि वृत्रहन् परमज्या ऋचीषम ॥७॥२६९॥

आ । नः । विश्वासु । हव्यम् । इन्द्रम् । समत्ऽसु । भूषत । उप । ब्रह्माणि । सवनानि । वृत्रऽहन् । परमऽज्या । ऋचीषम ॥ ७ ॥

भाष्यसारः । हे स्तोतारः, विश्वासु—सर्वासु, समत्सु—युद्धेषु यज्ञेषु वा, हव्यम्—आह्वातव्यं हवनीयं वा, इन्द्रम् प्रति नः—अस्माकं यज्ञे इत्यर्थः, ब्रह्माणि—स्तोत्राणि, आभूषत—उदीरयत । हे वृत्रहन् इन्द्र, त्वं परमज्याः—प्रकृष्टशत्रुहन्ता अविनश्वर-ज्यायुक्तो वा शत्रुवधाय सततमुद्यतास्त्रो भवसीत्यर्थः । ऋचीषम—हे स्तुतिभिराह्वय-नीय इन्द्र, सवनानि—अभिषुतान् सोमान्, उप भूषत—त्वमलङ्कुरु अङ्गीकुरु इत्यर्थः ॥७॥

Offer praises, in our ceremonies, to Indra, worthy of being invoked in every battle (or, in every sacrifice); O Vṛtra-slayer, worthy of praise, vanquisher of mighty foes (or the wielder of excellent bow-string), be gracious to accept our prayers with libations.—7.

सा०-भा० । हे स्तोतारः ! 'विश्वासु' सर्वासु समत्सु असुरयुद्धेषु 'हव्यं' सर्वैर्देवैरात्मरक्षार्थमाह्वातव्यम् । एतादृशम् 'इन्द्रम्' उद्दिश्य 'नः' अस्माकं यज्ञे 'ब्रह्माणि' स्तोत्राणि हवीरूपाण्यन्नानि वा 'उपाभूषत' अलङ्कुरुत प्रेरयत । हे 'वृत्रहन्' !

वृत्रस्यासुरस्य पापस्य वा हन्तः ! 'परमज्याः' युद्धेषु शत्रुहननार्थं परमा अविनश्वरी ज्या मौर्वी यस्य तथोक्तः। यद्वा, परमान् बलेन प्रकृष्टान् शत्रून् जीनाति हिनस्तीति परमज्याः हे 'ऋचीषम' ! स्तुतिभिरभिमुखीकरणीयेन्द्र ! एतादृशस्त्वं सवनानि प्रातःसवनादीनि त्रीणि 'ब्रह्माणि' स्तोत्राणि च 'उपभूषत' अलङ्कुरु ॥ ७ ॥

७। ऋ० सं० ८ म० ९० सू० १ ऋ०। ṚV. has (1) 'हव्य इन्द्रः'—for 'हव्यमिन्द्रम्', (2) 'भूषतु' for 'भूषत', (3) 'वृत्रहः' for 'वृत्रहन्'। उ० आर्चि०, ७, १, २, १।

समत्सु—in battles ; Ngh. 2. 17. Sāy. gives the etym. as 'समदन्ति संभक्षयन्ति योद्धृणाम् आयूंषि इति समदः संग्रामाः', battles are so called as they devour or destroy the lives of the soldiers, in his com. on ṚV. ii. 12. 3, where occurs the word—'संवृक् समत्सु स जनास इन्द्रः', *see* also 'अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय' ṚV. vi. 75. 13 ; 'समदो वात्तेः'—drvd. fr. rt. अद *to devour*, Nir. 9. 17.

ब्रह्माणि—praises, सवनानि—libations.

परमज्याः—also occurs in ṚV. viii. 1. 30. Sāyaṇa assigns two meanings to this compd.—(1) having excellent or imperishable bow-string, (2) over-thrower of strongest enemies ; Prof. Wils. has adopted the latter sense. In this sense, Sāy. derives it fr. rt *jya* mg. *hiṃsā*. Benfey in his Dict. connects this root in the sense of *over-powering*. St. Petersb. Dict. explains it 'die hochste obergewalt habend.'

ऋचीषम—*voc.* ṚV. reads ऋचीषमः *nom.*—worthy of praise, fr. rt. ऋच् *to praise*, cf. 'स्तवे वज्र्यृचीषमः' the, wielder of the thunderbolt, the deserving of praise is extolled by us, ṚV. x. 22. 2 ; *lit.* the compd. means 'ऋचा समः'—identical with or equal to the hymn—Nir. 6. 23.

---

वशिष्ठ ऋषिः।

१र २र ३ २उ ३ १ २ ३ २
**तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम्।**
३ १र २र ३ १ २ ३ १ २ ३ १ २
**सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥८॥२७०॥**

तव। इत्। इन्द्र। अवमम्। वसु। त्वम्। पुष्यसि। मध्यमम्। सत्रा। विश्वस्य। परमस्य। राजसि। नकिः। त्वा। गोषु। वृण्वते ॥ ८ ॥

भाष्यसारः। हे इन्द्र, अवमम्—अधमं वसु सीसकादिकं धनं पार्थिवं वा धनम्, तवेत्—तवैव, त्वं मध्यमम्—रौप्यसुवर्णादिकं वसु अन्तरिक्षजातं धनं वा, पुष्यसि—

यत्नेन रक्षसि, विश्वस्य—सकलस्य, परमस्य—रत्नादिकस्योत्तमस्य धनस्य दिव्यस्य वा धनस्य, सत्रा—सत्यमेव सदैव वा, राजसि—ईश्वरो भवसि, अतः गोषु—गवादिधनेषु विषयेषु, त्वा—त्वाम्, नकिः—न कोऽपि, वृण्वते—वारयति ॥ ८ ॥

Verily thine, Indra, is the meanest wealth ; thou cherishest the middling ; thou ever, rulest over all the most excellent (precious) riches ; none resist thee in respect of cattle.—8.

**सा०-भा० ।** हे 'इन्द्र' ! 'अवमम्' अधमं त्रपु-सीसकादिकं 'वसु' धनम् । यद्वा, भौमं वसु अवमं 'तवेत्' तवैव । 'त्वं' त्वमेव 'मध्यमं वसु' रजतहिरण्यादिकम् आन्तरिक्षं वा 'पुष्यसि' । 'विश्वस्य' सर्वस्य परमस्योत्तमस्यापि रत्नादेर्दिव्यस्य वा वसुनो 'राजसि' ईशिषे 'सत्रा' सत्यमेव, अपि च, 'त्वा' त्वां 'गोषु' निमित्तेषु 'नकिर्वृण्वते' केऽपि न वारयन्ति ॥ ८ ॥

८ । ऋ० सं० ७ म० ३२ सू० १६ ऋ० ।

The import of the verse is—Indra is the lord of all riches—of heaven, of the sky and of the earth,—and also of the cattle, or of the most precious riches—the pearls, diamonds etc.,—of the riches of middle rank such as gold, silver, etc.—and the lowest or cheapest metals e. g., lead, iron etc.

सत्रा *indec.*—सत्यम्, truly, verily ; Ngh. 3. 10 ; 'सत्रा' means also 'always', *vide* notes on सत्रासाहम्, SV. 1. 170. नकिः—*vide* notes on SV. 1. 176 ; 243.

---

मेधातिथिर्मेध्यातिथिश्च ऋषी ।

२ ३ १ २ ३ २ ३ २ ३ १ २
क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।
१ २ ३ १ २ ३ १ २
अलर्षि युध्म खजकृत्पुरन्दर प्र गायत्रा अगासिषुः ॥९॥२७१॥

क्व । इयथ । क्व । इत् । असि । पुरुऽत्रा । चित् । हि । ते । मनः । अलर्षि । युध्म । खजऽकृत् । पुरंऽदर । प्र । गायत्राः । अगासिषुः ॥ ९ ॥

भाष्यसारः । हे इन्द्र, क्व—कुत्र, इयथ—गतवानसि, क्वेत्—कुत्रैव वा, असि—वर्तसे, पुरुत्रा चित् हि—बहुषु खलु स्थानेषु विषयेषु वा, ते—तव, मनः धावति । हे युध्म—युद्धदक्ष, खजकृत्—युद्धकारक, पुरन्दर—दैत्यपुरविदारक इन्द्र, अलर्षि—आगच्छ । यतः गायत्राः—गीतनिपुणाः स्तोतारः, प्रागासिषुः—प्रकर्षेण गायन्ति त्वामुद्दिश्य स्तुतिर्गीतिमुच्चैः कुर्वन्तीत्यर्थः ॥ ९ ॥

Where hast thou gone? Where art thou now, verily thy mind wanders in many places; hasten hither, war-like, vigorous destroyer of citadels, the chanters are singing thy praise.—9.

**सा०-भा०।** हे 'इन्द्र!' 'क' कुत्र देशे 'इयथ' गतवानसि पुरा? 'क्वेत्' कुत्र वा 'असि' भवसि इदानीं वर्त्तसे 'पुरुत्रा चिद्धि' बहुषु हि 'ते' त्वदीयं 'मनः' सञ्चरति। हे 'युध्म' युद्धकुशल! 'खजकृत्' युद्धस्य कर्त्तः! हे 'पुरन्दर!' असुराणां पुरां दारयितः! हे इन्द्र! 'अलर्षि' आगच्छ। 'गायत्राः' गानकुशला अस्मदीयाः स्तोतारः 'प्रागासिषुः' प्रगायन्ति स्तुवन्ति। अलर्षीत्येतत् 'दाधर्त्ति'दौ (पा० ७, ४, ६५) निपात्यते॥ ९॥

९। ऋ० सं० ८ म० १ सू० ७ ऋ०।

खज—संग्राम, battle, Ngh. 2. 17. युध्म and खजकृत् occur also in ṚV. vi. 18. 2; vii. 20. 3. खजंकरः—i. 102. 6.

अलर्षि—*for* इयर्षि, come—fr. rt. ऋ गतौ *to go*, Ngh. 2. 14. It is anomalously formed by the rule 'दाधर्त्ति-दर्धर्त्ति-दर्धर्षि-बोभूतु-तेतिक्तेऽलर्ष्यापनीफणत्०' Pāṇ. vii. 4. 65. अलर्षि occurs only here; अलर्त्ति in viii. 48. 8.

अगासिषुः—sing; rt. गै *to sing*, लुङ् (Aor.) 3. pl.; Aor. for pres., by Pāṇ. iii. 4. 6. This word occurs only here.

---

कलिर्ऋषिः।

३ १ २ ३ १ २र ३ २ ३ १ २
वयमेनमिदा ह्योऽपीपेमेह वज्रिणम्।
१ २ ३ १ २र ३ २ ३ २ ३ १ २ ३ २
तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते॥१०॥ २७२॥

वयम्। एनम्। इदा। ह्यः। अपीपेम। इह। वज्रिणम्। तस्मा। उँ इति। अद्य। सवने। सुतम्। भर। आ। नूनम्। भूषत। श्रुते॥१०॥

भाष्यसारः। वयं ह्यः—गतेऽहनि, इह इदा—इदानीम् अस्मिन् दिने अद्येत्यर्थः, एनम् वज्रिणम्—इन्द्रम्, अपीपेम—सोमेन वर्धयामस्तर्पयाम इत्यर्थः। तस्मा उ—तस्मादेव, हे अध्वर्यो, अद्य सवने, सुतम्—सोममित्यर्थः, भर—इन्द्राय प्रयच्छ। नूनम्—अस्मिन् क्षणे, स इन्द्रः श्रुते—स्तोत्रे श्रुते सति स्तुतिश्रवणात् परमित्यर्थः, आभूषत—यज्ञभूमिमागत्य अलङ्करोतु॥ १०॥

We, on yesterday and to-day, magnified Indra, the wielder of the thunderbolt (with Soma libation), so offer him, here in this ceremony, the pressed Soma juice; our hymns being heard, may he come to grace the ceremony.—10.

**सा०-भा० ।** 'वयं' यजमानाः 'एनं वज्रिणं वज्रयुक्तमिन्द्रं 'इदा' इदानीम् । 'ह्यः' अतीतेऽह्नि । 'इह' अत्राहर्गणे 'अपीपेम' आप्याययाम सोमेन । 'तस्मा उ' तस्मादेव 'अद्य' अत्र 'सवने' 'सुतम्' अभिषुतं सोमं 'भर' हर हे अध्वर्यो ! 'नूनम्' इदानीं 'श्रुते' सति 'आभूषत' अलङ्कुरुत ॥ १० ॥

इति श्रीसायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य चतुर्थः खण्डः । तृतीयप्रपाठकस्य च द्वितीयार्धे तृतीया दशतिः ॥

१० । ऋ० सं० ८ म० ६६ सू० ७ ऋ० । ṚV. reads **'समना'** (mg. **संग्रामार्थम्**) instead of **'सवने'** ।

इदा—इदानीम्, now, Ngh. 3. 28; occurs in ṚV. iv. 10. 5;—33. 11, —34. 1, 4; vi. 21. 5; viii. 22. 11, 13; etc.

अपीपेम—fr. rt. प्याय् *to grow*, Mcdnll. drvs. it fr. rt. पी *to swell* (not recognized by Pāṇ. school). नूनम्—इदानीम्, Ngh. 3. 28.

——:o:——

अथ तृतीयाध्यायस्य पञ्चमः खण्डः । तृतीयप्रपाठकस्य च द्वितीयार्धे चतुर्थी दशतिः ।

पुरुहन्मा ऋषिः ।

१र २र ३ २उ ३ १ २ ३ १ २
**यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।**
१ २ ३ १र २र ३ २ ३ १ २ ३ २ ३ २
**विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥१॥२७३॥**

यः । राजा । चर्षणीनाम् । याता । रथेभिः । अध्रिऽगुः । विश्वासाम् । तरुता । पृतनानाम् । ज्येष्ठम् । यः । वृत्रऽहा । गृणे ॥ १ ॥

भाष्यसारः । **यः चर्षणीनाम्—मनुष्याणाम्, राजा, रथेभिः—रथैः, याता—गमनशीलः, अध्रिगुः—अव्याहतगतिः, विश्वासाम्—सर्वासाम्, पृतनानाम्—सेनानाम्, तरुता—विजेता, यश्च वृत्रहा, ज्येष्ठम्—सर्वेषां श्रेष्ठम्, तमिन्द्रं गृणे—स्तौमि ॥ १ ॥**

I glorify Indra, the ruler of men, the greatest of all, riding on chariots, unrestrained in motion, the conqueror of all (hostile) armies, who is the slayer of Vṛtra.—1.

**सा०-भा० ।** यः इन्द्रः चर्षणीनां मनुष्याणां राजा स्वामी रथैर्याता गन्ता । यश्च 'अध्रिगुः' अधृतगमनोऽन्यैः । 'विश्वासां' सर्वासां 'पृतनानां' सेनानां 'तरुता'

तारकः। यश्च 'ज्येष्ठः' गुणैर्गरीयान्। 'यः' च 'वृत्रहा' वृत्रं हतवान्। तं 'ज्येष्ठं' सर्वैरतिशयेन प्रशस्यम् अधिकं वृद्धं वा महाभागमिन्द्रं 'गृणे' स्तौमि ॥ १ ॥

१। ऋ० सं ८ म० ७० सू० १ ऋ०। ṚV has **'ज्येष्ठः'** (*nom.*) instead of **'ज्येष्ठम्'** (*accus.*)। उ० आर्चि० ३, १, १५, १।

चर्षणीनाम्—of men, Ngh. 2. 3 ; Nir. 12. 21, 40 ; cf. 'विश्वानरस्य वस्पतिमनानतस्य शवसः एवैश्च चर्षणीनामूती हुवे रथानाम्' *I invoke Indra, the lord of Viśvānara (the sun), of unhumbled power with the protection of men and also with the protection of chariots.*—ṚV. viii. 68. 4 ; the phrase 'चर्षणीधृतः'—'*supporters of men*' occurs in—'ओमासश्चर्षणीधृतो विश्वे देवास आ गत'—*Come, All-gods—protectors and supporters of men.*—ṚV. i. 3. 7 ; VS. 7. 33 ; for etym. *vide* notes on चर्षणीनाम् SV. 1. 144.

अध्रिगुः—is explained by अधृतगमनः—unrestrained in motion i. e., irresistible, Nir. 5. 11. It refers to Agni in the verse—'तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य'—O irresistible...Agni,—drops of ghee flow for thee—ṚV. iii. 21. 4 ; Indra is also called अध्रिगु (irresistible or unobstructed), cf. 'अस्मा इदु प्र तवसे··· ऋचीषमायाध्रिगव ओहमिन्द्राय ब्रह्माणि'—I offer oblations···to that powerful, praiseworthy, *irresistible* Indra (ṚV. i. 61. 1 ; Av. 20. 35. 1), *vide* notes on SV. 1. 8.

ज्येष्ठम्—'pre-eminent'—*Wils.* and *Grfth.* ; the best or noblest—*Benfey.*

तरुता पृतनानाम्—(*stem.* तरुतृ dr. rt. तृ—aff. तृ, anomalously formed by Pāṇ. vii. 2. 34.)—'vanquisher of fighting hosts'—*Grfth.* ; the breaker through of all armies—*Wils.* Sāy. here explains तरुता by 'deliverer' (तारकः) ; in viii. 1. 21,—he explained it by 'conqueror' (जेता) ; the word तरुतारम् occurs in a verse addressed to Tārkṣya—'त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम्'—(Let us invoke Tārkṣya who is) rich in food, incited by gods, powerful, impeller of chariots. ṚV. x. 178. 1 ; AV. 8. 85. 1 ; Nir. 10. 28.

पृतनानाम्—hostile armies, Nir. 9. 14 ; cf. 'इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः'—ṚV. vi. 75. 6.

---

भर्गः प्रागाथ ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
यत इन्द्र भयामहे ततो नो अभयं कृधि।
१ २ ३ २उ ३ १ २ ३ २ ३ २उ ३ १ ३र
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥२॥२७४॥

यतः। इन्द्र। भयामहे। ततः। नः। अभयम्। कृधि। मघऽवन्। शग्धि। तव। तत्। नः। ऊतये। विऽद्विषः। वि। मृधः। जहि ॥ २ ॥

भाष्यसारः। हे इन्द्र, यतः भयामहे—शत्रोः बिभीमः, ततः नः—अस्मभ्यम्, अभयं कृधि—कुरु। हे मघवन्, शग्धि—शक्नोषि नः अभयं कर्तुमित्यर्थः। तत्—

ततः, तव ऊतये—रक्षार्थम्, द्विषः—द्वेष्टॄन् हिंसकान् शत्रून्, वि-जहि—विनाशय, मृधः—शत्रून्, च वि—विजहि इत्यर्थः ॥ २॥

Indra, render us fearless from him of whom we are afraid; Maghavan, thou hast capacity to do so (or, we beg your security); for our protection, slay the enemies and those who bear malice to us.—2.

**सा०-भा०।** हे 'इन्द्र'! 'यतः' हिंसकात् 'भयामहे' 'ततः' 'नः' अस्मभ्यम् 'अभयं' 'कृधि' कुरु! हे 'मघवन्'! 'शग्धि' शक्तो भवसि 'नः' अस्मभ्यमभयं कर्त्तुम्। 'तव' 'ऊतये' रक्षणाय 'विजहि' 'द्विषः' अस्मद्द्वेष्टॄन्। 'मृधः' अस्मद्धिंसकान् 'वि-जहि' ॥ २ ॥

२। ऋ० सं० ८ म०, ६१ सू०, १३ ऋ०। Ṛ̣V. has 'ऊतिभिः' instead of 'ऊतये'। उ० आर्चि० ५, २, १५, १।

भयामहे—*for* बिभीमः; rt. भी belongs to cl. 3, and is परस्मैपदी, but here it is conjugated like cl. 1 and has taken Ātmn-suffix महे—by व्यत्यय (Vedic anomaly); in the Vedas, rt. भी is very often so treated, cf. 'ष्पलातृणो बल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार'—*The cover easy to pierce···being afraid yielded before slaughter*—Ṛ̣V. iii. 30. 10. *Also* 'अस्य पर्वता भयन्ते'—ii. 12. 13.

कृधि—कुरु, for Gram. *vide* notes on श्रुधि, SV. 1. 29; कृधि, 1. 105.

शग्धि—*to beg*, Ngh 3. 19.—We beg your security (तव स्वभूतमभयं याचामहे)—*Viv.*; Sāyaṇa has explained it differently, *vide* the com. and our transl. above. This word is also found in SV. 1. 253.

मृधः—in Nighaṇṭu, the word is read among the syns. of संग्राम (battle)—Ngh. 2. 17. It means here enemies, Nir. 7. 2; also in this sense, cf. 'वि न इन्द्र मृधो जहि'—*O Indra, slay our enemies*—Ṛ̣V. x. 152. 4; AV. 1. 21. 2; SV. II. 1218; VS. 8. 44; 18. 70. *See* notes on the word, SV. 1. 134.

वि—*for* विजहि; in the Vedas, mere mention of a prefix (उपसर्ग) often supplies the appropriate verb (उपसर्गश्रुतेर्योग्यक्रियाऽध्याहारः)—Sāy. in his com. on the last verse of this decade (SV. 1. 282).

---

हरिमिठिर्ऋषिः।

१ २ ३ १र २र ३ १ २
वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम्।
३ २ ३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनां सखा ॥३॥२७५॥

वास्तोःऽपते । ध्रुवा । स्थूणा । अंसत्रम् । सोम्यानाम् । द्रप्सः । पुराम् । भेत्ता । शश्वतीनाम् । इन्द्रः । मुनीनाम् । सखा ॥ ३ ॥

भाष्यसारः । **वास्तोष्पते—हे वास्त्वधिपते, स्थूणा—अस्माकं गृहस्तम्भः, ध्रुवा—सुदृढा, भवतु । सोम्यानाम्—सोमार्हाणां सोमाभिषवकारिणामस्माकमिति भावः, अंसत्रम्—स्कन्धोपलक्षित-समग्रशरीरस्य त्रायकं बलं भवतु । द्रप्सः—द्रवीभूत-सोमरसवान्, शश्वतीनाम्—बह्वीनाम्, पुराम्—दैत्यपुरीणाम्, भेत्ता—विदारयिता, इन्द्रः मुनीनां सखा भवतु ॥ ३ ॥**

Lord of the house, may the pillar (supporting our house) be firm ; may there be strength sufficient to protect the shoulders (i. e., the whole body) for the Soma sacrificers ; may Indra, the Soma-drinker, the destroyer of the numberless cities (of the Asuras), be the friend of the sages.—3.

**सा०-भा० ।** हे 'वास्तोष्पते' गृहपते ! 'स्थूणा' गृहाधारभूतस्तम्भः 'ध्रुवा' स्थिरा भवतु । 'सोम्यानां' सोमार्हाणां सोमसम्पादिनां वास्माकम् अंसत्रम् अंसत्राणम् अंसोपलक्षितस्य कृत्स्नस्य शरीरस्य त्रायकं बलं भवतु । अपि च 'द्रप्सः 'द्रवणशीलः' सोमः, तद्वान्, अर्श आदित्वादच्प्रत्ययः । 'शश्वतीनां' बह्वीनां 'पुराम्' असुरपुरीणां 'भेत्ता' विदारयिता एवम्भूतः 'इन्द्रः' 'मुनीनाम्' ऋषीणामस्माकं 'सखा' मित्रभूतो भवतु ॥ ३ ॥

**३ । ऋ० सं० ८ म० १७ सू० १४ ऋ० ।**

वास्तोष्पते *voc.*—lord of the dwelling, the protector of the house ; वास्तु (house) being derived from rt. वस् *to dwell*, Nir. 10. 17 ; cf. 'अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् सखा सुशेव एधि नः'—O lord of the dwelling, the remover of diseases, assuming all forms, be to us a friend—ṚV. vii. 55. 1.

Vāstoṣpati seems to be one of the deities of lower order in the ṚV ; only one hymn of three stanzas (vii. 54) is devoted to his praise. His name occurs only seven times in the ṚV. Here in the above verse he seems to be identified with Indra.

स्थूणा—a pillar, supporter of the roof of a house, Nir. 1. 12 ; occurs also in ṚV. i. 59. 1 ; v. 45. 2 ; v. 62. 7. स्थूणाम्—x. 18. 13.

सोम्यानाम्—of the Soma-pressers, Nir. 11. 18, 19 ; cf. 'उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः'—'let the lower manes, the higher manes and the middle manes, who press the Soma (i. e., who prepare the Soma juice) go upwards, ṚV. x. 15. 1 ; AV. 18. 1. 44. VS. 19. 49 ; *also* 'अङ्गिरसो नः पितरो नवग्वा

अथर्वाणो भृगवः सोम्यासः'—*may we be in the good grace of our manes......the Soma-pressers.* RV. x. 14. 6 ; AV. 18. 1. 58.

द्रप्सः—drop, Nir. 5. 14 ; the word occurs in a verse, addressed to Vaśiṣṭha who is described as having been born from the drop of the seminal fluid of Mitra and Varuṇa—'उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन्मनसोऽधिजातः । द्रप्सं स्कन्नं ब्रह्मणा दैव्येन' ...O Vaśiṣṭha, thou art a son of Mitra and Varuṇa,—...thou art the drop that fell etc.—RV. vii. 33. 11. Grfth., very keen about literal rendering, translates (with but little regard for the sense), the expression 'द्रप्सः पुरां भेत्ता'—as the drop of the Soma breaketh all the *strongholds down.* It conveys but no meaning. Moreover, Soma is nowhere alluded to as having broken the citadels of the demons. Sāyaṇa here derives it by adding मच् to it (*see* his com. above) and renders as—*possessed of the drops of Soma juice*, i. e., the drinker of the Soma-juice, which, being an adj. *rfs.* to Indra.

पुरां भेत्ता—Indra is frequently called the shatterer of the fortresses of the demons ( पूर्भिद् )—*vide*, RV. i. 51. 5. शश्वत्—बहु, Ngh. 3. 1.

———

जमदग्निर्ऋषिः ।

२ ३ १ २ ३ १ २ ३ १ २
**बण्महाँ असि सूर्य बडादित्य महाँ असि ।**

३ १ २ ३ १ २ ३ १ २ २ ३ १ २ ३ १ २
**महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥४॥२७६॥**

बट् । महान् । असि । सूर्य । बट् । आदित्य । महान् । असि । महः । ते । सतः । महिमा । पनिष्टम । मह्ना । देव । महान् । असि ॥ ४ ॥

भाष्यसारः । सूर्य—हे लोकानां प्रेरक इन्द्र, त्वं बट्—सत्यम्, महान् असि । आदित्य—हे अदितिनन्दन इन्द्र, त्वं बट्—यथार्थं महान् असि । त्वमसंशयमतिमहानसीत्यर्थः । सतः—सनातनस्य प्रशस्तस्य वा, ते महः—परमः महिमा, पनिष्टम—पनस्यते स्तूयते इति यावत् । हे देव, त्वं मह्ना—महिम्ना, महान् असि ॥ ४ ॥

Truly, Sūrya (Indra), thou art great, verily, Āditya, thou art sublime ; O most adorable, great is thy noble majesty ; by thy greatness, O resplendent deity, thou art exalted.—4.

**सा०-भा० ।** अत्र शौनकः—'बण्महानिति दृष्ट्वार्कमुपतिष्ठेद्दचौ जपन् । यदन्यप्यमृतां वाणीं नानृतेन स लिप्यते' इति ॥ हे 'सूर्य' प्रेरकेन्द्र ! त्वं 'महान्' तेजसाधिकः

'असि'। 'वट्' सत्यम्। नैतन्मिथ्येत्यर्थः। हे 'आदित्य'! अदितेः पुत्र! त्वं 'महान्' बलेनाप्यधिकः असि। 'वट्' सत्यमेव। 'महो' महतः 'सतो' भवतः 'ते' तव 'महिमा' महत्त्वं 'पनिष्टम' पनस्यते स्तोतृभिः स्तूयते। हे 'देव'! द्योतनादिगुणयुक्त सूर्य! त्वं 'मह्ना' महत्त्वेन वीर्येणाप्यधिकः 'असि' भवसि न संशय इत्यर्थः॥ ४॥

४। ऋ० सं० ८ म० १०१ सू० ११ ऋ०। उ० आर्चि० ६,१,६,१। यजुः ३३,४०। **'पनस्यते'** instead of **'पनिष्टम'**; and **'अद्धा'** in the place of **'मह्ना'**।

Indra is, here, identified with Sūrya or Āditya; *vide* notes on SV. I. 125.

वट्—truth, used often adverbially—truly, verily. 'वट्-श्रत्-सत्रा-श्रद्धा-इत्था-ऋतमि'ति षट् सत्यनामानि, Ngh. 3. 10; cf. 'वट् इत्था पर्वतानां खिद्रं बिभर्षि पृथिवि'—*verily*, thou bearest, O Pṛthivī, the instrument of rending mountains—Ṛ̣V. v. 84. I.

पनिष्टम—*nom.* or *voc*, most adorable; Sāyaṇa has taken it as an adj. qualifying महिमा; the difficulty arises in the absence of सु (nom. sg. term.), which, however, can be explained by the gram. rule 'सुपां सुलुक्०' Pāṇ. vii. I. 39. It can better be taken in voc. case, in which case no gram. difficulty occurs. Grfth. like us, renders it in voc. case; the word is derived from rt. पन् *to worship* or *to admire*, I. Ā; *vide* पनायते—Ngh. 3. 14. महः—*for* महतः।

मह्ना—by thy greatness; cf. 'यो जात एव प्रथमो मनस्वान्···नृम्णस्य मह्ना स जनास इन्द्रः'। Who, as soon as he was born, became foremost···(even heaven and earth trembled) *on account of the greatness of his might*,—he, O men, is Indra, ṚV. ii. 12. 1; again, प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि'—O great one···thou quickenest the earth *with thy greatness* (addressed to Pṛthivī)—ṚV. v. 84. I.

———

देवातिथिर्ऋषिः।

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
अश्वी रथी सुरूप इद्गोमाँ इदिन्द्र ते सखा।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १२ २२
श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप॥५॥२७७॥

अश्वी। रथी। सुऽरूपः। इत्। गोऽमान्। इत्। इन्द्र। ते। सखा। श्वात्रऽभाजा। वयसा। सचते। सदा। चन्द्रैः। याति। सभाम्। उप॥ ५॥

भाष्यसारः। हे इन्द्र, ते सखा अश्वी—बह्वश्वयुक्तः, रथी—बहुरथयुक्तः, सुरूपः—रूपवान्, गोमान्—गोधनैरन्वितः, इत्—एव, भवति। ततोऽसौ सदा श्वात्रभाजा

—धनयुक्तेन, वयसा—अन्नेन, सचते—संयुक्तो भवति नित्यमन्नं धनञ्च लभते इत्यर्थः, चन्द्रैः—प्रीतिकरैः प्रशस्तिवचनैर्युक्तः, सभाम् उपयाति—उपगच्छति च जनसंसदि सर्वत्र प्रशंसां लभते इत्यर्थः ॥ ५ ॥

Thy friend (thy votary), Indra, is indeed, possessed of horses, chariots and cows (cattle), and is prepossessing in personal beauty, he is ever provided with food accompanied with wealth, he enters the assembly with delighting cheers (applauses).—5.

**सा०-भा०।** हे 'इन्द्र' 'ते' तव 'सखा' मित्रभूतपुरुष अश्वादिगुणविशिष्ट एव भवति। इच्छब्दः प्रत्येकमभिसम्बध्यते। 'अश्वी इत्' बहुभिरश्वैरुपेत एव भवति न कदाचिदश्वैर्वियुज्यते। 'रथी' रथवान् एव स भवति। 'सुरूपः' शोभनरूपः शोभनावयव एव स भवति। 'गोमानित्' बह्वीभिर्गोभिर्युक्त एव स भवति, न कदाचिदेतैर्वियुज्यत इत्यर्थः। अपि च, 'श्वात्रभाजा'—श्वात्रमिति धननाम—आश्वतनीयं शीघ्रं प्राप्तव्यं शोभनं धनं सम्भजते ईदृग्धनसंयुक्तेन 'वयसा'—अन्ननामैतत्—अन्नेन स सदा सर्वदा 'सचते' समवैति सङ्गच्छते। अतएव 'चन्द्रैः' सर्वेषामाह्लादकैः स्तोत्रैर्युक्तः सन् 'सभां' जनसंसदम् 'उपयाति' उपगच्छति ॥ ५ ॥

५। ऋ० सं० ८ म० ४ सू० ९ ऋ०। ṚV. reads **'चन्द्रो याति'** instead of **'चन्द्रैर्याति'**।

इत्—एव, indeed, verily. गोमाँइत्=गोमान् इत् *vide* Pāṇ. viii. 3. 9 and viii. 3.3. सचते—rt. सच् *to get united*, I. Ā.

ते सखा—thy friend; the faithful devoted worshipper whom thou favourest; *vide* notes on सखा, SV. 1.133; and on सखायः, SV. 1.136; 163; 164.

श्वात्रभाजा वयसा—'wealth associated with food'—*Wils*. श्वात्रम् is found among the 28 syns. of धनम् (wealth)—Ngh. 2. 10; dr. श्वाशु—rt. अत् (*to go*)—*aff*. त्रक् etymological sense—आशु अतनं भवति—of swift motion (i. e., passing away swiftly, *so called* because of its most transient nature)—is found in Nir. 5. 3. Sāyaṇa explains by आशु अतनीयं शीघ्रं प्राप्तव्यं—quickly obtainable; वयः—अन्नम्, Nir. 6. 4; cf. 'परि प्रं समोमना वां वयो गात्'—the food (oblation) proceeds to you everyday to secure your protection (addressed to Aświns),—ṚV. vii. 69. 4.

चन्द्रैर्याति सभामुप—Grfth. renders—'joins the company with radiant men, as one of their number and radiant or bright and splendid himself. By 'the company' he means—'the assembly of his friends.' Acc. to the ṚV. reading (चन्द्रो याति), the meaning is—'gladdening or delighting all, he enters an assembly.'

---

पुरुहन्मा ऋषिः ।

१ २र ३ २ ३ १र २र ३ २
यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
१ २ ३२ ३ २ ३ २ ३ २ ३ १ २३ १ २
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥६॥२७८॥

यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युरिति स्युः । न । त्वा । वज्रिन् । सहस्रम् । सूर्याः । अनु । न । जातम् । अष्ट । रोदसी इति ॥ ६ ॥

भाष्यसारः । हे इन्द्र, ते—तव, परिमापार्थं यत्—यदि, द्यावः—द्युलोकाः, शतं स्युः—शतगुणिता भवेयुः, उत—अपि च, भूमीः—भूमयः, शतं स्युः—शतसंख्याकाः भवेयुः, त्वा—त्वाम् , न अनु अष्ट—न अश्नुवते व्याप्तुं न शक्नुवन्तीत्यर्थः । वज्रिन्—हे वज्रधर, सहस्रं सूर्याः त्वां न प्रकाशयन्ति, जातम्—उत्पन्नं किमपि द्रव्यम् त्वां न व्याप्नोति, किञ्चरोदसी—द्युलोकभूलोकौ मिलितौ, त्वां न व्याप्तुं शक्नुतः । त्वं ह्यप्रमेयोऽसीति भावः ॥ ६ ॥

Indra, if there be one hundred heavens and there be one hundred earths, even then they can not measure thee ; a thousand suns cannot match thy glory ; O thunder-bearer, both heaven and earth together, or every other thing which is generated, cannot encompass thee.—6.

**सा०-भा० ।** हे 'इन्द्र' ! 'ते' तव प्रतिमानार्थं 'यद्' यदि 'द्यावः' द्युलोकाः 'शतं' शतसंख्याकाः स्युः तथापि नाश्नुवन्ति । 'उत' अपिच 'भूमीः' भूम्यः ते तव मूर्त्तिप्रतिबिम्बाय शतं स्युः तथापि नाश्नुवन्ति । हे 'वज्रिन्' ! 'त्वा' त्वां 'सहस्रम्' अगणिता अपि सूर्याः नानुभवन्ति न प्रकाशयन्तीत्यर्थः । 'न तत्र सूर्यो भाति' (कठ० उ० ५।१५ )—इति श्रुतेः । किं बहुना 'जातम्' पूर्वमुत्पन्नं किञ्चिदपि 'न अष्ट' नाश्नुते ! तथा 'रोदसी' 'द्यावापृथिव्यौ' नाश्नुवाते । त्वं सर्वेभ्योऽतिरिच्यते इत्यर्थः । 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः' ( छा० उ० ३।१४।३ )—इति श्रुतेः ॥ ६ ॥

६ । ऋ० सं० ८ म० ७० सू० ५ ऋ० । उ० आर्चि० २, २, ११, १ ।

This idea is contained in *Chāndogya Upaniṣad*, iii. 14, the mg. being—

'the soul within my heart is greater than the earth, greater than the sky, greater than the heaven, greater than all these worlds.'

यत्—यदि । भूमीः—*for* भूम्यः, *vide* Pāṇ. vi. 1. 106. वज्रिन्त्सहस्रम्,—by 'नश्च' Pāṇ. viii. 3. 30.

अनु-अष्ट—अश् व्याप्तौ, *to pervade*, 5. Ā. Aor. (लुङ्). ; आष्ट ( Aug. आ + अष्ट ) is the regular class. form ; in the Vedas, aug. आ is optionally placed before the verb in लुङ् (Aor.) by 'बहुलं छन्दस्यमाङ्योगेऽपि' Pāṇ. vi. 4. 75 ; so the form अष्ट is obtained in the Vedas, 'त्वा न अनु अष्ट'—( a hundred heavens and a hundred earths ) bear no comparison with thee—*Wils* ; 'could not match thee'—*Grfth.*

जातम्—everything that is generated, born or created,—Sāy. Grfth. connects अनु with जातम्—and translates—*at thy birth.*

---

देवातिथिर्ऋषिः ।

१ २ ३ २उ ३ २ ३क २र ३ २ ३ १ २
**यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः ।**
१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
**सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥७॥२७९॥**

यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृऽभिः । सिम । पुरु । नृऽसूतः । असि । आनवे । असि । प्रऽशर्द्ध । तुर्वशे ॥७॥

भाष्यसारः । 'हे इन्द्र', त्वं यत्—यद्यपि, प्राक्—प्राच्यैः, अपाक्—प्रतीच्यैः, उदक्—उदीच्यैः, न्यक्—अधस्तनैः वा, नृभिः—स्तोतृभिः, हूयसे तथाऽपि सिम—हे श्रेष्ठ, त्वम् आनवे—अनुराजस्य पुत्रे विषयभूते तस्य हितकरणायेत्यर्थः, पुरु—भूयोभूयः, विशेषेण नृषूतः—स्तोतृभिराहूतः असि । तथा प्रशर्द्ध—हे शत्रूणां प्रकर्षेण अभिभवितः, तुर्वशे—एतन्नामकराजविशेषे तस्य मङ्गलापादनार्थम् , असि—स्तोतृभिः बहुशः स्तुतो भवसि ॥ ७ ॥

Although, Indra, thou art addressed by men of the East, of the West, of the North, of the South, O supreme one, thou art invoked most by men on behalf of the son of Anu ; also, O vanquisher of enemies, (thou art called upon) on behalf of Turvaśa.—7.

**सा०-भा० ।** हे 'इन्द्र' 'यद्' यदि 'प्राक्' प्राच्यां दिशि वर्त्तमानैः सप्तम्यन्तादिक्शब्दाद्विहितस्य अस्तातेरञ्चेर्लुगिति लुक् । यदि वा 'अपाक्' प्रतीच्यां दिशि वर्त्तमानैः यदि वा 'उदक्' उदीच्यां दिशि वर्त्तमानैः । यद्वा 'न्यक्' नीच्यां दिशि

अधस्ताद्वर्त्तमानैः। न्यधीचेति नेः प्रकृतिस्वरत्वम्। उदात्त-स्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वम्। एवंभुतैः 'नृभिः' स्तोतृभिस्त्वं 'हूयसे' स्व-स्व-कार्याया-ह्वयसे। हे 'सिम' श्रेष्ठेन्द्र! 'सिम इति वै श्रेष्ठमाचक्षत' इति वाजसनेयकम्। यद्यप्येवं बहुभिराहूयसे, तथापि 'आनवे' अनुर्नाम राजा तस्य पुत्रे राजर्षौ, 'पुरु' बहुलं 'नृषूतः' नृभिस्तदीयैः स्तोतृभिः प्रेरितः 'असि' भवसि! राज्ञो हितकरणे त्वां स्तोतारः प्रेरयन्तीत्यर्थः। षू प्रेरणे। अस्मात्कर्मणि निष्ठा। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वम्। अपि च हे 'प्रशर्ध' प्रकर्षेण शर्धयितरभिभवितरिन्द्र। 'तुर्वशे' एतत्संज्ञे च राजनि 'नृषूतः' नृभिः प्रेरितो भवसि॥ ७॥

७। ऋ० सं ८ म० ४ सू० १ ऋ०। उ० आर्चि० ५, १, १३, १।

सिम—all, every, whole, entire; acc. to Sāyaṇa *sometimes* and other Indian authorities—Śreṣṭha (the best); dat. सिमस्मै mg. *everywhere*—is found in the passage—'रात्री वासस्तनुते सिमस्मै', ṚV. 1. 115. 4; सिमस्मात्, i. 95. 7; सिमः, i. 102. 6;—145. 2; x. 28. 11.

अनु, तुर्वश—The names of the five tribes or families well-known in the Purāṇas—being, severally, *Yadus*, *Turvaśas*, *Druhyus*, *Anus* and *Purus*,—the descendants of the five sons of *Yayāti* are often mentioned in the Ṛg.-Veda, *vide* ṚV. i. 108. 8. viii. 10. 5; for reference to the son of *Anu*, see vii. 18. 13; for तुर्वश *vide* our notes on SV. 1. 127.

प्रशर्ध—*voc.* 'O overthrower of foes'—*Wils.* fr. rt. शृध *to defy to overpower.* Nir. 4. 19. for शर्धत् in लेट् (Ved. Subj.), cf. 'स शर्धदर्यो विषुणस्य जन्तोः' *may he* (Indra) the noble one, *defy or overthrow* the disorderly beings, ṚV. vii. 21. 5.

———

वशिष्ठ ऋषिः।

१र २र ३ १र २र
कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति।
३ १र २र ३ १ २ ३ २ ३ १र ३र
श्रद्धा हि ते मघवन् पार्ये दिवि वाजी वाजं सिषासति ॥८॥२८०॥

कः। तम्। इन्द्र। त्वा। वसो। आ। मर्त्यः। दधर्षति। श्रद्धा। हि। ते। मघऽवन्। पार्ये। दिवि। वाजी। वाजम्। सिषासति ॥८॥

भाष्यसारः। वसो—हे धनस्वरूप, निवासकारण वा इन्द्र, कः मर्त्यः—जनः, तम्—प्रसिद्धम्, त्वाम् आ दधर्षति—सम्यक् धर्षयेत्, न कोऽपीत्यर्थः। मघवन्, ते—त्वदर्थम्, यः श्रद्धा हि—श्रद्धया युक्तः एव सन्, वाजी—अन्नयुक्तो हविर्युक्तो यजमानो भवति, सः पार्ये दिवि—सोमसम्पादनदिने, वाजम्—अन्नम्, सिषासति—सेवते लभते॥ ८॥

O Indra, the lord of riches (or the giver of dwellings), what mortal can injure thee? Maghavan, the sacrificer who desires to obtain food on the final day of the Soma-sacrifice, offers thee (sacrificial) food with faith or reverence.—8.

**सा०भा०।** हे 'वसो' वासक व्यापक वा, हे 'इन्द्र'! 'तं' प्रसिद्धं 'त्वा' त्वां 'कः' मर्त्यः 'आ दधर्षति' आधर्षयेत्। हे 'मघवन्'! 'ते' त्वदर्थं यः 'श्रद्धा' श्रद्धया युक्तः सन् 'वाजी' हविष्मान् यजमानो भवेत्। 'पार्ये दिवि' सौत्येऽहनि सः 'वाजं' हविर्लक्षणमन्नं 'सिषासति' दातुमिच्छति॥ ८॥

८। ऋ० सं ७ म० ३२ सू० १४ ऋ०। ṚV. reads—(i) **'वसुम् आ'** instead of **'वसो आ ( वसवा )'**; (ii) **'श्रद्धा इत् ते'** for **'श्रद्धा हि ते'**। उ० आर्चि० ८,२,६, १।

Sāyaṇa, in his com. on the ṚV. verse, explains 'वाजं सिषासति' as अन्नं सेवते *obtains food*; Mr. Grfth. renders—'*wins the spoil.*'

श्रद्धा—*for* श्रद्धया, Instr. case,—reverentially; the case term. ( विभक्ति ) drops by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. दधर्षति—rt. धृष् *to dare*, लेट् (Ved. Subj.) opt. form. दधर्षत्।

वाजी, वाजम्—वाज means अन्न, food,—Ngh. 2. 7.

सिषासति—Desid. ( सन् ) of rt. सन् *to gain* or *to obtain. see* SV. 1. 238.

पार्ये दिवि—Mon. Wilms. assigns several meanings to the word पार्य (*mfn*)—last, final, decisive; Grfth. after him, renders 'on the decisive day', Sāy. interprets—'on the day, on which Soma-juice is finally offered to Indra, i.e., at the end of the Soma-sacrifice performed in honour of Indra.

---

भरद्वाज ऋषिः।

१ २ ३ २ ३ १र २र ३ १ २
इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः।
३ १र २र ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
हित्वा शिरो जिह्वया रारपच्चरत्त्रिंशत्पदा न्यक्रमीत्॥९॥२८१॥

इन्द्राग्नी इति। अपात्। इयम्। पूर्वा। आ। अगात्। पत्ऽवतीभ्यः। हित्वा। शिरः। जिह्वया। रारपत्। चरत्। त्रिंशत्। पदा। नि। अक्रमीत्॥९॥

भाष्यसारः। हे इन्द्राग्नी देवते, अपात्—पादहीना, इयम् उषाः, पद्वतीभ्यः—पादचारिभ्यः सुप्तेभ्यः प्राणिभ्यः इत्यर्थः, पूर्वा—पूर्वमुदिता सती, आगात्—आगच्छति। तथा शिरः हित्वा—त्यक्त्वा स्वयं शिरोरहिता, जिह्वया—उषसि प्रबुद्धप्राणिनां

वागिन्द्रियद्वारेण पक्षिकूजितादिरूपेण रारपत् भृशं शब्दं कुर्वाणा, चरत्—चलन्ती, त्रिंशत्पदा—त्रिंशत्पदानि त्रिंशन्मुहूर्त्तलक्षितमहोरात्रम्, न्यक्रमीत्—अतिक्रामति। सर्वमेतद् युवयोः प्रभावेण सिध्यति ॥ ६ ॥

O Indra and Agni, this footless (Dawn) comes before the footed (beings fast asleep) without the head herself, making loud sounds with the tongue, passing onward she travels thirty steps.—9.

**सा०-भा० ।** हे 'इन्द्राग्नी'! 'अपात्' पादरहिता 'इयम्' उषाः 'पद्वतीभ्यः' पादयुक्ताभ्यः 'सुप्ताभ्यः' प्रजाभ्यः 'पूर्वा' प्रथमभाविनी सती 'आगाद्' आगच्छति। तथा प्राणिनां 'शिरो' 'हित्वा' त्यक्त्वा स्वयमशिरस्कापि 'जिह्वया' प्राणिस्थया तदीयेन वागिन्द्रियेण 'रारपत्' भृशं शब्दं कुर्वती 'चरत्' एवं चरन्ती उषाः 'त्रिंशत्पदानि' अवयवभूतान् त्रिंशन्मुहूर्त्तान् 'न्यक्रमीत्' एकेन दिवसेनातिक्रामति। एतच्च युवयोः कर्मेति स्तुतिः ॥ ६ ॥

६। ऋ० सं० ६ म० ५६ सू० ६ ऋ०। यजुः ३३,६३। ṚV. reads (i) 'वावदद्' instead of 'रारपत्'; (ii) 'हित्वी शिरः' for 'हित्वा शिरः'। The ṚV. hymn (ṚV. vi. 59) is addressed to the dual deity इन्द्राग्नी (Indra and Agni).

Prof. Wilson's notes on the verse are worth observing :—

'Hitvī Śiras'—literally—*exciting the head*, is explained—'prāṇinām śiraḥ prerayitrī'—*urging or animating the head of the living beings* : or it may apply to the Dawn, as being headless,—'Śiras tyaktvā svayam aśiraskā satī',—*she having abandoned the head, being of herself headless*, though what is meant is doubtful : Mahīdhara, after proposing the same interpretation as Sāyaṇa, suggests another, in which he refers the epithets to *vāc* (speech), *apāt* (footless), meaning 'prose'—*gadyātmikā* and so on, but this is obviously fanciful.'

शिरः—*Viv.* gives a very suggestive explanation that the head, here, refers to the sun. As Uṣas (Dawn) appears before the rise of the sun, she is called, here, headless.

रारपत्—*Int.* ( यङ् ) of rt. रप् ( व्यक्तायां वाचि, *to speak distinctly, to chatter*)*. Grfth. comments—speaking loudly in the form of the chirpings of earliest birds and the voice of awakened nature. He apparently adopts the interpretation of *Viv.*, the text of which is as follows :—'यद्वा उषसः उदयवेलायां पक्षिणः शब्दं कुर्वन्ति तदुषस्युपचर्यते'।

त्रिंशत्पदा ( पदानि )—The thirty *muhūrtas*, divisions of the day and night, one *muhūrta* being equivalent to 48 minutes.

---

* Mcdnll's stud. Ved. Gram. App. I, List of Verbs, P. 411.

बालखिल्या ऋषयः ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
आ शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥१०॥२८२॥

इन्द्र । नेदीयः । आ । इत् । इहि । मितऽमेधाभिः । ऊतिऽभिः । आ । शंऽतम । शंऽतमाभिः । अभिष्टिऽभिः । आ । सुऽआपे । स्वापिऽभिः ॥१०॥

भाष्यसारः । **हे इन्द्र, त्वं मितमेधाभिः—परिमिताभिरनुग्रहबुद्धिभिः, ऊतिभिः—रक्षाभिश्च सह, नेदीयः—अस्माकम् अन्तिकम्, आ इत् इहि—आगच्छ एव, शन्तम—हे परम-मङ्गलमय, त्वं शन्तमाभिः—अतीव-शुभकरीभिः, अभिष्टिभिः—अभिमताभिः ईप्सितद्रव्यैरित्यर्थः सह, आ—आगच्छ, स्वापे—हे शोभनबन्धो, स्वापिभिः—बन्धुभिः सह आ—आगच्छ ॥ १० ॥**

Come, Indra, near us, with proper good grace and protection, come, most auspicious, with most salutary blessings ; come, good friend, with benevolent friends.—10.

**सा०-भा० ।** हे 'इन्द्र' 'नेदीयः' अन्तिकतममस्माकं यज्ञस्थानम् 'एदिहि' आगच्छैव । काभिः साकमिति ? उच्यते । 'मितमेधाभिः' परिमितप्रज्ञाभिः 'ऊतिभिः' रक्षाभिः । यद्वा निर्मितयज्ञाभिरूतिभिः सह । हे 'शन्तम' सुखतम ! 'शन्तमाभिः' सुखतमाभिः 'अभिष्टिभिः' प्राप्तिभिः अभिमताभिर्वा आगच्छेति शेषः । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । तथा हे 'स्वापे' अस्माकं बन्धुभूत ! सुखस्य आपयितर्वा । 'स्वापिभिः' बन्धुभूताभिः, सुखस्य प्रापयित्रीभिः 'अभिष्टिभिः' आगच्छेति शेषः ॥ १० ॥

इति सायणाचार्यविरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य पञ्चमः खण्डः ।
तृतीयप्रपाठकस्य द्वितीयार्धे च चतुर्थी दशतिः ॥

१० । ऋ० सं० बालखिल्य० ५, ५, ( ८ म० ५३ सू० ५ ऋ० ) ।

मितमेधाभिः—'having firmly established power'—Mon. Wilms. S. E. Dict. As an adj. with ऊतिभिः, it may mean—'with protection supported by firm power.'

शंतम, शंतमाभिः—most auspicious or beneficent.

स्वापे, स्वापिभिः—'good kinsman, come with good kinsmen'—*Grfth.* 'आपि' is used in the sense of 'friend'—*vide* SV. 1. 239. स्वापे—voc. of स्वापि ( सु-आपि ) a good friend. आपि—acc. to Sāy. on ṚV. ii. 29. 4,—is drvd. fr. rt. आप् *to obtain*, caus. mg.—causing to obtain (wealth or happiness).

---

**अथ तृतीयाध्यायस्य षष्ठः खण्डः। तृतीयप्रपाठकस्य च द्वितीयार्धे पञ्चमी दशतिः।**

**नृमेध ऋषिः।**

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
**इत ऊती वो अजरं प्रहेतारमप्रहितम्।**
३ १र २र ३ १ २ ३ १ २"३ १ २ ३ १ २
**आशुं जेतारं हेतारं रथीतममतूर्तं तुग्रियावृधम् ॥१॥२८३॥**

इतः। ऊती। वः। अजरम्। प्रऽहेतारम्। अप्रऽहितम्। आशुम्। जेतारम्। हेतारम्। रथीऽतमम्। अतूर्त्तम्। तुग्रियऽवृधम् ॥१॥

भाष्यसारः। **हे अस्मदीया जनाः, वः—यूयम्, ऊती—ऊतये रक्षणार्थमित्यर्थः, अजरम्—जराहीनम्, प्रहेतारम्—रिपूणां प्रेरकं नाशकमिति यावत्, अप्रहितम्—अन्यैर्न प्रेरितम्, आशुम्—क्षिप्रम्, जेतारम्—जयशीलम्, हेतारम्—गमनशीलम्, रथीतमम्—रथिश्रेष्ठम्, अतूर्त्तम्—अपरैर्न हिंसितम्, तुग्रियावृधम्—तुग्र्यावृधम् ( ऋग्वेदधृत-पाठः ), आकाशसम्भूत-वृष्ट्युदकस्य वृद्धिकरम्—तुग्रशब्दस्याकाशवाचित्वेन प्रसिद्धेः, इन्द्रम् इतः कुरुत—अभिमुखीकुरुत आह्वयत इत्यर्थः ॥ १ ॥**

O you worshippers, invoke, to your protection, (Indra), ever-young, the vanquisher of enemies, vanquished by none, the smart conqueror, the best of charioteers, uninjured by any, increaser of rain waters.—1.

**सा०-भा०।** हे अस्मदीया जनाः! 'वो' यूयम् 'अजरं' जरारहितं 'प्रहेतारं' शत्रूणां प्रेरकम् 'अप्रहितं' केनाप्यप्रेषितम् 'आशुं' वेगवन्तं 'जेतारं' शत्रूणाम्। 'हेतारं' गन्तारम्। 'रथीतमं' रथिनां श्रेष्ठम् 'अतूर्त्तं' केनाप्यहिंसितम्। 'तुग्रियावृधम्' उदकस्य वर्धयितारमिन्द्रम् 'ऊती' ऊत्यै रक्षणाय 'इतः' कुरुत पुरस्कुरुतेति यावत् ॥ १ ॥

१। ऋ० सं ८ म० ६६ सू० ७ ऋ०। ṚV. reads **'तुग्र्यावृधम्'** instead of **'तुग्रियावृधम्'**। ṚV. has always the form **तुग्र्या।**

ऊती—*for* ऊतये, dat. sg. the case term. ( विभक्ति ) is substituted by the prolongation of the last vowel of the stem by 'सुपां सुलुक्०' Pāṇ vii. 1. 39.

रथीतमम्—रथी is drvd. as रथ + tad.*aff.*ई, in the sense of मतुप्, by 'छन्दसी-वनिपौ'—वा०, *see* रथीः, SV. 1. 41. then तमप् in spv. dg. is added.

प्रहेतारम्, अप्रहितम्—both drvd. fr. rt. हि *to impel*, 5 ; mg. resp.—the repeller (of enemies), himself repelled by none.

अतूर्तम्—'unharmed by any'—*Wils.* fr. rt. तृ (or *tur*—Mednll) ; occurs also in ṚV. i. 126. 1 ; v. 25. 5 ; x. 149. 1.

तुग्रियावृधम्—the final long vowel आ in the preceding word तुग्रिया of the comp.—by 'नद्दिवृतिवृधि०' Pāṇ. vi. 3. 116. Acc. to some तुग्रिया and तुग्रा are fem. with *aff.* टाप् (आ). Grfth. renders 'Tugriya's strengthener' and comments—'protector of Bhujyu, the son of Tugra, or of the descendants of that chief in general' ; this is fanciful or rather inaccurate and should be rejected altogether, he having no idea of the real mg. and gram. of the word ; moreover, *Bhujyu*, the son of *Tugra* is more concerned with the Aśvins (as protected by the twin gods) than with Indra, and in that case '*Taugrya*' (**तौग्र्य**) is the form grammatically demanded, *vide* ṚV. i. 117. 15 ;—118. 6 ;—158. 3 ;—180. 5 ;—182. 5, 6, 7 ; viii 5. 22 ; x. 39. 4. 'Augmenter of rain-waters'—*Wils.* after *Sāy.* तुग्रावृध: (in ṚV. viii. 1. 15.) is differently explained by Sāy. as—'*increasing with the waters termed Vasatīvarī* and *Ekadhanā*'. (वसतीवर्य्येकधनाख्याभिरद्भिर्वर्धमाना: ). The word तुग्रा occurs among the syns. of उदक (water)—Ngh. 1. 12 ; the word तुग्र has several meanings—(1) food, (2) sky, (3) sacrifice, (4) the greatest,—(अन्नाकाशयज्ञवरिष्ठेषु तुग्रशब्द: इति वृत्ति: ) ;—it takes *affs.* घन् and यत् optionally, getting the forms तुग्रिय and तुग्र्य respectively, by 'तुग्राद् घन्', Pāṇ. iv. 4. 115. (the latter from being generally found in the ṚV. *vide* i. 33. 15 ; viii. 3. 23 ;—32. 20 ;—74. 1, etc.).

---

वसिष्ठ ऋषिः ।

१र २र ३ १ २ ३ २उ ३ १र २र
**मो षु त्वा वाघतश्चनारे अस्मन्नि रीरमन् ।**
३ १ २ ३ १ २ ३ १ २ ३ २ ३ १र २र
**आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥२॥२८४॥**

मा । ऊँ इति । सु । त्वा । वाघतः । चन । आरे । अस्मत् । नि । रीरमन् । आरात्तात् । वा । सधऽमादम् । नः । आ । गहि । इह । वा । सन् । उप । श्रुधि ॥ २ ॥

भाष्यसारः । हे इन्द्र, वाघतश्चन—अपरे यजमाना ऋत्विजो वा, अस्मत्—अस्मत्तः, आरे उ—दूरतः देव, त्वां मा नि रीरमन्—नितरां न रमयन्तु, ते तथा

त्वां भजन्तां यथा त्वं न अस्माभिर्दुर्लभो भवेरित्यर्थः। अतः आरात्ताद्वा—दूरस्थोऽपि, त्वं नः—अस्माकम्, सधमादम्—यज्ञस्थलम्, सु—साधु, आगहि—आगच्छ, इह—अत्र वा, सन्—वर्त्तमानः, उप श्रुधि—स्तुतिं शृणु ॥ २ ॥

Let not (other) priests or sacrificers detain thee far from us; either even from a distance come thou to our sacrifice (where gods assemble and rejoice together), or being present here, listen to our prayers.—2.

**सा०-भा० ।** 'त्वा' त्वां 'वाघतश्चन' यजमाना अपि 'अस्मत्' अस्मत्तः 'आरे' दूरे 'मो निरीरमन्' नितरां मा रमयन्तु। अतस्त्वम् 'आरात्ताद्वा' दूरेऽपि वर्त्तमानः 'नः' अस्मदीयं 'सधमादं' यज्ञम् 'आगहि' आगच्छ। 'इह वा' अत्रापि वा 'सन्' विद्यमानः 'उपश्रुधि' अस्मदीयं स्तोत्रम् उपशृणु ॥ २ ॥

२। ऋ० सं ७ म० ३२ सू० १ ऋ०। ṚV. has 'आरात्ताच्चित्' instead of 'आरात्ताद्वा'। उ० आर्चि० ८, २, ६, १।

वाघतः—fr. rt. वह् *to carry;* priests (who carry out sacrifice, or bear oblation), Ngh. 3. 18; *vide* SV. I. 9; वाघद्भिः, I. 57.

चन—*vide* notes on SV. I. 241.

आरे—दूरे, at a distance, afar; very frequently found in the Ṛgveda,—i. 74. 1;—114, 4. 10;—ii. 28. 6;—29, 1; iii. 8. 2; iv. 11. 6; v. 45. 5, etc. cf. 'आके, पराके, पराचैः, आरे, परावतः इति पञ्च दूरनामानि—these are the 5 syns. of दूर—Ngh. 3. 26.

नि-रीरमन्—let (them) not entertain and detain thee; rt. रम्, Injunctive mood, Subj. in sense; *see* Mcdnll's Stu. Ved. Gram. App. I. List of Vbs. p. 411; for Injunctive mood, *vide* ibid. P. 349, Para 215 B.

आरात्तात्—from afar; occurs also in ṚV. i. 167. 9; viii. 22. 16.

सधमादम् *accus.*—sacrifice, *vide* notes on सधमाद्ये, SV. I. 239; 260. सह माद्यन्ति यत्र देवाः स सधमादो यज्ञः तं प्रति;—a sacrifice is so called as the gods rejoice there together.

आ—गहि—*vide* notes on SV. I. 16. श्रुधि—*vide* notes on SV. I. 29.

---

वशिष्ठ ऋषिः।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे।
१ २ ३ १र २र ३ २उ ३ १र २र ३ १र २र
पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥३॥२८५॥

सुनोत । सोमऽपाब्ने । सोमम् । इन्द्राय । वज्रिणे । पचत । पक्तीः । अवसे । कृणुध्वम् । इत् । पृणन् । इत् । पृणते । मयः ॥३॥

भाष्यसारः । भो जनाः, सोमपाब्ने--सोमं पिबते, वज्रिणे इन्द्राय, सोमम् सुनोत—अभिषुणुत, अवसे--इन्द्रस्य तृप्तये, पक्तीः—पक्तव्यान् पिष्टकादीन्, पचत, कृणुध्वमित्—तस्य इन्द्रस्य प्रियं कर्म अवश्यं कुरुत, स देवः पृणते—हवींषि ददते यजमानाय, मयः—सुखम्, पृणन्नित्—ददद्देव ॥ ३ ॥

Press out the Soma-juice for Indra, the drinker of the Soma, the thunder-bearer; cook the sacrificial cakes to his satisfaction, do, indeed, (what is pleasing to him), for he assuredly grants happiness to the sacrificer who offers him oblation.—2.

**सा०-भा० ।** हे मदीयाः पुरुषाः! 'वज्रिणे' वज्रवते 'सोमपाब्ने' सोमस्य पात्रे 'इन्द्राय' 'सोमं' 'सुनोत' अभिषुणुत । 'अवसे' इन्द्रन्तर्पयितुं 'पक्तीः' पक्तव्यान् पुरोडाशादीन् पचत च । 'कृणुध्वमित्' इन्द्रप्रियकराणि कर्माणि च कुरुतैव । इन्द्रो हि 'मयः' सुखं 'पृणन्नित्' यजमानाय प्रयच्छन्नेव 'पृणते' हवींषीति शेषः ॥ ३ ॥

३ । ऋ० सं ७ म० ३२ सू० ८ ऋ० ।

सुनोत—rt. सु *to press out juice*, Imp. 2. pl.

सोमपाब्ने—*vide* notes on the word, SV. 1. 156; dr. सोम—rt. पा—वनिप्, Pāṇ. iii. 2. 74.

पक्तीः—fr. rt. पच् *to cook*,—food or any dish of cooked food.—Mon. Wilms. S. E. Dict. p. 575, col. 1.

अवसे कृणुध्वम्—Grfth renders—'cause him to favour us'; अवसे, elsewhere, is taken by Sāyaṇa to mean—*for our protection*; here he interprets differently—'to satisfy Indra.'

पृणन् (nom. sg.—*rfs.* to Indra), पृणते (dat. sg.—*rfs.* to the sacrificer)—fr. rt. पृ *to fill*. 9 u.—pres. PT. (शतृ); Sāyaṇa and his followers have taken the root here to mean—'*to give*.' Grfth. translates—'*the giver blesses him who gives*' i. e., Indra rewards the liberal worshipper.

मयः—happiness, *vide* our notes on मयोभु. SV. 1. 184; *also* on मयः 1. 102.

भरद्वाज ऋषिः।

१ २ ३ १र २र ३ २ ३ १ २ ३ २
**यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम्।**
१ २ ३ १ २ ३ १ २ ३ २
**सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥४॥२८६॥**

यः। सत्राऽहा। विऽचर्षणिः। इन्द्रम्। तम्। हूमहे। वयम्। सहस्रऽमन्यो। तुविऽनृम्ण। सत्पते। भव। समऽत्सु। नः। वृधे ॥४॥

भाष्यसारः। **यः—इन्द्रः, सत्राहा—सतत-शत्रुहन्ता, विचर्षणिः—विश्वदर्शी, वयं तम्—प्रसिद्धम्, इन्द्रम्, हूमहे—स्तोत्रैराह्वयामः यथा,—हे सहस्रमन्यो—बहुयज्ञैः आराधनीय शत्रुनाशाय बहलकोपपरायण वा, तुविनृम्ण—प्रभूतधन, सत्पते—सज्जनपालक, इन्द्र, त्वं समत्सु—समरेषु, नः—अस्माकम्, वृधे—अभ्युदयाय भव ॥ ४ ॥**

We invoke renowned Indra who is ever the destroyer of enemies, the beholder of all,—O Indra, adorable by thousands of sacrifices, (or full of thousand-fold wrath), the lord of boundless wealth, the guardian of the good, be thou, in battles, to our prosperity.—4.

**सा०-भा०। यः इन्द्रः 'सत्राहा' सततं शत्रूणां हन्ता। 'विचर्षणिः' विशेषेण सर्वस्य द्रष्टा तमिन्द्रं वयं 'हूमहे' स्तुतिपदैराह्वयामः। उत्तरार्द्धः प्रत्यक्षकृतः। हे 'सहस्रमन्यो!' बहुविधं शत्रुनाशार्थं सहस्रसङ्ख्याककोपयुक्त! यद्वा, मन्युः क्रतुः, सहस्रसङ्ख्याकैः क्रतुभिः पूज्येन्द्र! हे 'तुविनृम्ण!' बहुधन, 'सत्पते'! सतां पालयितरिन्द्र! 'समत्सु' संग्रामेषु 'नः' अस्माकं 'वृधे' वर्धनाय 'भव' ॥ ४ ॥**

**४। ऋ० सं ६ म० ४६ सू० ३ ऋ०।** Ṛ.V. has **'सहस्रमुष्क'** (many organed—*Wils.*) instead of **'सहस्रमन्यो'**।

सत्राहा—ever-slayer of enemies; for सत्रा *vide* our notes on SV. 1. 170, also on सत्राजित्—SV. 1. 231.

विचर्षणिः—*vide* our notes on the word, SV. 1. 84; 200.

तुवि-नृम्ण—तुवि—बहु, innumerable, ample, Ngh. 3. 1; तुवि is found in compds. e.g. तुविग्रीवः, SV. 1. 142; तुविवाजाः SV. 1. 153. नृम्णं has the sense—manhood, power, strength, courage, Ngh. 2. 9; *also* means—धनम्, wealth, Ngh. 2. 10. *Vide* 1. 231; 262.

सत्पते—Indra is often called—the guardian or cherisher of the good, the protector of the pious. *Vide* our notes on the word, SV. 1. 168, 234.

समत्सु—in battles, Ngh. 2. 17 ; *vide* notes on the word SV. 1. 269.

---

परुच्छेप ऋषिः ।

१ २ २ २ ३ १ २
**शचीभिर्नः शचीवसू दिवा नक्तं दिशस्यतम् ।**
१ २ ३ १ २र ३ २ ३२उ २ २ ३ २ ३ २
**मा वां रातिरुपदसत्कदाचनास्मद्रातिः कदाचन ॥५॥२८७॥**

शचीभिः । नः । शचीवसू इति शचीऽवसू । दिवा । नक्तम् । दिशस्यतम् । मा । वाम् । रातिः । उप । दसत् । कदाचन । अस्मत् । रातिः । कदाचन ॥ ५ ॥

भाष्यसारः । **शचीवसू—हे यज्ञैकधनौ अश्विनौ, युवाम् नः शचीभिः—अस्माकं यागकर्मभिः हेतुभूतैः, दिवानक्तम्—अहोरात्रम्, दिशस्यतम्—वाञ्छितं दत्तम्, वाम्—युवयोः, रातिः दानम्—अस्मदभीष्टफलप्रदानरूपम्, कदाचन—कदापि, मा—न, उपदसत्—क्षयमगमत्, सदैवाहीनं भवत्वित्यर्थः । अस्मद्रातिः—अस्माकं दानं—यज्ञेषु हविर्दानरूपम्, कदाचन—कदाचित्, मा उपदसत्—न क्षीणं भवतु,—अस्माकं यज्ञकर्म, प्रार्थिभ्यः सामान्यतो दानं वा भवतोश्च अस्मद्वाञ्छापूरणं नियतमक्षीणं भवत्विति भावः ॥ ५ ॥**

(O Aśvins) Rich in sacrificial rites, confer on us blessings day and night, in consequence of our pious deeds ; may never your gift (i. e. favour to us), nor ever our offering (to you) fall short.—5.

**सा०-भा०** । हे 'शचीवसू'!—शचीति कर्मनाम—अस्मदनुष्ठितज्योतिष्टोमादिकर्मधनौ ! युवां 'शचीभिः' अस्मदीयैः कर्मभिर्यागादिभिर्निमित्तभूतैः 'दिवा नक्तम्' अहनि रात्रौ च 'दिशस्यतं' विसृजतम् अभिमतं दत्तमित्यर्थः । दाशृ दाने इत्यस्येदं छान्दसं रूपम् । यद्वा दशस्यतिर्दानार्थः कण्ड्वादिषु द्रष्टव्यः । 'वां' युवयोः 'रातिः' दानं 'कदाचन' सर्वदा यागकालेऽयागकालेऽपि 'मोपदसत्' मोपक्षीणं भूत् । दसु उपक्षये ।—लुङि पुषादिद्युताद्लृदितीति च्लेरङ् । न केवलं युष्मदीयम्, अपितु 'अस्मत्' अस्माकमपि 'रातिः' दानं हविरादिप्रदानं सर्वविषयं दानं वा अर्थिभ्यः

—'कदाचन' सर्वावस्थायामपि 'मोपदसत्' उपक्षीणं मा भूत् सर्वदा वर्त्तताम्। अहमपि सर्वदा युष्मानुद्दिश्य दद्याम्। युवामपि मदभिमतं सर्वदा दत्तमित्यर्थः॥ ५॥

५। ऋ० सं० १ म० १३९ सू० ५ ऋ०। R̥V. reads **'दशस्यतम्'** instead of **'दिशस्यतम्'**। This verse is addressed to the Aświns.

शचीभिः—'through your great power'—*Grfth.* In this sense, cf. 'तुभ्यं श्चोतन्त्यध्रिगो शचीवः'—O irresistible, mighty (Agni), drops of ghee distil for thee,—R̥V. iii. 21. 4, quoted in Nir. 5. 11.

शचीवसी—'rich in strength'—*Grfth*; the word शची is found in the list of the syns. of कर्म, Ngh. 2. 1; Sāy. and *Wils.* adopt this latter sense.

दिशस्यतम्, उपदसत् (rt. दस् *to lay waste,*—Aor. लुङ्)—for dr. *vide* Sāyaṇa's com. above; दिशस्यतम् is the archaic. form of दशस्यतम् (rt. दाश् *to give;* रातिः—fr. rt. रा *to give.* Ngh. 3. 20.

———

वामदेव ऋषिः

२ २ ३ १ २ ३ १२ ३ १ २ ३ १२
# यदा कदा च मीढुषे स्तोता जरेत मर्त्यः।
१र २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
# आदिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम्॥६॥२८८॥

यदा। कदा। च। मीढुषे। स्तोता। जरेत। मर्त्त्यः। आत्। इत्। वन्देत। वरुणम्। विपा। गिरा। धर्त्तारम्। विऽव्रतानाम्॥ ६॥

भाष्यसारः। **मर्त्यः—मरणधर्मा, स्तोता—उद्गाता, यदा कदा च—यस्मिन् कस्मिन्नेव काले, मीढुषे—हविर्दत्तवते यजमानाय तस्य कृते इत्यर्थः, अभीष्टवर्षितुः वरुणस्य तोषाय वा, जरेत—स्तुतिं कुर्यात्, आदित्—अनन्तरम् एव, विपा—ज्ञानप्रवुद्धया, गिरा—वाचा, विव्रतानाम्—विविधयज्ञानुष्ठानवताम्, धर्त्तारम्—पोषकम्, वरुणम्—एतदाख्यं देवं वन्देत—स्तूयात्, स्तूयाच्चेद् वरुणमेव स्तूयादित्याशयः॥ ६॥**

Whenever the mortal singer of praise (Udgātṛ) will sing prayer, for the good of his sacrificer, the bounteous offerer of oblations, let him, verily then, with inspired song, adore Varuṇa, the maintainer of the performers of manifold rites.—6.

**सा०-भा०।** 'यदा कदा च' यस्मिन् काले 'मीढुषे' सेक्त्रे हविःप्रदात्रे यजमानाय तस्य यागार्थं 'मर्त्यो' मरणधर्मा 'स्तोता' स्तुतिकर्त्तोद्गाता 'जरेत' स्तूयात्। 'आदित्' अनन्तरमेव तस्मिन् काले इत्यर्थः। 'वरुणं' पापस्य वारकं 'विव्रतानां'

विविधानां कर्मणां 'धर्त्तारं' धारकं वरुणनामानं देवं 'विपा' विशेषेण रक्षिकया 'गिरा' स्तुत्या 'वन्देत' स्तूयात्। यदा यजमानार्थमुद्गाता स्तौति तदा वरुणमेव स्तौतीत्यर्थः। अथवा 'मीढुषे' अभिमतवर्षित्रे वरुणाय तत् प्रीतये 'यदा कदा च' यस्मिन् कस्मिंश्चित् काले स्तुत्यर्हे 'मर्त्यः' स्तोतोद्गाता 'जरेत' स्तूयात्। 'आदिद्'नन्तरमेव यजमानोऽपि उक्तलक्षणं स्वयमपि 'विपा गिरा' 'वन्देत' नमस्कुर्यात् स्तूयाद्वा ॥ ६ ॥

६। इयम् ऋक् ऋग्वेदे नास्ति।

मीढुषे dat. sg.—bountiful, liberal giver. fr. rt. मिह् *to shed water*, I; मीढ्वान् is anom, formed by 'दाश्वान्साह्वान्मीढ्वांश्च' Pāṇ. vi. 1. 12.

जरेत—*vide* notes on जरन्ते, SV. 1. 157.

विपा—*vide* our notes on dr., etym. and mg. of the word विपाम्, SV. 1. 98.

विव्रतानाम्—विविधं व्रतं कर्म (Ngh. 2. 1) येषाम्,—those engaged in varied sacrificial ceremonies.

---

मेध्यातिथिर्ऋषिः*

२ १र २ १ ३ २ ३ १ २ ३२
पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे।

१र २र ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
यः संमिश्लो हर्योर्यो हिरण्यय इन्द्र वज्री हिरण्ययः ॥७॥२८९॥

पाहि। गाः। अन्धसः। मदे। इन्द्राय। मेध्यऽअतिथे। यः। सम्ऽमिश्लः। हर्योः। यः। हिरण्ययः। इन्द्र। वज्री। हिरण्ययः ॥ ७ ॥

भाष्यसारः। मेध्यातिथे इन्द्राय—हे यज्ञे अभ्यागत इन्द्र, 'यः इन्द्रस्त्वम्'—इति अध्याहरणीयम्, हर्योः निजाश्वयोः संमिश्लः—रथे योजकः, यस्त्वम् च—वज्री हिरण्ययः—हितरमणीयः सुवर्णमयरथयुक्तो वा, स त्वम् अन्धसः—सोमरूपस्यान्नस्य, मदे—पानानन्दे जाते, गाः—अस्माकं गोधनं सन्ततीर्वा, पाहि—पालय, सोमपानप्रीतो नः शुभं कुरु इत्यर्थः ॥ ७ ॥

O Indra, the immaculate guest at our sacrifice, who yokes the pair of horses to his car, the wielder of the thunderbolt, who is benevolent and graceful (or, possessed of the goldencar), in the exhilaration of the drunk Soma, mayest thou save our offsprings.—7.

* According to Viv.—ascribed to Vatsa.

**सा०-भा०।** इन्द्रायेति चतुर्थ्येकवचनमिदं सम्बुद्ध्येकवचनस्य स्थाने द्रष्टव्यम्। हे 'इन्द्र'! 'मेध्यातिथे'! मेधो यज्ञः तस्मिन् भवो मेध्यः मेध्यश्चासौ अतिथिश्चेति मेध्यातिथिः, तस्य सम्बोधनं हे मेध्यातिथे! यज्ञे भव अतिथिभूत इन्द्र! 'अन्धसः' पीतस्य सोमस्य 'मदे' सति त्वमस्मदीयाः 'प्रजाः' 'पाहि' रक्ष। 'यः' इन्द्रः 'हर्योः' अश्वयोः 'संमिश्लः' स्वरथे संमिश्रयिता 'इन्द्रो वज्री हिरण्ययः' हितरमणीयो यस्य रथो हिरण्ययो हिरण्मयः ॥ ७ ॥

७। ऋ० सं० ८ म० ३३ सू० ४ ऋ०। RV. reads (1) पाहि 'गायान्धसः'—(गाय—sing praise to Indra) instead of 'पाहि गा अन्धसः'; (2) 'हर्योर्यः सुते सचा वज्री रथो हिरण्ययः' instead of 'हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः'।

इन्द्राय *dat.—for* इन्द्र *voc.* हिरण्यय—*for* class. हिरण्मय; हिरण्यशब्दात् विहितस्य मयटो म-लोपो निपात्यते by 'ऋत्व्यवास्त्व्य…हिरण्ययानि छन्दसि', Pāṇ. vi. 4. 175.

मेध्यातिथि is *here* explained as *guest at sacrifice*—an adj. referring to Indra.

---

भर्ग ऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १र २र
**उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः।**
३ १ २ ३ २ ३ १ २ ३ १र २र ३ १ २
**सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥८॥२९०॥**

उभयम्। शृणवत्। च। न। इन्द्रः। अर्वाक्। इदम्। वचः। सत्राच्या। मघऽवान्। सोमऽपीतये। धिया। शविष्ठः। आगमत् ॥ ८ ॥

भाष्यसारः। अर्वाक्—प्रसादाभिमुखः, मघवान्—इन्द्रः, शविष्ठः—बलवत्तमः, उभयम् इदं वचः—स्तुतिं प्रार्थनञ्च, शृणवत्—शृणोतु, श्रुत्वा सत्राच्या—सतताभिमुखप्रवणया यज्ञप्रशंसाकारिण्या वा, धिया—मत्या, आगमत्—आगच्छतु च ॥ ८ ॥

May Indra being turned towards us, listen to both these our songs, (*prayers and praises*). May mightiest Maghavan, with the mind ever favourably disposed to us, come to drink the Soma.—8.

**सा०-भा०।** 'उभयं' स्तोत्रात्मकं शस्त्रात्मकं चोभयविधम् 'इदं वचो' 'अर्वाक्' अस्मदभिमुखः 'इन्द्रः' 'शृणवत्' शृणोतु। श्रुत्वा च 'सत्राच्या' अस्माकं यज्ञं पूजयन्त्या 'धिया' युक्तः सन् 'मघवान्' धनवानिन्द्रः 'शविष्ठः' अतिशयेन बलवान् 'सोमपीतये' सोमपानाय 'आ-गमत्' आगच्छतु ॥ ८ ॥

८। ऋ० सं० ८ म० ६१ सू० १ ऋ०। R̥V. has 'मघवा' for 'मघवान्'। उ० आर्चि० ५, १, १४, १।

श्रणवत्—rt. श्रु *to hear*, लेट् (Ved. subj.)—may (Indra) hear.

अर्वाक्—near—Ngh. 2. 16 ; before, Nir. 5. 12 ; 12. 43.

सधाच्या—(*Instr.* of the *stem.* सधाची ; dr. सधा—अञ्च् *to go*—क्विप्—fem. *aff.* ङीप्) —*lit.* going towards, i. e., favourably inclined. Sāyaṇa here explains differently—e. g., (with the mind) fully appreciating or praising our sacrificial performance (अस्माकं यज्ञं पूजयन्त्या धिया); he takes सध here to mean *sacrifice* (यज्ञ); occurs also in R̥V. vii. 56. 18.

शविष्ठ—strongest ; शवस्=strength, Ngh. 2. 9 ; Nir. 1. 17 ; 12. 21.

आ—गमत्—may he come ; लेट् (Ved. Subj.).

मघवान्+सोमपीतये=मघवान्त्सोमपीतये by the sandhi rule 'नश्च' Pāṇ. viii. 3. 30.

---

मेधातिथिमेध्यातिथी ऋषी* ।

३ २ ३ १ २ ३ १ २ ३ १ २
महे च न त्वाद्रिवः परा शुल्काय दीयसे ।
२ ३१ २ ३ १र २र ३ २ ३ १ २
न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥९॥२९१॥

महे । च । न । त्वा । अद्रिवः । परा । शुल्काय । दीयसे । न । सहस्राय । न । अयुताय । वज्रिऽवः । न । शताय । शतऽमघ ॥ ९ ॥

भाष्यसारः । अद्रिवः—हे वज्रधर इन्द्र, महे च—महतेऽपि, शुल्काय—मूल्याय अधिकमूल्यविनिमयेनापीत्यर्थः, त्वा—त्वाम्, न परादीयसे—विक्रीणे अहमिति शेषः ; वज्रिवः—हे वज्रधर, शतमघ—बहुधन इन्द्र, न सहस्राय नायुताय न शताय च—अगणितधननिष्क्रयेणापि इत्यर्थः, त्वां न विक्रीणे किन्तु सततं त्वां परिचरामीति भावः ॥ ९ ॥

O wielder of the adamant, thou shouldst not be parted with even for a high price, not for a thousand, nor for ten thousands, Thunderer, nor for a hundred, Lord of boundless treasures.—9.

**सा०-भा०।** हे 'अद्रिवः' वज्रवन्निन्द्र!—चनेति निपातत्रयसमुदायो विभज्य योजनीयः। 'महे च' महतेऽपि 'शुल्काय' मूल्याय नाहं त्वां 'परा दीयसे' न विक्रीणामि। ददातेरुत्तमपुरुषस्य कर्त्तर्येव व्यत्ययेन रूपम्। 'परा शुल्काय

* Ascribed to Pragātha—acc. to *Viv.*

देयाम्' इति बह्वृचा आमनन्ति। हे 'वज्रिवः!' वज्रहस्तेन्द्र! 'सहस्राय' सहस्रसङ्ख्याकाय धनाय 'च न' 'परादीयसे'। 'अयुताय' दशसहस्राय शुल्काय न परादीयसे। हे 'शतामघ!' बहुधनेन्द्र! 'शताय'—बहुनामैतत्—अपरिमिताय धनाय च न परादीयसे न विक्रीणामि। उक्तसंख्याकाद्धनादपि त्वां न परित्यजामि। किन्तु बहुभिर्हविर्भिः परिचरामीत्यर्थः॥ ६॥

६। ऋ० सं० ८ म० १ सू० ५ ऋ०। Ṛ̥V. reads 'परा शुल्काय देयाम्' instead of 'परा शुल्काय दीयसे'।

शताय—signifies here infinite, शतं being a syn. of बहु, Ngh. 3. 1. शुल्काय occurs once more only in the Ṛ̥V; *vide* vii. 82. 6. परादीयसे—I would not dispose you of or offer you for sale; Sāy. drvs. it in Act. I. sg. It is an archaic form and seems to be modified in the Ṛgveda.

——:०:——

मेधातिथिमेध्यातिथी ऋषी।

१ २ ३ १ २ २उ ३ १ २
**वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः।**
३ १ २ ३ १ २ ३ २ ३ १ २
**माता च मे छदयथः समा वसो वसुत्वनाय राधसे॥१०॥२९२॥**

वस्यान्। इन्द्र। असि। मे। पितुः। उत। भ्रातुः। अभुञ्जतः। माता। च। मे। छदयथः। समा। वसो। वसुऽत्वनाय। राधसे॥ १०॥

भाष्यसारः। हे इन्द्र, त्वं मे--मम, पितुः—जनकात्, अभुञ्जतः—अपालयतः भ्रातुरुत--सहोदरादपि, वस्यान्--समधिकमर्हणीयोऽसि; वसो--हे निवासकारण, इन्द्र, त्वं मे माता च समा--तुल्यौ सन्तौ, वसुत्वनाय--व्यापकाय यशसे, राधसे--धनाय, यशोधनलाभायेत्यर्थः, छदयथः--मां समुत्साहयथः॥ १०॥

Thou art more valued to me, O Indra, than my father or my brother who is not kind; thou, the giver of dwellings and my mother are both equal to me, as you both favour me with celebrity and riches.—10.

**सा०-भा०।** हे 'इन्द्र'! त्वं 'मे' मदीयात् 'पितुः' जनकादपि 'वस्यान्'। वसीयान् वसुमत्तरोऽसि। 'उत' अपि च 'अभुञ्जतः' अपालयतो मम 'भ्रातुः' अपि त्वं वसीयानधिकोऽसि। हे 'वसो'! वासकेन्द्र! 'मे' मदीया 'माता च' त्वं च 'समा' समौ समानौ सन्तौ। 'पुमान् स्त्रिया' (पा० १।२।६७) इति पुंसः शेषः।

'ऋदयथः'—अर्चतिकर्मायम्—मां पूजितं कुरुथः। किमर्थम्? 'वसुत्वनाय' व्यापनाय 'राधसे' धनाय च उभयोर्लाभायेत्यर्थः ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य षष्ठः खण्डः। तृतीयप्रपाठकस्य च द्वितीयार्धे पञ्चमी दशतिः।

इति तृतीयः प्रपाठकः समाप्तः ॥

१०। ऋ० सं० ८ म० १ सू० ६ ऋ०।

वस्यान्—nom. sg. of the *stem* वस्यस्, drvd. from वसुमत् + ईयसुन् (comp. dg.)—more precious. This word (*in nom.*) occurs once more only, viz., 'सुतः सोमो असुतादिन्द्र वस्यान्'—the effused Soma, Indra, is more excellent than what is not effused, Ṛ̣V. vi. 41. 4. The word is found in the compd. वस्यइष्टये, which occurs in Ṛ̣V. i. 25. 4; i. 176. 1; viii. 86. 2, 3. Sāy.'s gram. notes are—'वसुमच्छब्दाद्विन्मतोर्लुगिति मतुपो लुकि टिलोपः ईयसुनो यकारलोपश्छान्दसः'—com. on i. 25. 4. *Fem.* वस्यसी occurs in v. 61. 6.

वसुत्वना—all-pervading, *see* in this sense 'श्रवः सूरिभ्यो अमृतं वसुत्वनम्'—grant to the pious imperishable *all-pervading* sustenance—Ṛ̣V. viii. 13. 12; *here* used as a substantive mg. *fame*.

———

अथ तृतीयाध्यायस्य सप्तमः खण्डः। चतुर्थप्रपाठकस्य च प्रथमार्धे प्रथमा दशतिः।

वशिष्ठ ऋषिः।

३ १र २र ३ १ २ ३ १ २
**इम इन्द्राय सुन्विरे सोमासो दध्याशिरः।**
१र २र ३ २ ३ १ २ ३ २ ३ १
**ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥१॥२९३॥**

इमे। इन्द्राय। सुन्विरे। सोमासः। दधिऽआशिरः। तान्। आ। मदाय। वज्रऽहस्त। पीतये। हरिऽभ्याम्। याहि। ओकः। आ॥ १ ॥

भाष्यसारः। वज्रहस्त—हे वज्रधर इन्द्र, इमे—एते, दध्याशिरः—दधिमिश्राः, सोमासः—सोमरसाः, इन्द्राय तुभ्यमित्यर्थः, सुन्विरे—अभिषुताः। तान्—सोमान्, मदाय—हर्षार्थम्, पीतये—पातुम्, ओक आ—यज्ञगृहं प्रति, हरिभ्याम्—स्वकीयाश्वाभ्याम्, आ याहि—एहि ॥ १ ॥

These Soma-juices, mixed with curds, have been extracted for Indra; come, O bolt-armed, with thy twain steeds, to the sacrificial chamber, to drink them for exhilaration.—1.

**सा॰-भा॰।** हे 'वज्रहस्त!' 'दध्याशिरः' दधिमिश्रणाः 'इमे' 'सोमासः' सोमाः 'इन्द्राय' तुभ्यं 'सुन्विरे' सुता बभूवुः। 'तान्' सोमान् 'मदाय' मदार्थं 'पीतये' पानाय 'ओकः' यज्ञसदनम् 'आ' अभि 'हरिभ्याम्' अश्वाभ्याम् 'आ-याहि' ॥ १ ॥

१। ऋ॰ सं॰ ७ म॰ ३२ सू॰ ४ ऋ॰।

सुन्विरे—have been pressed out; rt. सु *to press*, 5. u, pass. perf (लिट्) 3. pl.

दध्याशिरः—दध्ना आमिश्रितम्—(the Soma juices) mixed with curds;—*for* etym. and dr. of आशिरः, *vide* our notes on आशिरम्, SV. I. 187; *see* also the word यवाशिरः, SV. I. 145.

ओकः—dwelling place, abode ('ओक इति निवासनमुच्यते'—Nir. 3. 3);—cf. 'अथा चिदोकः पुनरित् स एति'—(an adopted child is denounced by this) as he goes back certainly to his own *abode*, ṚV. vii. 4. 8.

याहि (ओकः) आ=ओक आ याहि—here the prefix (आ) is placed after the verb (याहि), and a different word (ओकः) intervenes between them by 'छन्दसि परेऽपि' Pāṇ. i. 4. 81, and 'व्यवहिताश्च' *ib.* i. 4. 82, the rules concerning Ved. prefixes.

---

वामदेव ऋषिः।

२ १र ३ १ २ ३ १ २ ३ १ २
**इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः।**
१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
**मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः॥२॥२९४॥**

इमे। इन्द्र। मदाय। ते। सोमाः। चिकित्रे। उक्थिनः। मधोः। पपानः। उप। नः। गिरः। शृणु। रास्व। स्तोत्राय। गिर्ऽवणः॥ २ ॥

भाष्यसारः। हे इन्द्र, ते मदाय—तव प्रीत्यर्थम्, इमे सुताः उक्थिनः—स्तोत्रसहिताः, सोमाः—सोमरसाः, चिकित्रे—ज्ञायन्ते दृश्यन्ते प्रस्तुताः सन्तीत्यर्थः। त्वम् मधोः—मादकं सोमम्, पपानः—भृशं पिबन्, नः—अस्माकम्, गिरः—स्तुतीः, उपशृणु—सर्वथा शृणु, गिर्वणः—स्तुत्या सम्भजनीय हे इन्द्र, स्तोत्राय—स्तवकारिणे, रास्व—अभीष्टं प्रयच्छ॥ २ ॥

These Soma-libations, O Indra, accompanied with praises, have been ready for thy exhilaration, drink of the gladdening draught, listen to our songs of praise, and O one adorable by lauds, give rewards to thy worshipper.—2.

**सा०-भा०।** हे 'इन्द्र!' 'ते' तव मदाय 'मदार्थम् 'उक्थिनः' स्तोत्रयुक्ताः 'इमे' सोमाः 'चिकित्रे' ज्ञायन्ते दृश्यन्ते। कित् ज्ञाने। कर्मणि लिट्। 'इरयो रे' इति रे इत्यादेशः। किञ्च, 'मधोः' मदकरस्य। कर्मणि षष्ठी। मदकरसोमं 'पपानः' अत्यर्थं पिबन् अस्माकं 'गिरः' स्तोत्ररूपा वाचः 'उप शृणु' सम्यक् शृणु। 'गिर्वणो' गीर्भिर्वननीय! हे 'इन्द्र'! स्तोत्राय स्तोत्रकर्त्रे मह्यं 'रास्व' अभीष्टं देहि ॥ २ ॥

२। इयम् ऋक् ऋग्वेदे नास्ति।

उक्थिनः—'with the lauds'—*Grfth.* 'accompanied with sacred hymns'—*Stevenson* ; for gram. and other notes *vide* notes on उक्थ, SV. 1. 148.

चिकित्रे—*for* चिकितिरे—rt. कित् (ज्ञाने, *to know*)—pass. perf. (लिट्) 3. pl.—इरे। इरे is changed to रे by 'इरयो रे' Pāṇ. vi. 4. 76 ; *lit.* are known, or, are visible, i. e., are ready ; 'चिकित्रे' occurs also in ṚV. i. 186. 9 ; x. 3. 4 ;—30. 6 ;—91. 4, 5.

पपानः—PT. (with aff. कानच्) of rt. पा *to drink.* 3. u.

रास्व—give, bestow ; rt. रा *to give*, 2. u, Imp. 2. sg. राति (gift) is drvd. from this root, Ngh. 3. 20.

गिर्वणः—for gram, etym. and mg. *see* our notes on the word, SV. 1. 165.

———

मेधातिथिमेध्यातिथी ऋषी, विश्वामित्र ऋषिरित्येके* ।

२ ३ १ २३१२ ३१ २ ३१२
आ त्वाऽद्य सबर्दुघां हुवे गायत्रवेपसम्।
१ २ ३ २ ३२३२३ १२३१ २ ३१ २
इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरंकृतम् ॥३॥२९५॥

आ। तु। अद्य। सबःऽदुघाम्। हुवे। गायत्रऽवेपसम्। इन्द्रम्। धेनुम्। सुदुघाम्। अन्याम्। इषम्। उरुऽधाराम्। अरंऽकृतम् ॥ ३ ॥

भाष्यसारः। हे इन्द्र, अद्य—अस्मिन्नहनि क्षणे वा, सबर्दुघाम्—अमृतप्रसवित्रीम्, गायत्रवेपसम्—प्रशस्तगतिम्, सुदुघाम्—अनायासं दोहनशीलाम्, अन्याम्—अदृष्टपूर्वां साधारणविलक्षणाम्, इषम्—अन्वेष्टव्याम्, उरुधाराम्—बहुधाराभिर्दुग्धं क्षरन्तीम्, अरंकृतम्—प्रभूतप्रदात्रीम्, धेनुम्—धेनुमिव, त्वाम् इन्द्रम् तु—त्वरितम्,

* Ascribed to Soma—acc. to *Vivaraṇam.*

आ-हुवे—आह्वयामि। इन्द्रपक्षे,—इषम्—एषणीयवृष्टिरूपेण वर्त्तमानम्, उरुधारां—धाराभिर्वृष्ट्युदकं वर्षन्तम्, अरङ्कृतं—अलङ्कर्त्तारं पर्याप्तकारिणम्, सुदुघां—पर्याप्तं दातारं वाञ्छितफलानाम्—अस्मिन् पक्षे लिङ्गव्यत्ययो द्रष्टव्यः॥ ३॥

To-day I call on Indra of excellent speed, yielding blessings, giving rain in streams, doing immense benefit, like an extraordinary milch-cow yielding abundant milk.—3.

सा०-भा०। अनयेन्द्रं धेनुरूपेण वृष्टिरूपेण च निरूपयन् स्तौति। 'अद्य' इदानीं 'धेनुं' धेनुरूपमिन्द्रं 'तु' क्षिप्रं 'आहुवे' आह्वये। कीदृशीं धेनुम्? 'सबर्दुघां' पयसो दोग्ध्रीं 'गायत्रवेपसं' प्रशस्यवेगाम्। 'सुदुघां' सुखेन दोग्धुं शक्याम्। 'अन्याम्' उक्तविलक्षणाम् 'उरुधारां' बहूदकधाराम् 'इषम्' एषणीयां वृष्टिम्। लिङ्गव्यत्ययः। एतद्रूपेण वर्त्तमानम्। 'अरङ्कृतं' अलङ्कर्त्तारं पर्याप्तकारिणं वेन्द्रं चाह्वये॥ ३॥

३। ऋ० सं० ८ म० १ सू० १० ऋ०। Ṛ̣V. has 'इन्द्रम्' *accus* for 'इन्द्र' *voc*.

सबर्दुघाम्—yielding milk or nectar; a general epithet of cows which supply the milk required for sacrificial purpose. Here Indra himself, the bounteous giver of all blessings, is intended; occurs as an appellation of the cow—'तक्षन् धेनुं सबर्दुघाम्'—(Indra) created a cow yielding milk, Ṛ̣V. i. 20. 3; 'आयजन्त सबर्दुघायाः पय उस्रियायाः', they offered thee milk of the milch-cow, i. 121. 5; 'तुभ्यं धेनुः सबर्दुघा विश्वा वसूनि दोहते'—for thee, the cow yielding ambrosia, milks all kinds of treasures, i. 134. 4, there 'सबः' is explained by *amṛta*. also *see* iii. 55. 16; vi. 48. 11.

गायत्रवेपसम्—'inspirer of the psalm'—*Grfth*; 'of excellent motion' (प्रशस्यवेगम्)—*Sāy.* and *Wils.*; 'गायत्रवेपसे' occurs as an epithet of Indra, in Ṛ̣V. i. 142. 12, where it is explained as—*gāyatram vepar rūpam yasya*,—having the form or beauty of the Gāyatrī,—being the Gāyatrī personified.

अन्याम्—may mean unparalleled, extraordinary (अदृष्टपूर्वाम्, अनन्यसाधारणाम्) as in hymn 27 of maṇḍal. viii.

———

नोधा ऋषिः।

१ २ ३२ ३ १ २ ३ १ २ ३ १ २
न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः।
१र २र ३ १र २र ३ २ ३ २ ३ १र २र
यच्छिक्षसि स्तुवते मावते वसु नकिष्टदा मिनाति ते॥४॥२९६॥

न । त्वा । बृहन्तः । अद्रयः । वरन्ते । इन्द्र । वीडवः । यत् । शिक्षसि । स्तुवते । माऽवते । वसु । नकिः । तत् । आ । मिनाति । ते ॥ ४ ॥

भाष्यसारः । **हे इन्द्र, बृहन्तः - विशालाः, वीडवः—सुदृढाः, अद्रयः—गिरयः, त्वां न वरन्ते—बलेन वारयितुं न प्रभवन्ति। त्वम् स्तुवते—स्तोत्रकारिणे, मावते—मद्विधाय जनाय, यत् वसु—यद्धनम्, शिक्षसि—ददासि, तत्—तव तद्धनम्, नकिः—न कोऽपि, आमिनाति—हिनस्ति निराकर्त्तुं निरोद्धुं वा शक्नोतीति भावः ॥ ४ ॥**

Indra, whenever thou wouldst give wealth to thy worshipper like me, even the firm and colossal mountains cannot obstruct thee, nor does any other thing stand in thy way.—4.

**सा०-भा० ।** हे इन्द्र ! 'बृहन्तो' बलेन महान्तः अतएव 'वीड़वः' सर्वतो दृढ़ा अपि 'अद्रयः' पर्वताः 'त्वा' त्वां 'न वरन्ते' बलेन न निवारयन्ति। अनिवारणमेवोत्तरार्द्धेन विवृणोति—'स्तुवते' त्वद्विषयं स्तोत्रं कुर्वते 'मावते' मत्सदृशाय मादृशाय स्तोत्रे यद् 'वसु' धनं 'शिक्षसि' ददासि। ते तव तदेतद्धनं 'नकिः' न कश्चित् 'आमिनाति' आभिमुख्येन हिनस्ति। मीञ् हिंसायाम्। मीनातेर्निगमे ( पा० ७,३,८१ ) इति ह्रस्वः। मावते—'युस्मदस्मदोः सादृश्ये मतुब् वाच्यः' इति मतुप् ॥ ४ ॥

४। ऋ० सं० ८ म० ८८ सू० ३ ऋ०। ṚV. has **'दित्ससि'** instead of **'शिक्षसि'** ।

वीडवः—*vide* our notes on वीडौ, SV. 1. 207. शिक्षसि—fr.—शिक्ष् *to give.* Ngh. 3. 20. मिनाति—rt. मीञ्, short vowel in मि by Pāṇ. vii. 3. 81.

मावते—to the worshipper of my type ; dr. अस्मत्—*aff.* वतुप् in the sense of comparison,—by 'युष्मदस्मदोः सादृश्ये वतुब् वाच्यः'—*Vartti. Vide* our notes on 'त्वावतः पुरूवसो'—SV. 1. 193 ; *also* 1. 209.

नकिः—*See* SV. 1. 176 ; 243.

---

मेध्यातिथिर्ऋषिः* ।

१ २ ३ २उ ३ १ २ ३ १ २र
क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
३ १र २र ३ १र २र ३ २ ३ १ २
अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्रयन्धसः ॥५॥२९७॥

* Ascribed to मेधातिथि, by *Vivaraṇam.*

कः । ईम् । वेद । सुते । सचा । पिबन्तम् । कत् । वयः । दधे । अयम् । यः । पुरः । विऽभिनत्ति । ओजसा । मन्दानः । शिप्री । अन्धसः ॥५॥

भाष्यसारः । यः अयम् शिप्री—शोभनहनुः, इन्द्रः अन्धसः—सोमरूपेणान्नेन, मन्दानः—प्रहृष्टः, ओजसा—तेजसा, पुरः—असुरपुरीः, वि-भिनत्ति—विदारयति, सुते—सोमे अभिषुते सति, सचा—ऋत्विग्भिः सहचरैः देवैर्वा सह, पिबन्तम्—सोमपानं कुर्वन्तम्, ईम्—तमेनमिन्द्रम् को वेद—को जानाति न कोऽपीत्यर्थः। को वा जानाति, कत्—कियत्, वयः—अन्नम्, स इन्द्रः दधे—धारयति ॥ ५ ॥

Who knows him, who having beautiful cheeks, drinks Soma-juice, together (with his associates) when it is extracted, and exhilarated in the draught destroys the cities (of the demons) with vehemence, and who knows how much food he holds ?—5.

**सा०-भा० ।** 'सुते' अभिषुते सोमे 'सचा' ऋत्विग्भिः सह सोमं 'पिबन्तम्' 'ईम्' एनमिन्द्रं 'को वेद' वेत्ति न कोऽपि वेत्तीत्यर्थः। 'कत्' किंवा 'वयः' अन्नं 'दधे' धारयति। 'योऽयम्' इन्द्रः 'शिप्री' हनुमान् 'अन्धसः' सोमेन 'मन्दानः' मन्दमानः 'ओजसा' बलेन 'पुरो वि-भिनत्ति' ॥ ५ ॥

५ । ऋ० सं० ८ म० ३३ सू० ७ ऋ० । उ० आर्चि० ८, २, १५, १० ।

पुरः विभिनत्ति—Grfth. comments—'the cloud castles of the demons of drought who withhold the rain, or the strongholds of the non-Aryan inhabitants of the land.

ईम्—एनम्, him—*rfs* to Indra ; *vide* our notes on this word, SV. 1. 94.

शिप्री—a general epithet of Indra, possessed of fine cheeks, *see* also SV. 1. 145.

सचा—सह, *see* SV. 1. 115.

---

वामदेव ऋषिः ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
यदिन्द्र शासो अव्रतं च्यावया सदसस्परि ।
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
अस्माकमंशुं मघवन् पुरुस्पृहं वसव्ये अधि बर्हय ॥६॥२९८॥

यत् । इन्द्र । शासः । अऽव्रतम् । च्यावय । सदसः । परि । अस्माकम् । अंशुम् । मघऽवन् । पुरुऽस्पृहम् । वसव्ये । अधि । बर्हय ॥ ६ ॥

भाष्यसारः । हे इन्द्र, यत्—यतः, शासः—शासिता त्वं दुर्जनानाम्, ततः सदसः—यज्ञमण्डपस्य, परि—समन्तात् स्थितम्, अव्रतम्—व्रतहीनम् यज्ञविरोधिनम्, च्यावय—अपसारय। हे मघवन्, पुरुस्पृहम्—बहुभिराकाङ्क्षणीयम्, अस्माकम् अंशुम्—सोमम्, वसव्ये—निवासयोग्यस्थाने यज्ञगृह इत्यर्थः, अधि बर्हय—समधिकं वर्धय वृद्धिं गमय इत्यर्थः ॥ ६ ॥

As thou art the chastiser (of the wicked), drive away from the sacrificial place, the people opposed to sacred rites, and increase our Soma, coveted by many, O Maghavan, in our home.—6.

सा०भा०। हे 'इन्द्र'! 'यद्' यस्मात् कारणात् 'शासः' शिक्षणीयानां यज्ञविरोधिनां शिक्षकस्त्वम्, तस्मात् कारणात् 'सदसः' अस्मद्यागगृहस्य 'परि' परितो वर्त्तमानम् 'अव्रतम्' अकर्माणं यागविरोधिनमित्यर्थः। 'च्यावय' दूरं निःसारय। अपिच—हे 'मघवन्!' धनवन्निन्द्र! 'पुरुस्पृहं' बहुभिः स्पृहणीयम् 'अस्माकम्' अस्मदीयम् 'अंशुं' सोमं 'वसव्ये' वास्तव्ये निवासयोग्ये स्थाने 'अधि बर्हय' अधिकं वर्धय। यज्ञगृहे यागविरोधिनो राक्षसादीन्निःसार्य सोमं प्रवर्धयेत्यर्थः ॥ ६ ॥

६। इयम् ऋक् ऋग्वेदे नास्ति।

अंशुम्—the Soma,—here *rfs.* to the sacrifice with libations of Soma juice. अंशुः—सोमः,—शमष्टमात्रो भवति अननाय शं भवतीति वा—Soma is called *Aṃśu* as no sooner it goes in than it becomes pleasant, or source of pleasure for life. Nir. 2. 5; cf. 'अंशुं दुहन्तो अध्यासते गवि'—milking Soma, they sit on a cow-skin. ṚV. x. 94. 9.

अव्रतम्—the riteless people, referring to the demons or Rākṣasas who used to disturb sacrificial ceremonies.

———

वामदेव ऋषिः।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः।
३ १र २र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ॥७॥२९९॥

त्वष्टा। नः। दैव्यम्। वचः। पर्जन्यः। ब्रह्मणःऽपति। पुत्रैः। भ्रातृभिः। अदितिः। नु। पातु। नः। दुःऽतरम्। त्रामणम्। वचः ॥ ७ ॥

भाष्यसारः । त्वष्टा, पर्जन्यः, ब्रह्मणस्पतिश्च नः—अस्माकम्, दैव्यं—देवविषयकम्, वचः—स्तोत्ररूपं वाक्यम्, पातु—रक्षतु, पुत्रैर्भ्रातृभिः सहिता अदितिर्नु—देवजननी

अदितिरपि, नः—अस्मदीयम्, दुस्तरम्—यज्ञविरोधिभिरन्यथा कर्तुमशक्यम्, त्रामणम्—रक्षणीयम् अस्मद्रक्षोपायभूतम्, वचः—स्तोत्ररूपां वाचम्, पातु—रक्षतु ॥ ७॥

Let Tvaṣṭṛ, Parjanya, Brahmaṇaspati, save our divine (inspired) speech (i. e., prayer); let Aditi, with her sons and brothers, protect our insuperable, safe-guarding speech.—7.

**सा०भा०।** 'त्वष्टा' एतत्सञ्ज्ञको रूपाभिमानी देवः 'नः' अस्मदीयं 'वचः' पातु। 'ब्रह्मणस्पतिः एतत्सञ्ज्ञको मन्त्राभिमानी देवः अस्मदीयं वचः पातु। किञ्च, 'अदितिर्नु' अखण्डनीया अदीना वा एतन्नाम्नी देवमाता च 'पुत्रैर्भ्रातृभिः' स्वकीयैः सहिता 'नः' अस्माकं सम्बन्धि 'दुस्तरं' कर्मविरोधिभिस्तरीतुमशक्यं 'त्रामण'' रक्षणीयं 'वचः' पातु ॥ ७॥

७। इयम् ऋक् ऋग्वेदे नास्ति।

त्वष्टा,—*vide* our notes on the characteristic features of Tvaṣṭṛ. SV. I. 147. The Hephaistos or Vulcan of the Indian pantheon, the ideal artist, the divine artisan, the most skilful of workmen, versed in all wonderful contrivances.—Grfth's notes.

त्रामणम्—protection; here *rfs.* to वचः—the prayer, the means or cause of our protection. त्रामणे—for protection, Ṛ V. v. 46. 6; त्रामभिः—with protection i. 53. 10.

पर्जन्यः—the rain-cloud personified and regarded as a deity.

अदितिः—Infinity, the mother of the Ādityas. *Vide* our notes on Aditi, SV. I. 102.

वचः—prayer. ब्रह्मणस्पतिः—*see* our notes on SV. I. 139; for gram. *see* the addl. notes of Sāy. quoted at the end of the notes thereon.

———

वालखिल्या ऋषयः।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे।
३ १र २र ३ २ ३ २उ ३ १ २ ३ १ २
उपोपेन्नु मघवन् भूय इन्नु ते दानं देवस्य पृच्यते ॥८॥३००॥

कदा। चन। स्तरीः। असि। न। इन्द्र। सश्चसि। दाशुषे। उपऽउप। इत्। नु। मघऽवन्। भूयः। इत्। नु। ते। दानम्। देवस्य। पृच्यते ॥८॥

भाष्यसारः। हे इन्द्र, त्वं कदाचन—कदापि, स्तरीः—निवृत्तप्रसवा अतएव वत्साभावाद् गृहविमुखा गौरिव पराङ्मुखः न असि न भवसि। दाशुषे—हविर्दत्तवते यजमानाय यजमानस्य कृते इत्यर्थः, सश्चसि—सङ्गच्छसे अस्माभिः

सङ्गतो भवसि। हे मघवन्, देवस्य ते भूयः—बहुलम्, दानम्—दानीयं धनम् उप पृच्यते इत्—अस्माभिः संपृक्तं भवति प्राप्यत एव। उपद्वयसहितं नुद्वयम् पूरणार्थम् ॥ ८ ॥

Never art thou, Indra, like a cow ceasing to produce calf,—(averse to thy worshipper's home); thou, Indra, dost ever accompany the bounteous offerer of oblations (i. e., the sacrificer) the liberal gift of thy divine resplendent self, Maghavan, is ever associated with us.—8.

**सा०-भा०।** हे 'इन्द्र!' त्वं 'कदाचन' कदाचिदपि 'स्तरीः' हिंसको 'नासि'। यद्वा, स्तरीर्निवृत्तप्रसवा गौः, तथाविधो न भवसि। सा यथा वत्साभावात् गृहं प्रति नागच्छति न तथा करोषीत्यर्थः। किन्तु, 'दाशुषे' हविर्दात्रे यजमानाय 'सश्चसि' सङ्गच्छसे अस्मान्। हे 'मघवन्!' धनवन्निन्द्र! 'देवस्य' द्योतनादिगुणकस्य तव भूयः प्रभूतं दानम् 'उपोपेत् पृच्यते'—अपर उपशब्दः पूरणः—उपपृच्यत एव अस्माभिः संपृच्यत इत्यर्थः ॥ ८ ॥

८। ऋ० सं० वालखिल्य० ३, ७ ऋ० (८ म० ५१ सू० ७ ऋ०) ascribed to पुष्टिगु by the Ṛgveda Index, but to वामदेव by *Vivaraṇam*. यजुः ३, ३४—८, २।

स्तरीः—a barren cow; cf. 'स्तरीरु त्वद्भवति सूत उ'—one form of Parjanya is like a barren cow, the other produces offspring, ṚV. vii. 101. 3; again 'स्तरीर्यत् सुत सद्य···'when a barren cow being suddenly impregnated bears a calf, x. 31. 10.

सश्चसि—rt. सच् *to accompany*. 1. u, सश्चत (Imp. 2. pl.)—i. 64 12, etc. सश्चति (pres. 3. pl.) i. 101. 3 etc.

उपोप = उप + उप, both are expletives; *vide* 'प्रसमुपोदः पादपूरणे', Pāṇ. viii. 1. 6; *see* the double use of प्र, SV. 1. 35.

———

मेधातिथिमेध्यातिथिर्वा ऋषिः।

३ १र २र ३ १ २ ३ १ २
युङ्क्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः।
३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥९॥३०१॥

युङ्क्ष्व। हि वृत्रहन्ऽतम। हरी इति। इन्द्र। पराऽवतः। अर्वाचीनः। मघऽवन्। सोमऽपीतये। उग्रः। ऋष्वेभिः। आ। गहि ॥ ९ ॥

भाष्यसारः। वृत्रहन्तम्—हे सातिशयवृत्रविनाशिन् इन्द्र, त्वम् हरी निजाश्वौ, युङ्क्ष्व हि—रथे संयोजय एव। हे मघवन्, अर्वाचीनः—आगमनोन्मुखः, उग्रः—अतिबलो भयङ्करो वा, त्वम् ऋष्वेभिः—दर्शनीयैर्मरुद्भिः सह, परावतः—दूरात् द्युलोकात्, आ-गहि—एहि ॥ ६ ॥

Utter annihilator of Vṛtra, yoke thy horses (to thy car), come hither from afar, terrible Indra, with the 'beautiful ones' (i. e., the Maruts) to drink the Soma.—9.

**सा०-भा०।** हे 'वृत्रहन्तम!'—वृत्रं हतवान् वृत्रहा, अतिशयेन वृत्रं हतवान् वृत्रहन्तमः। यथा पुनर्नोत्तिष्ठति तथा हतवानित्यर्थः। अनो नुट् (पा० ८, २, १६) इति तमपो नुट्। हे तादृशेन्द्र! 'हरी' त्वदीयावश्वौ 'युङ्क्ष्व'। हिरवधारणे। आत्मीये रथे योजयैव। हे 'मघवन्!' धनवन्! 'उग्रः' उद्गूर्णबलस्त्वं 'सोमपीतये' सोमस्य पानार्थम्। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वम्। 'अर्वाचीनो'ऽस्मदभिमुखः 'ऋष्वेभिः' ऋष्वैर्दर्शनीयै'र्मरुद्भिः' सार्द्धं 'परावतः'—दूरनामैतत्। दूरे वर्त्तमानात् द्युलोकात् 'आ गहि' आगच्छ ॥ ६ ॥

६। ऋ० सं० ८म० ३ सू० १७ ऋ०। Ṛ V. reads 'युक्ष्वा' instead of 'युङ्क्ष्वा'।

युङ्क्ष्वा—*for* युङ्क्ष्व, the last vowel is prolonged by 'द्व्यचोऽतस्तिङः' Pāṇ. vi. 3. 135. Ṛ V. and TS. read 'युक्ष्व' instead of 'युङ्क्ष्व', *vide* our notes on the word SV. 1. 25.

परावतः—*vide* notes on it and further uses, SV. 1. 127 ; परावति, 1. 263.

ऋष्वेभिः—ऋष्वैः ;—dr. fr. rt. ऋष् *to see.* आ-गहि—*see* our notes on SV. 1. 16.

---

नृमेध ऋषिः।

२ ३ १र २र ३ १ २
त्वामिदा ह्यो नरोऽपीप्यन् वज्रिन् भूर्णयः।
१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥१०॥३०२॥

त्वाम्। इदा। ह्यः। नरः। अपीप्यन्। वज्रिन्। भूर्णयः। सः। इन्द्र। स्तोमऽवाहसः। इह। श्रुधि। उप। स्वसरम्। आ। गहि ॥ १० ॥

भाष्यसारः। हे वज्रिन् इन्द्र, यं भूर्णयः—हविर्दायकाः, नरः—यज्ञनेतारो यजमानाः, इदा—अद्य, ह्यः—गतेऽहनि च, त्वाम् अपीप्यन्—सोमेनातर्पयन् समवर्धयन्, सः

इंद्रशस्त्वम् इह—अस्मिन् यज्ञे, स्तोमवाहसः—स्तुतिपाठकानामस्माकं स्तुतिं श्रुधि—शृणु, स्वसरम्—गृहं यज्ञगृहमित्यर्थः, उपागहि—समागच्छ च ॥ १० ॥

O wielder of the thunder-bolt, thy worshippers, the offerers of oblations, have made thee drink (the Soma) to-day and yesterday; Indra, listen, here to us, the offerers of lauds, and come, thou, to our dwelling house.—10.

**सा०-भा० ।** हे 'वज्रिन्!' इन्द्र! यं त्वां 'भूर्णयः' हविर्भिर्भरणशीला 'नरः' कर्मणां नेतारो यजमानाः 'इदा' अद्य, 'ह्यः' पूर्वेद्युश्च सोममपाययन्। हे इन्द्र! स त्वं 'स्तोमवाहसः'—षष्ठ्यर्थे प्रथमा—स्तोमवाहसां स्तोत्रवाहकानामस्माकं स्तोत्रम् 'इह' यज्ञे 'श्रुधि' शृणु 'स्वसरं' गृहं च—'दुर्याः स्वसराणी'ति ( निघ० ३, ४, १० ) गृहनामसु पाठात्—'उपागहि' उपागच्छ ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोऽर्चाख्याने तृतीयाध्यायस्य सप्तमः खण्डः। इति चतुर्थप्रपाठकस्य च प्रथमार्धे प्रथमा दशतिः।

१०। ऋ० सं० ८ म० ६६ सू० १ ऋ०। ṚV. has **'स्तोमवाहसाम्'** (gen. pl.) instead of **'स्तोमवाहसः'** (nom. pl. for gen. pl.). **उ० आर्चि० २, १, १४, १।**

इदा—now, to-day; Ngh. 3. 28; *vide* notes on SV. I. 272.

अपीप्यन्—fr. rt. प्याय् *to increase*, here *to augment* (or पी—acc. to Macdnll.).

भूर्णयः—offerers of libations; fr. rt. भृ *to offer*, or *to bear*; भूर्णि, भूर्णयः occur very frequently, *see* ṚV. ix. 15. 3 etc.

स्तोमवाहसः—*vide* notes on the word, SV. I. 164; for स्तोम *see* I. 44; 256.

स्वसरम् *accus.*—गृहम्, Ngh. 3. 4; for different mgs. *see* notes on स्वसरेषु SV. I. 236.

---

अथ तृतीयाध्यायस्य अष्टमः खण्डः। चतुर्थप्रपाठकस्य च प्रथमार्धे द्वितीया दशतिः।

वसिष्ठ ऋषिः

१ २   ३ २   १ २   ३ २   ३ २
प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः।
१ २   ३ २ २   ३ १ २ ३   २र   १   २   ३ १ २
अपो महो वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥१॥३०३॥

प्रति । ऊँ इति । अदर्शि । आऽयती । उच्छन्ती । दुहिता । दिवः । अप । ऊँ इति । मही । वृणुते । चक्षुषा । तमः । ज्योतिः । कृणोति । सुऽनरी ॥१॥

भाष्यसारः । उच्छन्ती—तमो नाशयन्ती, आयती—आविर्भवन्ती, दिवो दुहिता—उषाः, प्रत्यदर्शि—सर्वतः संदृश्यते, मही—महती वन्दनीया वा सा, चक्षुषा—दर्शनेन स्वप्रकाशेनेत्यर्थः, तमः—अन्धकारम्, अपो-वृणुते—दूरीकरोति, सूनरी—सुष्ठु प्रणेत्री सा, ज्योतिः—द्युतिम्, कृणोति—करोति प्रकटयतीत्यर्थः ॥ १ ॥

The daughter of heaven, advancing and spreading light, is beheld by all; mighty she disperses the darkness by her appearance; she, the good guide of men, manifests light.—1.

**सा०-भा० ।** 'आयती' आगच्छन्ती 'उच्छन्ती' तमांसि विवासयन्ती वर्जयन्ती 'दिवो' द्युलोकस्य सूर्यस्य वा 'दुहिता' पुत्री एवम्भूता उषाः 'प्रत्यदर्शि' सर्वैः प्रतिदृश्यते। 'उ' इति पूरणः। सैषा 'मही' महती। यद्वा मही महत्तमो नैशं तमोऽन्धकारम्—अप उ इति निपातद्वयसमुदायः—अपेतस्यार्थे, 'अपो-वृणुते' अप-वृणोति। कथम्? 'चक्षुषा' दर्शनेन। एवं कृत्वा, 'सूनरी' जनानां सुष्ठु नेत्री उषाः 'ज्योतिः' प्रकाशं 'कृणोति' करोति ॥ १ ॥

१। ऋ० सं० ७ म० ८१ सू० १ ऋ०। ṚV. has 'अपो महि व्ययति चक्षसे' instead of 'अपो मही वृणुते चक्षुषा'। उ० आर्चि० १, २, १४, १।

दुहिता दिवः—द्युलोके जायमानत्वाद् दिवो दुहिता—वि०। Uṣas—is said to be the daughter of heaven, as she is born there, i. e., appears first in the sky.

चक्षुषा—दर्शनेन, by her appearance; 'with her eye'—*Grfth.*

सूनरी—*for* सुनरी, a good guide; a common epithet of Uṣas (Dawn); she is so called as with her appearance, the people are led to their respective works; this word occurs as an epithet of Uṣas in the hymns addressed to her —ṚV. i. 48. 5, 8, 10; iv. 52. 1.

———

वसिष्ठ ऋषिः

३ १ २ ३ १ २ ३ १ २
इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना।
३ १ २ ३ १ २ ३ १ २ ३ १र २र
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥२॥३०४॥

इमाः । ऊँ इति । वाम् । दिविष्टयः । उस्रा । हवन्ते । अश्विना । अयम् । वाम् । अह्वे । अवसे । शचीवसू । इति शचीऽवसू । विशंऽविशम् । हि । गच्छथः ॥ २ ॥

भाष्यसारः । **उस्रा—उस्रौ निवासकारकौ, सर्वव्यापिनौ वा, अश्विना—हे अश्विनौ, इमाः दिविष्टयः—स्वर्गकामाः प्रजाः, उ—च ऋत्विजश्च, वाम्—युवामुभौ, हवन्ते—आवाहयन्ति। शचीवसू—हे कर्मैकधनौ, अयम् अहं वाम्—युवामुभौ, अवसे—रक्षार्थम्, अह्वे—आवाहयामि, हि—यस्मात् कारणात्, विशंविशम्—सर्वान् जनान् स्तोतॄन् इत्यर्थः, प्रति गच्छथः युवामिति शेषः। ये युवां स्तुवन्ति तेभ्य एव प्रसीदथः इति भावः ॥ २ ॥**

These (priests), longing for heaven, radiant Aświns, call upon you for protection, I invoke you both rich in might (or in rites); for you go to every individual (worshipper).—2.

**सा०-भा० ।** 'इमाः' 'दिविष्टयः' दिवमिच्छन्त्यः प्रजाः ऋत्विजोऽपि। 'उ' इति चार्थे। हे 'अश्विना!' अश्विनौ! उस्रौ! वासकौ! 'वां' युवां 'हवन्ते' आह्वयन्ति। अयमहं वसिष्ठोऽपि हे 'शचीवसू!' कर्मधनौ! 'वां' युवाम् 'अवसे'-ऽस्मद्रक्षणाय युवयोस्तर्पणाय वा 'अह्वे' आह्वयामि। किमर्थमेवं प्रजा अप्यहमपीत्यादरोक्तिरिति तत्राह। 'विशंविशं हि गच्छथः' हि यस्मात् सर्वाः स्तुतिकर्त्रीः प्रजाः प्रति युवां गच्छथः खलु, तस्मादेवमुच्यत इति ॥ २ ॥

**२ । ऋ० सं० ७ म० ७४ सू० १ ऋ० । उ० आर्चि० १, २, १५, १ ।**

अश्विना—du. for अश्विनौ। अश्विनौ यद् व्यश्नुवाते सर्वम्—रसेनान्यो ज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः। तत् कावश्विनौ? द्यावापृथिव्यावित्येके, अहोरात्रावित्येके। सूर्याचन्द्रमसावित्येके, राजानौ पुण्यकृतावित्यैतिहासिकाः। तयोः काल ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भम्।—The Aśvins are so called, because they two pervade (fr. rt. अश्) all, one with moisture, the other with light. 'They are called Aśvins on account of their having horses (aśva)',—says Aurṇavābha. Who then are the Aśvins? According to some they are heaven and earth, according to others—day and night, some take them to be the sun and the moon, while the historians regard them as two virtuous kings. Their time is after midnight, which, in consequence, is an impediment to the appearance of light'...,—Nir. 12. 1. *Vide* our notes on the characteristic features of Aśvins, SV. I. 174.

उस्रा du.—*for* उस्रौ; radiant,—epithet of Aśvins; acc. to *Viv.* उस्रा, *here*, means cows. (so called because enjoyable things flow from it. fr. rt. स्रु—*to flow*

Nir. 4. 19.), the simile is hidden ( लुप्तोपमं चेदं द्रष्टव्यम् )—the sense being उस्रा इव—like cows, i. e., just as the cows call on the calves, so do the priests invoke Aśvins.

दिविष्टयः—desiring heaven ; *vide* दिविष्टिषु—दिवएषणेषु means sacred rites which lead to heaven, Nir. 6. 22 ; SV. 1. 306.

---

अश्विनौ वैवस्वतावृषी

२ ३ १ २ ३ १ २ ३ १ २
कुष्ठः को वामश्विना तपानो देवा मर्त्यः ।
३ १ २ ३ १२ २२ ३ २ ३ २ ३ २ ३ १ २
घ्नता वामश्मया क्षयमाणोऽंशुनेत्थमु आद्वन् यथा ॥३॥३०५॥

कुऽस्थः । कः । वाम् । अश्विना । तपानः । देवा । मर्त्यः । घ्नता । वाम् । अश्मया । क्षयमाणः । अंशुना । इत्थम् । ॐ इति । आद्वन् । यथा ॥३॥

भाष्यसारः । देवा अश्विना—हे देवौ दीप्यमानौ अश्विनौ, कुष्ठः—पृथिवीस्थितः, कः मर्त्यः वाम् युवयोः, तपानः—प्रकाशकस्तापकरो वा भवति न कोऽपीत्यर्थः । वाम्—युवयोरर्थे, अश्मया—अश्मभिः पाषाणैः, घ्नता—पिष्यमाणेन, अंशुना—सोमेन हेतुना पाषाणैः सोमस्य पेषणादित्यर्थः, क्षयमाणः—क्षीणायमानः यजमानः, आद्वन् यथा—पर्याप्तभोजनः समृद्ध पुरुष इव, 'इत्थम् उ'—एवमेव पूर्णकामो वा भवतीति शेषः ॥ ३ ॥

What mortal man on the earth, radiant Aśivins, is resplendent like you ? (the sacrificer) getting emaciated by pressing the Soma, with stones, for you, becomes gratified like one who has feasted to his fill.—3.

**सा०-भा० ।** 'अश्विना' ! अश्विनौ ! हे देवा ! देवौ द्योतमानौ ! 'वां' युवां 'कुष्ठः' कौ पृथिव्यां वर्तमानः 'को' मर्त्यः मरणधर्मा मनुष्यः स्तोता 'तपानः' तापनः प्रकाशको भवति इति शेषः । न कश्चिच्छक्नुयादित्यर्थः । 'वां' युवयोरर्थाय 'अश्मया' अश्मशब्दाद्भिसो यादेशः व्याप्तैरभिषवसाधनैरश्मभिः 'घ्नता' हन्यमानेन अभिषूयमाणेन 'अंशुना' सोमेन । यद्वा, अस्माभिरभिषुतेन 'घ्नता' युवामभिगच्छता 'अंशुना' सोमेन 'क्षयमाणः' क्षीयमाणो यजमानः 'इत्थमु' इत्थमेव भवति अत्यन्तं समृद्धो भवतीत्यर्थः । 'आद्वन्' यथा अभिमतान्न-

रसादिभक्तणवान् राजादिरिव। स यथा प्रवृद्धो दृष्टान्तविषयो भवति तद्वदयमपि भवतीत्यर्थः ॥ ३ ॥

३। इयम् ऋक् ऋग्वेदे नास्ति।

कुष्ठ: (कु-स्थः)—कु is the earth, so the compd. means 'living on the earth'.

अश्विना, देवा—du. for अश्विनौ, देवौ ; as for Aśvins,—*vide*, our notes on the preceding verse and SV. I. 174.

अश्मया—*for* अश्मभिः ; भिस् is changed to या by 'सुपां सुलुक्०' Pāṇ. vii. I. 39.

अंशुना—सोमेन ; अंशुः शमष्टमात्रो भवति। अननाय शं भवतीति वा, Aṃśu (Soma) is so called because no sooner than it goes in, it is agreeable, or it is agreeable for life. Nir. 2. 5. cf. 'अंशुं दुहन्तो अध्यासते गवि'—milking Soma, they sit on a cow-skin—Ṛ̣V. x. 94. 9.

आदन्—fr. rt. अद् *to eat*, 2 ; one who has eaten to satiety or to his heart's content. This word is nowhere found in the Ṛg-Veda.

---

प्रस्कण्व ऋषिः*

३ २ ३ १ २ ३ २उ ३ १ २
अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु।
१ २ ३ १ २ ३ १ २र ३ १ २
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥४॥३०६॥

अयम्। वाम्। मधुमत्ऽतमः। सुतः। सोमः। दिव्ऽइष्टिषु। तम्। अश्विना। पिबतम्। तिरःऽअह्न्यम्। धत्तम्। रत्नानि। दाशुषे ॥ ४ ॥

भाष्यसारः। अश्विना—हे अश्विनौ, दिविष्टिषु—स्वर्गप्रापकेषु, यागेषु—अयम्, मधुमत्तमः—अतिमधुरः, सोमः वाम्—युष्मदर्थं सुतस्तिष्ठति। तिरोअह्न्यम्, पूर्वेद्युः—सुतं, तम्—सोमं पिबतम्, दाशुषे—हविर्दानशीलाय यजमानाय, रत्नानि—रमणीयानि धनानि, धत्तम्—प्रदत्तम् ॥ ४ ॥

This sweetest Soma juice has been extracted for you in (to-day's) ceremonies, drink this which was expressed yesterday, give precious riches to the offerer of the libation.—4.

सा०-भा०। हे अश्विना! अश्विनौ! 'वां' युवयोः 'दिविष्टिषु' दिव एषणेषु यज्ञेषु 'अयं' पुरोवर्ती सोमः 'सुतः' अभिषुतः। कीदृशः? 'मधुमत्तमः'

* acc. to *Viv.*—ascribed to कुत्स।

अतिशयेन माधुर्यवान्। 'तिरोअह्न्य' तिरोभूते पूर्वस्मिन्दिनेऽभिषुतं तं सोमं 'पिबतम्'। 'दाशुषे' हविर्दत्तवते यजमानाय 'रत्नानि रमणीयानि धनानि 'धत्तं' प्रयच्छतम् ॥ ४ ॥

४। ऋ० सं० १ म० ४७ सू० १ ऋ०। R̥V. has **'ऋतावृधे'** instead of **'दिविष्टिषु'**।

तिरोअह्न्याम्—अह्नि भवोऽह्न्य:। 'भवे छन्दसी'ति यत्। 'अह्नष्टखोरेव' (Pāṇ. vi. 4. 145) इति नियमान्नस्तद्धित इति टिलोपाभाव:। सर्वे विधयश्छन्दसि विकल्प्यन्त इति वचनात् ये चाभावकर्म्मणो: (Pāṇ. vi. 4. 168) इति प्रकृतिभावाभावोऽल्लोपोऽन इत्यकारलोप:। तिरोहितोऽह्न्यस्तिरोअह्न्य:। तिरोऽन्तर्धौ (Pāṇ. i. 4. 71.) इति गतित्वेन निपातत्वादव्ययत्वे प्रादिसमास:।—Say.'s addl. notes in his com. on the R̥V. verse.

तिरोअह्न्याम्—an appellation of the Soma-juice ; mg.—prepared or expressed on the day which is past ( तिर:—तिरोहितम् अह: तस्मिन् भव: तम् ), i. e., preceding day or yesterday and offered on the next (to-day). Occurs also in R̥V. i. 45. 10 ; iii. 28. 3 ; vi. 58. 7 ; viii. 35. 19.

Grfth. translates—'prepared ere yesterday' and comments—'pressed from the plant three days ago, and then left to stand and ferment.' But how could he get 'ere yesterday'—is difficult to ascertain.

दिविष्टिषु—*lit.* longing for heaven, i. e., in sacred rites leading to heaven ; *see* दिविष्टिषु—दिव एषणेषु, Nir. 6. 22 ; cf. 'स्थूरं राध: शताश्वं कुरुङ्गस्य दिविष्टिषु'—abundance of wealth with a hundred horses in the sacred rites of Kurung, R̥V. viii. 4. 19 ; the word occurs also in i. 45. 7 ;—48. 9 ; iv. 9. 3 ;—46. 1 ;—47. 1 ; viii. 76. 9 ;—87. 3, etc.

———

मेधातिथिमेध्यातिथी ऋषी

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
**आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या ।**
१ २ ३ १र २र ३ १र २र ३ १ २
**भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥५॥३०७॥**

आ। त्वा। सोमस्य। गल्दया। सदा। याचन्। अहम्। ज्या। भूर्णिम्। मृगम्। न। सवनेषु। चुक्रुधम्। क:। ईशानम्। न। याचिषत् ॥ ५ ॥

* Ascribed to Pragātha acc. to *Vivaraṇam.*

भाष्यसारः। **हे इन्द्र ! अहं सवनेषु—यज्ञेषु, सोमस्य गल्दया—स्रवता सोमरसेन, ज्या—जयशीलया स्तुत्या, सदा यावन्—याचमानः अविरतं प्रार्थयमानः, भूर्णिम्—भर्त्तारम्, त्वां मृगं न—सिंहमिव, आ चुक्रुधम्—न क्रोधयामि, कः—को जनः, ईशानम्—प्रभुम्, न याचिषत्—याचेत ॥ ५ ॥**

Let me not make thee, my lord—angry, like a lion, by constant praying in sacrifices, with the effusion of the Soma; for who does not solicit (the favour of) the lord?—5.

**सा०-भा०। हे 'इन्द्र'! 'त्वा' त्वां 'सवनेषु' यज्ञेषु 'सोमस्य' 'गल्दया' गालनेन आस्रावणेन। 'ज्या' जयशीलया स्तुत्या च। अतएव गिरेति बह्वृचाः पठन्ति। तया युक्तः 'अहं' 'सदा' सर्वदा 'याचन्' याचमानः सन् 'आ चुक्रुधं' मा चुक्रुधं न क्रोधयानि। आ इति प्रतिषेधार्थः,—निपातानामनेकार्थत्वात्। अतएव बह्वृचाः 'मा त्वे'त्यामनन्ति। बहुशो याच्यमाने त्वयि क्रोधो जायते, तं सोम-गालनेन स्तुत्या चापनयामीत्यर्थः। कीदृशं त्वां 'भूर्णिं' भर्त्तारं 'मृगं न' सिंहमिव भीमम्। स्वामिनः इन्द्रस्य याचने लौकिकं न्यायं दर्शयति,—लोके को वा पुरुषः 'ईशानम्' ईश्वरं स्वामिनं न 'याचिषत्' न याचेत, सर्व एव हि याचते। अतोऽहमपि त्वां स्वामिनं याचे इति भावः॥ ५॥**

**५। ऋ० सं० ८ म० १ सू० २० ऋ०।** R̥V. has (i) **मा** instead of **आ**; and (2) **गिरा** instead of **ज्या**; on this Prof. Wilson remarks—'the reading of the first half in Benfey varies and is apparently faulty; instead of 'मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा' it is 'आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या',—It is not easy to make sense of this passage, especially in connection with what follows.' It seems the R̥V. has rectified the corrupt and older rdg. of the SV.

मा—*here* used as a negative particle, *see* Sāy's com. above.

गल्दया—सोमस्य गालनेन, with the flow of the Soma juice, by straining of the Soma after it is pressed out.—*see* Grassman, op. cit. p. 388. This word occurs only here. This verse (with the R̥V. rdg.) is explained by Yāska in Nir. 6. 24. He explains गल्दा as the Soma-juice which has been extracted in the vessel. Cf. 'आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम्।'—let the Soma-draughts flow into thee, and the extracted juices of vessels.

भूर्णिम्—this word is explained by Sāyaṇa as—भर्त्तारम्, 'the lord'—referring to त्वा (thee, Indra); by the author of Viv.—as भ्रमणशीलम् (wandering), an epithet of मृगम्। भूर्णि is *prob.* drvd. fr. rt. भृ *to bear*; in R̥V. viii. 86. 7,—it is explained as *the sustainer of the world* (where occurs भूर्णये *dat. sg. rf. to* Varuṇa); in vii. 87. 2, भूर्णिः means—as above (*the*

*cherisher of the world*; in iii. 3. 5, भूर्णिम् (*rf. to* Agni) means the same (भर्त्तारम्, *the cherisher*), *see* also our notes on भूर्णय: SV. 1. 292. Mcdnll. takes the word to mean *angry*; Grfth. means—*impetous*, *wild*; these mgs. are simply conjectural.

मृगम्—Sāyaṇa means *'a lion'* by this word; *see* also his notes in his com. on 'मृगो न भीम: कुचरो गिरिष्ठा:' ṚV. i. 154. 2, where he gives the etymology—'स्वविरोधिनो मृगयिता सिंह:',—the lion is here called 'Mṛga' inasmuch as he seeks out his rival animals. Yāska derives मृग from rt. मृज् (मृगो मार्ष्टेर्गतिकर्म्मण: )—Nir. 1. 20.

याचिषत्—लेट् (Ved. Subj.) of rt. याच् *to beg*.

———

देवातिथिर्ऋषिः

१ २ ३ २ ३ २उ ३ १ २
अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥६॥३०८॥

अध्वर्यो इति । द्रवय । त्वम् । सोमम् । इन्द्रः । पिपासति । उप । ऊँ इति । नूनम् । युयुजे । वृषणा । हरी इति । आ । च । जगाम । वृत्रऽहा ॥ ६ ॥

भाष्यसारः । हे अध्वर्यो, त्वम् सोमं द्रवय—द्रवत्वं नय,—सोमपेषणेन रसं निःसारय । यतः इन्द्रः पिपासति—सोमरसं पातुमिच्छति । तदीयसारथि-रित्यध्याहार्यम्, वृषणा—वृषणौ बलिनौ, हरी—अश्वौ, नूनम्—अद्यम्, उपो युयुजे —रथे योजितवान्, वृत्रहा च इन्द्रोऽपि आजगाम—समागतः ॥ ६ ॥

Adhvaryu, quickly press out the Soma juice, for Indra desires to drink of it; he has now harnessed his strong horses, the slayer of Vṛtra has come near.—6.

**सा०-भा० ।** हे 'अध्वर्यो !' अध्वरस्य नेतस्त्वं 'सोमं' 'द्रावय' उत्तर-वेदिलक्षणं स्थानं प्रापय । यद्वा, रसात्मना द्रवणशीलं कुरु । अभिषुणिवत्यर्थः । किं कारणमिति चेत्—'इन्द्रः' 'पिपासति' सोमं पातुमिच्छति । त्वयैतत्-कथमवगतमिति चेत्तत्राह—'वृषणा' वर्षितारौ युवानौ वा, 'हरी' अश्वौ 'नूनं' अद्य

'उपो युयुजे' उपगम्यैव सारथिर्योजितवान् रथे। 'वृत्रहा' वृत्रस्य हन्ता इन्द्रश्च 'आ जगाम' आगतवान् ॥ ६ ॥

६। ऋ० सं० ८ म० ४ सू० ११ ऋ०। ṚV. reads **'उप नूनम्'** instead of **'उपो नूनम्।'**

अध्वर्यु—is one of the 4 principal priests; his main function is to press out Soma-juice, *vide* our notes on होता SV. 1. 61. Yāska gives the etym,—'अध्वर्युः अध्वरयुः अध्वरं युनक्ति, अध्वरस्य नेता, अध्वरं कामयते इति वा,—he commences or conducts the sacrifice, is the leader of the sacrifice, desires sacrifice,—Nir. 1. 8.

नूनम्—अद्य, to-day, Nir. 1. 6. cf. 'न नूनमस्ति नो श्वः'—there is *no to-day* nor *to-morrow*, ṚV. i. 170. 1.

---

**वसिष्ठ ऋषिः**

३ २ ३ २उ ३ २ ३ २ ३ १ २
**अभीषतस्तदा भरेन्द्र ज्यायः कनीयसः।**
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
**पुरूवसुर्हि मघवन् बभूविथ भरे भरे च हव्यः ॥७॥३०९॥**

अभि। सतः। तत्। आ। भर। इन्द्र। ज्यायः। कनीयसः। पुरुऽवसुः। हि। मघऽवन्। बभूविथ। भरेऽभरे। च। हव्यः ॥ ७ ॥

भाष्यसारः। ज्यायः—हे ज्यायन् सर्वोत्तम, इन्द्र, कनीयसः—क्षुद्रात् क्षुद्रतरस्य सतो मे, तत्—प्रसिद्धं दिव्यं धनम्, अभ्याभर—आहर देहीत्यर्थः। हे मघवन्, त्वम् हि पुरुवसुः—बहुधनः, भरे भरे—समरेषु, च हव्यः—आह्वनीयः, बभूविथ—भवसि ॥ ७ ॥

Senior Indra, bring all that (wealth) to me the junior, for, Maghavan, thou art the lord of abundant wealth and art to be invoked at every sacrifice (or, to be called on in every war).—7.

**सा०-भा०।** हे 'ज्यायः!' ज्यायन्निन्द्र! 'आमन्त्रितं पूर्वमविद्यमानवदितीन्द्रपदस्य विद्यमानवद्भावात् ज्याय इत्यस्य सर्वानुदात्तत्वाभावः। नकारस्य रुत्वं व्यत्ययेन नुमभावो वा। 'कनीयसः' सतो मम 'तत्' प्रसिद्धं धनम्, 'अभ्याभर' अभ्याहर। हे 'मघवन्!' धनवन्निन्द्र! 'पुरुवसुः' बहुधनो 'बभूविथ' असि। 'भरे भरे' संग्रामे 'च' 'हव्यः' होतव्यश्च बभूविथ ॥ ७ ॥

**७। ऋ० सं० ७ म० ३२ सू० २४ ऋ०।** Ṛ̥V. reads **'मघवन्त्सनादसि'** instead of **'मघवन् बभूविथ'। यजुः, २७, ३६।**

अभीषतः—( अभि—सतः ),—अभि has its final vowel long by 'निपातस्य च', Pāṇ. vi. 3. 136.

बभूविथ—thou art ; लिट् (perf) 2. sg. ; perf. *for* pres. ( लट् ),—by 'छन्दसि लुङ्-लङ्-लिटः' Pāṇ. iii. 4. 6.

भरे भरे च हव्यः—'to be invoked in every fight'—*Grfth.* भर is a syn. of संग्राम (war)—Ngh. 2. 17 ; भर इति संग्राम-नाम—भरतेर्वा हरतेर्वा—it is drvd. from rt. भृ *to bear*, or हृ *to carry away*,—as the warriors and the treasures of the rival heroes are carried away, the war is so called.—Nir. 4. 24 ; cf. 'उत स्मैनं... अनु क्रोशन्ति क्षितयो भरेषु'—people, shout after him in battles, Ṛ̥V. iv. 38. 5. As all the words synonymous of '*battle*' mean '*sacrifice*',—Prof. Wilson has rendered—'at repeated sacrifices'.

---

**वसिष्ठ ऋषिः**

१ २ ३ १ २ ३ २ ३ १ २ ३ १र २र
**यदिन्द्र यावतस्त्वमेतावदहमीशीय ।**
३ २ ३ १ २ ३ १ २ ३ १ २
**स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम् ॥८॥३१०॥**

यत् । इन्द्र । यावतः । त्वम् । एतावत् । अहम् । ईशीय । स्तोतारम् । इत् । दधिषे । रदवसो इति रदऽवसो । न । पापऽत्वाय । रंसिषम् ॥ ८ ॥

भाष्यसारः । **रदवसो—हे धनदायक, इन्द्र, यत्—यदि, त्वम् यावतः—यावत्-परिमाणस्य धनस्य, स्वामी भवसि अहम् अपि एतावत्—तावत्परिमितस्य धनस्य, ईशीय—स्वामी भवेयम्, तदा तव स्तोतारम् ऋत्विजं दधिषे इत्—रक्षेयमेव धनदानेनेत्यर्थः। पापत्वाय—पापकर्मणे वृथा क्षयाय, न रंसिषम्—दद्याम् ॥ ८ ॥**

If I be, Indra, the master of as much wealth as thou art, then I shall, indeed, maintain thy eulogiser (worshipper), O dispenser of wealth, and not waste it upon viciousness.—8.

**सा०-भा०।** हे 'इन्द्र!' 'यत्' यतो 'यावतो' धनस्य ईशिषे', 'एतावत्' —षष्ठ्या लुक्—एतावतो धनस्य 'अहमीशीय' ईश्वरो भवेयम्। हे 'रदवसो!'

रदति ददाति वसूनीति—रदवसुः ; तादृश हे इन्द्र ! ततोऽहमस्मदीयं 'स्तोतारम्' 'इत् दधिषे' धनप्रदानेन धारयेयमेव। 'पापत्वाय' त्तीणत्वाय 'न रंसिषम्' न दद्याम् ॥ ८॥

८। ऋ० सं० ७ म० ३२ सू० १८ ऋ०। RV. reads 'दिधिषेय रदावसो न पापत्वाय रासीय' instead of 'स्तोतारमिद्दधिषे रदावसो न पापत्वाय रंसिषम्'। उ० आर्चि० ६, १, १२, १।

रदवसो—occurs only in this verse, found nowhere else in the RV. ; for dr. and mg. *see* Sāy's com. above ; long vowel in दा ( रदा ) by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137.

रंसिषम्—rt. रम्, लेट् (Ved. Subj.). I. sg. दधिषे—rt. धा, लेट् (Ved. Subj.). I. sg.

———

नृमेध ऋषिः

१ २ ३ १ २ ३ १र २र ३ १ २
त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥६॥३११॥

त्वम् । इन्द्र । प्रऽतूर्तिषु । अभि । विश्वाः । असि । स्पृधः । अशस्तिऽहा । जनिता । वृत्रऽतूः । असि । त्वम् । तूर्य । तरुष्यतः ॥ ९ ॥

भाष्यसारः । हे इन्द्र, त्वम् प्रतूर्तिषु—युद्धेषु, विश्वाः स्पृधः—सर्वान् स्पर्धमानान् शत्रून्, अभ्यसि—अभिभवसि जयसीत्यर्थः। तूर्य—हे रिपुदमन, त्वम् अशस्तिहा—देवानां भक्तानां वा बाधाप्रशमनः, जनिता—असुराणाम्, अमन्यमानानां शत्रूणां वा बाधाजनकः, वृत्रतूः—शत्रुनाशकः, तरुष्यतः—विघ्नजनकानामन्तकश्च असि ॥ ६ ॥

Thou, Indra, in battles, vanquishest all challanging (i. e., hostile) warriors, averting woes (of the gods or the devoted worshippers), causing (the same to the demons or non-believers) thou art the destroyer of the obstructing enemies.—9.

सा०-भा०। हे 'इन्द्र !' 'त्वं' 'प्रतूर्तिषु' सङ्ग्रामेषु 'विश्वाः' सर्वाः 'स्पृधः' युद्धकारिणीः शत्रुसेनाः 'अभ्यसि' अभिभवसि। किञ्च, हे 'तूर्य !' शत्रूणां बाधक इन्द्र ! त्वम् 'अशस्तिहा' देवानामशस्तीनां हन्तासि। 'जनिता' असुरेभ्यः

अशस्तीनां जनयिता चासि। 'वृत्रतूः' सर्वस्य शत्रुवर्गस्य हिंसिता चासि। 'तरुष्यतः' बाधकांश्च बाधमानोऽसि ॥ ६ ॥

६। ऋ० सं० ८ म० ६६ सू० ५ ऋ०। R̥V. reads **'विश्वतूः'** instead of **'वृत्रतूः'**। उ० आर्चि० ८, १, ८, १। यजुः ३३, ६६।

प्रतूर्तिषु—in battles ; very rarely used, found only thrice in the R̥V.—प्रतूर्तयः—viii. 13. 29, प्रतूर्तये—i. 129. 2, and *here* ; dr. fr. rt. तृ (or *tur*—Mcdnll.) *see* our notes on चतूर्तम्, SV. 1. 283.

स्पृधः—enemies ; occurs frequently, *vide* R̥V. i. 8. 3 ;—174. 5 ; ii. 11. 19, etc.

वृत्रतूः—the destroyer of *Vr̥tras*, the obstructing enemies ; *for Vr̥tras*, *see* our notes on SV. 1. 4.

तूर्य—*voc.* The smiter of the wicked ; this word occurs only here in this verse, and nowhere else.

तरुष्यतः—those who would oppose—*Wils.* तरुष्यतिर्वधकर्मा—this rt. means *to kill*, cf.'इन्द्रेण युजा तरुषेम वृत्रम्'—with Indra, our ally, may we destroy the enemy. R̥V. vii. 48. 2,—quoted in Nir. 5. 2.

जनिता—anom. Vedic form *for* जनयिता, by 'जनिता मन्त्रे', Pāṇ. vi. 4. 53.

———

नोधा ऋषिः

१र २ ३ १र २र ३ १र २र ३ १ २
# प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि ।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
# न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥१०॥३१२॥

प्र। यः। रिरिक्षे। ओजसा। दिवः। सदःऽभ्यः। परि। न। त्वा। विव्याच। रजः। इन्द्र। पार्थिवम्। अति। विश्वम्। ववक्षिथ ॥ १० ॥

भाष्यसारः। हे इन्द्र, यः त्वमित्यर्थः, ओजसा—विक्रमेण, दिवः—स्वर्गस्य, सदोभ्यः—स्थानेभ्यः, परि—समग्रेभ्यः स्थानेभ्य इत्यर्थः, प्र रिरिक्षे—अतिरिच्यसे। पार्थिवं रजः—भूलोकः, त्वाम् न विव्याच—न व्याप्तुं शक्नोति, ईदृशस्त्वं विश्वमति—सर्वम् अतिक्रम्य, ववक्षिथ—महान् असि ॥ १० ॥

Indra, thou transcendest the heaven with all its bounds, by thy might, the terrestrial sphere cannot comprehend thee, thou art great, exceeding all (the universe).—10.

**सा०-भा०।** हे 'इन्द्र!' यस्त्वं 'दिवः' द्युलोकस्य 'सदोभ्यः' स्थानेभ्यः 'परि' पर्यन्तेभ्यः 'ओजसा' बलेनैव 'प्र रिरिक्षे' प्रकर्षेणातिरिक्तो भवसि। रिचेर्लिटि बहुलञ्छन्दसीति श्लुः। प्रत्ययस्वरः। किञ्च, हे इन्द्र! 'पार्थिवं' पृथिव्यां भवं 'रजो' लोकः 'त्वा' त्वां महता स्व-शरीरेण 'न विव्याच' न व्याप्नोति। द्यावापृथिवीभ्यामपि स्वतः स त्वं बलेन समर्थोऽसीत्यर्थः। एवम्भूतः सन् त्वम् अस्मान् 'विश्वम्' 'अति' अतिक्रम्य 'ववक्षिथ' वोढुमिच्छ। वहेः सन्नन्तस्य छान्दसे लिटि रूपं मन्त्रत्वादामभावः॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य अष्टमः खण्डः। चतुर्थप्रपाठकस्य च प्रथमार्धे द्वितीया दशतिः॥

इति बार्हतमैन्द्रम्।

१०। ऋ० सं० ८ म० ८८ सू० ५ ऋ०। R̥V. reads (1) **'प्र हि'** instead of **'प्र यः'**, (2) **'अन्तेभ्यस्परि'** instead of **'सदोभ्यस्परि'**, (3) **'पार्थिवमनु स्वधाम्'** in the place of **'पार्थिवमति विश्वम्'**।

विव्याच—rt. व्यच् *to extend* 3. p. perf. (लिट्); रिरिक्षे—rt. रिच्—perf. 2. sg. Ā. The idea of Indra superseding all,—is contained in the verse, 'यद् द्याव इन्द्र ते शतम्...' SV. 1. 278; *see* our notes thereon. *Also* 'नाह विव्याच पृथिवी चनैनम्'—verily the earth does not contain him,—R̥V. iii. 36. 4; again 'महान्ति चित् संविव्याचा रजांसि', (Indra) pervaded the vast worlds—R̥V. x. 111. 2.

पार्थिवं रजः—'the earthly region'—*Grfth.* 'रजः' means world. 'रजो रजतेः। ज्योतीरज उच्यते। उदकं रज उच्यते। लोका रजांस्युच्यन्ते। असृगहनी रजसी उच्येते'। *Rajas* is drvd. fr. rt. रञ्ज् *to glow*; Light is called *rajas*, water is called *rajas*, worlds are called *rajas*, blood (esp. menstrual fluid of women) and day are called *rajas*.—Nir. 4. 19. In the sense of worlds, cf. 'रजांसि चित्रा वि चरन्ति तान्यवः'—variegated and thundering worlds move in different directions. R̥V. v. 63. 3; TBr. 2. 4. 5. 4.

ववक्षिथ—great, Ngh. 3. 3. 'महान् भवसीत्यर्थः'—*Viv.*: we have adopted this simple and perhaps the right mg.; in this case, nom. case term. (सु) drops by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. 'ववक्षिथ ··वक्तेर्वा वहतेर्वा साभ्यासात्'—*Vavakṣitha* is the reduplicated form either of rt. वच् *to speak*, or of rt. वह् *to carry*, Nir. 3. 13, or it may be derived as the perf. (लिट्) of rt. वक्ष् *to wax*.—So Grfth. has rendered—'Thou hast waxed mighty.' Sāy. derives it as the perf. of the *Desid.* of rt. वह् in imp. sense and means to say—'thou, desire (i. e., be pleased) to carry us above all.'

---

अथ तृतीयाध्यायस्य नवमः खण्डः। चतुर्थप्रपाठकस्य च प्रथमार्धे तृतीया दशतिः।

'असावि देवमे'कोनत्रिंशत्तासु—'प्र वो महे'।
त्रिपदोक्तविराडन्यास्त्रिष्टुभोऽष्टोर्ध्वविंशतिः॥
ऐन्द्रीषु तासु तार्क्ष्यस्य स्तुतिरेका—'त्यमुष्विति'।
पर्वतेन सहेन्द्रस्य गी'रिन्द्रापर्वते'त्यपि ॥*

वशिष्ठ ऋषिः। त्रिष्टुप् छन्दः।

१ २ ३ १ २र ३ २ २क
असावि देवं गोऋजीकमन्धो
२र ३ १ २ ३ १ २
न्यस्मिन्निन्द्रो जनुषेमुवोच।
१ २ ३ १
बोधामसि त्वा हर्यश्व यज्ञै-
२र ३ २ ३ २ १ ३ १ २
र्बोधा न स्तोममन्धसो मदेषु ॥१॥३१३॥

असावि। देवम्। गोऽऋजीकम्। अन्धः। नि। अस्मिन्। इन्द्रः। जनुषा। ईम्। उवोच। बोधामसि। त्वा। हरिऽअश्व। यज्ञैः। बोध। नः। स्तोमम्। अन्धसः। मदेषु ॥ १ ॥

भाष्यसारः। देवम्—दिव्यम्, गोऋजीकम्—दधिदुग्धादिगव्य-संमिश्रितम्, अन्धः—अन्नं सोमम्, असावि—सुतम् प्रस्तुतमित्यर्थः। इन्द्रः अस्मिन्—प्रस्तुते सोमान्ने, जनुषा—जन्मत एव, न्युवोच—नितरां समवेतो भवति। हर्यश्व—हरि-नामकाश्व-युक्त, हे इन्द्र! ईम्—तम्, त्वा—त्वाम्, यज्ञैः—स्तोत्रैर्हव्यैर्वा, बोधमसि—बोधयामः, त्वम् अन्धसो मदेषु—सोमपानेन प्रीतः सन्, नः—अस्माकम्, स्तोमम्—स्तोत्रम्, बोध—विद्धि अवधारय॥ १ ॥

* Of the following 29 verses, forming the next three decades (the 9th, 10th and 11th *Khaṇḍas* of this Adhyāya),—fr. 'असावि देवं···' (SV. 1. 313) to 'को अद्य···' (1. 341),—the verse 'प्रवोमहे···' (1. 328) is of *Tripād Virāṭ* metre. The rest 28 are of *Tṛṣṭubh* metre. Of these 29 verses, though belonging to Indra Parva and presumably glorifying Indra, the verse 'त्यमु षु···' (1. 332) is a praise addressed to Tārkṣya (identical with Tvaṣṭṛ for whom *see* our notes on SV. 1. 147) and the verse 'इन्द्रा पर्वता···' (1. 338) is a praise conjointly addressed to Indra and Parvata instead of Indra alone. Pt. S. Sāmaśramin (the editor, the Sāmaveda, *Bibl. Ind.*) commits a blunder by erroneously stating the two verses 1. 338 and 339—as addressed to Indra and Parvata (*see* his notes).

The celestial food (Soma) mixed with curds and milk, has been pressed out ; Indra is addicted to it from birth ; O lord of horses, termed *Haris*, we wake thee up with sacrifices ; appreciate our laud in the exhilaration of the Soma draught.—1.

**सा०-भा० ।** 'देवं' दीप्तं 'गोऋजीकं' गोभिः संस्कृतं गव्येन मिश्रितमित्यर्थः। 'अन्धः' सोमरूपमन्नम् 'असावि' अभिषुतम्। 'ईम्' अयम् 'इन्द्रः' 'अस्मिन्' अभिषुते सोमरूपेऽन्धसि 'जनुषा' स्वभावत एव 'न्युवोच' नितरां सङ्गतो भवति। उच समवाये। अथ प्रत्यक्षस्तुतिः—हे 'हर्यश्व!' 'त्वा' त्वां 'यज्ञैः' स्तोत्रैः हविर्भिर्वा 'बोधामसि' बोधयामः। 'अन्धसः' सोमस्य 'मदेषु' 'नः' अस्माकं 'स्तोमं' स्तोत्रं 'बोध' बुध्यस्व च॥ १॥

१। ऋ० सं० ७ म० २१ सू० १ ऋ०।

देवम्—bright,—*Wils* ; divine—*Grfth.*

गोऋजीकम्—mingled with cows' products, e. g., milk, curds, cf. पिबा तु सोमं गोऋजीकमिन्द्र', Ṛ.V. vi. 23. 7 ; *also* 'इमां हि वां गोऋजीका मधूनि'—iii. 58. 4.

ईम्—एनम्, him ; *vide* our notes on it, SV. 1. 94.

उवोच—is delighted, is gratified, assents to ; cf. 'अन्धसा मदेषु वा उवोच'—is gratified by the sacrificial food (Soma)—vii. 20. 4 ; also 'यो गृत्सं पौरुषेयीमुवोच'—(Agni) who assents to many adorations—vii. 4. 3. उवोचिथ—occurs in vii. 37. 3 ; nowhere else in the Ṛgveda we meet with this word ; dr. fr. rt. उच *to be associated*, *see* Sāy.'s com.

बोधामसि—बोधयामः, we awaken, invigorate, tone thee up ; मसि by 'इदन्तो मसि' Pāṇ. vii. 1. 46.

स्तोमम्—praise, hymn, laud, *vide* note on स्तोमाः SV. 1. 44. *also* स्तोमेभिः, SV. 1. 256.

———

वशिष्ठ ऋषिः।

१ २　　　३ १ २　　　　　३
योनिष्ट इन्द्र सदने अकारि
१　　　२र　　३ १ २
तमा नृभिः पुरुहूत प्र याहि।
२ ३　　१ २　　　३ २　　३ २ ३
असो यथा नोऽविता वृधश्चिद्
२ ३　　१ २　　३ १ २ ३ १ २
ददो वसूनि ममदश्च सोमैः॥२॥३१४॥

योनिः । ते । इन्द्र । सदने । अकारि । तम् । आ । नृऽभिः । पुरुऽहूत । प्र । याहि । असः । यथा । नः । अविता । वृधःऽचित् । ददः । वसूनि । ममदः । च । सोमैः ॥ २ ॥

भाष्यसारः । हे इन्द्र, ते—तव, सदने—अवस्थानाय, योनिः—स्थानम्, अकारि कृतम् । पुरुहूत—हे बहुभिराहूत इन्द्र, त्वम् नृभिः—नेतृभिर्मरुद्भिः सह, तं योनिम्, आ प्र-याहि—समागच्छ । यथा नः—अस्माकम्, अविता—पालयिता, वृधश्चित्—वृद्धिकरश्च, आसः—भवसि, तथा वसूनि—धनानि, ददः—देहि, सोमैः ममदः—माद्यस्व, च ॥ २ ॥

A place has been made for thee, Indra, for thy resting ; O invoked by many, proceed thither along with the leaders (of rites,—the Maruts) ; as thou art our protector and promoter of our prosperity, give us wealth and be delighted in the Somas.—2.

**सा०-भा० ।** हे 'इन्द्र !' 'ते' तव 'सदने' सदनार्थं 'योनिः' स्थानम् 'अकारि' ! हे 'पुरुहूत' ! बहुभिराहूतेन्द्र । 'नृभिः' नेतृभिर्मरुद्भिः सार्द्धं 'तं' योनिम् 'आ प्रयाहि' ! 'नो'ऽस्माकं 'यथा' अविता रक्षिता 'असः' भवसि । नो 'वृधश्चित्' वृधे वर्धनाय चासः । 'वृधे च' इति बह्वृचाः । तथा 'वसूनि' 'ददः' अस्मभ्यं देहि । अस्मदीयैः 'सोमैः' 'ममदो' मादयस्व च ॥ २ ॥

२ । ऋ० सं० ७ म० २४ सू० १ ऋ० । ṚV. has **'वृधे च'** instead of **'वृधश्चित्'** ।

सदने—in the sacrificial chamber—*Wils.* ; 'to dwell in'—*Grfth.*

नृभिः—'with men, i. e., the priests officiating at the sacrifice'—*Grfth.*

ददः—mayest thou give ; rt. दा *to give*, 3. लेट् (Ved. Subj.), 2. sg. ;—occurs also in vii. 29. 1 ; viii. 45. 39.

ममदः—rt. मद् *to be exhilarated*, 3. p,—लेट् (Ved. Subj.), 2. sg. thou rejoicest, occurs once more only—in iv. 20. 4.

———

गातुर्ऋषिः ।

१ २ ३ २ ३ १ २ ३ २र ३
अदर्दरुत्समसृजो वि खानि
१ २ ३ १ २ ३ १ २
त्वमर्णवान् बद्बधानानरम्णाः ।

३ १ २ . ३ १ २ ३ २ उ
महान्तमिन्द्र पर्वतं वि यद्वः
३ २उ ३ २ ३ १ २ ३ २
सृजद्धारा अव यद्दानवान् हन् ॥३॥३१५॥

अदर्दः । उत्सम् । असृजः । वि । खानि । त्वम् । अर्णवान् । बद्ब-धानान् । अरम्णाः । महान्तम् । इन्द्र । पर्वतम् । वि । यत् । वरिति वः । सृजत् । धाराः । अव । यत् । दानवान् । हन् ॥ ३ ॥

भाष्यसारः । हे इन्द्र, त्वम् उत्सम्—उदकोत्सारकं मेघम्, अदर्दः—विदारयसि, खानि—मेघस्थितजलनिःसरणरन्ध्राणि, व्यसृजः—विशेषेण रचयसि, बद्बधानान्—बाधमानान्, अर्णवान्—सजलान् मेघान्, अरम्णाः—त्तारयसि मेघेभ्यो जलधाराः वर्षसीत्यर्थः। यस्त्वं यत्—यदा, दानवान् अवहन्—मारयसि, महान्तं पर्वतम्—मेघम्, विसृजत्—विवृतं करोषि, धाराः—जलानि धाराभिः पातयसि ॥ ३ ॥

Thou dost pierce the spring (the cloud), thou dost create openings (in the clouds), thou makest the obstructed clouds impregnated with water, shed rain. Thou openest the massive cloud, makest the down-pours, slayest the demons (or smitest down the givers of water i. e., the clouds).—3.

**सा०-भा० ।** हे 'इन्द्र !' 'त्वम्' 'उत्सम्' उत्स्यन्दमानं मेघम् 'अदर्दः' विदारितवानसि। तदनन्तरं 'खानि' मेघस्थोदकनिर्गमनद्वाराणि 'व्यसृजः' विशेषेण सृष्टवानसि ! किञ्च, 'बद्बधानान्' बाधमानान् 'अर्णवान्' उदकवतो मेघान् 'अरम्णाः' विसर्जयसि त्तारयसीत्यर्थः। अत्र रम्णातिर्विसर्जनकर्मा। हे इन्द्र ! 'यत्' यस्त्वम्। यदिति लिङ्गव्यत्ययः। 'महान्तं' प्रभूतं मेघं विवृतवानसि। 'धाराः' अपां 'वि सृजत्' व्यसृजः विसर्जितवानसि। 'यद्' यदा 'दानवान्' दनोः पुत्रान्। यद्वा उदकस्य दातॄन् मेघान् 'अवहन्' अभिहतवानसि। अत्र निरुक्तम्—'अदृणा उत्सम्, उत्स—उत्सरणाद्वोत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वा स्यात्। व्यसृजोऽस्य खानि त्वमर्ण-वानर्णस्वत एतान् इत्यादि'—नि० १०,६ ॥ ३ ॥

३। ऋ० सं० ५ म० ३२ सू० १ ऋ०। ṚV. has 'वियद्वः सृजो वि धारा अव दानवं हन्', instead of 'वियद्वः सृजद्धारा अव यद् दानवान् हन्'।

This verse is explained by Yāska in Nir. 10. 9.

अदर्दः—Imperf. ( लङ् ) 2. sg. of rt. दॄ *to pierce, to rend.*

उत्सम्—the fountains, the sources of waters of the firmament—*Grfth.* 'उत्स—उत्सरणाद्वा, उत्सदनाद्वा उत्स्यन्दनाद्वा उनत्तेर्वा'—*Utsa* (spring) is so called from moving upwards ( उत्+rt. सृ ) or from rising upwards ( उत्+rt. सद् ), or from flowing upwards ( उत्+rt. स्यन्द् ) or it is drvd. fr. rt. उन्द् ( क्लेदने, *to moisten*).

खानि—'the holes or interstices of the clouds'—*Wils.*

बद्बधानान्—बावध्यमानान्—knocking against each other, 'pressing each other hard'—Yāska, Nir. 10. 9.

अरम्णाः—Imperf. ( लङ् ) 2. sg. of rt. रम् 2. p. here the sense is 'thou dost liberate the clouds i. e., makest them pour rain.' Sāy. comments—'रम् means here, *to shed*, *to shower*, (caus.) ; but in the passage 'यः पर्वतान् प्रकुपितां अरम्णात्' (Ṛ.V. ii. 12. 2),—'अरम्णात्' means 'set at rest'—Mcdnll ; stopped, firmly settled—Sāy. Yāska assigns two senses to the verbal rt. रम् *viz.*—रम्णाति: संयमनकर्मा विसर्जनकर्मा वा—rt. रम् means *to stop* or *to emit*, Nir. 10. 9 ; here the latter sense is meant.

पर्वतम्—a synonym of cloud—Ngh. 1. 10.

दानवान्—Sāyaṇa explains—(1) the sons of Danu i. e., the demons, (2) the givers of water—the clouds ; Yāska explains दानवं (the Ṛ.V. rdg. in *sg*) as दानकर्माणं—(the cloud) whose function is to give (rain).

———

पृथुर्वन ऋषिः

३ १ २ ३ १ २
सुष्वाणास इन्द्र स्तुमसि त्वा
३ २ २ ३ २ २
सनिष्यन्तश्चित्तुविनृमृण वाजम् ।
२ २ ३ २ २र ३ २उ
आ नो भर सुवितं यस्य कोना
३ २ २ ३ २ २
तना त्मना सह्याम त्वोताः ॥४॥३१६॥

सुस्वानासः । इन्द्र । स्तुमसि । त्वा । सनिष्यन्तः । चित् । तुविऽनृम्ण । वाजम् । आ । नः । भर । सुवितम् । यस्य । कोना । तना । त्मना । सह्याम । त्वाऽऊताः ॥ ४ ॥

भाष्यसारः । हे इन्द्र, तुविनृमृण—बहुबल बहुधन वा, इन्द्र, सुष्वाणासः—सोमम् अभिषुतवन्तः, वाजं सनिष्यन्तः—अन्नं निवेदयन्तो वयम्, त्वा—त्वाम्, स्तुमसि—

स्तुतिभिरुपास्महे, अतस्त्वं नः—अस्मभ्यम्, सुवितम्—शोभनधनम्, यस्य कोना—यद्धनस्य कोनः—कामयमानो भवसि, तद् धनम् आभर—देहि। त्वोताः—त्वया रक्षिताः त्वदनुगृहीताः वयम्, त्मना—आत्मना स्वयमेव, तना—धनानि, सह्याम—लभेमहि, त्वत्प्रसादादिति भावः ॥ ४ ॥

We, having pressed the Soma-juice, Indra, and offering thee food (in the form of oblations or libations) sing thy praise; bring us, Master of immense treasures (or of power), good prosperity which thou likest most; may we ourselves, under thy protection, gain ample riches.—4.

**सा०-भा०।** हे 'इन्द्र! सुष्वाणासः' सोममभिषुतवन्तो वयं 'त्वा' त्वां 'स्तुमसि' स्तुमः। हे तुविनृम्ण! बहुबल बहुधन वा इन्द्र! वाजं चरुपुरोडाशादिलक्षणमन्नं 'सनिष्यन्तः' दत्तवन्तः सम्भक्तवन्तो वा वयं त्वां स्तुमः। यत एवम् अतो हेतोः 'नो'ऽस्मभ्यं सुवितं सुष्ठु प्राप्तव्यं शोभनं धनम् आभर आहर प्रयच्छ। यद्वा, 'यस्य यद्धनमतिप्रियत्वेन 'कोना'—कनेः कान्तिकर्मण इदं रूपम्। पचाद्यच्। अकारस्य व्यत्ययेन ओकारः। प्रथमैकवचनस्याकारः। कामयमानो भवसि तद्धनमाभरेत्यर्थः। वयं च 'त्वोताः' त्वया रक्षिताः सन्तः 'तना'—धननामैतत्—विस्तृतानि धनानि 'त्मना' आत्मना स्वयमेव अन्यनैरपेक्ष्येणैव 'सह्याम'—सह अभिभवे,—धातूनामनेकार्थत्वात् त्वत्प्रसादाल्लभेमहि ॥ ४ ॥

४। ऋ० सं० १० म० १४८ सू० १ ऋ०। ṚV. reads (1) 'ससवांसश्च तुविनृम्ण...' instead of 'सनिष्यन्तश्चित् तुविनृम्ण—'। (2) 'चाकन् त्मना तना सनुयाम' instead of 'कोना तना त्मना सह्याम'।

सुष्वाणासः—सुष्वाणाः; असुक् is added in nom. pl. by 'आज्जसेरसुक्', Pāṇ. vii. 1.50. dr. rt. सु *to press*—कानच् p. PT.

स्तुमसि—for स्तुमः; मस् (1. pl.) becomes मसि by 'इदन्तो मसि', Pāṇ. vii. 1. 46.

सनिष्यन्तः—fu. PT. of rt. सन् *to gain*. ससवांसः (the ṚV. rdg.) is the p. PT. (with *aff.* क्वसु) of the same rt.

तुवि-नृम्ण—तुवि means बहु, many,—Ngh. 3. 1. नृम्णम्—धनम्, wealth,—Ngh. 2. 10. or बलम्, strength—Ngh. 2. 9. Nir. 10. 10; 11. 9. cf. 'नृम्णस्य मह्ना स जनास इन्द्रः' ṚV. ii. 12. 1; AV. 20. 34. 1; again 'इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः'। '...whose great glory and power heaven and earth honour.' ṚV. x. 50. 1; VS. 33. 23, for further notes *vide* SV. 1. 286.

सुवितम्—prosperity, Nir. 11. 15; cf. 'आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन'—come, Rudras, with Indra...*for prosperity*, ṚV. v. 57. 1.

कौना—Sāy. derives it fr. rt. कन् (कान्तौ, *to like*, *to desire*) with *aff.* अच्, by 'पचाद्यच्'। क becomes कौ by *Vyatyaya*, (Ved. anomaly); nom. sg. term. (सु) is changed to आ, *see* the com. above, the RV. rdg. चाकन् is also drvd. from the same root. Prof. Ludwig translates 'यस्य कौना' as 'by thy great wisdom.' Grfth. has adopted this, but comments—'this is a conjectural translation.'

तना—wealth, Ngh. 2. 10. fr. rt. तन् *to spread.*

त्मना—*for* आत्मना; आत्मना gets the elision of the initial आ, by 'मन्त्रेष्वाङ्यादेरात्मनः', Pāṇ. vi. 4. 141. *Vide* notes on SV. I. 58.

ऊताः—rt. अव् *to protect*—*aff.* क्त। सह्याम्—rt. सह्—pot. (लिङ्) I. sg. *here* सह् has the sense '*to gain*'.

---

सप्तगुर्ऋषिः

३ २ ३ १ २ ३ १ २
जगृह्मा ते दक्षिणमिन्द्र हस्तं
३ १ २ ३ १ २
वसूयवो वसुपते वसूनाम्।
३ २उ ३ १ २ ३ १ २
विद्मा हि त्वा गोपतिं शूर गोना-
३ १ २ ३ १ २र ३ २ २
मस्मभ्यं चित्रं वृषणं रयिं दाः ॥ ५ ॥ ३१७ ॥

जगृह्म। ते। दक्षिणम्। इन्द्र। हस्तम्। वसूयवः। वसुऽपते। वसूनाम्। विद्म। हि। त्वा। गोऽपतिम्। शूर। गोनाम्। अस्मभ्यम्। चित्रम्। वृषणम्। रयिम्। दाः ॥ ५ ॥

भाष्यसारः। **वसूनां वसुपते—हे भूयसां धनानामधिपते, वसूयवः—धनमिच्छन्तो वयम्, ते दक्षिणं हस्तं जगृह्म—गृह्णीमः। हे शूर, त्वां गोनां गोपतिं—गवाम् अधीश्वरम्, विद्म—जानीमः। तत् अस्मभ्यं चित्रम्—विविधम्, वृषणम्—कामप्रदम्, रयिम्—धनम्, दाः—देहि ॥ ५ ॥**

Coveting wealth, we get hold of thy right hand, Indra, lord of riches; we know thee, hero, the lord of cows, bestow on us wondrous treasures, fulfilling our desires.—5.

**सा०-भा०।** हे वसुपते! वसूनां धनानां स्वामिन् इन्द्र! ते तव दक्षिणं हस्तं 'वसूयवो धनकामा वयं 'जगृह्म' गृह्णीमः। यथा बहुप्रदस्यार्थिनो

ऽस्मभ्यमदत्त्वा न गन्तव्यमिति हस्तं गृह्णन्ति—तद्वत् हे 'शूर'! विक्रान्तेन्द्र त्वा त्वां 'गोपतिम् अत्र वृत्यवृत्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते बह्वीनां गवां गोपतिं विद्म जानीम। अतोऽस्मभ्यं चित्रं चायनीयं वृषणं वर्षकं 'रयिं' धनं 'दाः' देहि ॥ ५ ॥

५। ऋ० सं० १० म० ४७ सू० १ ऋ०। Ṛ̣V. reads 'जगृम्भा' for 'जगृह्मा'।

जगृह्मा—we seize, grasp; Perf. (लिट्) I. pl. of rt. ग्रह् *to seize*, anom. form *for* जगृहिम, by the esp. rule 'बभूथाततन्थ-जगृह्म-ववर्थेति निगमे' Pāṇ. vii. 2. 64, perf. for pres. (लट्)—very common in the Vedas by Pāṇ. iii. 4. 6; the final vowel is lengthened in the Saṃhita text, by 'अन्येषामपि दृश्यते' Pāṇ. vi. 3. 137. विद्मा—we know; final long vowel—by Pāṇ. vi. 3. 135.

वसूयवः *nom. pl.* of वसूयु—वसु आत्मन इच्छन्तः—longing for treasures; dr. वसु—क्यच्—उ, वसु gets its उ lengthened by 'अकृत्सार्वधातुकयोर्दीर्घः' Pāṇ. vii. 4. 25; after क्यच्, *aff.* उ is added, by 'क्याच्छन्दसि' Pāṇ. iii. 2. 170. गोपतिम्—*vide* SV. 1. 168.

वृषणं रयिम्—by वृषणम् Sāyaṇa means 'showering' i.e., fulfilling our desires referring to wealth, fr. rt. वृष् *to rain*. *Grfth.* means '*mighty*'. रयि—wealth, Ngh. 2. 10. 'रयिरिति धन-नाम रातेर्दानकर्मणः'—the word रयि is a syn. of wealth, it is drvd. from rt. रा *to give*.—Nir. 4. 17. cf. 'नू च पुरा च सदनं रयीणाम्'—the new and the old place of treasures, Ṛ̣V. i. 96. 7; again 'प्रजापते न त्वदेतान्यन्यो विश्वा···वयं स्याम पतयो रयीणाम्', Ṛ̣V. x. 121. 10; AV. 7. 80. 3.

दाः—*for* अदाः; rt. दा *Aor.* 2 sg. in imp. sense by Pāṇ. iii. 4. 6; aug. अ is not placed before, by Pāṇ. vi. 4. 75.

———

वशिष्ठ ऋषिः

२ ३ १ ३ ३ १ २ ३
इन्द्रं नरो नेमधिता हवन्ते
१ २र ३ १ २ ३ २ ३ २
यत्पार्या युनजते धियस्ताः।
२ ३ १ २ ३ १ २ ३ ३ २ ३
शूरो नृषाता श्रवसश्च काम
१ २र ३ १ २ ३ १ २
आ गोमति व्रजे भजा त्वं नः ॥६॥३१८॥

इन्द्रम्। नरः। नेमऽधिता। हवन्ते। यत्। पार्याः। युनजते। धियः। ताः। शूरः। नृऽसाता। श्रवसः। च। कामे। आ। गोऽमति। व्रजे। भज। त्वम्। नः ॥ ६ ॥

भाष्यसारः। **यत्—यदा, ताः पार्या धियः—पूर्णताविधायकानि सिद्धिसम्पादकानि कर्माणि, युनजते—प्रयुज्यन्ते, तदा नरः—यज्ञानां युद्धानां वा नायकाः, इन्द्रं त्वामेव नेमधिता—नेमधितौ यज्ञे युद्धे वा, हवन्ते—आह्वयन्ति। स त्वं शूरः नृषाता—नराणां उपकर्त्ता, श्रवसश्च कामे—अन्नस्य बलस्य वा कामनायां सत्याम्, गोमति—व्रजे गोभूयिष्ठे गोष्ठे, नः—अस्मान्, भज—अधिकारिणो विधेहि ॥ ६ ॥**

The leaders (of rites or of wars) call on Indra in sacrifice (or in battle) when those actions leading to success are done; do thou, hero, benevolent to men, food being solicited, place us in possession of pastures abounding in cows.—6.

**सा-०भा०। 'यद्' यदा 'पार्याः' युद्धे भरणनिमित्तभूतास्ताः प्रसिद्धाः 'धियः' कर्माणि 'युनजते' प्रयुज्यन्ते। तदा 'नरो' नेतारो 'यज्ञानां' संग्रामाणां वा,—'नेमधिता' नेमधितौ यज्ञे संग्रामे वा यमिन्द्रं 'हवन्ते' ह्वयन्ति। हे 'इन्द्र!' स त्वं 'शूरः' 'नृषाता' नृणां सम्भक्ता च। 'श्रवसो' बलस्य अन्नस्य वा कामे काम्यमाने सति 'गोमति' गोयुते 'व्रजे' गोष्ठे 'नः' अस्मान् 'भज' भागिनः कुरु॥ ६ ॥***

**६। ऋ० सं० ७ म० २७ सू० १ ऋ०।** Ṛ̣V. has **'शवसश्चकान'** in the place of **'श्रवसश्च कामे'**।

नेमधिता—*loc.* The word नेमधिता is found in the list of syns. of battle, Ngh. 2. 17; all words synonymous of 'battle' mean *also* 'sacrifice', so Sāy. assigns to this word the sense—'sacrifice'. Orig. stem is नेमधिति; drvd. anom. with *aff.* क्ति, by 'सुधित-वसुधित-नेमधित॰'—Pāṇ. vii. 4. 45, in loc. sg. it is नेमधिता, like 'उद्या देवा उदिता (*for* उदितौ) सूर्यस्य' by Pāṇ. vii. 1. 39.

पार्या धियः—'The actions which lead to victory'—*Wils*; for further notes *see* पार्ये दिवि, SV. 1. 280. धीः has two senses (1) action,—Ngh. 2. 1, (2) wisdom,—*ib* 3. 9. Here the first sense is meant.

नृषाता—the benefactor of man—*Wils*; dr. नृ—rt. सन् (*to gain*, 8. p)—ड्च्; स is changed to ष—by 'सनोतेरनः' Pāṇ. viii. 3. 108. This compd. occurs only here.

श्रवसः—श्रवस् means *food*, Ngh. 2. 10; also *wealth*—2. 10. it also means *fame*, *glory*—Nir, 9. 10. but it never means strength; Sāyaṇa assigning the sense '*strength*' to this word, here, confounds it perhaps with 'शवसः' (the Ṛ̣V. rdg.). 'श्रव इत्यन्ननाम, श्रूयत इति सतः'—Śravas is 'food', so called because it is heard, fr. rt. श्रु—Nir. 10. 3.

---

* Sāy.'s com. on the Ṛgvedic verse varies—e. g., **'शवसो बलस्य बलं चकानः कामयमानश्च सन् गोमति व्रजे गोष्ठे गोसमूहे नोऽस्मानाभज प्रापय'** ॥

भजा—*for* भज by Pāṇ. vi. 3. 135.

गोमति व्रजे भजा त्वं नः—Grfth. renders—'give us a portion of the stall of cattle,' by this he means 'aid us to capture the cattle of the enemy'.

———

गौरिविति-ऋषिः

१ २ ३ १ २र ३ १ २
वयः सुपर्णा उप सेदुरिन्द्रं
३ १ २ ३ १ २ ३ १ २
प्रियमेधा ऋषयो नाधमानाः ।
१ २ ३ १ २ ३ २ ३ १ २र
अप ध्वान्तमूर्णुहि पूर्धि चक्षु-
३ २ २ ३ १ २ ३ २
र्मुमुग्ध्यऽस्मान्निधयेव बद्धान् ॥७॥३१६॥

वयः । सुऽपर्णाः । उप । सेदुः । इन्द्रम् । प्रियऽमेधाः । ऋषयः । नाधमानाः । अप । ध्वान्तम् । ऊर्णुहि । पूर्धि । चक्षुः । मुमुग्धि । अस्मान् । निधयाऽइव । बद्धान् ॥ ७ ॥

भाष्यसारः । वयः—गमनशीलाः, प्रियमेधाः—यज्ञप्रणयिनः, ऋषयः—दर्शनशीलाः, सुपर्णाः—सुष्ठु पतनशीला रविरश्मयः, सुपर्णा वयः—शोभनपक्षमण्डिताः पक्षिण इव वा, ध्वान्तम्—तमः, अपोर्णुहि—दूरीकुरु, चक्षुः—प्रकाशम्, पूर्धि—पूरय, निधया—पाशैरिव, बद्धान् अस्मान् मुमुग्धि—मोचय, इति नाधमानाः—याचमानाः सन्तः, इन्द्रम् उपसेदुः—उपागच्छन् ॥ ७ ॥

The gracefully moving rays of the sun like birds of beautiful wings, fond of sacrifice, beholders of all, approach Indra, praying—'dispel the darkness, fully enlarge our vision, liberate us, as if tied in snares'.—7.

**सा०-भा० ।** 'वयो' गन्तारः 'सुपर्णाः' सुपतनाः आदित्यरश्मयः 'इन्द्रम्' 'उपसेदुः' उपसन्ना अभवन् । कीदृशाः ? 'प्रियमेधाः' प्रिययज्ञाः 'ऋषयो' द्रष्टारः 'नाधमानाः' प्रज्ञां याचमानाः । याचनप्रकार उच्यते,—हे इन्द्र ! 'ध्वान्तम्' अन्धकारम् 'अपोर्णुहि' परिहर । 'अपध्वान्तमूर्णुहीति येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेदपहैवास्मात्तल्लुप्यते'—इत्यैतरेयब्राह्मणमत्रानुसन्धेयम् । 'पूर्धि' पूरय

च 'चक्षुः' तेजश्च। 'मुमुग्धि' मोचय च 'अस्मान् निधयेव बद्धान्'। 'निधा पाश्या भवति, पाश्या पाशसमूहः। पाशसमूहेन बद्धान् यथा मुञ्चन्ति तद्वत्। अत्र वयो वेर्बहुवचनम्' इत्यादि—निरुक्तं (४।२,३) द्रष्टव्यम्॥ ७॥

७। ऋ० सं० १० म० ७३ सू० ११ ऋ०।

This verse is explained by Yāska in Nir. 4. 2, 3.

वयः—*nom. pl.* of stem वि (bird). सुपर्णाः—elegantly falling (going or moving); cf. 'चन्द्रमाः···सुपर्णः', ṚV. i. 105. 1.

प्रिय-मेधाः—fond of sacrifice; ऋषयः—seers, the beholders or observers of all.

नाधमानाः—याचमानाः, imploring, praying (to Indra); rt. नाध (नाथ)—*to pray.*

अप-ऊर्णुहि—uncover; ऊर्णुहि (cover, Imp. 2. sg. of rt. वृ) occurs also in ṚV. ix. 91. 4; x. 18. 11;—38. 2.

पूर्धि—पूरय, fill, i. e., enlarge, give; चक्षुः पूर्धि—give or enlarge our vision. चक्षुः is drvd. fr. rt. चक्ष् *to see.*

निधया—*Instr. sg.* of निधा (*a snare*)—with a net or a snare; occurs also in ṚV. ix. 83. 4, where also is found the word निधा-पति (the lord or possessor of snares); Yāska gives the etym. mg.—'निधा' पाश्या भवति यन्निधीयते, (पाश्या पाशसमूहः)—'*Nidhā*' means (a collection of) net, *so called* as it is laid on the ground.—Nir. 4. 2.

———

वेनो भार्गव ऋषिः

१ २ ३ २उ ३ १ २र
नाके सुपर्णमुप यत्पतन्तं
३ १ २र ३ १ २
हृदा वेनन्तो अभ्यचक्षत त्वा।
१ २ ३ १ २ ३ २
हिरण्यपक्षं वरुणस्य दूतं
३ २ ३ १ २ ३ १ २ ३ २
यमस्य योनौ शकुनं भुरण्युम्॥८॥३२०॥

नाके। सुऽपर्णम्। उप। यत्। पतन्तम्। हृदा। वेनन्तः। अभि। अचक्षत। त्वा। हिरण्यऽपक्षम्। वरुणस्य। दूतम्। यमस्य। योनौ। शकुनम्। भुरण्युम्॥ ८॥

भाष्यसारः। हे वेन, हृदा—चेतसा, त्वां वेनन्तः—कामयमानाः स्तोतारः, सुपर्णम—सुष्ठु पतनशीलम्, पतन्तम्—गगनं गच्छन्तम्, हिरण्यपक्षम्—सुवर्णमयपक्षयुक्तम्,

वरुणस्य दूतम्, यमस्य योनौ—स्थाने अन्तरिक्षे, शकुनम्—पक्षिरूपेण स्थितम्, भुरण्युम्—वर्षणादिना जगतां भर्तारम्, यास्कमते—क्षिप्रगामिनं पक्षिणमिव वा, त्वां नाके—आकाशे, यत्—यदा, अभ्यचक्षत—अवलोकन्ते, तदा त्वम् उप आसन्नो भवसि ॥ ८ ॥

They look on thee, Vena, with longing in heart, like a bird with golden wings flying in the sky, thee, the envoy of Varuṇa, the swift bird in the region of Yama (the lightning), the upholder of the universe.—8.

**सा०-भा० ।** हे 'वेन!' 'त्वा' त्वां 'हृदा' हृदयेन मनसा 'वेनन्तः' कामयमानाः स्तोतारः 'नाके' अन्तरिक्षे 'अभ्यचक्षत' अभि पश्यन्ति, तदानीं त्वम् उप आगच्छसीति शेषः। कथम्भूतं? 'सुपर्णं' शोभनपतनं 'पतन्तम्' अन्तरिक्षं गच्छन्तम्। 'हिरण्यपक्षं' हिरण्मयाभ्यां पक्षाभ्यामुपेतम्। 'वरुणस्य' जलाभिमानिनो देवस्य 'दूतं' चारम्। 'यमस्य' नियामकस्य वैद्युताग्नेः 'योनौ' स्थाने अन्तरिक्षे 'शकुनं' पक्षिरूपेण वर्त्तमानम्। 'भुरण्युं' भर्त्तारं वृष्टिदानादिना सर्वस्य जगतः पोषकम्। भुरण् धारणपोषणयोः कण्ड्वादिः। अस्मादौणादिक उ-प्रत्ययः ॥ ८ ॥

८। ऋ० सं० १० म० १२३ सू० ६ ऋ०।

Vena—is a deity of minor importance extolled only by one entire hymn in the Ṛg-veda (x. 123), to which the above verse belongs. The general purport of this hymn makes it identical with the thunder-cloud. He is designated a *Gandharva*, is said to have golden wings and is compared to a bird, is also called the messenger of Varuṇa. He is said to have been married to the Soma plant; on the occasion of their marriage, Aśvins are said to have filled their 'ratha' (car) with all sorts of good things (ṚV. i. 34. 2). In ṚV. i. 83. 5, Vena is explained as the sun, so also in SV. 321. (the next verse,—*see* Nir. 1. 7). Sometimes, Vena is interpreted as '*Kānta*' (the beloved, fr. rt. *vena*, to long for); He is the *madhya-sthānadevatā*, a divinity of middle region.—Nir. 10. 38. Mahīdhara (Yajur-Veda, 7. 16) renders it by 'Chandra' (the moon).

There is also a sage named Vena, of the Bhṛgu family, to whom are ascribed the hymns ix. 85, and x. 123 (*rfd.* above).

नाके सुपर्णम्—gracefully or elegantly flying in the sky; for सुपर्णम्—*see* our notes on the preceding verse (SV. 1. 319).

वेनन्तः—rt. वेन pres. PT. (शतृ), nom. pl.; 'वेनति कान्तिकर्मा' *to long for, to yearn for, desire, to covet*,—Nir. 10. 38.

भुरण्युम्—Sāyaṇa means by this word—the supporter or the sustainer of the world, and drvs. it fr. rt. भुरण् of the कण्ड्वादि class, mg. *to support, to maintain or to nourish.* Yāska means differently ; he explains *bhuraṇyu* as—'swift, quick'—भुरण्युरिति क्षिप्र-नाम, भुरण्युः शकुनिः भूरिमध्वानं नयति—this word is a syn. of *quick*, it means a bird, as it flies a far and distant way.—Nir. 12. 22. भुरण्यन्तम् (pres. PT. of this rt.) is found in 'येन पावक चक्षसा भुरण्यन्तं जनाँ अनु'—(addressed to Varuṇa)—by thy eye, O purifier, thou seest the *active* sacrificer among men. (Prof. Wils. after Sāy. translates—thou lookest upon this *creature-bearing* world)—ṚV. i. 50. 6.

---

बृहस्पतिर्नकुलो वा ऋषिः

१ २ ३ १ २ ३ २ ३ २ ३ १
ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि
२ ३ २ ३ १ २ ३ १ २
सीमतः सुरुचो वेन आवः ।
२ ३क २र ३ २ २ ३ २
स बुध्न्या उपमा अस्य विष्ठाः
३ २ ३ २ ३ १ २ ३ १ २
सतश्च योनिमसतश्च विवः ॥६॥३२१॥

ब्रह्म । जज्ञानम् । प्रथमम् । पुरस्तात् । वि । सीम् । अतः । सुऽरुचः । वेनः । आवः । सः । बुध्न्याः । उपमाः । अस्य । विऽस्थाः । सतः । च । योनिम् । अऽसतः । च । विऽवः ॥ ९ ॥

भाष्यसारः । वेनः—प्रागुक्तस्तदाख्यो गन्धर्वः, पुरस्तात्—सृष्टेरादौ, जज्ञानम्—सम्यक् ज्ञानिनं प्रथमं जातं वा, ब्रह्म—ब्राह्मणम्, प्रथमम्—आद्यमूर्त्तिम्, निर्ममे इति शेषः । अतः अस्याः—दृश्यमानायाः, सुरुचः—रुचिरायाः, कान्तेः, सीम्—सर्वतः, वि—विशेषेण, आवः—अरक्षत्,—ब्राह्मणतनुमतिमनोहरमकरोदित्यर्थः। सः बुध्न्याः—नभःस्थिताः, अस्य उपमाः—ब्राह्मणशरीरकान्तिसमानाः आदित्यादिभासः, विष्ठाः—विशेषेण स्थापितवान्, सतश्च असतश्च—सदसतोर्व्यक्ताव्यक्तयोः, योनिम्—उत्पत्तिकारणम्, विवः—विवृतवान् समुद्घाटितवान् ॥ ६ ॥

In ancient time, wise Brāhman was first born, Vena preserved his glowing splendour in every way, he set up the luminaries in the sky, akin to him (in splendour), he discovered the cause of the existent and the non-existent.—9.

**सा०-भा० ।** वेनो नाम कश्चित् कमनीयो गन्धर्वः। तथाच शाखान्तरे "वेनस्तत्पश्यन्नित्यारभ्य गन्धर्वो नाम" इत्याम्नातम्। स च 'वेनः' 'पुरस्तात्' पूर्वस्मिन् काले 'जज्ञानम्' उत्पन्नम् अभिज्ञं वा 'ब्रह्म' ब्राह्मण-जातिरूपं 'प्रथमम्' आद्य-शरीरम्। अतोऽस्याः सर्वैर्दृश्यमानायाः 'सुरुचः' शोभनायाः कान्तेः 'आवः' रक्षितवान्,—वसुमे(?)त्यनुग्रहसूचकः कश्चिदनुकरणशब्दः तथाविधं शब्दं मुखेनाभिव्यञ्जयन् ब्राह्मणशरीरं महत्या कान्त्या योजितवानित्यर्थः। स वेनः 'बुध्न्याः मूलम् अन्तरिक्षं वा बुध्नः, तत्र भवाः। अस्योपमाः एतदीयशरीरकान्तिसदृशाः आदित्य-प्रकाशादिरूपाः कान्तीः, 'विष्ठाः' विशेषेण स्थापितवान्। तथा 'सतश्च' इदानीं विद्यमानस्य च 'असतश्च' भविष्यद्रूपत्वेदानीमविद्यमानस्य च 'योनिम्' उत्पत्तिकारणं निवासस्थानं वा 'विवः' विवृतवान् निष्पादितवानित्यर्थः॥ ९॥

१। इयम् ऋक् ऋग्वेदे नास्ति।

जज्ञानम्—perfectly knowing, wise ; dr. rt. ज्ञा *to know* perf. pt. with *afl.* कानच्। Or it may be drvd. fr. rt. जन् *to be born*, with शानच् ( श्नप: श्लु:, द्वित्वम्, उपधालोप:, Pāṇ. vi. 4. 98) ;—mg. जायमानम्, born ; in this sense it is frequently used in Ṛ̣V.

वेन:—here rfrs. to the sun,—Nir. 1. 7. Yāska means—the sun is born first in the East and spreads his bright rays on all sides. सीम्—सर्वत:, on all sides, *vide* our notes on SV. 1. 268. आव:—rt. अव—Imperf. 2. sg. ; or rt. वृ—Aor. ( लुङ् ) 2. sg. by Pāṇ. vi. 4. 73.

बुध्न्या:—dwelling in the sky ; बुध्न + *Tad. afl.* य ( भवार्थे ) ; Yāska gives the etym. mg. of the word बुध्न as –'बुध्नमन्तरिक्षम् , बद्धा अस्मिन् धृता आप:', *budhna* means the *firmament*, so called as the rain-waters are bound or detained in it.—Nir. 10. 44. cf. 'अब्जामुक्थैरहिं गृणीषे बुध्ने', I glorify, with hymns, Ahi *in the sky*, ṚV. vii. 34. 16. विष्ठा:—वि—rt. स्था—Aor. ( लुङ् ) 2. sg.

The creation of *Brāhmaṇa* is, here mentioned. The West. scholars, without much investigation, hold that the caste-system was not prevalent in the age of the Ṛgveda ; they argue that only once it is mentioned distinctly in the "Puruṣa-Sūkta" (ṚV. x. 90), which, according to them, is an interpolation, but the passages like—

'उतासि मैत्रावरुणो वसिष्ठ...ब्रह्मन् मनसोऽधिजात:' ṚV. vii. 33. 11 ; 'सोमं यं ब्रह्माणो विदु:' ix. 1. 1 ; SV. 1. 468 ; 'तावद् दधानाउपयज्ञमायन् ब्राह्मणो होतुरवरो निषीदन्' x. 88. 19 ; 'संवत्सरं शशयाना ब्राह्मणा व्रतचारिण:' vii. 103. 1 ; 'ब्राह्मणा ये मनीषिण:'—i. 164. 45.—etc.,—decisively prove that the designation and function of Brāhmaṇa are not of unfrequent occurrence ; the mention of Kṣatriya, as a race, is found in ṚV.

iv. 42. 1 and elsewhere (vii. 64. 2). Moreover, five castes (Pañca-janāḥ, Pañca-kṣitayaḥ etc.) are often mentioned in the ṚV. and explained by the old commentators (like Aurṇavābha, who were much anterior to Yāska and were in touch with the Vedic traditions)—to denote the four castes and the barbarians as the fifth. In spite of these clear evidences, the West. scholars cherish doubt about the question of the institution of caste in that age.

वि-वः—discovered ; वि—rt. वृ—Aor. ( लुङ् ) 2. sg. aug. अ is not placed before as is usual in लुङ्, by Pāṇ. vi. 4. 75.

———

सुहोत्र ऋषिः

१ २ ३ १ २
अपूर्व्या पुरुतमान्यस्मै
३ १ २ ३ १ २ ३ १ २
महे वीराय तवसे तुराय ।
३ १ २ ३ २ ३ १ २ ३
विरप्शिने वज्रिणे शन्तमानि
१ २ ३ १ २
वचांस्यस्मै स्थविराय तक्षुः ॥१०॥३२२॥

अपूर्व्या । पुरुऽतमाणि । अस्मै । महे । वीराय । तवसे । तुराय । विऽरप्शिने । वज्रिणे । शंऽतमानि । वचांसि । अस्मै । स्थविराय । तक्षुः ॥१०॥

भाष्यसारः । महे—महते, वीराय तवसे—बलवते, तुराय—वेगवते, विरप्शिने—विशेषेण स्तुत्याय, वज्रिणे स्थविराय—वृद्धाय, अस्मै—इन्द्राय, अपूर्व्या—अपूर्व्याणि अभिनवानि, पुरुतमानि—बहुतमानि, शन्तमानि—अतिशयेन सुखकराणि, वचांसि—स्तुतिवाक्यानि, तक्षुः—ततक्षुः स्तोतारः कुर्वन्ति ॥ १० ॥

The singers prepare uncommon, innumerable and most pleasant praises for him (Indra), the wielder of the thunderbolt, the great ancient hero, powerful, swift and adorable.—10.

**सा०-भा० ।** 'अपूर्व्या' अपूर्व्याणि पूर्वैरकृतानि नूतनानि 'पुरुतमानि' बहुतमानि 'शन्तमानि' सुखकृत्तमानि 'वचांसि' स्तुतिरूपाणि वाक्यानि 'अस्मै' इन्द्राय 'तक्षुः' ततक्षुः । तक्षतिः करोतीत्यर्थे । कुर्वन्ति स्तोतार इति शेषः । कीदृशाय ? 'महे' महते । 'वीराय' विविधशत्रूणां मारयित्रे । 'तवसे' तवस्विने बलवते ।]

'तुराय' त्वरमाणाय 'विरप्शिने' विशेषेण स्तुत्याय 'वज्रिणे' वज्रवते । 'स्थविराय' प्रवृद्धाय ॥ १० ॥

**इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य नवमः खण्डः । चतुर्थप्रपाठकस्य प्रथमार्धे तृतीया दशतिः ॥**

**१० । ऋ० सं० ६ म० ३२ सू० १ ऋ० ।** ṚV. reads **'वचांस्यासा स्थविराय तक्षम्'**, I make praise to that ancient etc.) instead of **'वचांस्यस्मै स्थविराय तक्षुः'** ।

**विरप्शिने**—Sāy. explains the word, here, as adorable ; elsewhere it means—mighty, great,—Ngh. 3. 3 ; Nir. 6. 23 ; cf. **'महाँ अमत्रो वृजने विरप्शी'**—great, without measure, is Indra, *mighty* in battle, ṚV. iii. 36. 4.

dr. rt. **रप्** *to chatter*,—*aff.* **शक्** ; **विविधं रपन्तीति विरप्शाः स्तोतारः तेऽस्य सन्तीति मत्वर्थे इनिः ।**

**तक्षु**—*for* **ततक्षुः** perf. ( **लिट्** ) of rt. **तक्ष्** *to fashion*, 1. p ; 'have prepared and fashioned'—*Grfth* ; 'have fabricated'—*Wils*. Sāyaṇa simply means **कुर्वन्ति**—'are making.'

**स्थविराय**—an epithet commonly applied to Indra, sometimes to Aśvins.

---

**अथ तृतीयाध्यायस्य दशमः खण्डः । चतुर्थप्रपाठकस्य च प्रथमार्धे चतुर्थी दशतिः ।**

**द्युतान ऋषिः ।**

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
# अव द्रप्सो अंशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः ।
२ ३ २उ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
# आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त ॥१॥३२३॥

अव । द्रप्सः । अंशुऽमतीम् । अतिष्ठत् । ईयानः । कृष्णः । दशऽभिः । सहस्रैः । आवत् । तम् । इन्द्रः । शच्या । धमन्तम् । अप । स्नीहितिम् । नृऽमनाः । अप । द्राः ॥ १ ॥

भाष्यसारः । **द्रप्सः—द्रुतगामी, कृष्णः—एतन्नामकोऽसुरविशेषः, दशभिः सहस्रैः असुरैः सह ईयानः—गच्छन्, अंशुमतीं नदीम् अव अतिष्ठत्—नद्यास्तीरे अतिष्ठत्, शच्या—स्वबलेन हेतुना, धमन्तं—भीषणं नादं कुर्वन्तम्, तम् आवत्—इन्द्रः**

उपागच्छत्। अथ नृमणाः—नरहितमानसः स्तोतृवत्सलः, इन्द्रः स्नीहितिं—हिंसापरम् असुरसैन्यम् , अप-द्राः—अद्रावयत् जघानेत्यर्थः ॥ १ ॥

Fast-moving Kṛṣṇa, with ten thousand (followers), occupied the banks of the river Aṃśumatī ; Indra, mindful of or kind to men (i. e., worshippers), fell upon him, as he was shrieking loudly for his power, and destroyed his ruthless army.—1.

**सा०-भा० ।** अत्रेतिहासमाचक्षते, पुरा किल कृष्णो नामासुरः दशसहस्र-संख्याकैरसुरैः परिवृतः सन् अंशुमतीनामधेयाया नद्यास्तीरे अतिष्ठत्। तत्र तं कृष्णमुदक-मध्ये स्थितम् इन्द्रो बृहस्पतिना सहागच्छत्। आगत्य तं कृष्णं तस्यानुचरांश्च बृहस्पति-सहायो जघानेति। केचिदन्यथा वदन्ति—तेषां कथाहेतुः द्रप्सेत्युदककणोऽभिधीयते। स तु सोमः 'द्रप्सश्चस्कन्द०' ( ऋ० सं० १० म० १७ सू० ११ ऋ० ) इत्यादिषु सोमपरत्वेनोक्तत्वात्। एतत्पदमाश्रित्याहुः—

"अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः ।*
नदीमंशुमतीं नाम अभ्यतिष्ठत् कुरून् प्रति ॥
तं बृहस्पतिनैकेन सोऽभ्ययात्तत्र वृत्रहा ।
योत्स्यमानः सुसंहृष्टैर्मरुद्भिर्विविधायुधैः ॥
दृष्ट्वा तानागतान् सोमः स्वबलेन व्यवस्थितः ।
मन्वानो वृत्रमायान्तं जिघांसुमरिसेनया ॥
व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः ।
मरुत्पतिरयं सोम ! प्रेहि देवान् पुनर्विभो ॥
सोऽब्रवीन्नेति तम् ,—शक्र ओजसैव बलाद्बली ।
इयाय देवानादाय तं पपुर्विधिवत् सुराः ।
जघ्नुः पीत्वा च दैत्यानां समरे नवतीर्नव" ॥

तदवद्रप्स इत्यस्मिन् सर्वं निगद्यते बृ० दे० ६, ११८—१२५। एतदनार्षत्वेऽनादरणीयं भवति। एषोऽर्थः क्रमेण ऋचि वक्ष्यते। तथाचास्या ऋचोऽयमर्थः—

* The purp. of the verses taken from the *Bṛhaddevatā* in the com. above is—the Soma, being afraid of Vṛtra, took refuge in the land of the Kuṛus by the river Aṃśumatī. Indra followed it with Bṛhaspati and the Maruts. It attempted to resist, but was ultimately conquered and brought back to the gods, who drank it and in consequence vanquished the demons.

द्रप्सो द्रुतं सरति गच्छतीति 'द्रप्सः' पृषोदरादित्वात् साधुः। द्रुतं गच्छन् 'दशभिः सहस्रैः' दशसहस्रसङ्ख्याकैरसुरैः 'ईयानः' ईयमानः 'कृष्णः' एतन्नामकोऽसुरः अंशुमतीं नाम नदीम्। 'अवातिष्ठत्' अवतिष्ठते। ततः 'शच्या' स्वकर्मणा प्रज्ञानेन वा 'धमन्तम्' उदकस्यान्तरुच्छ्वसन्तम्। यद्वा जगद्भीतिकरं शब्दं कुर्वन्तं 'तं' कृष्णासुरम् 'इन्द्रः' मरुद्भिः सह 'आवत्' प्राप्नोत्। 'अथ' अनन्तरं पश्चात् 'तं' कृष्णासुरं तस्यानुचरांश्च हतवान् इति वदति। 'नृमणाः' नृषु मनो यस्य सः। यद्वा, कर्मनेतृषु ऋत्विक्षु एकविधं मनो यस्य स तथोक्तः। तादृशो भूत्वा 'स्नीहितिं'—स्नीहितिर्वधकर्मसु पठितः (निघ० ३, १६)—सर्वस्य हिंसित्रीं तस्य सेनाम् 'अपद्राः'—द्रातिः कुत्सितगतिकर्मा। स इन्द्रः 'अपनामयत्' अवधीदित्यर्थः। तस्यानुचरान् हत्वा तं द्रुतं गच्छन्तम् असुरं हतवानित्यभिप्रायः ॥ १ ॥

१। ऋ० सं० ८ म० ९६ सू० १३ ऋ०। ṚV. reads **'अप स्नेहिती नृमणा अधत्त'**। SV. (Bibl. Ind.) has **'अधद्राः'**। Prof. Ludwig follows this text and conjectures that *rāḥ.* appears to stand for *rat.* Sāyaṇa follows the rdg. **'अपद्राः'** and explains accordingly ; this we have adopted.

Grfth. renders this stanza differently, but it is very difficult to make sense out of it, he renders द्रप्सः कृष्णः as the black drop by which he means—'the darkened moon', by '*Amśumatī*'—he means 'a mythical river of the air', by 'ten thousands',—he says,'probably, the demons of darkness, as the numerals are without a substantive' etc.—All these are conjectural and are not based on any authentic interpretation. Moreover, actual mention of the demon *Kṛṣṇa* in several passages of the ṚV. gives no occasion to any allegorical explanation or the like. In i. 101. 9, it is described that Indra, with King *Ṛjiśvan* destroyed Kṛṣṇa together with his pregnant wives, so that none of his posterity might survive.—( यः कृष्णगर्भा निरहन्नृजिश्वना ) ; again, Indra is said to have torn off the black skin of the aggressor (demon Kṛṣṇa) i. 130. 8 ; in iv. 16. 13, Indra is described to have slain the fifty thousand followers of Kṛṣṇa—( पञ्चाशत् कृष्णा नि वपः सहस्रा ).

Various legends attach to this,—one is that Indra with Maruts and Bṛhaspati smote Kṛṣṇa with ten thousand forces. Another version has that Soma flew, from fear of Vṛtra, to Amśumatī and though requested, would not come out, but Indra by force carried Soma to gods who drank Soma and destroyed the Asuras.—cf. Prof. Cowell's note (in Wils. transl. of ṚV. Vol. V. p. 192). *See* further notes on the word द्रप्सः in SV. 1. 275.

स्नीहितिम्—slaughtering—Mon. W.'s S. E. Dict. ; malicious—*Wils.*

नृमणाः—an epithet applied to Indra, mg.—with mind favourably disposed to men (i. e., to worshippers or the sacrificers) ; benevolent to men—*Wils*.

अंशुमतीम्—N. of a river (Yamuna ?)—reference to this river is also found in ṚV. viii. 96. 13-15.

---

द्युतान ऋषिः ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३१ २ ३ १ २र
**वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।**
३ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
**मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥२॥३२४॥**

वृत्रस्य । त्वा । श्वसथात् । ईषमाणाः । विश्वे । देवाः । अजहुः । ये । सखायः । मरुत्ऽभिः । इन्द्र । सख्यम् । ते । अस्तु । अथ । इमाः विश्वाः । पृतनाः । जयासि ॥ २ ॥

भाष्यसारः । हे इन्द्र, ये विश्वेदेवाः तव सखायः—सहायाः आसन्, ते वृत्रस्य असुरस्य श्वसथात्—प्रश्वासात् श्वासभीताः सन्तः, ईषमाणाः—इतस्ततो धावन्तः, त्वाम् अजहुः—समरे तत्यजुः । अस्यां दशायां मरुद्भिः सह ते सख्यमस्तु, अथ—तस्मात् परम् इमाः विश्वाः—सर्वाः पृतनाः—शत्रुसेनाः, जयासि—अभिभवसि ॥ २ ॥

All gods, who were thy allies, flying in fear of Vṛtra's snort, forsook thee ; may thy alliance be (perpetual) with the Maruts, mayest thou subdue all these forces (of the enemies).—2.

**सा०-भा०** । हे 'इन्द्र' ! तव 'ये' 'विश्वेदेवाः' प्राक् 'सखायः' संग्रामे सखित्वं कुर्यामेति मित्राण्यभवन् । 'ते' सर्वे 'देवाः' वृत्रासुरस्य 'श्वसथात्'—श्वसेरौणादिकोऽथप्रत्ययः । सर्वान् आगच्छतो दृष्ट्वा तेषां भीत्युत्पादनाय वृत्रासुरः श्वासमकार्षीत्, श्वासाद्भीताः सन्तः, अतएव 'ईषमाणाः' सर्वतः पलायमानाः 'त्वा' त्वाम् 'अजहुः' संग्रामे त्यक्तवन्तः । एवं सति हे इन्द्र ! 'मरुद्भिः' सह 'सख्यं' सखिभावः 'ते' तव अस्तु । ये मरुतस्त्वां न परित्यजन्ति तैः सहेति । 'अथ' अनन्तरम् 'इमाः' विश्वाः सर्वाः 'पृतनाः' शत्रुसेनाः 'जयासि' स्वबलेनाभिभवसि अनेन वृत्रघ्नं तमिन्द्रमाह । अत्र मन्त्रे 'इन्द्रो वै वृत्रं हनिष्यन्' इत्यादि (३,२०) ऐतरेयब्राह्मणमनुसन्धेयम् ॥ २ ॥

२ । ऋ० सं० ८ म० ९६ सू० ७ ऋ० ।

श्वसथात्—the act of blowing, hissing, snorting, breathing.

ईषमाणः—fr. rt. ईष् *to go* 1. pres. PT. going, flying away or escaping (*here*), cf. 'क ईषते तुज्यते को बिभाय' who *goes forth* (through fear from foes, when Indra is near)...ṚV. i. 84. 17. जयासि—rt. जि—लट् (Ved. Subj.). 2. sg.

---

बृहदुक्थ ऋषिः ।

३ १ २ ३ १ २र ३ १ २र ३ १ २ ३ १ २

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।

३ १ २ ३ १ २ ३ २उ ३ २ १ १ २र

देवस्य पश्य काव्यं महित्वाद्य ममार स ह्यः समान ॥३॥३२५॥

विऽधुम् । दद्राणम् । समने । बहूनाम् । युवानम् । सन्तम् । पलितः । जगार । देवस्य । पश्य । काव्यम् । महिऽत्वा । अद्य । ममार । सः । ह्यः । सम् । आन ॥ ३ ॥

भाष्यसारः । **इन्द्रप्रसादात् पलितः—वृद्धः, अपि, विधुम्—युद्धकारिणम्, समने—संग्रामे, बहूनाम्—शत्रूणाम्, दद्राणम्—द्रावकं विनाशकमित्यर्थः, सन्तम्—प्रशस्तम्, युवानं जगार—गिरति अभिभवतीत्यर्थः। देवस्य इन्द्रस्य महित्वा—महत्वेन सह, काव्यम्—प्रभावं पश्य, यः अद्य ममार म्रियते, सः ह्यः—श्वः परेऽहनि, समान—सञ्जीवति ॥ ३ ॥**

(Even) an old man overcomes a young combatant, the winner of wars and destroyer of many warriors in battle, (through the favour of Indra) ; behold the great might of the god :—he (who) dies to-day, will be alive to-morrow.—3.

**सा०-भा० ।** अनया कालात्मक इन्द्रः स्तूयते, 'विधुं' विधातारं सर्वस्य युद्धादेः कर्त्तारं—विपूर्वो दधातिः करोत्यर्थः । तथा 'समने' अननं प्राणनं सम्यगननोपेते संग्रामे 'बहूणां' शत्रूणां 'दद्राणं' द्रावकम् । ईदृक्सामर्थ्योपेतमपि 'युवानं' 'सन्तं' पुरुषम् । 'पलितो' वृद्धो 'जगार' निगिरतीन्द्रकृपया । एवमुक्तलक्षणं वक्ष्यमाण-लक्षणं च । 'देवस्य' कालात्मकस्येन्द्रस्य 'महित्वा' महत्वेनोपेतं 'काव्यं' सामर्थ्यं पश्य—हे बृहदुक्थ ! ऋषिः स्वात्मानमामन्त्र्य वदति,—तथा यो जरां प्राप्तोऽद्य 'ममार' म्रियते । 'सः' 'ह्यः' परेद्युः 'समान' सम्यग् जीवति पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः ॥३॥

३ । ऋ० सं० १० म० ५५ सू० ५ ऋ० ।

Grfth.—following Prof. Ludwig's interpretation, renders the first half of the stanza differently ; e. g., 'The old has waked the young Moon from his slumber who runs his circling course with many round him.' By the phrase —'*with many round him*', he means—'stars of the asterisms or lunar mansions through which he passes'. We leave it to the readers to make sense out of this translation and the notes.

Yāska explains this verse thus—'विधुं विधमनशीलं दद्राणं दमनशीलं युवानं चन्द्रमसं पलित आदित्यो गिरति स द्यो म्रियते । स दिवा समुदितोत्यधिदैवतम् । अथाध्यात्मम्—विधुं विधमनशीलं दद्राणं दमनशीलं युवानं महान्तं पलित आत्मा गिरति । रात्रौ म्रियते । रात्रिः समुदित्यात्मगतिमाचष्टे ॥ नि० परिशिष्टम् १३, ३१. P. 236 (L. S.).

विधुम्—वृष्टिप्रदानाद्युपकरणेन सर्वंजगतो धारयितारम्—the upholder of all the universe by doing such benevolent deeds as shedding rain,—*Viv.* Sāy. derives विधु from वि—rt. धा, mg. perpetrater of battles ; 'warlike man'—*Wils.* विधुं पलितो जगार—the gray-haired has swallowed the warlike young man.

काव्यम् महित्वा—कविः मेधावी, तस्य भावः ; महित्वा—महत्त्वेन, स्वमाहात्म्येन इत्यर्थः ।—*Viv.* 'high wisdom in its greatness'—*Grfth.* The power of the deity (endowed) with might—*Wils.* समने—it is a syn. of 'battle' Ngh. 2. 17.

बहूणां दद्राणम्—'scatterer of many foes'—*Wils.* pres. PT. of rt. द्रा *to run*, 2. p. Scaring or driving away. Yāska explains दमनशीलम्—domineering over (*see* Yāska quoted above).

समान—सम्—rt. अन् *to breathe*—perf. ( लिट् ) 3. sg ; perf. for pres. by 'छन्दसि लुङ्लङ्लिटः' Pāṇ. iii. 4. 6.

———

द्युतान ऋषिः ।

२ ३ २ ३ २ ३ १ २
त्वं ह त्यत्सप्तभ्यो जायमानो-
३ १ २ ३ १ २
ऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
३ १ २र ३ १ २र
गूढे द्यावापृथिवी अन्वविन्दो
३ २ ३ १ २ ३ १ २
विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥४॥३२६॥

त्वम् । ह । त्यत् । सप्तभ्यः । जायमानः । अशत्रुऽभ्यः । अभवः । शत्रुः । इन्द्र । गूढे इति । द्यावाऽपृथिवी इति । अनु । अविन्दः । विभुमत्ऽभ्यः । भुवनेभ्यः । रणम् । धाः ॥ ४ ॥

भाष्यसारः। हे इन्द्र, त्वं ह—खलु, त्यत्—तत् कर्म कृतवानिति शेषः। किमित्याह—जायमानः त्वं सप्तभ्यः अशत्रुभ्यः—इन्द्रजननात् पूर्वं शत्रुशून्यानां वृत्राद्यसुराणां सप्तानां अविदितशत्रुभयानां सप्तपुराणां सप्तहोतॄणां कृते यज्ञबाधकानां वा शत्रुः अभवः, गूढे—तमसाच्छन्ने, द्यावापृथिव्यौ सूर्यरूपेण प्रकाश्य अन्वविन्दः—प्राप्तवान्, प्राप्य च विभुमद्भ्यः—महद्भ्यः भुवनेभ्यः, रणम्—रमणीयम् आनन्दम्, धाः—विदधासि ॥ ४ ॥

Indra, thou, as soon as born, hast been the enemy of the seven who had no rival before ; thou (in the form of the sun) brought to light the heaven and the earth which had been merged in darkness and granted delight to the glorious worlds.—4.

**सा०-भा०।** हे 'इन्द्र !' 'त्वं ह' त्वं खलु 'त्यत्' तदेतत् कर्म कृतवानसि। किं तदुच्यते ? 'जायमानः' त्वं प्रादुर्भवन्नेव 'अशत्रुभ्यः' शत्रुरहितेभ्यः 'सप्तभ्यः' कृष्ण-वृत्र-नमुचि-शम्बरादिभ्यः सप्तभ्यो बलवद्भ्यः शत्रुभ्यः—तदर्थं 'शत्रुः' 'अभवः'। यद्वा, सप्तभ्यः पूर्भ्यः शत्रुः शातयिता दारयिता अभवः। सप्त यत्पुरः शर्म शारदीर्दत् (ऋ० सं० १ म० १७४ सू० २ ऋ०) इति हि निगमः। अथवा सप्तभ्यः सप्त-होतृप्रभृतयो होत्रकाः, तदर्थं यज्ञेषु प्रादुर्भवन्नेव कर्मविघ्नकारिभ्यः शत्रुरभवः। किञ्च, हे इन्द्र ! त्वं 'गूढे संवृते द्यावापृथिव्यौ सूर्यात्मना प्रकाश्य अनुक्रमेण ते 'अविन्दः' अलभथाः तथा 'विभुमद्भ्यः' महत्त्वयुक्तेभ्यः 'भुवनेभ्यः' लोकेभ्यः 'रणं' रमणं 'धाः' धारयसि विदधासीत्यर्थः ॥ ४ ॥

४। ऋ० सं० ८ म० ९६ सू० १६ ऋ०।

सप्तभ्यः—Sāy. gives several interpretations : (1) the seven demons—e. g., Kṛṣṇa (rfd. to in SV. 1. 323), Vṛtra, Śambara, Namuci (SV. 1. 211) and others ; (2) the seven cities mentioned in ṚV. i. 174. 2 ; (3) the obstructors of seven Hotṛs.

रणम्—delight, pleasure, fr. rt. रम् *to rejoice.* cf. 'आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे'—Ye waters are indeed source of comfort. As such bestow food on us, so that we may look upon great *delight*, ṚV. x. 9. 1.

गूढे द्यावापृथिवी अन्वविन्दः—Thou foundest the hidden pair, the heaven and the earth—*Grfth.* For Indra's identification with the sun, *see* SV. 1. 125.

विभुमद्भ्यः भुवनेभ्यः—to the mighty worlds. Mon. Wilms. has the word *Vibhumat* in the sense of—extending everywhere, and all-pervading, abundant, plentiful,—(S. E. Dict.).

वामदेव ऋषिः ।

३ १र    २र ३ १ २    ३ १ २    ३ १ २   ३ २   ३ १  २
**मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभं स्थिरप्स्नुम् ।**
३ २र   ३ १ २   ३ १र   २र  ३ १ २ ३ १ २
**करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥५॥३२७॥**

मेडिम् । न । त्वा । वज्रिणम् । भृष्टिऽमन्तम् । पुरुऽधस्मानम् । वृषभम् । स्थिरऽप्स्नुम् । करोषि । अर्यः । तरुषीः । दुवस्ऽयुः । इन्द्र । द्युऽक्षम् । वृत्रहणम् । गृणीषे ॥ ५ ॥

भाष्यसारः । **हे इन्द्र, दुवस्युः—परिचर्यां लब्धुमिच्छुस्त्वम्, अर्यः—अरीन् हतबलान्, तरुषीः—अस्मान् च जयशीलान् करोषि । अतः भृष्टिमन्तम्—तीक्ष्णशिखरयुक्तास्त्रधारिणम्, पुरुधस्मानम्—बहुशत्रुविनाशकम्, वृषभम्—कामानां वर्षितारम्, स्थिरप्स्नुम्—स्थिररूपम्, द्युक्षम्—दिवि निवसन्तम् प्रदीप्तं वा, वृत्रहणम्—वृत्रस्य हन्तारम्, वज्रिणं त्वाम्, मेडिं न—वृष्टिकरीं स्तुतिमिव, गृणीषे—स्तौमि ॥ ५ ॥**

Thou, Indra, desiring worship, renderest (our) enemies powerless and makest us victorious; I praise thee, the slayer of Vṛtra, the thunder-bearer, firm in body, residing in heaven (or resplendent), bearing sharp-edged weapon, overcoming many, showering blessings, as people pray for rain.—5.

**सा०-भा० ।** हे 'इन्द्र'! 'दुवस्युः'—दुवः परिचरणं स्तुत्यादिलक्षणं तदिच्छुस्त्वं यतः 'अर्यः' अरीन् अस्मद्विरोधिनः 'तरुषीः' तारकान् जेतॄनस्मान् करोषि । यद्वा, तरुषीः तरणस्वभावान् । पक्षद्वयेऽपि लिङ्गव्यत्ययः । अर्यः अरीनस्माकं शत्रून् करोषि उपक्षीणानिति शेषः । अतः 'मेडिं न' मेडिरिति वाङ्नाम (नि० १,१,११) माध्यमिकीं वृष्टिप्रदां वाचमिव तां यथा वृष्ट्यर्थं स्तुवन्ति तद्वत् 'त्वा' त्वां 'गृणीषे' स्तोत्रमुच्चारयामि स्तौमि । कीदृशं त्वां--'वृत्रहणं' वृत्रस्यासुरस्य मेघस्य वा हन्तारम् । 'द्युक्षं' द्युलोके वर्त्तमानम् । 'पुरुधस्मानं' बहूनामुदकानां धारकम् यद्वा, वर्णव्यत्ययः । पुरूणां बहूनां दासयितारं शत्रूणां क्षपयितारं 'वृषभं' कामानां वर्षकम् । 'स्थिरप्स्नुम्' स्थिररूपम् । न हीन्द्रस्य रूपं कदाचिदपि प्रच्युतं भवति । यद्वा, स्थिराणां शत्रूणां भक्षकं विघातिनमित्यर्थः । 'वज्रिणं' वज्रवन्तम् 'भृष्टिमन्तं' शत्रूणां भर्जनवन्तम् ॥ ५ ॥

५। इयम् ऋक् ऋग्वेदे नास्ति।

मेडिं न त्वा—मेडि is explained by Sāyaṇa as 'prayer' (for rain). prob. fr. rt. मिह् *to shed water*, 1. p. मेडि is read among the synonyms of speech, Ngh. 1. 11. Grfth. renders—'a friend we count thee', and comments—'the exact meaning of the word *Medim* is uncertain'.

भृष्टिमन्तम्—'who wearest the crown'—*Stevenson* ; Sāyaṇa interprets शत्रूणां भर्जनवन्तम्—frying or burning the enemies, fr. rt. भ्रस्ज *to fry*, 6. u. In *Vivaraṇam* it is explained thus—भृष्टिशब्देन शिखराण्युच्यन्ते तानि चात्र बहुशिखराणि परिगृह्यन्ते, तैः संयुक्तम्, Grfth., following this explanation, renders—'sharp-edged' *vide* Mon. W.'s S. E. Dict.—'भृष्टि—a spike, point, edge. cf. सहस्रभृष्टि', भृष्टिमत्—pronged, toothed. For भृष्टि *see* 'गिरेर्भृष्टिर्न'—like the peak of a mountain. ṚV. i. 56. 31 ; भृष्टिमता—'वृत्रस्य यद् भृष्टिमता वधेन नि त्वमिन्द्र प्रत्यानं जघन्थ,—when thou hadst struck the face of Vṛtra with thy bladed bolt. *ib.* i. 52. 15. here भृष्टिमता *rfs.* to the thunderbolt of Indra, which, according to *Aitareya-Brāhmaṇa*, has eight angles, or, perhaps, blades ( अष्टाश्रिर्वै वज्रः )।

दुवस्युः—from the verb दुवस्यति *to attend*, Ngh. 3. 5. Nir. 10. 20. cf. यमं राजानं हविषा दुवस्य'—'with oblation *worship* the king, Yama, ṚV. x. 14. 1.

दुवस्युः—occurs in ṚV. x. 100. 12. 'गोस्तुतूर्षति पर्यग्रं दुवस्युः'—(the deity) *desirous of worship* hastens in front of the victim cow. दुवस्यति—'तमु त्वा गोतमो गिरा रायस्कामो दुवस्यति'—Gotama, desirous of riches, *worships* thee with praise. i. 78. 2 ; also see iii. 3. 1 ;—51. 3 ; vii. 82. 5. दुवस्यन्ति i. 62. 10.

पुरुधस्मानम्—*for* पुरुदस्मानम् ; ध is read for द, fr. rt. दस् *to destroy, to overthrow*, 4. p.

स्थिरप्स्नुम्—'strong of body'—*Grfth.* Sāy. interprets as स्थिररूपम्—having permanent beauty, perhaps he confounds प्स्नु with रू (beauty,—Ngh. 3. 7). Another meaning he assigns to the word—e. g., the devourer or destroyer of constant enemies—(*see* Sāy. above). Mon. Wilms. has the word in the sense—'having constant food.' द्युम्नम्—*see* our notes on the word, SV. I. 102.

तरुषीः करोषि—Thou causest (the pious tribes) to conquer—*Grfth.*

This verse, containing some rare obsolete words e. g., मेडिम्, पुरुधस्मानम्, स्थिरप्स्नुम्, तरुषीः, shows much anteriority of the SV. text to that of the ṚV.

वशिष्ठ ऋषिः । विराट् छन्दः* ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

**प्र वो महे महे वृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।**

१ २ ३ १र २र ३ २

**विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ६ ॥ ३२८ ॥**

प्र । वः । महे । महे । वृधे । भरध्वम् । प्रऽचेतसे । प्र । सुऽमतिम् । कृणुध्वम् । विशः । पूर्वीः । प्र । चर । चर्षणिऽप्राः ॥ ६ ॥

भाष्यसारः । **हे जनाः, वः—यूयम्, महे वृधे—महते वर्धनाय अभ्युदयाय इत्यर्थः, महे—महते इन्द्राय, प्रभरध्वम्—सोमं प्रदत्त । प्रचेतसे—परमज्ञानिने इन्द्राय, सुमतिम्—उत्तमस्तुतिम्, प्र कृणुध्वम्—प्रकुरुध्वम्, इन्द्रं स्तुतेत्यर्थः । हे इन्द्र, चर्षणिप्राः—जनानामभीष्टपूरकस्त्वम्, पूर्वीः—हविःप्रदातॄन्, विशः—जनान्, प्र-चर—प्रति गच्छ ॥ ६ ॥**

Offer libations to the mighty (Indra) for great prosperity, offer excellent praise to the wise (Indra); O cherisher of men, come to the people offering thee oblations.—6.

**सा०-भा० ।** **हे अस्मदीयाः पुरुषाः ! 'वः' यूयं 'महिवृधे' (?) महतां धनानां वर्धयित्रे 'महे' महते इन्द्राय 'प्रभरध्वं' सोमान् प्रणयत । 'प्रचेतसे' प्रकृष्टज्ञानाय इन्द्राय 'सुमतिं' सुष्टुतिं च 'प्रकृणुध्वं' प्रकुरुत । अथ प्रत्यक्षस्तुतिः । हे इन्द्र ! 'चर्षणिप्राः' कामैः प्रजानां पूरयिता त्वं 'पूर्वीः' हविषां पूरयित्रीः 'विशः' प्रजाः 'प्र-चर' अभिगच्छ ॥ ६ ॥**

६ । **ऋ० सं० ७ म० ३१ सू० १० ऋ० ।** ṚV. has **'महिवृधे'** instead of **'महे वृधे'** । Sāy. here follows the ṚV. rdg. **उ० आर्चि० ६, १, ११, १ ।**

चर्षणि-प्राः—the fulfiller of the desires of men; fr. rt. पॄ; this compd. occurs also in ṚV. i. 177. 1;—186. 6; iii. 34. 7; iv. 2. 13; vi. 19. 1;—39. 4; *for* etym. and mg. of चर्षणि—*see* our notes on SV. I. 144; 208.

———

* The metre *Virāj* consists of three instead of four pādas of 11 syllables each.

विश्वामित्र ऋषिः ।

३ १ २ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
शुनं हुवेम मघवानमिन्द्रमस्मिन् भरे नृतमं वाजसातौ ।
३ १ २ ३ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानि ॥७॥३२६॥

शुनम् । हुवेम । मघऽवानम् । इन्द्रम् । अस्मिन् । भरे । नृऽतमम् । वाजऽसातौ । शृण्वन्तम् । उग्रम् । ऊतये । समत्ऽसु । घ्नन्तम् । वृत्राणि । सम्ऽजितम् । धनानि ॥ ७ ॥

भाष्यसारः । **अस्मिन् वाजसातौ—अन्नप्राप्तिकरे, भरे—संग्रामे, शुनम्—उत्साहेन प्रवृद्धम्, मघवानम्—बहुधनम्, नृतमम्—नेतृश्रेष्ठम्, शृण्वन्तम्—स्तुतिश्रवणपरम्, उग्रम्—भयङ्करम्, समत्सु—समरेषु, वृत्राणि—बाधकान् शत्रून्, घ्नन्तम्—हन्तारम्, धनानि सञ्जितम्—सुष्ठु जेतारम्, इन्द्रम् ऊतये—रक्षार्थम्, हुवेम—आह्वयामः ॥७॥**

We invoke, for our protection, affluent Indra, the best leader, augmented with enthusiasm in this food-bestowing battle, listening to our prayers, awful in combats, the slayer of enemies, the winner of riches.—7.

**सा० भा० ।** हे 'इन्द्र !' 'वाजसातौ' वाजस्यान्नस्य सातिर्लाभो यस्मिन् सोऽयं वाजसातिः तस्मिन् 'भरे'—बिभ्रति जयलक्ष्मीमनेन योद्धार इति भरः संग्रामः, तस्मिन् संग्रामे 'शुनं' शुनम् उत्साहेन प्रवृद्धम् अथवा शुनमिति सुखनाम सुखकरम्, 'मघवानं' धनवन्तम् अतएव 'इन्द्रं' निरतिशयैश्वर्यसम्पन्नं 'नृतमं' सर्वस्य जगतोऽतिशयेन नेतारं त्वां 'हुवेम' कुशिका वयं यज्ञार्थमाह्वयेम । तथा 'शृण्वन्तम्' अस्माभिः क्रियमाणां स्तुतिं शृण्वन्तम् । 'उग्रं' शत्रूणामुद्गूर्णम् । 'समत्सु' संग्रामेषु 'वृत्राणि' वृत्रोपलक्षितानि सर्वाणि रक्षांसि 'घ्नन्तं' हिंसन्तम् । 'धनानि' शत्रुसम्बन्धीनि सञ्जितं सम्यग्जेतारं त्वाम् 'ऊतये' रक्षणाय वयमाह्वयेम ॥ ७ ॥

७ । ऋ० सं० ३ म०, ३० सू०, २२ ऋ० ।

Sāyaṇa's addl. notes in his com. on the Ṛ.V. verse rfd., above :—

शुनम्—(rt. श्वि *to increase,—aff.* क्त) टुओश्वि गतिवृद्ध्योरित्यस्य निष्ठायां यस्य विभाषेतीट्प्रतिषेधः। यजादित्वात् सम्प्रसारणम्। दीर्घाभावश्छान्दसः। हुवेम—ह्वयतेर्बहुलं छन्दसीति सम्प्रसारणे कृते शपो लुकि कृते च लिङि रूपम्। भरे—भृञ् भरणे—घः। वाजसातौ—सनु दाने भावे क्तिः। 'जनसने'त्यादिनानुनासिकस्य आत्वम् (*see* our notes on वाजसातये—SV. I. 202.)। समत्सु—अद भक्षणे, सं पूर्वात् क्विप्—संभक्षयन्ति योद्धॄणामायूंषि इति समदः—संग्रामाः (*see* our notes on SV. I. 269.)। संजितम्—जि जये—क्विप्।

---

वसिष्ठ ऋषिः।

२ ३ १ २ ३ १ २ ३ १ २
उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ।
१र २र ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचांसि॥८॥३३०॥

उत्। ऊँ इति। ब्रह्माणि। ऐरत। श्रवस्या। इन्द्रम्। सऽमर्ये। महय। वसिष्ठ। आ। यः। विश्वानि। श्रवसा। ततान। उपऽश्रोता। मे। ईवतः। वचांसि॥८॥

भाष्यसारः। ऋषयः श्रवस्या—अन्नाकाङ्क्षया, ब्रह्माणि—स्तुतिवाक्यानि, उदैरत—उच्चारयन्ति। हे वसिष्ठ, त्वमपि समर्ये—यज्ञे, इन्द्रं महय—पूजय। यः इन्द्रः विश्वानि—सर्वान् प्राणिनः, श्रवसा—अन्नेन, आततान—पूरयति, सः ईवतः—उपागच्छतः मे, वचांसि उपश्रोता—श्रवणकर्त्ता भवत्विति शेषः॥ ८॥

(The sages) offer prayers (to Indra), desiring food; Vasiṣṭha, worship Indra in the sacrifice; may Indra, who strews food to all creatures, be the hearer of my prayers, when I approach him.—8.

**सा०-भा०।** 'श्रवस्या' अन्नेच्छया 'ब्रह्माणि' स्तोत्राणि हवींषि च इन्द्रार्थम् 'उदैरत' सर्वे ऋषय इति शेषः। उ इति पूरणः। हे वसिष्ठ! त्वमपि 'समर्ये' यज्ञे 'इन्द्रं' 'महय' स्तोत्रेण हविषा च पूजय। अपि च 'य इन्द्रः' 'विश्वानि' भुवनानि 'श्रवसा' अन्नेन कीर्त्या वा 'आततान' सः 'ईवतः' उपगमनवतो 'मे' मम 'वचांसि' स्तुतिरूपाणि वाक्यानि 'उपश्रोता' भवतु॥ ८॥

८। ऋ० सं० ७ म० २३ सू० १ ऋ०। ṚV. has 'शवसा' (बलेन) instead of 'श्रवसा' (अन्नेन, कीर्त्या)।

श्रवस्या—*for* श्रवस्यया, *Instr. sg.*—with the desire of food; श्रवस् (food)—क्यच्—आ, for gram. *vide* our notes on गव्या, अश्वया, रथया, SV. I. 186. *See* श्रवस्युः SV. I. 149.

समर्ये—in the sacrifice; cf. 'वयमद्येन्द्रस्य प्रेष्ठा वयं श्वो वोचेमहि समर्ये'—let us, who are beloved of Indra, glorify him to-day…*in the sacrifice*, ṚV. i. 167. 10; occurs also in iii. 8. 5; sometimes it means battle, as in i. 63. 6; iv. 38. 7; vii. 19. 2.

महया—*for* महय (final vowel is long in Saṃhitā text by Pāṇ. vi. 1. 137), Imp. 2. sg. of rt. मह् *to worship.*

गौरिवीति ऋषिः ।

चक्रं यदस्यापस्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥९॥३३१॥

चक्रम् । यत् । अस्य । अप्ऽसु । आ । निऽसत्तम् । उतो इति । तत् । अस्मै । मधु । इत् । चच्छद्यात् । पृथिव्याम् । अतिऽसितम् । यत् । ऊधः । पयः । गोषु । अदधाः । ओषधीषु ॥९॥

भाष्यसारः । अस्य—इन्द्रस्य, यत् चक्रम्—अस्त्रम् वज्रमित्यर्थः, अप्सु—जलपूर्णेषु मेघेषु अन्तरिक्षे वा, आ—सर्वतः, निषत्तं—स्थितम्, तत् उतो—अपि च, अस्मै मधु इत्—जलमपि, चच्छद्यात्—वशीकरोति, पृथिव्यां यत् ऊधः—उदकम्, अतिषितम्—विसृष्टम्, तत् गोषु ओषधीषु च पयः—दुग्धरूपेण रसरूपेण वा क्रमात्, आ अदधाः—धारयति स्थापयति ॥ ९ ॥

The wheel (the thunder) which lies in the atmosphere (in the clouds) and which controls the waters for him (Indra) and apportions waters shed on the earth, as milk to the cows and as sap to the herbs.—9.

**सा०-भा० ।** 'अस्य' इन्द्रस्य 'चक्रम्' आयुधम् 'अप्सु' अन्तरिक्षे 'आ' सर्वतो 'निषत्तं' निषण्णमासीन्मेघहननार्थम् । 'उतो' अपि च तत् 'अस्मै' इन्द्राय 'मध्वित्' उदकमपि 'चच्छद्यात्' वशं नयति । 'पृथिव्याम्' अतिषितं विमुक्तं 'यदूधः' उदकमस्ति तत् 'पयो गोष्वोषधीषु' च 'आदधाः' आदधाति ॥ ९ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य दशमः खण्डः । इति चतुर्थप्रपाठकस्य प्रथमार्धे चतुर्थी दशतिः ॥

९ । ऋ० सं० १० म० ७३ सू० ९ ऋ० ।

अप्सु—Sayana interprets it by अन्तरिक्षे, in the atmosphere ; the word 'आप:' is found among the list of the synonyms of अन्तरिक्षम्, Ngh. 1. 3 ; 'watery clouds'—*Grfth.*

निषत्तम्—*for* निषण्णम्, नि—सद्—क्त, by "नसत्त-निषत्त...छन्दसि", Pāṇ. viii. 2. 61.

मधु—water, Ngh. 1. 12. cf. 'अश्ना पिनद्धं मधु पर्यपश्यन्मत्स्यं न दीन उदनि क्षियन्तम्'—he saw *water* bound up by the cloud on all sides like fish dwelling in shallow water, Ṛ̣V. x. 68. 8.

चच्छदात्—fr. rt. छद or छन्द्. 10. Pot. ( लिङ् ) it occurs only in this verse, also in Tāṇḍya Br. xiv. 5. in the sense—*to seem good, please.*

चक्रम्—'quoit, meaning thunderbolt'—*Grfth.*

पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु. Grfth. renders this part of the verse differently e. g., 'thou, from the udder (the firmament) which o'er earth is fastened, hast poured the milk into the kine and herbage', and explains—'the firmament with its clouds which produce the sweet soft rain which fills the cows with milk and the herbs with sap.

---

अथ तृतीयाध्याये एकादशः खण्डः। चतुर्थप्रपाठकस्य च प्रथमार्धे पञ्चमी दशतिः।

तार्क्ष्यपुत्रोऽरिष्टनेमिर्ऋषिः। त्रिष्टुप् छन्दः।

२ ३ २ ३ १ २ ३ १ २
त्यमू षु वाजिनं देवजूतं
३ १ २ ३ २ ३ १ २
सहोवानं तरुतारं रथानाम्।
१ २ ३ १ २ ३ २
अरिष्टनेमिं पृतनाजमाशुं
३ २ ३ १ २ ३ १ २
स्वस्तये तार्क्ष्यमिहा हुवेम॥ १॥ ३३२॥

त्यम्। ऊँ इति। सु। वाजिनम्। देवऽजूतम्। सहस्ऽवानम्। तरुतारम्। रथानाम्। अरिष्टऽनेमिम्। पृतनाऽअजम्। आशुम्। स्वस्तये। तार्क्ष्यम्। इह। हुवेम॥ १॥

भाष्यसारः। त्यमु—तम् एव, वाजिनम्—अन्नवन्तम् देवजूतम्—देवप्रेरितम्, सहोवानम्—बलवन्तम्, रथानां तरुतारम्—तारकमुद्धारकमिति यावत्, अरिष्टनेमिम्—अप्रतिहतरथगतिम्, पृतनाजम्—शत्रुसैन्यनाशकम्, आशुम्—त्वरितगतिम्, तार्क्ष्यम् इह स्वस्तये—शुभाय, हुवेम ह्वयामः॥ १॥

Let us call on, hither, for our weal, that mighty Tārkṣya, rich in food, employed by the gods, the deliverer (or impeller) of chariots, with unimpeded fellies, the vanquisher of hostile armies, the swift.—1.

**सा०-भा०।** 'त्यमु' तं प्रसिद्धमेव 'तार्क्ष्यं' तृक्षपुत्रं सुपर्णम्। तृक्षशब्दो गर्गादिः। 'स्वस्तये' क्षेमाय 'इह' अस्मिन् कर्मणि 'हुवेम' भृशमाह्वयेमहि 'बहुलं

छन्दसी'ति (पा० ६,१,३४) ह्वयतेः सम्प्रसारणम्। 'लिङ्याशिष्यङ्' (पा० ३,१,८६)। यद्वा, प्रार्थनायां लिङि व्यत्ययेन शः (पा० ३,१,८५)। कीदृशम्? 'वाजिनम्' अन्नवन्तं बलवन्तं वा, 'देवजूतं' देवैः सोमाहरणाय प्रेरितम्। जु इति गत्यर्थः सौत्रो धातुः, अस्मात् कर्मणि क्तः पूर्वपदप्रकृतिस्वरत्वम्। यद्वा, देवैः प्रीयमाणं तर्प्यमाणम्। यदाह यास्कः,—'जूतिर्गतिः प्रीतिर्वा देवजूतं देवप्रीतं वेति'। 'सहोवानं' सहस्वन्तम्,—सहस्शब्दाद्वनिप् मत्वर्थीयः—बलवन्तं वा। अतएव 'रथानाम्' अस्म(न्य)दीयानां 'तरुतारं' संग्रामे तारकम्। यद्वा, रंहणशीला अमी इमे लोका रथाः, तान् सोमहरणसमये शीघ्रं तरीतारम्, श्रूयते हि,—'एष हीमान् लोकान् सद्यस्तरती'ति। तरतेस्तृचि 'प्रसितस्कभिते'त्यादौ (पा० ७,२,३४) उडागमो निपात्यते। 'अरिष्टनेमिम्' अहिंसितरथम्। यद्वा, नेमिर्नमनशीलमायुधम् अहिंसितायुधम्। अथवा उपचाराज्जनके जन्यशब्दः। अरिष्टनेमेर्मम जनकं 'पृतनाजं' पृतनानां शत्रुसेनानां प्राजितारं प्रगमयितारं जेतारं वा। अज गतिक्षेपणयोः। अस्मात् क्विप्। 'बलादावार्द्धधातुके विकल्प इष्यते' (२,४,५६ वा०) इति वचनात् वी-भावाभावः। अजतेर्वा डप्रत्ययः। 'आशु' शीघ्रगामिनम्॥ १॥

१। ऋ० सं० १० म० १७८ सू० १ ऋ०। ṚV. has **'सहावानम्'** instead of **'सहोवानम्.'** This verse is explained by Yāska in Nir. 10. 28; his notes are quoted below :—

वाजिनम्—अशनवन्तम्। जूतिर्गतिः प्रीतिर्वा। देवजूतं देवगतं देवप्रीतं वा। सहस्वन्तम्। तारयितारं रथानाम्। पृतनाजम्—पृतनाजितम्।—exceedingly rich in food. *Jūti* signifies motion or pleasure, *deva-jūtam*, therefore, means one who is incited by the gods or pleased by them; possessed of strength, deliverer of (distressed) chariots, the felly of whose wheel is unhurt i. e., whose course is unimpeded, and who is conqueror in battles.

देवजूतम्—commissioned by gods—*Wils.*

ऊ—उ, in Saṃhitā text the indeclinables get their final vowels lengthened by 'निपातस्य च', Pāṇ. vi. 3. 136; and i. 18. So also इहा—*for* इह।

तार्क्ष्यम्—'तार्क्ष्यस्त्वष्टा व्याख्यातः, तीर्णेऽन्तरिक्षे क्षियति, तूर्णमर्थं रक्षति, अश्नोतेर्वा'—Tārkṣya is the same as Tvaṣṭṛ :—he dwells (*kṣiyati*) in the extensive (*tīrṇe—vistīrṇe*) atmosphere; (2) he protects treasures quickly; or (3) it is drvd. from rt. अश् *to pervade.*—Nir. 10. 27; for special features of Tvaṣṭṛ. *vide* our notes on SV. 1. 147. cf. 'स्वस्ति न स्तार्क्ष्यो अरिष्टनेमिः ...' (स्वस्तिवाचनमन्त्रः)—Ch. M. Bh. 2. 20.—'Of unimpeded course' (*ariṣṭa-nemi*)—is a characteristic feature of तार्क्ष्य, this epithet being almost always associated with him.

———

भरद्वाज ऋषिः ।

३ २ ३ १ २ ३ २ ३ २ ३
त्रातारमिन्द्रमवितारमिन्द्रं
१ २ ३ २ ३ २ ३ १ २
हवेहवे सुहवं शूरमिन्द्रम् ।
३ २उ ३ १ २ ३ १ २र
हुवे नु शक्रं पुरुहूतमिन्द्र-
३ २ ३ २ ३ १ २ ३ १ २
मिदं हविर्मघवा वेत्विन्द्रः ॥ २ ॥ ३३३ ॥

त्रातारम् । इन्द्रम् । अवितारम् । इन्द्रम् । हवेऽहवे । सुऽहवम् । शूरम् । इन्द्रम् । हुवे । नु । शक्रम् । पुरुऽहूतम् । इन्द्रम् । इदम् । हविः । मघऽवा । वेतु । इन्द्रः ॥ २ ॥

भाष्यसारः । **त्रातारम्—विपदि त्राणकर्तारम्, इन्द्रं हुवे—आह्वयामि, अवितारम्—रक्षाकर्त्तारम्, सुहवम्—सुखेन आह्वयनीयम्, शूरं शक्रं पुरुहूतम्—बहुभिराहूतम्, इन्द्रं हवे हवे—प्रतियज्ञम्, हुवे—आह्वयामीत्यर्थः। मघवा—इन्द्रः, इदं हविः वेतु—भुङ्क्ताम् ॥ २ ॥**

I invoke, at every sacrifice, Indra, the deliverer, the protector, the powerful hero, who is easily propitiated, invoked by many; may affluent Indra take this (our) oblation.—2.

**सा०-भा० ।** 'त्रातारं शत्रुभ्यः पालयितारम् 'इन्द्रं' 'हुवे' आह्वयामि। तथा 'अवितारं' कामैस्तर्पयितारमिन्द्रमाह्वयामि। 'हवे हवे' सर्वेष्वाहवनेषु 'सुहवं' सुखेनाह्वातुं शक्यम्। 'शूरं' शौर्यवन्तं 'शक्रं' सर्वकार्येषु शक्तं 'पुरुहूतं' पुरुभिर्बहुभिः पालनार्थमाहूतम्। एवंविधमिन्द्रम् 'आहुवे' आह्वयामि। एवमाहूतो 'मघवा' धनवान् स 'इन्द्रः' 'इदं' पुरोवर्त्ति हविः 'वेतु' भक्षयतु ॥ २ ॥

२ । ऋ० सं० ६ म० ४७ सू० ११ ऋ० । ṚV. reads (1) **'ह्वयामि शक्रम्'** instead of **'हुवे नु शक्रम्'**; (2) **'स्वस्ति नो मघवा धात्विन्द्रः'**, instead of **'इदं हविर्मघवा वेत्विन्द्रः ।'** यजुः—२०, ५० ।

वेतु—may eat; rt. वी *to eat*, Imp. 3. sg.

वसुक्रो विमदो वा ऋषिः ।

१ २ ३ २ ३ १ २ २
यजामह इन्द्रं वज्रदक्षिणं
१ २ ३ २ १ २
हरीणां रथ्या३ं विव्रतानाम् ।
१ २र ३ १ २ ३ १ २ ३ १
प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि
२र ३ १ २ ३ १ २र
सेनाभिर्भयमानो वि राधसा ॥ ३ ॥ ३३४ ॥

यजामहे । इन्द्रम् । वज्रऽदक्षिणम् । हरीणाम् । रथ्यम् । विऽव्रतानाम् । प्र । श्मश्रुभिः । दोधुवत् । उर्ध्वऽधाः । भुवत् । वि । सेनाभिः । भयमानः । वि । राधसा ॥ ३ ॥

भाष्यसारः । **वज्रदक्षिणम्—वज्रयुक्तदक्षिणकरम्, विव्रतानाम्—विविधकर्मरतानाम्, हरीणाम्—स्वीयाश्वानाम्, रथ्यम्—रथे योजयितारं नेतारम्, इन्द्रं यजामहे। सः इन्द्रः श्मश्रुभिः दोधुवत्—मुखरोमराजिं पुनः पुनः कम्पयन्, ऊर्ध्वधाः—ऊर्ध्वम्, वि-भुवत् विशेषेण प्रादुर्भवति, सेनाभिः—स्वसैन्यैः, भयमानः—व्यथयन् शत्रूनिति शेषः, राधसा—राधो धनम्, वि—वितरति ॥ ३ ॥**

We adore Indra wielding the thunderbolt in his right hand, the driver of *Haris* (his tawny horses), of varied functions; shaking his beard he appears on high, overthrowing the enemies by his forces, he distributes wealth (to the praisers).—3.

**सा०-भा०** । वयम् 'इन्द्रं' 'यजामहे' सोमलक्षणैर्हविर्भिः पूजयामः । कीदृशं 'वज्रदक्षिणं' शत्रुवधाय सततं वज्रो दक्षिणे हस्ते यस्य तम् । 'विव्रतानां रथवहनादि-विविधकर्मणां 'हरीणाम्' एतत्सञ्ज्ञकानामश्वानां 'रथ्यम्' आनेतारम् । स इन्द्रः सोमपानानन्तरं 'श्मश्रुभिः' स्वकीयैः 'दोधुवत्' पुनः पुनः धुन्वानः सन् 'ऊर्ध्वधाः' ऊर्ध्वं 'वि-भुवत्' विशेषेण प्रादुर्भवति । किञ्च, 'सेनाभिः' मरुदादिभिः स्वकीयैः सैन्यैः 'भयमानः' शत्रून् कम्पयन् 'राधसा' द्वितीयार्थे तृतीया ( पा० ३.१,८५ )—राधो धनम् । वीन्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः,—विविधं स्तोतृभ्यो ददाति ॥ ३ ॥

3। ऋ० सं० १० म० २३ सू० १ ऋ० । RV. has 'प्र श्मश्रु दोधुवदूर्ध्वथा-

भूत्' instead of 'प्रश्मश्रुभिर्दोधुवदूर्द्ध्वधा भुवत्'; (2) 'सेनाभिर्दयमानः' (शत्रून् हिंसन्) instead of 'सेनाभिर्भयमानः।'

श्मश्रुभिः—Yāska gives the etym.—'श्मनि' शरीरे 'श्रितं' the beard is so called as it adheres to the body.—Nir. 3. 5.

दोधुवत्—intensely shaking; rt. धू *to shake*, 5. INT. (यङ्लुक्) pres. PT.; occurs once more only. cf. 'एष शृङ्गाणि दोधुवत्', ṚV. ix. 15. 4.

---

वामदेव ऋषिः।

२ २ ३ १ २ ३ २ ३ १ २
सत्राहणं दाधृषिं तुम्रमिन्द्रं
३ १ २ ३ १ २ ३ २ ३ १ २
महामपारं वृषभं सुवज्रम्।
२ ३ ९ ३ १ २र ३ २उ ३
हन्ता यो वृत्रं सनितोत वाजं
१ २ ३ १ २ ३ १ २ ३ १ २
दाता मघानि मघवा सुराधाः॥ ४॥ ३३५॥

सत्राऽहनम्। दाधृषिम्। तुम्रम्। इन्द्रम्। महाम्। अपारम्। वृषभम्। सुऽवज्रम्। हन्ता। यः। वृत्रम्। सनिता। उत। वाजम्। दाता। मघानि। मघवा। सुऽराधाः॥ ४॥

भाष्यसारः। सः मघवा—इन्द्रः, वृत्रं हन्ता वाजम्—अन्नम्, सनिता—दाता, सुऽराधाः—शोभनधनयुक्तः बहुधन इत्यर्थः, यः मघानि—धनानि, दाता सत्राहणम् सर्वरिपुघातिनम्, दाधृषिम्—भृशं धर्षयितारम्, तुम्रम्—प्रेरकं विनाशकम्, महाम् —महान्तम्, अपारम्—असीमम्, वृषभम्—कामवर्षिणम्, सुवज्रम्—समुज्ज्वल-वज्रधरम्, तम् इन्द्रं स्तुमः इति शेषः॥ ४॥

(We laud) Indra, the destroyer of many enemies, the over-thrower (of foes), the mighty, the boundless, the showerer of blessings, the wielder of the bright thunder-bolt, the slayer of Vṛtra, the giver of food, the bestower of riches, Maghavan, the lord of excellent treasures.—4.

**सा०-भा०।** 'सत्राहणं' बहूनां शत्रूणां हन्तारं 'दाधृषिम्' अतिशयेन धर्षकम्। 'तुम्र''—तुमिः प्रेरणकर्मा,—शत्रूणां प्रेरकम्। 'महां' महान्तम्। 'अपारम्' अपरिमाणं विनाशरहितमित्यर्थः। 'वृषभ'' कामानां वर्षितारम्। 'सुवज्र'' शोभनेन

वज्रेणोपेतमिन्द्रं वयं स्तोतारः स्तुम इति शेषः। 'यः' इन्द्रो 'वृत्रं' वृत्रनामानमसुरं 'हन्ता' हिंसिता भवति। 'उत' अपि च। यः इन्द्रो 'वाजम्' अन्नं 'सनिता' दाता भवति। 'सुराधाः' शोभनधनयुक्तो यो 'मघवा' इन्द्रः 'मघानि' धनानि दाता भवति। तमिन्द्रं स्तुम इति पूर्वेण संबन्धः। अत्र सर्वत्र तृन्नन्तत्वात् 'न लोकाव्यये'त्यादिना (पा० २, ३, ६९) षष्ठीप्रतिषेधे सति द्वितीयैव भवति॥ ४॥

४। ऋ० सं० ४ म० १७ सू० ८ ऋ०।

सत्राहनम्—ever slayer of enemies, or destroyer of many foes; *see* सत्राहा, SV. I. 286; for सत्रा *vide* notes on सत्रासाहम्, SV. I. 170.

दाधृषिम्—courageous—*Wils*; fr. rt. धृष्; this word occurs only here.

तुम्रम्—the repeller of adversaries; cf. 'इन्द्रः...'तुम्रो वृषभो मरुत्वान्' RV. iii. 50. 1; तुम्रम्—in iv. 18. 10; vi. 22. 5; x. 27. 2;—89. 9. everywhere used as an epithet of Indra.

सनिता—bestower; *vide* वाजस्य सनिता—SV. I. 57.

———

वामदेव ऋषिः।

१ २ ३ १ २ ३ २ ३ २ ३
यो नो वनुष्यन्नभिदाति मर्त
१ २ ३ १ २ ३ १ २
उगणा वा मन्यमानस्तुरो वा।
३ २ ३ १ २र ३ १ २
क्षिधी युधा शवसा वा तमि-
३ १ २ ३ १ २
न्द्राभी ष्याम वृषमणस्त्वोताः॥ ५॥ ३३६॥

यः। नः। वनुष्यन्। अभिऽदाति। मर्तः। उऽगणाः। वा। मन्यमानः। तुरः। वा। क्षिऽधी। युधा। शवसा। वा। तम्। इन्द्र। अभिऽस्याम। वृषमणः। त्वाऽऊताः॥ ५॥

भाष्यसारः। हे इन्द्र, यः मर्तः, नः—अस्मान्, वनुष्यन्—जिघांसन्, क्षिधा युधा—क्षयकारिणा आयुधेन, शवसा—वेगेन बलेन वा, अभिदाति—अभितः आयाति, यो वा मन्यमानः—आत्मानं बहु मानयन्, उगणाः—उत्कृष्टगणाः तुरः हिंसकाः अस्मदीयाः प्रजाः आगच्छति आक्रमतीत्यर्थः, तम् त्वोताः—त्वया रक्षिताः, वृषमणः—वृषवत् बलिनः सन्तः, वयम् अभिष्याम—अभिभवाम॥ ५॥

The man who desiring to kill us, assails upon us or who boasting high of himself, comes upon our most powerful bands of men, with destructive weapon or with strength, may we, endowed with vigour, Indra, under the protection, vanquish him.—5.

**सा०-भा० ।** हे इन्द्र ! 'यो' 'मर्त्तो' मनुष्यः 'नः' अस्मान् 'वनुष्यन्' हन्तुमिच्छन् 'अभि दाति' आभिमुख्येनागच्छति । यो वा 'मन्यमानः' आत्मानं बहु मन्यमानो मर्त्तः 'उगणा वा' उत्कृष्टगणाः उद्गूर्णगणाः 'तुरो' हिंसित्रीरस्मदीयाः प्रजाः अभिगच्छति । केन साधनेन हिंसिष्यन् ? 'क्षिधी'—क्षिः क्षयो धीयते क्रियते अनेनेति क्षिधिः—तृतीयैकवचनस्य पूर्वसवर्णः—क्षयकरणेन 'युधा' आयुधेन 'शवसा' वेगेन बलेन वा आयाति । 'त्वोताः' त्वया रक्षिताः, 'वृषमणः' वृषा इवाचरन्तो वयं 'तम्' 'अभिष्याम' अभिभवेम ॥ ५ ॥

५ । इयम् ऋक् ऋग्वेदे नास्ति ।

वनुष्यन्—seeking to injure ; fut. PT. of rt. वन् *to kill*. Nir. 5. 2 ; cf. 'दीध प्रयज्युमति यो वनुष्यति'—Ṛ̣V. vii. 82. 1.

अभिदाति—*fights against us—Grfth.* योऽस्माकमदत्त्वा अन्येभ्यो ददाति—Viv. Stevenson following this translates—who bestows our goods on others. अवदाति may mean 'pierces through' fr. rt. दो ( अवखण्डने ) 2. p.

उगणाः—उरुगणाः, the best hosts of men, object of अभिदाति—Sāy. Viv. explains 'उगणा वा मन्यमानस्तरो वा'—as योऽस्मभ्यमल्पं दत्त्वा उरु बहु गणयति जनेभ्यः कथयति, मन्यमानः—वाचा पूजयन् हृदयेन हिनस्ति—who giving little boasts of his liberality and who praises in presence but wishes ill at heart.

क्षिधी—with consuming or destructive weapon ; *stem.* क्षिधि, *Instr. sg.* पूर्वसवर्णः (the case term. is substituted by the preceding vowel) by Pāṇ. vii. 1. 39.

त्वोताः—त्वया ऊताः being protected by thee ; त्वा stands for त्वया, *vide* notes on SV. I. 28 ; 195.

The words अभिदाति, उगणाः, क्षिधी, not being found in the Ṛg-Veda, show the priority of the text of the Sāma-Veda to that of the Ṛg-Veda.

———

वामदेव ऋषिः ।

२ ३१ २ ३ २ ३ १ २ ३
यं वृत्रेषु क्षितय स्पर्धमाना
३ ३ १ २ ३१ २ ३ १ २
यं युक्तेषु तुरयन्तो हवन्ते ।

१ २र ३ २ ३ १र २र ३
**यं शूरसातौ यमपामुपज्मन्**
१र २र ३ १ २ ३ १र २र
**यं विप्रासो वाजयन्ते स इन्द्रः ॥ ६ ॥ ३३७ ॥**

यम् । वृत्रेषु । क्षितयः । स्पर्धमानाः । यम् । युक्तेषु । तुरयन्तः । हवन्ते । यम् । शूरऽसातौ । यम् । अपाम् । उपऽज्मन् । यम् । विप्रासः । वाजयन्ते । सः । इन्द्रः ॥ ६ ॥

भाष्यसारः । **क्षितयः—मनुष्याः, युक्तेषु—शस्त्रादिसहितेषु, वृत्रेषु—घोरेषु युद्धेषु, स्पर्धमानाः—परस्परमाह्वयमानाः, तुरयन्तः—हिंसन्तः सन्तः, यं देवं हवन्ते—आह्वयन्ति, शूरसातौ—वीराणां सम्मेलने सम्मर्दे संग्रामे, यं हवन्ते, अपाम्—जलानां लाभे च यम् उपज्मन्—उपगच्छन्ति स्तोत्रद्वारेण सन्निहिता भवन्तीत्यर्थः, विप्रासः यज्ञिया ब्राह्मणाः, यं वाजयन्ते—हविर्दानेन वर्धयन्ति सः इन्द्रः एव, नान्यः ॥ ६ ॥**

He, whom men invoke, while challenging with enemies or while hastening to the battle array, whom people invoke for winning in battle, or for the sake of obtaining waters, and whom the wise Brāhmaṇas invigorate with oblation or prayers, is Indra.—6.

**सा०-भा० । 'वृत्रेषु' आवरकेषु युद्धेषु 'स्पर्द्धमानाः, क्रोधयुक्ताः 'क्षितयो' मनुष्याः । क्षयन्ति निवसन्त्यत्रेति क्षितयो मनुष्याः । 'यम्' इन्द्रं 'हवन्ते' आह्वयन्ति 'युक्तेषु' सन्नद्धेषु आयुधैर्युक्तेषु संग्रामेषु 'तुरयन्तः' परस्परं हिंसन्तो जनाः यमाह्वयन्ति, 'शूरसातौ' शूराणां सम्भजने यमाह्वयन्ति, युद्धजयार्थमिति शेषः । किञ्च 'अपाम्' उदकानां 'सातौ' लाभे 'यम्', 'उपज्मन' वृष्टिप्रदानार्थं यमुपगच्छन्ति आह्वयन्तीत्यर्थः, 'विप्रासो' विप्राः मेधाविनो यजमानाः यमिन्द्रं 'वाजयन्ते' वाजिनं कुर्वन्ति हविर्भिर्बलिनं कुर्वन्ति स तादृश इन्द्रः ॥ ६ ॥**

**६ । इयम् ऋक् ऋग्वेदे नास्ति ।**

शूरसातौ—in battle, where the heroes meet together, this word is a syn. of battle. Ngh. 2. 17; occurs in this sense in ṚV. i. 130. 7; iii. 54. 4; vi. 10. 12; viii. 16. 4; x. 67. 9. क्षितयः—men, *see* पञ्चक्षितीनाम्—SV. I. 262, fr. rt. क्षि *to dwell*; Ngh. 2. 3.

The parallel idea is contained in 'यम युध्यमाना अवसे हवन्ते' (Indra) whom men when fighting call on for help, ṚV. ii. 12. 9.

वाजयन्त—*see* notes on वाजयामसि, SV. I. 119.

विश्वामित्र ऋषिः ।

१ २ ३ १र २र
इन्द्रापर्वता बृहता रथेन
३ २उ ३ १ २ ३ १ २
वामीरिष आ वहतं सुवीराः ।
३ २ ३ १ २ ३ १ २ ३
वीतं हव्यान्यध्वरेषु देवा
१ २ ३ १र २र ३ १ २
वर्धेथां गीर्भिरिडया मदन्ता ॥ ७ ॥ ३३८ ॥

इन्द्रापर्वता । बृहता । रथेन । वामीः । इषः । आ । वहतम् । सुऽवीराः । वीतम् । हव्यानि । अध्वरेषु । देवा । वर्धेथाम् । गीऽर्भिः । इडया । मदन्ता ॥ ७ ॥

भाष्यसारः । **इन्द्रापर्वता—हे इन्द्रापर्वतौ, युवां बृहता रथेन आगत्येति शेषः, वामीः—सम्भजनीयाः, सुवीराः—वीरपुत्रयुक्ताः, इषः—अन्नानि, आ-वहतम्—आहरतम्। देवा—हे देवौ, युवाम् अध्वरेषु—यज्ञेषु, हव्यानि—हवींषि, वीतम्—भक्षयतम्, तथा इडया—अन्नेन, मदन्ता—माद्यन्तौ प्रहृष्टौ, गीर्भिः—स्तुतिभिः, वर्धेथाम् ॥ ७ ॥**

O Indra and Parvata, on a spacious chariot, bring hither pleasant food accompanied with good heroes (progeny), partake, O gods, of the oblations offered to you at (our) sacrifices; delighted with our sacrificial food, be exalted by our hymns.—7.

**सा०भा० ।** 'इन्द्रापर्वता' इन्द्रश्च पर्वतश्च हे इन्द्रापर्वतौ ! 'बृहता' महता रथेनागत्य 'वामीः' वननीयाः 'सुवीराः' शोभनपुत्रोपेताः 'इषः' अन्नानि 'आ वहतम्' अस्मदर्थं धारयतं प्रयच्छतमित्यर्थः। किञ्च, हे 'देवा' देवौ द्योतमानौ ! हे इन्द्रापर्वतौ ! 'अध्वरेषु' अस्मत्सम्बन्धियज्ञेषु 'हव्यानि' हवनयोग्यानि पुरोडाशादीनि हवींषि 'वीतं' भक्षयतम्। तथा 'इडया' अस्माभिर्दत्तेनान्नेन 'मदन्ता' हृष्यन्तौ युवां 'गीर्भिः' स्तुतिलक्षणाभिरस्मदीयाभिर्वाग्भिः 'वर्धेथां' प्रवृद्धौ भवतम् ॥ ७ ॥

७। ऋ० सं० ३ म० ५३ सू० १ ऋ० ।

वीतम्—you both eat; Sāyaṇa derives—वी कान्त्यादिष्वित्यस्य लोटि (Imp. 2. du.) अदादित्वात् शपो लुक्। *See* his com. on the ṚV. verse.

इन्द्रापर्वता—*du.* In the Vedas, both the members of the द्वन्द्व compd. are dual in form.—Mcdnll. Stu. Ved. Gram. Para. 186. P. 269, Pāṇ. vi. 3. 26 and vii. 1. 39. इडया—इडा means food. Ngh. 2. 7.

देवा *du.—for* देवौ ; so also मदन्ता—*for* मदन्तौ ।

वामौः—pleasant, agreeable, auspicious ; occurs also in ṚV. vi. 48. 20 ; x. 69. 1.

---

रेणुर्ऋषिः ।

१ २ ३ २ ३ १ २
**इन्द्राय गिरो अनिशितसर्गा**
३ १२ २२ ३ १ २ ३ १ २
**अपः प्रैरयत्सगरस्य बुध्नात् ।**
१२ २२ ३ २ ३ १ २ ३
**यो अक्षेणेव चक्रियौ शचीभि-**
१ २ ३ १ २ ३ २ ३ २
**र्विष्वक् तस्तम्भ पृथिवीमुत द्याम् ॥ ८ ॥ ३३९ ॥**

इन्द्राय । गिरः । अनिशितसर्गाः । अपः । प्र । ईरयत् । सगरस्य । बुध्नात् । यः । अक्षेणऽइव । चक्रियौ । शचीभिः । विष्वक् । तस्तम्भ । पृथिवीम् । उत । द्याम् ॥ ८ ॥

भाष्यसारः । इन्द्राय याः गिरः—स्तुतिवाचः, अनिशितसर्गाः—बाहुल्येन सम्पादिताः अविरतं क्रियमाणा वा, ताभिः प्रीतः इन्द्रः सगरस्य—आकाशस्य, बुध्नात्—मूलात्, अपः—जलानि, प्रैरयत्—प्रेरयति वर्षतीत्यर्थः । यः इन्द्रः शचीभिः—क्रियाभिः, पृथिवीमुत द्याम्—महीं स्वर्गं च, अक्षेणेव चक्रियौ—अक्षेण रथचक्रे इव, विष्वक्—सर्वतः, तस्तम्भ—स्थिरीचकार ॥ ८ ॥

((Gratified with) the praises (addressed) to Indra, unsparingly offered, (He, i.e., Indra) sends forth waters from the depth of the sky; he has firmly settled the heaven and the earth in every way by his mighty deeds, as the wheels of a car are fixed by the axle.—8.

**सा०-भा० ।** 'इन्द्राय' इन्द्रार्थम् 'अनिशितसर्गाः' अतनूकृतविसर्गाः उपर्युपरि वर्तमानाः याः 'गिरः' स्तुतयः ताभिर्गीर्भिः 'सगरस्य' अन्तरिक्षस्य 'बुध्नात्' प्रदेशात् 'अपः' उदकानि 'प्रैरयत्' प्रेरयति । यः इन्द्रः 'शचीभिः' कर्मभिः 'पृथिवीम्' 'उत' अपिच । 'द्यां' दिवं च 'चक्रियौ' रथचक्राणि 'अक्षेणेव' यथा रथाक्षेण तद्वत् 'विष्वक्' सर्वतः 'तस्तम्भ' अस्तभ्नात् ॥ ८ ॥

८। ऋ० सं० १० म० ८६ सू० ४ ऋ०।

अनिशितसर्गाः—inexhaustively offered; poured forth or uttered in unceasing flow—*Wils.* and *Grfth.*

सगरस्य—'of the firmament'—*Wils.* 'of the ocean'—*Grfth.*; the real meaning of the word is the sky—Ngh. 1. 3.

बुध्नात्—from the depth; cf. 'पुरस्ताद बुध्न आततः', in front, the depth was out-stretched—ṚV. x. 135. 6. Lat.—fundu-s.

शचीभिः—by his actions; शची is a syn. of कर्म (action)—Ngh. 2. 1.

विष्वक् *indec.*—on all sides. वक्रियौ is the corrupt form of वक्रिया (the later rectified ṚV. rdg.)—*for* वक्री; इया by Pāṇ. vii. 1. 39; in SV. after इया, औ is added, which is corrupt, and change of gender by *vyatyaya*, iii. 1. 85.

---

वामदेव ऋषिः

२ १२ ३ १ २
आ त्वा सखायः सख्या ववृत्यु-
३ २ ३१ २ ३१ २
स्तिरः पुरू चिदर्णवां जगम्याः।
३२१ २र ३ १ २ ३ २
पितुर्नपातमा दधीत वेधा
३ १र २र ३ १र २र
अस्मिन् क्षये प्रतरां दीद्यानः ॥ ६ ॥ ३४०॥

आ इति। त्वा। सखायः। सख्या। ववृत्युः। तिरः। पुरु। चित्। अर्णवम्। जगम्याः। पितुः। नपातम्। आ। दधीत। वेधाः। अस्मिन्। क्षये। प्रऽतराम्। दीद्यानः ॥ ९ ॥

भाष्यसारः। हे इन्द्र, त्वां सखायः—तत्प्रियाः स्तोतारः, सख्या—सखिकर्मणा प्रीतिकरैः स्तोत्रैरित्यर्थः, आववृत्युः—अभिमुखीकुर्वन्ति, यतः त्वं हि तिरः—अन्यैरदृश्यः सन् तिर्यग्भूत्वा वा, पुरु—विशालम्, अर्णवम्—गगनम्, जगम्याः—अगमः, वेधाः—विधाता इन्द्रः, अस्मिन् क्षये—यज्ञगृहे, प्रतराम्—सुभृशम्, दीद्यानः—दीप्यमानः, पितुः—मम पितुः, नपातम्—पौत्रं मत्पुत्रमित्यर्थः, आ दधीत—प्रददातु ॥ ६ ॥

May the friends (the priests or worshippers) bring thee hither by friendly services, as thou crossest over the vast firmament ; may (Indra) the ordainer, shining exceedingly in this sacrificial chamber, grant a grandson (progeny) to the father (i. e., a son to me).—9.

**सा०-भा० ।** हे इन्द्र ! 'त्वा' त्वां सखाय स्तोतारः 'सख्या' सख्येन स्तुतिभिरित्यर्थः । ताभिः 'आ ववृत्युः' अभिमुखं कुर्वन्ति । यतस्त्वं 'तिरः' तिर्यग्भूत्वा 'पुरु' विस्तीर्णम् 'अर्णवम्' अन्तरित्तं 'जगम्याः' अगच्छः । चिच्छब्दः कारणपरः । अथ परोक्षकृतः 'वेधाः' विधाता इन्द्रः 'पितुः' मदीयस्य 'नपातं' पौत्रं मम पुत्रमित्यर्थः । तमादधीत प्रयच्छतु । कीदृशः ? अस्मिन् क्षये निवासभूते यज्ञे 'प्रतरां' प्रकृष्टं 'दीद्यानः' तेजसा दीप्यमान इन्द्रः पुत्रं ददातु ॥ ९ ॥

९ । ऋ० सं० १० म० १० सू० १ ऋ० । Ṛ̣V. reads (1) 'आ चित् सखायं सख्या ववृत्याम्'—instead of 'आ त्वा सखायः सख्या ववृत्युः', (2) 'तिरः पुरू चिदर्णवं जगन्वान्'—in the place of 'तिरः पुरु चिदर्णवं जगम्याः', (3) 'अधि क्षमि प्रतरम्', for 'अस्मिन् क्षये प्रतराम्' ।

This *Ṛ.K.* in the Ṛgveda is addressed to Yama by Yamī ; Yama implores Prajāpati to make her his wife, and she prays—'may Prajāpati bestow offspring for the sake of thee (Yama) becoming the father of a son to be born to us in my womb ( अधि क्षमि ). This stanza of the Sāma-Veda above, however, is addressed to Indra and widely differs from that of the Ṛgveda, as the variety of readings, given above, indicates.

ववृत्युः—rt. वृत् *to turn.*

क्षये—in the house, from rt. क्षि *to dwell.*

---

गोतम ऋषिः ।

२ ३ १ २ ३ २उ ३ ३ २ ३
को अद्य युङ्क्ते धुरि गा ऋतस्य
१ २ ३ १ २ ३ २
शिमीवतो भामिनो दुर्हृणायून् ।
३ १ २ ३ १ २ ३ १
आसन्नेषामप्सुवाहो मयोभून्
२र ३ २ ३ २ ३ १ २
य एषां भृत्यामृणधत्स जीवात् ॥ १० ॥ ३४१ ॥

कः । अद्य । युङ्क्ते । धुरि । गाः । ऋतस्य । शिमीऽवतः । भामिनः । दुःऽहृणायून् । आसन् । एषाम् । अप्सुऽवाहः । मयःऽभून् । यः । एषाम् । भृत्याम् । ऋणधत् । सः । जीवात् ॥ १० ॥

भाष्यसारः । **अद्य--अस्मिन् यज्ञदिने, शिमीवतः—वीरकर्मयुक्तान्, भामिनः—तेजस्विनः, दुर्हृणायून्--शत्रुषु दुर्दमक्रोधपूर्णान्, अप्सुवाहः—यज्ञकर्मसु इन्द्रस्य वाहकान्, मयोभून्—अनुरक्तानां सुखजनकान्, ऋतस्य--यज्ञाभिगामिनः इन्द्ररथस्य धुरि—अग्रतः नियुक्तान्, गाः--गमनशीलानश्वान्, कः आसन्—आस्येन मुखनिःसृतेन स्तोत्रेण युक्तः को नाम वाचा तान् स्तोतुं शक्नोतीत्यर्थः। यः एषां भृत्यां—रथवहनरूपं कर्म, ऋणधत्—प्रशंसति, सः जीवात्—जीवेत् दीर्घायुर्भवेत् ॥ १० ॥**

Who, by uttering hymns with mouth, harnesses, to-day, to the pole of the chariot (of Indra) starting for sacrificial place, his swift impetuous and resplendent horses, of unbearable fury, who carry Indra to the ceremonies, who give happiness (to friends)? The sacrificer, who praises their action of carrying (Indra), gains (long) life.—10.

**सा०भा० । 'अद्य' अस्मिन् कर्मणि 'ऋतस्य' यज्ञस्य गच्छत इन्द्रसम्बन्धिनो रथस्य 'धुरि' अश्ववहनप्रदेशे गाः गतिमतोऽश्वान् एषामश्वानां सम्बन्धिनः प्रग्रहान्वा 'आसन्' आस्येन तज्जनितेन स्तोत्रेण 'को युङ्क्ते' को नाम नियोक्तुं शक्नोति न कोऽपीत्यर्थः। कीदृशानश्वान्?। 'शिमीवतः' वीर्यकर्मोपेतान्। 'भामिनः' तेजसा युक्तान् 'दुर्हृणायून्' परैर्दुःसहेन क्रोधेन युक्तान्—हृणीयतिः क्रुध्यतिकर्मा ( नै० २, १३ )। 'अप्सुवाहः' आपः कर्माणि, तेषु इन्द्रं वहन्तीति तान्। 'मयोभून्' मयसः सुखस्य भावयितॄन्, स्वकीयानां सुखप्रदानित्यर्थः। 'यः' यजमान 'एषाम्' ईदृशानामश्वानां 'भृत्यां' भरणक्रियां रथवहनक्रियाम् 'ऋणधत्' समर्थयति स्तौतीति यावत् 'सः' हि यजमानो 'जीवात्' जीवनवान् भवेत्। यद्वा, 'कः' इति प्रजापतिरुच्यते,—'को ह वै नाम प्रजापतिः' इति श्रुतेः। ऋतस्य यज्ञस्य 'धुरि' निर्वाहे गाः वेदरूपान् वाग्विशेषान् 'अद्य' इदानीं युङ्क्ते संयोजयति, कीदृशान्? 'शिमीवतः' प्रतिपाद्यैः कर्मभिर्युक्तान् 'भामिनः' उज्ज्वलान् 'दुर्हृणायून्—हृणीयतिर्हानिकर्मा, हातुमशक्यान्, वेदाध्ययनस्य नित्यत्वात्। एषां शब्दानाम् आत्मप्रतिपादकानाम् 'आसन्' आस्यानि मुखवदाकरभूतानित्यर्थः। 'अप्सुवाहः' अप्सु अन्तरिक्षे तदुपलक्षिते स्वर्गे वहन्ति यजमानं**

प्रापयन्ति तान्। 'मयोभून्' मयसः अध्ययनप्रभवस्य सुखसाधनस्यादृष्टस्य भावयितॄन्। 'यो यजमानः 'एषां' वचसां 'भृत्यां' भरणक्रियाम् ऋणधत् ऋद्धिमतीं करोति 'सः' जीवात् स एव जीवति। अन्ये जीवन्मृता इत्यर्थः॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य एकादशः खण्डः। चतुर्थप्रपाठकस्य च प्रथमार्धे पञ्चमी दशतिः॥

इति त्रैष्टुभमैन्द्रम्।

इति चतुर्थप्रपाठकस्य प्रथमार्धः समाप्तः।

१०। ऋ० सं० १ म० ८४ सू०, १६ ऋ०।

Another interpretation may be assigned to this verse by rendering '*Kaḥ*' as 'Prajāpati' instead of *who*, and '*gāḥ*' as 'sacred Vedic words' instead of *horses*. The possible mg. is—'Prajāpati employs, to-day, to the performance of the sacrifice, the sacred words (the Vedic Mantras) that are effective, brilliant, essential, emitted from the mouth, animating the heart and productive of happiness ; the worshipper, who fulfils the object of such prayers, obtains life'.

शिमीवत:—active, impetuous ; शिमी is a syn. of कर्म (action)—Ngh. 2. 1 ; cf. 'घापान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी। सोमो विश्वान्यतसा वनानि नार्वाक् etc.—with infused energy, rushing to the attack, shaker, impetuous, great hero and foaming Soma surpasses all plants and trees. Ṛ V. x. 89. 5. 'शिमीति कर्मनाम—शमयतेर्वा शक्नोतेर्वा'—the word *śimī* is a synonym of action, it may be drvd. from rt. *śam* to exert oneself or from rt. *śak* to be able,—Nir. 5. 12.

अप्सुवाह:—(1) leading to heaven, 'अप:' is a syn. of sky—Ngh. 1. 3 ; (2) leading to sacred ceremonies, 'अप:' = action—Ngh. 2. 1.

मयोभून्—मय: = happiness.

दुहृणायून्—full of wrath to the enemies, avenger ; this word occurs once more only in Ṛ V. (vii. 59. 8). हृणीङ् लज्जायाम्। कण्ड्वादित्वात् यक्। बहुलवचनादस्मात् उण् प्रत्यय:। अतो लोपे सति वर्णव्यापत्त्याकार:।—Say.'s notes in his com. on the ṚV. verse.

अथ तृतीयाध्यायस्य द्वादशः खण्डः। चतुर्थप्रपाठकस्य च द्वितीयार्धे प्रथमा दशतिः।

इहाष्टाविंशतिरृचो—'गायन्ति त्वे'त्यनुष्टुभः।
'यदी वहन्ती'त्यनया स्तूयन्ते मरुतोऽत्र हि।
ईडितोऽग्निर्दधिक्रावा 'दधिक्राव्णो' इति ह्यृचा।
'वयश्चिदि'त्युषस्येयं वैश्वदेवी'त्यमी' इति।
ऋक्सामयोः स्तुति'रृचं सामे'त्यैन्द्र्योऽपरा ऋचः।
समाख्या प्राणभृन्न्यायादिति पूर्वमुदीरितम्।*

मधुच्छन्दा ऋषिः। अनुष्टुप् छन्दः**।

१ २ ३ १२ २२ ३ २ ३ १ २
गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः।
२ १ २ ३ २ ३ १ २
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे॥ १॥ ३४२॥

गायन्ति। त्वा। गायत्रिणः। अर्चन्ति। अर्कम्। अर्किणः। ब्रह्माणः। त्वा। शतक्रतो इति शतऽक्रतो। उत्। वंशम्ऽइव। येमिरे॥ १॥

भाष्यसारः। शतक्रतो—हे भूरिकर्मन् बहुलप्रज्ञ वा इन्द्र, गायत्रिणः—उद्गातारः त्वां गायन्ति, अर्किणः—होतारः, अर्कम् अर्चनीयं त्वाम् अर्चन्ति, ब्रह्माणः ब्राह्मणाः—अपरे ऋत्विजः त्वां वंशमिव—कुलमिव, यथा सुपुत्राः स्वकुलमुन्नतिं नयन्ति तद्वदित्यर्थः, उद्येमिरे सम्वर्धयन्ति॥ १॥

* The 28 verses (fr. I. 342.—369) forming the next three decades (12th Khaṇḍa of the 3rd Adhyāya and 1st, 2nd Khaṇḍas of the 4th) are in Anuṣṭubh metre. Of these, in the verse 'यदी वहन्ति···' (I. 356) the Māruts are praised, in 'दधिक्राव्णो···' (I. 358) Agni, known by the name Dadhikrāvā, is extolled; the verse 'वयश्चित् ते···' (I. 367) is addressed to Uṣas; in the verse 'अमी ये देवा···' (I. 368), the Viśvadevas are praised; the verse 'ऋचं साम यजामहे···' (I. 369) is the praise of the Ṛk. and the Sāman. The remaining 23 verses of this group are the praises of Indra. Though these five verses are addressed to different deities, they come under the common head 'Indra-parva' by the *Prāṇabhṛt Nyāya* which is explained under *Gauṇī Vṛtti* in *Pūrvamīmāṃsā-Sūtra*, 1. 4. 19.

** The metre Anuṣṭubh consists of 4 pādas, each having eight syllables.

The Udgātṛs (the chanters of the Sāma-hymns) chant hymns to thee; the Hotṛs (the reciters of Ṛk mantras) sing thy laud, the Brāhmaṇas elevate thee, O Śatakratu, like a bamboo pole (or magnify thee as good sons raise their family to eminence).—1.

**सा०-भा० ।** हे 'शतक्रतो' बहुकर्मन् बहुप्रज्ञ वेन्द्र ! 'त्वा' त्वां 'गायत्रिणः' उद्गातारः 'गायन्ति' स्तुवन्ति । 'अर्किणो'ऽर्चनहेतुमन्त्रयुक्ता होतारः 'अर्कम्' अर्चनीयमिन्द्रम् 'अर्चन्ति' शस्त्रगतैर्मन्त्रैः प्रशंसन्ति । 'ब्रह्माणो' ब्रह्मप्रभृतयः इतरे ब्राह्मणाः । 'त्वा' त्वाम् 'उद्येमिरे' उन्नतिं प्रापयन्ति । तत्र दृष्टान्तः, 'वंशमिव' यथा वशांग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशम् उन्नतं कुर्वन्ति ; यथा वा सन्मार्गवर्त्तिनः पुत्राः स्वकीयं कुलम् उन्नतं कुर्वन्ति तद्वत् ॥

एतामृचं यास्क एवं व्याचष्टे—'गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रत उद्येमिरे वंशमिव । वंशो वनशयो भवति वननाच्छ्रयत इति वा' ( ५, ४ ) इति ॥ १ ॥

१ । ऋ० सं० १ म० १० सू० १ ऋ० । उ० आर्चि० ५, २, २३, १ ।

The first term '*Gāyatriṇaḥ*' literally, 'those who employ the Gāyatrī metre'—is said by Sāyaṇa to denote the *Udgātṛs*, the chanters of the hymns of the Sāma; '*Arkiṇaḥ*', the reciters of the *Ṛk*. The third term '*Brahmāṇaḥ*' is explained as the *Brahman* of a sacrifice, i. e., the priest so denominated and the other Brāhmaṇas. The concluding phrase—'tvā··· ud vaṃśam iva yemire'—'they have raised thee like bamboo'—is rather obscure. Sāyaṇa says—'they have elevated Indra, as tumblers raise a bamboo pole, on the summit of which they balance themselves, not an uncommon feat in India; or, as *Vaṃśa* means also a family, it may be rendered—'as ambitious persons raise their family to consequence.'—*Wils*.

This stanza is similar to SV. I. 198 (Ṛ V. i. 7. 1). 'गायत्रिणः' in this verse and 'गाथिनः' there, are taken by Sāyaṇa to mean *Udgatṛs* (the chanters of the hymns of the Sama-Veda); this interpretation is confirmed by the term *bṛhat* (for *bṛhatā*, with the Bṛhat Sāman) occurring in ṚV. i. 7. 1. (SV. 1. 198), and elsewhere, ṚV. viii. 89. 1, 7. etc. The West. scholars, who are in favour of the priority of the Ṛg-Veda to the Sāma-Veda, take exception to this explanation, as involving the prior recognition of the Sāmaveda, because, they argue, any reference to the Sāmaveda in the verses of the Ṛgveda implies the priority of the former to the latter. But we have shown, in innumerable places in our notes, by comparing the texts of both the Vedas, that the text of the SV. is anterior to that of the ṚV. Moreover,

we find a clear mention of the Sāman in the verse—'एतोन्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना' (Ṛ̣V. viii. 95. 7 ; SV. I. 350). In the face of this evidence what should they say ? The actual thing is that at first all the Vedic mantras remained blended together, under the common name, the Vedas, before the division and arrangement took place in a much later age.

ब्रह्माणः—the Brāhmaṇas ; as already noticed (in SV. I. 321), the mention of the Brāhmaṇas as a caste with their usual functions, taking part in the sacrificial performances, clearly proves the prevalence of the caste system in the Ṛgvedic age. Acc. to Dr. Roth, however, it implies only *betenden*, utterers of prayer.

अर्कम्—अर्को देवो भवति यदेनमर्चन्ति । अर्को मन्त्रो भवति यदनेनार्चन्ति···Nir. 5. 4 ; *vide* notes on अर्कैभिः SV. I. 198. गायत्रिणः—'गायत्रं साम तद् येषामस्ति तद् गायत्रिणः उद्गातार इत्यर्थः'—*Viv.*

---

जेता माधुच्छन्दस ऋषिः ।

२ ३ १ २ ३ १ २ ३ १ २
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
रथीतमं रथीनां वाजानां सत्पतिं पतिम् ॥ २ ॥ ३४३ ॥

इन्द्रम् । विश्वाः । अवीवृधन् । समुद्रऽव्यचसम् । गिरः । रथिऽतमम् । रथीनाम् । वाजानाम् । सत्ऽपतिम् । पतिम् ॥ २ ॥

भाष्यसारः । विश्वाः गिरः—सकलाः स्तुतिवाचः, समुद्रव्यचसम्—सागरवत् व्यापिनम्, रथीनां रथीतमम्—रथिश्रेष्ठम्, वाजानां पतिम्—अन्नानामीश्वरम्, सत्पतिम्—सज्जनपालकम्, इन्द्रम् अवीवृधन्—अवर्धयन्, संवर्द्धयन्तीत्यर्थः ॥ २ ॥

All songs of praise augment Indra, pervading like the sea (or the firmament), the best of all car-warriors, the lord of food, the cherisher of the pious.—2.

सा०-भा० । 'विश्वाः' सर्वाः 'गिरः' अस्मदीयाः स्तुतयः 'इन्द्रम्' 'अवीवृधन्' वर्धितवत्यः । कीदृशमिन्द्रम् ? 'समुद्रव्यचसं' समुद्रवत्व्याप्तवन्तम् । 'रथीनां' रथयुक्तानां योद्धृणां मध्ये 'रथीतमम्' अतिशयेन रथयुक्तं 'वाजानाम्' अन्नानां 'पतिं' स्वामिनम्, सत्पतिं सतां सन्मार्गवर्त्तिनां पालकम् ॥ २ ॥

२ । ऋ० सं० १ म० ११ सू० १ ऋ० । उ० आर्चि० २, १, १९, १ ।

अवीवृधन्—exalt, magnify ; rt. वृध्—णिच् (caus.), Aor. (लुङ्) 3. pl. *vide* Pāṇ. vii. 4. 8. अवीवृधन्त्समुद्रम्—by the sandhi rule, Pāṇ. viii. 3. 30.

समुद्रव्यचसम्—extending like the sky ; समुद्र is a syn. of अन्तरिक्ष, Ngh. I. 3. rt. व्यच् *to extend*, 3. p.,—*aff.* असुन्। This compd. occurs only here.

रथीतमम्—रथिन् + तमप् ; 'ई' by 'ईद्रथिनः' *see* रथीः, SV. I. 41. रथीनाम्—रथ अस्त्यर्थे ई by 'छन्दसीवनिपौ च वक्तव्यौ'।

---

**गोतम ऋषिः**

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
**इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम्।**
३ १ २ ३क २र ३ १ २ ३ २ ३ १ २
**शुक्रस्य त्वाभ्यक्षरन् धारा ऋतस्य सादने ॥ ३ ॥ ३४४ ॥**

इमम् । इन्द्र । सुतम् । पिब । ज्येष्ठम् । अमर्त्यम् । मदम् । शुक्रस्य । त्वा । अभि । अक्षरन् । धाराः । ऋतस्य । सदने ॥ ३ ॥

भाष्यसारः। हे इन्द्र, सुतम्—अभिषुतम्, ज्येष्ठम्—अतिप्रशस्तम्, अमर्त्यम्—मरणरहितम्, मदम्—हर्षजनकम्, इमं सोमरसं पिब। ऋतस्य—यज्ञस्य, सदने—गृहे, शुक्रस्य—दीप्तिमतः, सोमस्य धाराः त्वाम् अभि—प्रति, अक्षरन्—स्रवन्ति ॥ ३ ॥

O Indra, drink this excellent, immortal, exhilarating Soma-juice pressed out (for thee), the streams of the bright (libation) flow towards thee, in the sacrificial chamber—3.

**सा०-भा०।** हे 'इन्द्र'! 'सुतम्' अभिषुतम् 'इमं' सोमं 'पिब'। कीदृशम्? 'ज्येष्ठम्' अतिशयेन प्रशस्यं 'मदं' मदकरम् 'अमर्त्यम्' अमारकम्,—सोमपानजन्यो मदो मद्यान्तरवन्मारको न भवतीत्यर्थः। तथा 'ऋतस्य' यज्ञस्य सम्बन्धिनि 'सदने' गृहे वर्त्तमानस्य 'शुक्रस्य' दीप्तस्यास्य सोमस्य 'धाराः' 'त्वा' 'अभ्यक्षरन्' आभिमुख्येन सञ्चलन्ति त्वां प्राप्तुं स्वयमेवागच्छन्तीत्यर्थः ॥ ३ ॥

३। ऋ० सं० १ म० ८४ सू० ४ ऋ०। उ० आर्चि० ३, १, २१, १।

अमर्त्यम्—not causing death like other liquors. When other liquors bring about death, Soma gives immortality.

शुक्रस्य—of the bright (beverage)—*Wils.* ; rfs. to the Soma-juice.

अक्षरन्—rt. क्षर्—*to move, to flow*, लङ् (Imperf).

ऋतस्य सदने--'in the chamber of sacrifice'. Grfth. renders ऋतस्य as 'of holy law' and the whole phrase as 'seat of holy Law' by which he means—'the place where sacrifice ordained by *ṛta* or eternal Law or Order is performed.' This far-fetched explanation is not at all necessary, as ऋतम् has primarily the sense of 'sacrifice'—*Vide*, Nir. 3. 4 ; 6. 22.

---

अत्रिर्ऋषिः

१ २ ३ २उ ३ १ २
**यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।**
३ १ २ ३ १ २
**राधस्तन्नो विदद्वस उभया हस्त्या भर ॥ ४ ॥ ३४५ ॥**

यत् । इन्द्र । चित्र । मे । इह । न । अस्ति । त्वाऽदातम् । अद्रिऽवः । राधः । तत् । नः । विदद्वसो इति विदत्ऽवसो । उभया । हस्त्या । आ । भर ॥४॥

भाष्यसारः । **हे चित्र—अद्भुतगुण, अद्रिवः—वज्रधर, इन्द्र, त्वादातम्—त्वया देयम् , यत् राधः—धनम् , मे इह नास्ति, विदद्वसो—हे धनप्रापक, तद् धनम् उभया हस्त्या—उभाभ्यां हस्ताभ्याम् , नः—अस्मभ्यम् , आ-भर—आहर देहीत्यर्थः ॥ ४ ॥**

Wondrous Indra, thunder-bearer, dispenser of riches, bestow upon us, with both hands, the wealth to be given by thee, which I have not here, now.—4.

**सा०-भा० । हे 'अद्रिवः' वज्रवन् 'चित्र !' चायनीयेन्द्र ! 'यद्' इदं 'त्वादातं' त्वया दातव्यं यद् 'राधः' धनम् 'इह' अस्मिन् लोके 'मे' मम नास्ति तद्धनं हे 'विदद्वसो' लब्धधनेन्द्र ! 'नः' अस्मभ्यम् 'उभया हस्त्या' उभाभ्यां हस्ताभ्याम् 'आ-भर' आहर। अत्र निरुक्तम्—'यदिन्द्र चित्रं चायनीयं मंहनीयं धनमस्ति यन्म इह नास्तीति वेति' [ ४,४ ] द्रष्टव्यम् ॥ ४ ॥**

४ । ऋ० सं० ५ म० ३९ सू० १ ऋ० । ṚV has **'मेह'** instead of **'म इह'** ।

मेह नास्ति त्वादातं राधः—is explained by Sāyaṇa as—'praiseable wealth to be given by thee ( मंहनीयं धनं त्वया दातव्यम् ) ; Yāska gives a like interpretation, but notices another interpretation of मेह नास्ति as 'मे इह नास्ति'—what is not, in this world or on this occasion, mine. Nir. 4. 4. Yāska has taken चित्रम् (*accus.*) referring to धनम् instead of चित्र *(voc.)* to Indra.

विददवसो *voc.*—O thou, granting wealth, *vide* विददवसुम्, SV. I. 237.

अद्रिवः—*for* अद्रिवन्, *voc.* of अद्रिवत्, *see* notes on the word, SV. I. 194. Etym. 'अद्रिरादृणात्यनेन, अपि वाऽत्तेः स्यात्'—the thunderbolt is so called as Indra splits or pierces by it (आ-दृ-कि ; or, अद्—uṇ. क्रिन् (uṇ. 4. 65).

राधः—for etym. *see* notes on राधांसि, SV. I. 41 ; उभया हस्त्या—*Instru. du.* या and आ *resp.* by Pan, vii. 1. 39.

---

तिरश्ची आङ्गिरस ऋषिः

१ १२ २र ३ २र ३ १ २ ३ १ २
**श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।**
३ १ २ ३ १ २ ३ १ २ ३ १ २
**सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ५ ॥ ३४६ ॥**

श्रुधि । हवम् । तिरश्चयाः । इन्द्र । यः । त्वा । सपर्यति । सुऽवीर्यस्य । गोऽमतः । रायः । पूर्धि । महान् । असि ॥ ५ ॥

भाष्यसारः । हे इन्द्र, त्वं महान् असि, अतः यः त्वां सपर्यति—अर्चति, तस्य तिरश्च्याः—एतन्नामकस्य ऋषेः, मे हवम् स्तुतिम्, श्रुधि—शृणु, तथा सुवीर्यस्य—शोभनपुत्रपौत्रादियुक्तस्य, गोमतः—गवादिपशुयुक्तस्य, रायः—धनस्य दानेनेत्यर्थः, पूर्धि—पूरय अस्मानिति शेषः, पुत्रादिरूपं गवादिरूपञ्च धनं नो बाहुल्येन देहीत्यर्थः ॥ ५ ॥

Indra, listen to the invocation of 'Tiraścī', who adores thee, fill us with wealth in the form of cattle and valiant sons, (as) thou art great.—5.

**सा०-भा० ।** हे 'इन्द्र' ! 'यः' 'त्वा' त्वां 'सपर्यति',—सपरशब्दः कण्ड्वादिः, हविर्भिः परिचरति, तादृशस्य 'तिरश्च्या' एतन्नामकस्य ऋषेर्मम 'हवं' स्तुतिं 'श्रुधि' शृणु । श्रुत्वा च हे इन्द्र ! त्वं 'सुवीर्यस्य' शोभनवीर्योपेतस्य ; यद्वा, वीरे पुत्रे भवं वीर्यं, सुपुत्रस्य 'गोमतः' गवादिपशुमतः, 'रायो' धनस्य दानेन 'पूर्धि' अस्मान् पूरय । एतत्सामर्थ्यं कुत इत्यत आह,—त्वं 'महान्' गुणाधिकः देवानां श्रेष्ठश्च 'असि' भवसि खलु ॥ ५ ॥

५ । ऋ० सं० ८ म० ९५ सू० ४ ऋ० । उ० आर्चि० २, २, १६, १ ।

सपर्यति—सपर—यक् ( कण्ड्वादित्वात् )—to adore, worship.

सुवीर्यस्य गोमत: राय:—with wealth bringing gallant offspring and cattle.

श्रुधी—*for* श्रृणु, Imp. 2. sg. हि changed to धि, by 'श्रु श्रृणु-पृ···छन्दसि' Pāṇ. vi. 4. 102 ; long final vowel by Pāṇ. vi. 3. 137. पूर्धि *vide* Pāṇ. vi 4. 102.

राय:—*gen. sg.* of *stem.* रै: ; dr. rt. रा *to give,—aff.* डै, uṇ. 2. 64. *See* notes on SV. I. 41 ; occurs also in SV. I. 60, where similar idea of the wealth consisting in valiant sons and cattle is expressed in the phrase 'राय ईशे स्वपत्यस्य गोमत:' ।

---

गोतम ऋषिः

१ २ ३ १ २ ३ १ २ ३ १ २
**असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।**
१ ॰ २ ३ २उ ३ २ ३ २ ३ १ २
**आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ ६ ॥३४७॥**

असावि । सोमः । इन्द्र । ते । शविष्ठ । धृष्णो इति । आ । गहि । आ । त्वा । पृणक्तु । इन्द्रियम् । रजः । सूर्यः । न । रश्मिऽभिः ॥ ६ ॥

भाष्यसारः । हे इन्द्र, ते—त्वदर्थम् सोमः, असावि—सुतः प्रस्तुत इत्यर्थः, शविष्ठ—हे बलिष्ठ, धृष्णो—शत्रुधर्षक, आ-गहि—आगच्छ, रश्मिभिः रजः—अन्तरिक्षम्, सूर्यो न—इव, सूर्यो यथा स्वकिरणैः गगनं पूरयति तद्वत्, इन्द्रियम्—सोमपानजातं बलं त्वाम्, आ-पृणक्तु—सम्यक् पूरयतु, सोमपानात्तेजस्ते वर्धतामिति भावः ॥ ६ ॥

The Soma-juice has been extracted, Indra, for thee, O powerful overthrower of foes, come ; let thy energy fill thee, as the sun fills the sky with rays.—6.

**सा०-भा० ।** हे 'इन्द्र' ! 'ते' त्वदर्थं 'सोमः' 'असावि' अभिषुतोऽभूत् । हे 'शविष्ठ' ! अतिशयेन बलवन् ! अत एव 'धृष्णो' शत्रूणां धर्षयितरिन्द्र ! 'आ गहि' देवयजनदेशमागच्छ । आगतञ्च 'त्वा' त्वाम् 'इन्द्रियं' सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यम् 'आ पृणक्तु' आ पूरयतु । 'रजः' अन्तरिक्षं 'रश्मिभिः' किरणैः सूर्यो 'न' यथा सूर्यः पूरयति तद्वत् ॥ ६ ॥

६ । ऋ० सं० १ म० ८४ सू० १ ऋ० । उ० आर्चि० ३, २, २३, १ ।

शविष्ठ—शवस्=बलम्, Ngh. 2. 9. शवस्विन्—spv. dg. इष्ठन् । विन्मतोर्लुक् टेरिति-टिलोपः, Pāṇ. v. 3. 65 ; vi. 4. 155.

इन्द्रियम्—dr. इन्द्र—*aff* घच् ; mg.—the might or vigour of Indra. In this sense, cf. 'अर्चन्तो अर्कं जनयन्त इन्द्रियम्', adoring Indra, (the Maruts) augment

his vigour. Ṛ̣V. i. 85. 2. *See* Sāy.'s com. thereon—'इन्द्रियम् इन्द्रस्य वीर्यम्···इति घच् प्रत्ययान्तो निपात्यते'। This word is also found among the syns. of धन (wealth).— Ngh. 2. 10. *Viv.* explains इन्द्रियम् here as इन्द्रियवन्तम् (with the suppression of मतुप्)—mg. अविकलेन्द्रियम् (with the powers of senses being intact).

रजः—region, space.—Nir. 4. 19; *here rfs.* to the sky, the air; cf. 'आ कृष्णेन रजसा वर्त्तमानः'—(said of Savitṛ) rolling through the dark space (*the sky*). Ṛ̣V. i. 35. 2. Sāy. explains 'कृष्णेन रजसा' as—'अन्तरिक्षलोको हि सूर्यागमनात् पुरा कृष्णवर्णो भवति, तेनान्तरिक्षमार्गेण'। *also* 'अभि कृष्णेन रजसा द्यामृणोति' *ib.* verse 9; *again* 'ये पार्थिवे रजस्यानिषत्ताः'—(said of the Pitṛs) who have their seats in the terrestrial *air*. x. 15. 2; *also* 'नासीद् रजो न व्योमा परो यत्'—there was not the *air* nor the heaven which is beyond, x. 129. 1. (The Hymn of Creation).

———

**काण्वो निपातिथिर्ऋषिः**

१ २ ३ १ २ ३ २ ३ १ २ ३ २
**एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम्।**
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
**दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ७ ॥ ३४८ ॥**

आ। इन्द्र। याहि। हरिऽभिः। उप। कण्वस्य। सुऽस्तुतिम्। दिवः। अमुष्य। शासतः। दिवम्। यय। दिवावसो इति दिवाऽवसो ॥ ७ ॥

भाष्यसारः। **हे इन्द्र, त्वं कण्वस्य सुष्टुतिम्—उत्तमां स्तुतिम्, हरिभिः—स्वकीयाश्वान् आरुह्य, उप आ-याहि—आगच्छ। अमुष्य दिवः—अमुम्, दिवं शासतः, यूयम्—त्वमित्यर्थः, दिवं यय—गच्छत, गच्छ—वचन-व्यत्ययः ॥ ७ ॥**

Indra, come hither, with thy horses, to (accept) the beautiful praise of Kaṇva, (thou), O God, radiant like day, ruling over yonder heaven, go (back) to heaven (after taking the libation).—7.

**सा०-भा०।** हे 'इन्द्र'! 'कण्वस्य' एतन्नामकस्य ऋषेः 'सुष्टुतिं' शोभनां स्तुतिं प्रति 'हरिभिः' अश्वैः 'उपायाहि' आगच्छ। 'दिवो' द्युलोकं द्वितीयार्थे षष्ठी (पा० ३, १, ८५), 'अमुष्य' अमुष्मिन्निन्द्रे 'शासतः' शासति—विभक्तिव्यत्ययः (पा० ३, १, ८५), तत्र वयं सुखमास्महे। हे 'दिवावसो' दीप्तहविष्केन्द्र! 'दिवं' स्वर्गं 'यय' यूयं गच्छत। बहुवचनं पूजार्थम्।

यद्वा, हे 'दिवावसो' दिवो द्युनामकम् 'अमुष्य' अमुं लोकं 'शासतः' शासनं कुर्वन्तो यूयं 'दिवं' स्वर्गं 'यय' गच्छत। अत्र बहुवचनं पूजार्थमित्यर्थः ॥ ७ ॥

७। ऋ० सं० ८ म० ३४ सू० १ ऋ०। उ० आर्चि० ६, १, १६. १।

Grfth remarks—'the exact meaning of the second line is obscure'; he further says, 'दिवः अमुष्य शासतः'—(*ye governing yonder heaven*) being in

plural, probably refers to Indra's horses, but this interpretation cannot be acceptable; Sāyaṇa explains the plural number as expressive of reverence and means 'Indra' by the phrase,—Indra being conceived to be the ruler of heaven. Prof. Wilson renders after Sāyaṇa—'Indra governs heaven.'

दिवावसो *voc.*—'O God, bright by day'—Grfth; Prof. Wilson adopting Sayaṇa's explanation renders—'partaking radiant oblation.' 'दीप्तहविष्क'—Sāy.

Probably the sense of the second line is—Indra being the lord of heaven, his presence there is necessary and he is to go back as soon as he has partaken of the Soma at the sacrifice here on the earth.

यय—rt. या *to go*, लिट् (perf.) 2. pl. Imp. sense (mg. यात, Pāṇ. iii. 4. 6), pl. for sg. by व्यत्यय, Pāṇ. iii. 1. 85.

---

**तिरश्ची ऋषिः**

२ ३ १ २ ३ २ ३ १ २ ३ १ २
**आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।**
३ २ ३ १ २ ३ १ २ ३ २उ ३ १ २
**अभि त्वा समनूषत गावो वत्सं न धेनवः ॥ ८ ॥ ३४६ ॥**

आ । त्वा । गिरः । रथीःऽइव । अस्थुः । सुतेषु । गिर्वणः । अभि । त्वा । सम् । अनूषत । गावः । वत्सम् । न । धेनवः ॥ ८ ॥

भाष्यसारः । **गिर्वणः—हे स्तुतिभिः सम्भजनीय इन्द्र, सुतेषु सोमेषु प्रणीतेषु, गिरः—स्तुतिवाचः, त्वां रथीरिव—रथचारी यथा गन्तव्यं त्वरितं गच्छति तद्वत्, आ अस्थुः—शीघ्रं तिष्ठन्ति, गच्छन्ति । तथा त्वा अभि—त्वामुद्दिश्य, वत्सं धेनवो न—धेनवः सद्यः प्रसूता गावो यथा वत्समुद्दिश्य हम्भारवं कुर्वन्ति तद्वत्, गिरः—अस्मत्स्तुतयः, त्वां समनूषत—स्तुवन्ति ॥ ८ ॥**

(O Indra), laudable by hymns, like a charioteer, our praises speedily proceed to thee; like kine to their calves, they call to thee, when Soma-juice is pressed out.—8.

**सा०-भा० ।** 'गिर्वणः' गीर्भिर्वननीय हे इन्द्र ! 'सुतेषु' सोमेषु अभिषुतेषु सत्सु 'गिरः' अस्माकं स्तुतिलक्षणा वाचः 'त्वा' त्वाम् 'आ अस्थुः' आभिमुख्येन शीघ्रं तिष्ठन्ति, गच्छन्तीत्यर्थः । तत्र दृष्टान्तः—'रथीरिव' यथा रथवान् रथेन गच्छन् वीरः प्राप्यं देशं क्षिप्रं गच्छति तद्वत् । किञ्च, हे इन्द्र ! अस्मदीया गिरः 'त्वा' त्वाम् 'अभि'लक्ष्य 'समनूषत' सम्यक् शब्दायन्ते, स्तुवन्तीत्यर्थः । नु स्तवने

कुटादिः। तस्य लुङि रूपम्। तत्र दृष्टान्तः—'वत्सन्न धेनवः' यथा 'धेनवः' प्रीतियुक्ता गमनशीला वा 'गावः' वत्समभिलक्ष्य हम्भारवं कुर्वन्ति, तद्वत् ॥ ८ ॥

८। ऋ० सं० ८ म० ९५ सू० १ ऋ०। ṚV. reads **'इन्द्र वत्सं न धेनवः'** in the place of **'गावो वत्सं न धेनवः'**।

रथारिव—*vide* our notes on रथीः, SV. I. 41, and रथीनाम्, I. 343.

गिर्वणः—worthy of praise; *for* gram., etym. and further notes *vide* SV. I. 165. अस्थुः—rt. स्था—Aor. 3. pl.; pres sense, Pāṇ. iii. 4. 6.

समनूषत—glorify, praise, *here* call to or invoke; dr. rt. नु *to praise*, लुङ् (Aor.) 3. pl. in the pres. sense by Pāṇ iii. 4. 6; rt. नु is explained by Sāy., in the sense *'to go, to proceed'* in 'प्र णोनुवुर्गिरः' (our praises *tend* again and again, i. e., recur repeatedly to thee)—ṚV. vi. 45. 25.

गावो वत्सं न धेनवः—this is a favourite simile used very frequently with regard to songs of praise proceeding to Indra, cf. 'इमा उ त्वा···प्रणोनुवुर्गिरः गावो वत्सं न धेनवः', SV. I. 146 (ṚV. vi. 45, 25); *also* 'इमा उ त्वा···[illegible] गिर्वणो गिरः गावो वत्सं न धेनवः', SV. I. 201. (ṚV. vi. 45. 28).

---

विश्वामित्र ऋषिः

२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
**एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना।**
३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
**शुद्धैरुक्थैर्वावृध्वांसं शुद्धैराशीर्वान्ममत्तु ॥ ९ ॥ ३५० ॥**

एतो इति। नु। इन्द्रम्। स्तवाम। शुद्धम्। शुद्धेन। साम्ना। शुद्धैः। उक्थैः। वावृध्वांसम्। शुद्धैः। आशीःऽवान्। ममत्तु ॥ ९ ॥

भाष्यसारः। **एत उ नु—शीघ्रमेव आगच्छत, शुद्धेन साम्ना—पवित्रेण सामगीतेन, शुद्धैरुक्थैः पूतैः शस्त्रैश्च, इन्द्रं शुद्धं—वृत्रादिहननजन्यपापमुक्तं कुर्वन्तः इत्यर्थः, स्तवाम। इत्थं वावृध्वांसम्—पापक्षालनेन वर्धिष्णुमिन्द्रं शुद्धैः स्तोत्रैः कर्मभिर्वा आशीर्वान्—दध्याद्याश्रयणद्रव्यैः संमिश्रितः, सोमः ममत्तु—मादयतु आनन्दयत्वित्यर्थः ॥ ९ ॥**

Come soon, let us eulogise Indra with purifying Sama-hymn and sanctifying praises, let the Soma-juice, mixed with milk or curds, gladden him, magnified with immaculate lauds.—9.

**सा०-भा०।** अत्रेतिहासमावत्तते—पुरा किलेन्द्रो वृत्रादिकानसुरान् हत्वा ब्रह्महत्यादिदोषेणात्मानमपरिशुद्धमित्यमन्यत। तद्दोषपरिहाराय इन्द्र ऋषीनवोचत्—यूयम् अपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति। ततस्ते च शुद्धयुत्पादकेन साम्ना शस्त्रैश्च परिशुद्धमकार्षुः। पश्चात् पूतायेन्द्राय यागादिकर्मणि सोमादीनि हवींषि च प्रादुरिति। एषोऽर्थः शाठ्यायनकब्राह्मणे प्रतिपादितः, इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्यो अमन्यत, असौ अकामयत शुद्धमेव मा सन्तं शुद्धेन साम्ना स्तुयुरिति। स ऋषीनब्रवीत् स्तुत मेति। तत ऋषयः सामापश्यन् तेनास्तुवन्, 'एतो न्विन्द्रमि'ति। ततो वा इन्द्रः पूतः शुद्धो मेध्योऽभवत् इति। तथाच अस्या ऋचोऽयमर्थः—

ऋषयः परस्परं ब्रुवन्ति। नु क्षिप्रम् 'एत उ' आगच्छतैव। आगत्य च 'शुद्धेन' शुद्धयुत्पादकेन साम्ना। तथा 'शुद्धैः' शुद्धिहेतुभिः 'उक्थैः' शस्त्रैश्च 'इन्द्रं' 'शुद्धम्' अपापिनं कृत्वा स्तवाम स्तुयाम। ततः साम्ना शस्त्रैः 'वावृध्वांसं' पापराहित्येन वर्धमानं तमिममिन्द्रं 'शुद्धैः' शुद्धयुत्पादकैः स्तोत्रैः क्रियाविशेषैः वा 'आशीर्वान्' आश्रयणवान् गव्यादिभिः संस्कृतः सोमः 'ममत्तु' इन्द्रं मादयतु। माद्यतेश्छान्दसः श्लुः ॥ ६ ॥

६। ऋ० सं० ८ म० ९५ सू० ७ ऋ०। उ० आर्चि० ६, २, ६, १। Ṛ̣V. *reads* 'शुद्ध आशीर्वान्' *instead of* 'शुद्धैराशीर्वान्'।

आशीर्वान्—the Soma mixed with milk or curds. For आशीः *vide* notes on आशिरम्, SV. I. 187. आशीर्वान् occurs only here. ममत्तु—rt. मद् *to be exhilarated*, imp. शपः श्लुः, Pāṇ. iii. 1. 85. वावृध्वांसम्—having waxed strong ;—dr. rt. वृध्—p. PT. with *aff.* क्वसु.

———

शंयुर्बार्हस्पत्य ऋषिः

२ ३ १ २ ३ १ २ ३ ३ ३ २ ३ १ २
यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः।
१ २ ३ १ २र ३ १ २ ३ १ २
सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ १० ॥ ३५१ ॥

यः। रयिम्। वः। रयिंऽतमः। यः। द्युम्नैः। द्युम्नवत्ऽतमः। सोमः। सुतः। सः। इन्द्रः। ते। अस्ति। स्वधाऽपते। मदः ॥ १० ॥

भाष्यसारः । यः सोमः रयिन्तमः—धनवत्तमः, यः द्युम्नैः—यशोभिः, द्युम्नवत्तमः—सातिशयं ख्यातिमान् सन्, वः—तव स्तोतृभ्यः रयिं—धनं ददातीति शेषः, त्वन्निबन्धनस्तव स्तावकानां धनलाभ इति भावः, स्वधापते—हे अन्नानां पालक इन्द्र, सुतः सोमः ते मदः—प्रीतिकरः अस्ति ॥ १० ॥

The Soma, that is the best source of wealth and is the most resplendent with splendour, has been extracted; it is thy exhilarating draught, Indra, lord of the libation.—10.

**सा०-भा० ।** हे इन्द्र ! 'यः' सोमः 'वः' वचनव्यत्ययः—(पा० ३, १, ८५) तव परिचारकेभ्यः स्तोतृभ्यः 'रयिं' धनं प्रयच्छतीति शेषः । कीदृशः ? 'रयिन्तमः' अतिशयेन रयिमान् । यश्च 'द्युम्नैः द्योतमानैर्यशोभिः द्युम्नवत्तमः अतिशयेन यशस्वी । 'हे स्वधापते' ! स्वधाया अन्नस्य सोमलक्षणस्य पालकेन्द्र ! 'सः' सोमः 'सुतः' अभिषुतः सन् 'ते' तव 'मदः' मदकरः 'अस्ति' भवति ।

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
तृतीयस्याध्यायस्य द्वादशः खण्डः ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराज-परमेश्वर वैदिकमार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण
सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने ऐन्द्रकाण्डे
तृतीयोऽध्यायः ।

इति चतुर्थप्रपाठकस्य द्वितीयार्धे प्रथमा दशतिः ॥

१० । ऋ० सं० ६ म० ४४ सू० १ ऋ० । R̥V. reads **'रयिवः'** (compd. word *in voc.* mg.—O Indra, lord of treasures) instead of **'रयिं वः'** (two separate words).

स्वधा-पते—It may also mean—cherisher or protector of the Soma libation.

रयिन्तमः—most wealthy ; this word occurs only in this verse.

द्युम्नैर्द्युम्नवत्तमः—most rich in wealth, glory or food. द्युम्न—drvd. fr. rt. द्युत *to glitter*, means glory or food. Nir. 5. 5. It is also a syn. of धन (wealth).—Ngh. 2. 10 ; *see* notes on SV. I. 81 ; for dr. *vide* I. 113 ; occurs also in I. 262.

# सामवेद-संहिता

## अथ चतुर्थोऽध्यायः

———:o:———

### ऐन्द्रं पर्व

पूर्वतोऽनुवर्तते ।

अथ प्रथमः खण्डः । चतुर्थप्रपाठकस्य च द्वितीयार्धे द्वितीया दशतिः ।

भरद्वाज ऋषिः । छन्दश्चानुष्टुभनुवर्त्तते ।

१ २ ३ १ २ ३ १ २ ३ १ २
**प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।**
३ २ ३ २ ३ १ २ ३ १ २
**अरङ्गमाय जग्मयेऽपश्चादघ्वने नरः ॥१॥३५२॥**

प्रति । अस्मै । पिपीषते । विश्वानि । विदुषे । भर । अरंऽगमाय । जग्मये । अपश्चाऽदध्वने । नरः ॥ १ ॥

भाष्यसारः । हे अध्वर्यो, त्वं नरः—यज्ञानां नेत्रे । चतुर्थ्यर्थे षष्ठी । पिपीषते—सोमं पातुमिच्छते, विश्वानि—सर्वाणि ज्ञातव्यानि, विदुषे—जानते सर्वज्ञायेत्यर्थः, अरङ्गमाय—पर्याप्तगतये, जग्मये—यज्ञगामिने, अपश्चादध्वने—सर्वेषाम् अग्रगामिने, अस्मै—इन्द्राय, प्रति भर—सोममुपहर ॥ १ ॥

O Adhvaryu, offer the libation (the Soma-juice) to him, who is desirous to drink, who knows all, who goes rapidly to sacrifices, never going back, who is the leader (of sacred ceremonies).—1.

**सा०-भा० ।** हे अध्वर्यो* ! 'अस्मै' इन्द्राय 'प्रतिभर' प्रतिहर सोमं प्रयच्छेत्यर्थः । कीदृशायेन्द्राय ? 'पिपीषते' पातुमिच्छते । 'विश्वानि' सर्वाणि वेद्यानि

* अध्वर्यु—'The Adhvaryus were the priests who were entrusted with the material performance of the sacrifice. They had to measure the ground, to

'विदुषे' जानते। 'अरङ्गमाय' पर्याप्तगमनाय! 'जग्मये' यज्ञेषु गमनशीलाय। 'अपश्चादध्वने',—दध्विर्गतिकर्मा - अपश्चाद्गमनाय सर्वेषामग्रगामिने नरः—नृशब्दाच्चतुर्थ्यर्थे षष्ठी। ङसि ऋतो गुणश्छान्दसः। नरे कर्मणाम्नेते। अतएव बह्वृचा 'अपश्चादध्वने नरे' इति चतुर्थ्यन्तत्वेनामनन्ति ॥ १ ॥

१। ऋ० सं० ६ म० ४२ सू० १ ऋ०। ṚV. has **नरे** (*dat*), instead of **नरः** (*gen.* in the sense of *dat.*). उ० आर्चि० ६, ३, २, १।

पिपीषते—rt पा *to drink*, I; desid. pres. PT. dat. sg.

अरंगमाय—अरम् अलं पर्याप्तं गच्छतीति अरंगमः, who goes quickly or hastens readily. अरंगमाय, and जग्मये—these two epithets of Indra go together, *vide* also ṚV. viii. 46. 17.

जग्मये—गमनशीलाय, *stem* जग्मि, cf. 'अपां जग्मिर्निचुम्पुणः'—the Soma going to waters, ṚV. viii. 93. 22. (Nir. 5. 18).

अपश्चादध्वने—never retracting or lagging behind (in battle), fr. rt. दघ् *to go* Ngh. 2. 14. 61; cf. आदघ्नास उपकक्षासः···ṚV. x. 71. 7. (where दघ्न is drvd. fr. rt. दघ् *to flow*, 'दघ्नं दघ्यतेः स्रवतिकर्मणः—Nir. I. 9).

नरः—*stem* नृ. *gen.* for *dat.* epithet referring to Indra (*in dat.*).—*vide* the ṚV. rdg. नरे।

———

वामदेवः शाकपूतो वा ऋषिः।

१ २ ३ २ ३ १ २
आ नो वयो वयःशयं महान्तं
३ २ ३ १ २ ३ २
गह्वरेष्ठां महान्तं पूर्विणेष्ठाम्।
३ २उ ३ १ २
उग्रं वचो अपावधीः ॥२॥३५३॥

आ। नः। वयः। वयस्य। अयम्। महान्तम्। गह्वरेऽस्थाम्। महान्तम्। पूर्विणेऽस्थाम्। उग्रम्। वचः। अपऽअवधीः ॥ २ ॥

build the altar (Vedi), to prepare the sacrificial vessels, to fetch wood and water, to light the fire, to bring the animal and immolate it. They formed, as it would seem, the lowest class of priests and their acquirements were more of a practical than an intellectual character'.—Max Müller, *Hist. of Ancient Skt. Lit.* P. 243.

भाष्यसारः । वयस्य—हे सुहृद्भूत इन्द्र, अयम् एतादृशस्त्वम्, महान्तं गह्वरेष्ठां—गुहादौ दुर्गमप्रदेशे स्थितम् अत एवाऽसुलभम्, नः—अस्माकम्, वयः—सोमरूपमन्नम्, आ—आहर, ततः महान्तम्—भूयिष्ठम्, पूर्विणेष्ठाम्—पूर्वम् आदितः संसारे प्रवर्त्तितम्, उग्रम्—तीव्रं क्षुत्पिपासाभ्यामित्यर्थः, वचः—वचनम् आक्रन्दितम्, अपावधीः—नाशय, यथा वयं क्षुत्पिपासार्त्ताः नोच्चैर्विरुमस्तथा कुरु ॥ २ ॥

Bring us, friend (Indra), the mighty food (the Soma) lying in the den; put to an end the shocking cry (of hunger and thirst) prevailing from of old.—2.

**सा०-भा० ।** हे 'वयस्य' मित्रभूतेन्द्र ! 'अयम्' ईदृशस्त्वं 'महान्तं' महत्प्रभूतं 'गह्वरेष्ठां' गिरिगुहादौ वर्त्तमानं 'नः' अस्मदीयं 'वयः' सोमलक्षणमन्नम् 'आ' हर, उपसर्गश्रुतेर्योग्यक्रियाध्याहारः, आहृत्य 'महान्तं' महत्प्रभूतं 'पूर्विणेष्ठां' पूर्वमादौ संसारे प्रवर्त्तमानम्। 'उग्र'' क्षुत्पिपासानिमित्तेन भयङ्करम्। 'वचः' अस्मदीयं वचनम् 'अशनायापिपासे हत्वा उग्रं वचः'—इति श्रुतेः। 'अपावधीः' अपजहि, देवत्वं प्रापयेत्यर्थः, 'तत् प्राप्नोत्यशनायापिपासे निवर्त्तेते। न वै देवा अश्नन्ति न पिबन्ति'—इति श्रुतेः ॥ २ ॥

२ । इयम् ऋक् ऋग्वेदे नास्ति ।

गह्वरेष्ठाम्, पूर्विणेष्ठाम्—are not at all found in the Ṛgveda. गह्वरेष्ठम्, however, occurs in Kaṭha Up. i. 2. 12. 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्'।

अपावधीः—rt. हन्—Aor. (लुङ्), 2. sg. Imp. sense.

वयःश्रयम्—of the text has been taken by Sāy. as वयस्य अयम्; we have adopted this in our pada text and explanation. The wording of the verse shows its antiquated character.

---

प्रियमेध ऋषिः ।

२ ३ २ ३ २ ३ १ २ ३ १ २
**आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि ।**
३ १ २ ३ २ ३ २ ३ २ ३ १ २
**तुविकूर्मिमृतीषहमिन्द्रं शविष्ठ सत्पतिम् ॥ ३ ॥३५४॥**

आ । त्वा । रथम् । यथा । ऊतये । सुम्नाय । वर्त्तयामसि । तुविऽकूर्मिम् । ऋतिऽसहम् । इन्द्रम् । शविष्ठ । सत्ऽपतिम् ॥ ३ ॥

भाष्यसारः। **शविष्ठ—हे बलिष्ठ इन्द्र, तुविकूर्मिम्—भूरिकर्माणम्, ऋतीषहम्—हिंस्राणां शासितारम्, सत्पतिम्—साधूनां पालकम्, ऊतये—रक्षायै, सुम्नाय—सुखाय च, आवर्त्तयामसि—आवर्त्तयामः, त्वाम् आमन्त्रयाम इत्यर्थः ॥ ३ ॥**

O mighty Indra, the patron of the righteous, the vanquisher of the malicious, we invite thee of manifold achievements, hither, like a car, for our protection and happiness.—3.

**सा०-भा०।** हे इन्द्र! 'त्वा' त्वाम् आवर्त्तयामसि आवर्त्तयामः। किमर्थम्? 'ऊतये' अस्माकं रक्षणाय 'सुम्नाय' सुखाय च। किमिव? 'रथं' यथा ऊतये सुखाय चावर्त्तयन्ति तद्वत्। हे 'शविष्ठ' बलवत्तमेन्द्र! 'तुविकूर्मिं' बहुकर्माणम् 'ऋतीषहम्' हिंसकानामभिभवितारम्। 'सत्पतिं' सतां पालकमिन्द्रं त्वामिति समन्वयः ॥ ३ ॥

३। ऋ० सं० ८ म० ६८ सू० १ ऋ०। RV. reads **'इन्द्र शविष्ठ सत्पते'** (*voc.* for *accus*). **उ० आर्चि० ६, १, ३, १।**

सुम्नाय—सुखाय, for weal or welfare; Ngh. 3. 6.

तुवि-कूर्मिम्—rich in actions, for तुवि *vide* our notes on SV. I. 142; 153; 286. सत्पतिम्—*vide* notes on SV. I. 168. ऋतीषहम्—*vide* SV. I. 236.

आवर्त्तयामसि—*for* आवर्त्तयामः Pāṇ. vii. 1. 46, we invite thee here, draw thee nigh.

---

प्रगाथ ऋषिः।

२ ३ २ ३ १ २ ३ १ २र
स पूर्व्यो महोनां वेनः क्रतुभिरानजे।
२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
यस्य द्वारा मनुः पिता देवेषु धिय आनजे ॥४॥३५५॥

सः। पूर्व्यः। महोनाम्। वेनः। क्रतुऽभिः। आनजे। यस्य। द्वारा। मनुः। पिता। देवेषु। धियः। आनजे ॥ ४ ॥

भाष्यसारः। **पूर्व्यः—वरेण्यः प्रथमो वा, सः—इन्द्रः, महोनाम्—पूज्यानां यजमानानाम्, क्रतुभिः—यज्ञैर्हेतुभूतैः, वेनः—कान्तः, हविष्कामी सन् इत्यर्थः, आनजे—आगच्छति। यस्य—इन्द्रस्य, द्वारा—द्वाराणि इन्द्राधिगमोपायभूतानि,**

धियः—कर्माणि, देवेषु—देवतानां मध्ये, पिता, मनुः आनजे—प्रापयति व्यक्तीकरोतीति वा यज्ञकर्माणि, प्रथमं समुद्भावितवानित्यर्थः ॥ ४ ॥

He (Indra), the foremost of the adorable, most beloved for his actions (or, longing for oblations), is coming. Among gods, father Manu brought to light (discovered) those actions which are the means of attaining Indra.—4.

**सा०-भा० ।** 'सः' इन्द्रः 'पूर्व्यो' मुख्यः महोनां पूज्यानां यजमानानां 'क्रतुभिः' यज्ञैर्निमित्तभूतैः 'वेनः' कान्तः तेषां हविः कामयमानः 'आनजे' आगच्छति । 'यस्य' इन्द्रस्य 'द्वारा' द्वाराणि प्राप्त्युपायानि धियः कर्माणि देवेषु एतेषु मध्ये 'पिता' सर्वेषां पालकः 'मनुः' आनजे प्रापयति । नजिः प्राप्तिकर्मा ॥ ४ ॥

४ । ऋ० सं ८ म० ६३ सू० १ ऋ० । Ṛ V. has **'महानां'** instead of **'महोनां'** । Ṛ V. has **'मनुष्पिता'** ।

आनजे in the first line—fr. rt. अज् *to go*. Perf. for pres ; mg.—is coming ; in the second line fr. rt. अञ्ज् *to manifest*( व्यक्तीकरणे—mg. first brought to light, discovered, first instituted, promulgated or organised.

यस्य द्वारा—द्वाराणि, in apposition to धियः (the sacred rites, sacrifices) the means of attaining whom (Indra).

देवेषु धिय आनजे—rfs. to the fact that Manu, for the first time, instituted sacrifice, *vide* our notes on 'परेण धर्मणा···मनुः कविः'—SV. I. 90.

---

श्यावाश्व आत्रेय ऋषिः ।

२ ३ १ २ ३ २ ३ १ २ ३ २ ३ २

**यदी वहन्त्याशवो भ्राजमाना रथेष्वा ।**

१ २ ३ २उ ३ २ ३ १ २

**पिबन्तो मदिरं मधु तत्र श्रवांसि कृण्वते ॥५॥३५६॥**

यदि । वहन्ति । आशवः । भ्राजमानाः । रथेषु । आ । पिबन्तः । मदिरम् । मधु । तत्र । श्रवांसि । कृण्वते ॥ ५ ॥

भाष्यसारः । यदि—यस्मिन् यज्ञे, रथेषु—रथोपरि, भ्राजमानाः—शोभमानाः, आशवः—शीघ्रगास्त्वदीया मरुतः, आवहन्ति—त्वां यज्ञमभितो नयन्ति, तत्र—यज्ञे,

मदिरम्—मदजनकम्, मधु—सोमरसं पिबन्तः पूर्वोक्ता मरुतः, श्रवांसि—अन्नानि, कृण्वते कुर्वन्ति, जनयन्तीत्यर्थः ॥ ५ ॥

In that ceremony where the swift Maruts shining on the chariots, bring thee, there they, drinking the exhilarating sweet Soma, give food in abundance.—5.

**सा०-भा० ।** हे इन्द्र, 'यदि' यत्र यस्मिन् यज्ञे 'रथेषु भ्राजमानाः' दीप्यमाना 'आशवः' क्षिप्रगामिनस्त्वदीया मरुतः 'आवहन्ति'। यत्र आभिमुख्येन त्वां प्रापयन्ति 'तत्र' तस्मिन् यज्ञे 'मदिरं' मदकरं 'मधु' उदकादिरसविशेषितं सोमलक्षणमन्नं वा 'पिबन्तः' 'श्रवांसि' अन्नानि 'कृण्वते' वृष्टिद्वारा कुर्वन्ति। यद्वा अस्मिन् यज्ञे 'भ्राजमानाः' दीप्यमानाः 'आशवः' शीघ्रगामिनः 'मदिरं' मदकरं 'मधु' सोमं 'पिबन्तः' पास्यन्त ऋत्विग्यजमानाः रथेषु सोममावहन्ति 'तत्र' तस्मिन् यज्ञे 'श्रवांसि' अभिषवादिकर्मभिः प्रशस्तान्यन्नानि 'कृण्वते' कुर्वन्ति ॥ ५ ॥

५ । इयमृक् ऋग्वेदे नास्ति ।

यदी—*for* यदि, here means 'where'; the last vowel is long by 'निपातस्य च', Pāṇ. vi. 3. 136. श्रवांसि—श्रवस् = अन्नम्, food, Ngh. 2. 7.

---

शंयुर्ऋषिः ।

१ २ ३ १ २ ३ १र २र ३ १ २
त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।
१ २ ३ २ ३ २ ३ १ २ ३ १ २
इन्द्रं विश्वासाहं नरं शचिष्ठं विश्ववेदसम् ॥६॥३५७॥

त्यम् । ऊँ इति । वः । अप्रऽहनम् । गृणीषे । शवसः । पतिम् । इन्द्रम् । विश्वऽसाहम् । नरम् । शचिऽस्थम् । विश्वऽवेदसम् ॥ ६ ॥

भाष्यसारः । हे याज्ञिका यजमानाश्च, वः—युष्मत्कृते, अप्रहणम्—न केषाञ्चिद्-निग्रहकरं साधकं परन्तु अनुग्रहप्रवणम्, शवसः—बलस्य अन्नस्य वा, पतिं विश्वा-साहम्—सर्वशत्रुदमनम्, नरम्—निखिलनायकम्, शचिष्ठम्—अतिशयेन कर्मवन्तं यज्ञस्य कर्त्तारम् नेतारमिति यावत्, विश्ववेदसम्—सर्वधनं सर्वविदं वा, त्यमु—तमेव, इन्द्रं गृणीषे—स्तौमि ॥ ६ ॥

(O priests and sacrificers), for you I sing in praise of Indra, the lord of strength, doing ill to none, subduing all, the greatest performer of rites, the omniscient.—6.

**सा०-भा०।** हे ऋत्विग्यजमानाः! 'वो' युष्मदर्थं 'त्यमु' तमेवेन्द्रं 'गृणीषे' स्तौमि। यद्वा, 'वो' यूयं 'गृणीत' स्तुत। वचनव्यत्ययः। कीदृशमिन्द्रम्? 'अप्रहणम्' अप्रहर्त्तारं भक्तानामनुग्राहकम्। 'श्रवसो' बलस्य 'पतिं' पालकम्। विश्वासाहं विश्वस्य शत्रोरभिभवितारं 'नरं' नेतारं 'शचिष्ठ'' यज्ञादिकर्मस्थितम्। 'विश्ववेदसं' विश्वं वेदो धनं यस्यासौ विश्ववेदाः तम्॥ ६॥

६। ऋ० सं ६ म० ४४ सू० ४ ऋ०। RV. reads **'मंहिष्ठं विश्वचर्षणिम्'** instead of **'शचिष्ठं विश्ववेदसम्'**।

अप्रहणम्—injuring none ; occurs only in this verse.

विश्वासाहम्—*vide* notes on SV. I. 155, where it occurs.

---

वामदेव ऋषिः।

३ १ २ ३ १र २र ३ १ २
## दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः।
३ २ ३ १ २ ३ २ ३ १ २
## सुरभि नो मुखा करत्प्र ण आयूंषि तारिषत्॥७॥३५८॥

दधिऽक्राव्णः। अकारिषम्। जिष्णोः। अश्वस्य। वाजिनः। सुरभि। नः। मुखा। करत्। प्र। नः। आयूंषि। तारिषत्॥ ७॥

भाष्यसारः। **जिष्णोः अश्वस्य अश्वरूपधारिणः, वाजिनः—वेगिनः, दधिक्राव्णः—एतन्नाम्ना प्रसिद्धस्य अग्नेः, स्तुतिम् अकारिषम्—करवाणि, स नः—अस्माकम्, मुखा—मुखानि इन्द्रियाणीत्यर्थः, सुरभि—सुरभीणि, करत्—करोतु, नः—अस्मभ्यम् अस्माकं वा, आयूंषि प्र तारिषत्—प्रवर्धयतु॥ ७॥**

I glorify Dadhikrāvan, the swift, conquering horse; may he make our mouths fragrant, may he prolong our lives.—7.

**सा०-भा०।** दधिक्रावाऽग्निविशेषः। स चाश्वरूपः 'अग्निर्देवेभ्यो निलीयत अश्वरूपं कृत्वा यदश्वे त्वतिष्ठत्' इत्यादि अध्वर्युब्राह्मणमनुसन्धेयम्।

'दधिक्राव्णो' देवस्य स्तुतिम् 'अकारिषं' करवाणि। 'जिष्णोः' जयशीलस्य 'अश्वस्य' तद्रूपस्य 'वाजिनो' वेगवतः। स देवो 'नो'ऽस्माकं 'मुखा' मुखानि चक्षुरा-

दीनीन्द्रियाणि 'सुरभि' सुरभीणि 'करत्' करोतु। 'नो'ऽस्मभ्यम् आयूंषि 'प्र-तारिषत्' प्रवर्धयन्तु, प्रपूर्वस्तिरतिर्वर्धनार्थः ॥ ७ ॥

७। ऋ० सं ४ म० ३९ सू० ६ ऋ०।

दधिक्राव्ण:—Dadhikrā, also read as Dadhikrāvan, is found amongst the syns. of *aśva* (a horse)—Ngh. 1. 14; dr. दधि—rt. क्रम् *to go, to run*—विट्, by 'जन-सन-खन-क्रम-गमो विट्', Pāṇ. iii. 2. 67. Etym. mg. is—'*dadhi*, who bears or carries the rider, and *krama* to go.'—*Mahidhara* on Ṛk. 6, of Sūkta vii. Yajus, 23, 32. Yāska gives the etym.—'दधत् क्रामतीति वा, दधत् क्रन्दतीति वा, दधदाकारी भवतीति वा', it is so called as it runs bearing the rider on its back or it neighs while it bears a rider on its back, or it looks beautiful while bearing a rider on its back. It is used in the Vedas in its two fold aspects: (1) as a horse and (ii) as a deity. ('तस्याश्ववद्देवतावच्च निगमा भवन्ति')—Nir. 2. 27. According to the *Aitareya Brāhmaṇa*, iii. 15. 5, Agni, in the form of a horse, destroyed the Asuras by the desire of *Bharadvāja*.

*Dadhikrā* is celebrated in four entire hymns in the ṚV. (iv. 38—40; vii. 44). According to Roth and GRASSMANN, the word would mean 'scattering curdled milk', in allusion to the dew or rime appearing at sunrise. These two scholars think that Dadhikrā represents, in the form of a horse, the circling ball of the sun. This view is supported by the fact that Dadhikrā is closely associated with Uṣas, and that the sun is often conceived as a steed. BERGAIGNE thinks Dadhikrā represents Agni in general, including his solar and lighting forms.—*La Relgion Vedique*, *BERGAIGNE.*

मुखा—मुखानि, Pāṇ. vi. 1. 70. The mouth having been defiled by the use of inelegant language according to Mahīdhara: the verse occurs in the Yajur-Veda, 23, 32; and Atharvan. xx. 127. 3; according to the commentator on the Yajus, it is to be recited at the Aśvamedha when the priests bring the queen away from the horse. Ordinarily, this mantra is uttered in consecration of दधि (curds) for sacrificial or religious uses e. g. in *Adhivāsa* or so. This is perhaps suggested by the initial word (दधि) of the mantra.

करत् and तारिषत् are the instances of लेट् (Ved. Subj.), Pāṇ. iii. 4. 94, 97; iii. 1. 34. सुरभि—*for* सुरभीणि, सुलोपः Pāṇ. vii. 1. 39.

———

जेता माधुच्छन्दस ऋषि।

३ २ ३ १र २र ३ २र २र
पुरां भिन्दुर्युवा कविरमितौजा अजायत।
२ ३ १ २ ३ १ २ ३ ० ३ १ २ ३ ०
इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः ॥८॥३५९॥

पुराम् । भिन्दुः । युवा । कविः । अमितऽओजाः । अजायत । इन्द्रः । विश्वस्य । कर्मणः । धर्त्ता । वज्री । पुरुऽस्तुतः ॥ ८ ॥

भाष्यसारः । इन्द्रः पुराम्—दैत्यपुराणाम् , भिन्दुः—भेत्ता, युवा—चिरतरुणः, कविः—सर्वज्ञः, अमितौजाः—असीमविक्रमः, विश्वस्य—सकलस्य, कर्मणः—ज्योतिष्टोमादिरूपस्य, धर्त्ता—रक्षकः, वज्री—वज्रधरः, पुरुष्टुतः—बहुभिर्भूयिष्ठं वाहूतः, अजायत—तत्तद्गुणमण्डित एव जातः ॥ ८ ॥

Indra, was born ever-young, wise, of uncommon strength, the render of the cities (of the demons), the supporter of all sacred ceremonies, the wielder or the thunderbolt, eulogised of many.—8.

सा०-भा० । अयम् 'इन्द्रः' उच्यमानगुणयुक्तः 'अजायत' सम्पन्नः । कीदृग्गुणक इति तदुच्यते 'पुरां' पुराणां 'भिन्दुः' भेत्ता 'युवा' कदाचिदपि बलीपलितादिवार्द्धक्यरहितः । 'कविः' मेधावी 'अमितौजाः' प्रभूतबलः 'विश्वकर्मणः' कृत्स्नस्य ज्योतिष्टोमादेः 'धर्त्ता' पोषकः 'वज्री' यजमानरक्षणार्थं सर्वदा वज्रयुक्तः 'पुरुष्टुतः' बहुभिर्होत्रादिभिस्तत्तत् कर्मणि स्तुतः ॥ ८ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
चतुर्थस्याध्यायस्य प्रथमः खण्डः । चतुर्थप्रपाठकस्य च द्वितीयार्धे द्वितीया दशतिः ।

८ । ऋ० सं० १ म० ११ सू० ४ ऋ० । उ० आर्चि० ५, १, २०, १ ।

भिन्दुः—rt. भिदिर्विदारणे, *to rend, to cleave,—aff* कु, uṇ. i. 24. The breaker, the cleaver or the destroyer of the strongholds of the demons. This worp occurs only in this verse.

कवि—कु ( शब्दे )—*aff* इ, 'अचः इः' uṇ. iv. 138. *vide* notes on SV. I. 30.

—o—

अथ चतुर्थाध्यायस्य द्वितीयः खण्डः ।

चतुर्थप्रपाठकस्य च द्वितीयार्धे तृतीया दशतिः ।

प्रियमेध ऋषिः

२ ३ १ २ ३ १ २ २ ३ १ ३ २
प्रप्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे ।
३ १ २ ३ १ २ ३ २ ३ १ २
धिया वो मेधसातये पुरन्ध्या विवासति ॥ १ ॥ ३६० ॥

प्रऽप्र। वः। त्रिऽस्तुभम्। इषम्। वन्दत्ऽवीराय। इन्दवे। धिया। वः। मेधऽसातये। पुरंऽध्या। आ। विवसिति॥ १॥

भाष्यसारः। **वन्दद्वीराय—सम्मानितशूराय वीरगुणग्राहिणे इत्यर्थः, इन्दवे—ऐश्वर्यवते इन्द्राय, वः—यूयम्, याज्ञिकाः, त्रिष्टुभम्—स्तोभत्रयान्वितम्, इषम्—अन्नम्, प्र प्रद्वयं पूरणार्थम् ( पा० ८।१।६ ), प्रभरत निवेदयत इत्यर्थः, स इन्द्रः मेधसातये—यज्ञसम्पादनार्थम्, पुरन्ध्या—बहुप्रज्ञया, धिया—कर्मणा, वः—युष्मान्, आविवासति—परिचरति, युष्मभ्यमिष्टं फलं ददातीति भावः॥ १॥**

Offer the libation with triple praise to Indra, the appreciator of heroes; he will favour you with successful performances of the sacrifices.—1.

**सा०-भा०।** हे अध्वर्य्यादयः! 'वो' यूयम्। प्रथमार्थे द्वितीया। 'त्रिष्टुभं' स्तोभत्रयोपेतम् 'इषम्' अन्नं 'प्र प्र' अपरः प्र-शब्दः पूरणः। प्रभरतेति शेषः। उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। कस्मै 'वन्दद्वीराय' यो वीरान् स्तौति स वन्दद्वीरः तस्मै 'इन्दवे' इन्द्राय। इन्दतेरैश्वर्यकर्मणः इदं रूपम्। अथवा फलैर्वृष्टिभिर्वा उनत्तीतीन्दुरिन्द्रः तस्मै। स चेन्द्रो 'वो' युष्मान् मेधसातये यज्ञसम्भजनाय पुरन्ध्या बहुप्रज्ञया 'धिया' कर्मणा 'आ विवासति' परिचरति। अभिमतफलयोजनेन सत्करोतीत्यर्थः॥ १॥

१। ऋ० सं० ७ म० ६६ सू० १ ऋ०। ṚV. reads **मन्दद्वीराय** (यो वीरान् हर्षयति—who gives delight to the heroes) instead of **वन्दद्वीराय** (appreciator of heroes).

प्र प्र—both are expletives, Pāṇ. viii 1. 6. *Vide* SV. I. 35.

इन्दवे—इन्द्राय, Indra is here called *Indu*, inasmuch as he lords over the universe (Indu dr. fr. rt. *Ind* to rule) or, because he showers rain (fr. rt. *Und* to moisten, to shed rain).

त्रिष्टुभम्—Grf. renders 'triple sacred draught'. Prof. Ludwig takes 'इषं' with 'प्र' *(pra + iṣam = praiṣam)* to mean 'I send forth', and takes *triṣṭubham* to mean 'the hymn which accompanies the Soma libations'.

वन्दद्वीराय—'Hero-worshipper'—*Grfth.* 'The praiser of heroes'.—*Benfey.* 'Having heroes who worship him'.—*Ludwig.*

मेधसातये—in the sacrificial ceremony, *dat.* for *loc.*—Viv; मेधसाति *lit.* means the receiving or offering of the oblation; मेध is a syn. of यज्ञ, Ngh.

3. 17 ; साति (fr. rt. सन्, *to gain*, Pāṇ. iii. 3. 97.) ; occurs in ṚV. i. 129. 1 ; vii. 66. 8 ; viii. 3. 18 ; मेधसातौ viii. 71. 5. मेधसाता iv. 37. 6. etc.

पुरंध्या धिया—with action which requires supreme or great intellect. पुरंध्या occurs in SV. I. 238.

आ-विवासति—serves, i. e., favours with the fulfilment of desires ; for further notes *vide* SV. I. 42 ; 264.

———

वामदेव ऋषिः

२ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
कश्यपस्य स्वर्विदो यावाहुः सयुजाविति ।
२ ३ २ ३ १ २ ३२ ३ १ २र ३ १ २
ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य ॥ २ ॥ ३६१ ॥

कश्यपस्य । स्वःऽविदः । यौ । आहुः । सऽयुजौ । इति । ययोः । विश्वम् । अपि । व्रतम् । यज्ञम् । धीराः । निऽचाय्य ॥ २ ॥

भाष्यसारः । कश्यपस्य—सर्वज्ञस्य इन्द्रस्य, यौ—अश्वौ स्त इति शेषः, ययोः—अश्वयोः विश्वमपि—कृत्स्नमपि व्रतम्—कर्म, यज्ञं प्रति यज्ञसम्बन्धि यज्ञियदेशं प्रति वा भवतीति निचाय्य—निर्णीय, स्वर्विदः—सर्वज्ञाः, धीराः जनाः, सयूजौ—सहचरौ तौ आहुः वदन्ति ॥ २ ॥

Praise ye, the twain horses of (Indra) the beholder of all (*Kaśyapa*), whom both, the wise with the experience of everything, observing all the actions of the both aiming at the sacrifice,—call as friends.—2.

**सा०-भा० ।** पश्यतीति कश्यपः । 'कश्यपः पश्यको भवति' इति श्रुत्यन्तरम् । तस्य 'कश्यपस्य' सर्वज्ञस्येन्द्रस्य सम्बन्धिनौ 'यौ' अश्वौ । 'ययोः' च 'विश्व' सर्वम् 'अपि' 'व्रतं' कर्म 'यज्ञ'' प्रतियजनीयदेशं प्रतीत्येवं 'निचाय्य' निश्चित्य 'सयुजौ' सहैव युञ्जाते इति स्वर्विदः स्वर्गं लब्धवन्तो 'धीराः' जनाः आहुः ।

अथवा 'कश्यपः' प्रजापतिः 'कश्यपोऽष्टमः स महामेरुं न जहातीति' श्रुत्यन्तरात् तस्य 'स्वर्विदः 'सर्वं' पश्यतः यौ देवौ 'सयुजौ' सहचरौ जना आहुः वेदविदस्तौ मित्रावरुणौ । 'अहर्वै मित्रो रात्रिर्वरुणः' इत्यैतरेयब्राह्मणम् । सर्वस्य कार्यस्य तयोरेवा

न्तर्भावात् इन्द्राग्नी वा देवौ तयोरेव सर्वनिर्वाहकत्वात् तदभिप्रायेणेयमृक् मैत्रावरुणी ऐन्द्राग्नी वेति पूर्वमभिहितम् ॥ २ ॥

२। इयम् ऋक् ऋग्वेदे नास्ति।

कश्यपस्य—कश्यप is the transposition of पश्यक (*see* com. above),—the seets, beholder of all, the omniscient, rfs. to Indra.

स्वर्विदः—the knower of all; for स्वः mg. *all*, vide notes on स्वर्णरम्, SV. 1. 109; 1. 233.

यौ—Grfth. means by it the attendant pair which refers to 'heaven and earth'. Benfey follows Sāyaṇa and says—the horses of Indra are intended.

In the second explanation Sāy. means Mitra and Varuṇa or Indra and Agni as this Ṛk. is denominated after the dual deities.

---

प्रियमेध ऋषिः

१ २ ३ १ २ ३ १ २ ३ १ १ २
अर्चत प्रार्चत नरः प्रियमेधासो अर्चत।
१ २ ३ २ ३ २उ ३ २ ३क २र
अर्चन्तु पुत्रका उत पुरमिद्धृष्ण्वर्चत॥ ३ ॥ ३६२ ॥

अर्चत। प्र। अर्चत। नरः। प्रियऽमेधासः। अर्चन्तु। पुत्रकाः। उत। पुरम्। इत। धृष्णु। अर्चत ॥ ३ ॥

भाष्यसारः। नरः—हे कर्मनायका याज्ञिकाः, धृष्णु—धृष्णुं शत्रुधर्षकम्, पुरम्—भक्तानामभीष्टपूरकमिन्द्रम्, इत्—एव, अर्चत अर्चत प्रार्चत—तमेवैकान्ततः पूजयत, प्रियमेधासः—हे यागप्रियाः, प्रियमेधवंश्याः वा, अर्चत—यूयमिन्द्रं स्तुत, पुत्रकाः उत—पुत्रा अपि अर्चन्तु—उक्तमिन्द्रं स्तुवन्तु ॥ ३ ॥

O Priyamedhas, the leaders of sacrifice, and your sons, may you sing, sing forth in praise of Indra, the fulfiller of desires (of the worshippers), the subjugator of the enemies.—3.

सा०-भा०। हे 'नरः' कर्मणां नेतारोऽध्वर्य्यादयः! यूयम् इन्द्रम् 'अर्चत' पूजयत स्तुत्या 'प्रार्चत' प्रकर्षेणार्चतेन्द्रमेव। हे 'प्रियमेधासः'! प्रियमेधसम्बन्धिनस्तद्गोत्रा यूयम् अर्चतेन्द्रम्। 'पुत्रकाः' पुत्रा अप्यर्चन्त्विन्द्रम्। 'उत' अपि च 'पुरमित्' पुरमेव स्तोतॄणामभिमतस्य पूरकम्। 'धृष्णुं' धर्षणशीलं तादृशमिन्द्रम् 'अर्चत' ॥ ३ ॥

३। ऋ० सं० ८ म० ६६ सू० ८ ऋ०।

पुरमित्—Wils. translates it as 'the demolisher of cities', perhaps he has taken the word as पुरभित्; Grfth. takes 'पुरम्' in apposition with Indra and translates—(who is) our firm stronghold. Sāyaṇa explains—the fulfiller of the desires of the worshippers and derives it from rt. 'पृ'.

———

मधुच्छन्दा ऋषिः

३ १ २र ३ २ ३ १ २ ३ १ २
उक्थमिन्द्राय शंस्यं वर्द्धनं पुरुनिःषिधे।
३ १ २र ३ १ २ ३ १ २ ३ १ २
शक्रो यथा सुतेषु णो रारणत् सख्येषु च ॥ ४ ॥ ३६३ ॥

उक्थम्। इन्द्राय। शंस्यम्। वर्धनम्। पुरुऽनिःषिधे। शक्रः। यथा। सुतेषु। नः। ररणत्। सख्येषु। च ॥ ४ ॥

भाष्यसारः। शक्रः—सर्वार्थसाधकः इन्द्रः, नः—अस्माकम्, सुतेषु—तनयेषु, सख्येषु—सौहार्देषु च, यथा—येन प्रकारेण, रारणत्—प्रशंसावाणीमुच्चरेत, तथा वर्धनम्—उत्कर्षकरम्, उक्थम्—स्तोत्रम्, पुरुनिःषिधे—बहुवैरिनाशिने, इन्द्राय शंस्यम्—वाचा विधेयम् ॥ ४ ॥

The hymn, the source of delight should be sung to Indra, the repeller of many foes, that he (being pleased) may speak highly of our sons and friends.—4.

सा-०भा०। 'इन्द्राय' इन्द्रार्थं 'वर्धनं' वृद्धिसाधनम् 'उक्थं' शस्त्रं 'शस्यम्' अस्माभिः शंसनीयम्। कीदृशायेन्द्राय? 'पुरुनिःषिधे' पुरूणां बहूनां शत्रूणां निषेधकारिणे। 'शक्रः' इन्द्रो 'नो'ऽस्मदीयेषु 'सुतेषु' पुत्रेषु 'सख्येषु च' सखित्वेष्वपि 'यथा' येन प्रकारेण 'रारणत्' अतिशयेन शब्दं कुर्यात् तथा शंस्यमिति पूर्वत्रान्वयः। अस्मदीयेन शस्त्रेण परितुष्ट इन्द्रः नोऽस्माकं पुत्रान् अस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः ॥ ४ ॥

४। ऋ० सं० १ म० १० सू० ५ ऋ०।

रारणत्—रण: शब्दार्थः। यङ्। 'यङोऽचि च' (Pāṇ. ii. 4. 74) इति लुक्। द्विर्भावः। 'दीर्घोऽकितः' (Pāṇ. vii. 4. 83) इति दीर्घः। लिङर्थे लेट्। इतश्च लोपः। लेटोऽडाटौ—इति अडागमः।—Sāy.'s com. on the ṚV. verse.

For the derivation of other important words—e. g., उक्थम्, पुरुनिःषिधं etc. *vide* the same com.

---

प्रियमेध ऋषिः

३ १ २ ३ २ ३ १ २ ३ १ २
विश्वानरस्य वस्पतिमनानतस्य शवसः ।
१ २ ३ २ ३ १ २ ३ २ २
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥ ५ ॥ ३६४ ॥

विश्वानरस्य । वः । पतिम् । अनानतस्य । शवसः । एवैः । च । चर्षणीनाम् । ऊती । हुवे । रथानाम् ॥ ५ ॥

भाष्यसारः । हे मरुतः, चर्षणीनाम्—इन्द्रस्य सेनाभूतानाम्, वः—युष्माकम्, रथानां च, एवैः—गमनैः सह, विश्वानरस्य—सर्वशत्रुबाधकस्य, अनानतस्य—कस्यापि अवशीभूतस्य, शवसः—बलस्य, पतिम् इन्द्रम्, ऊती—ऊतये रक्षणाय, हुवे—आह्वयामि ॥ ५ ॥

I invoke for protection, O Maruts, Indra, the lord of strength, humbled by none, conquering all enemies, accompanied with you, his allies moving on chariots.—5.

**सा०-भा० ।** 'विश्वानरस्य' विश्वान् शत्रून् प्रत्यतस्य 'अनानतस्य' शत्रूणामप्रह्वस्य 'शवसो' बलस्य 'पतिं' स्वामिनमिन्द्रं वा अत्र इन्द्रसम्बन्धिनो मरुतोऽपि सङ्कीर्त्यन्ते । हे मरुत ! 'वो' युष्माकमित्यर्थः यद्यपि मरुत्संशब्दनं नास्ति तथापि व इति सामर्थ्याल्लभ्यते युष्माकं 'चर्षणीनाम्' सैनिकानाम् 'एवैः' गमनैः सह । यद्वा, चर्षणीनामिन्द्रस्य सेनारूपाणां वो युष्माकं गमनैरिति सामानाधिकरण्यम् युष्माकं 'रथानां' च 'ऊती' ऊतिभिर्गमनैश्च सह 'हुवे' आह्वयामि । गन्तृभीरथैर्गन्तृभिर्मरुद्भिश्च सहेन्द्रं हुवे इत्यर्थः ॥

यद्वा, हे यजमानाः ! युष्मदीयसैनिकानां रथा यत्र प्रविशन्ति युद्धाय संग्रामम्, तदानीं तेषां साहाय्यायेन्द्रं हुवे इत्यर्थः ॥ ५ ॥

५ । ऋ० सं० ८ म० ६८ सू० ४ ऋ० । This verse is explained by Yāska in Nir. 12. 21 :

शवसः—of strength, Ngh. 2. 9.

एवैः—गमनैः, with movements ; occurs only here in the SV. and in ṚV. I. 62. 8 ; 68. 2 ; iii. 33. 5 ; iv. 2. 12 ; v. 41. 5 ; x. 6. 6. etc.

चर्षणीनाम्—*vide* notes on SV. I. 144.

अनानतस्य—unhumbled, never bending or bowing to none. Indra is often characterised by this epithet, cf. 'युवा तुविग्रीवो अनानतः' SV. I. 142.

विश्वानरस्य—of the sun identified with Indra—*Yaska* ; etym is—विश्वान् नरान् नयति, विश्व एनं नरा नयन्तीति वा, he leads all men, or all men lead him, i. e. he pervades all created beings,—Nir 7. 21 ; *also* cf. Sankara on Vedanta-Sutra 1, 2, 28. विश्वश्चायं नरश्चेति, विश्वेषां वायं नरः, विश्वे वा नरा अस्येति—विश्वानरः परमात्मा सर्वात्मत्वात्। विश्वानर एव वैश्वानरः'।—He is all-in-all, or, is the leader of all the universe, or, all men are his, so he is *Paramatman*, as He pervades all ; *Vaisvanara* and *Vaisvanara* are the two forms of the same word.

एवैः—(i) with courses, dr. fr. rt. इण् *to go*,—with *un. aff.* वन्, by इन् शीभ्यां वन्,' un i. 150. cf. 'रमध्वम् मुहूर्त्तमेवैः,' for a moment stop your *courses*, Rv. iii. 33. 5 ; 'एवैरयनैरवनैर्वा'—means (i) with journeys, movements, fr. rt. इण् ; or (ii) with protections, fr. rt. अव्—Nir. 2. 25 ; 2. In connection with the explanation of the above verse Yaska interprets 'एवैश्च चर्षणीनाम्' by 'with the desires (prayers) human beings, with the courses of men or with their protection. ( कामैरयनैरवनैर्वा मनुष्याणाम् )—Nir. 12. 21.

ऊती—*for* ऊत्या, पूर्वसवर्णः Pan. vii. 1. 39. mg with the protection, i. e. path (or unimpeded course) of the chariots—*Yaska.*

---

भरद्वाज ऋषिः

१ ३ १ २ ३ १ २र ३ १ २र
## सखा यस्ते दिवो नरो धिया मर्त्तस्य शमतः।
३ १ २र ३ २ ३ २ ३ २उ ३ १ २
## ऊती स बृहतो दिवो द्विषो अंहो न तरति ॥६॥३६५॥

सखा। यः। ते। दिवः। नरः। धिया। मर्त्यस्य। शमतः। ऊती। सः। बृहतः। दिवः। द्विषः। अंहः। न। तरति॥ ६ ॥

भाष्यसारः। **शमतः—स्ववृत्तौ शमयुक्तस्य स्वकर्माभिनिविष्टस्येत्यर्थः, मर्त्यस्य—मनुष्यस्य मध्ये, यः नरः धिया—स्तुतिकर्मणा, दिवः—द्युतिमतस्तव सखा भवति, सः बृहतः—सर्वोत्तमस्य, दिवः—दीप्यमानस्य, तव ऊती—ऊत्या त्वत्कर्त्तृकया रक्षयेत्यर्थः,**

अंहः न—दुष्कृतमिव, द्विषः—शत्रून्, तरति—अतिक्रामति, त्वद्रक्षितः स्तोता पापादिव शत्रोर्निष्कृतो भवति ॥ ६ ॥

Among the mortals devoted to holy rites, that person who renders thee service as a friend—by sacred hymns or holy rites, overcomes the enemies, like sins, through the protection of thy mighty and resplendent self.—6.

**सा०-भा०** । 'शमतः' कर्मानुष्ठानेन शान्तस्य वृत्तस्य निजमार्गवर्त्तिन इत्यर्थः। 'मर्त्तस्य' मनुष्यस्य मध्ये। जात्येकवचनम्। 'दिवः' द्योतनादिगुणकस्य 'ते' तव 'धिया' कर्मणा स्तुत्या 'नरः' मनुष्यः 'सखा' स्तोता भवति 'सः' नरः। 'यः' 'बृहतो' महतो 'दिवो' दीप्तस्य तव सम्बन्धिन्या 'ऊती' ऊत्या रक्षया 'द्विषो' द्वेष्टॄन् 'अंहो न' आहननशीलं पापमिव 'तरति' अतिक्रामति ॥ ६ ॥

६। ऋ० सं० ६ म० २ सू० ४ ऋ०। ṚV. has 'ऋधद्यस्ते सुदानवे धिया मर्त्तः शशमते' in the place of the first hemistich; the last two pādas, however correspond with those of the ṚV. verse; the rdg. of ṚV. implies, that man prospers or succeeds who travails sore in thought for thee, the bountiful.

---

अत्रिर्ऋषिः

३ १ २ ३ ० १ २ ३ २ ३ १ २
विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
१ २ ३ १ २
अथा नो विश्वचर्षणे द्युम्नं सुदत्र मंहय ॥ ७ ॥ ३६६ ॥ त्व

विभोः। ते। इन्द्र। राधसः। विभ्वी। रातिः। शतऽक्रतो। अथ। नः। विश्वऽचर्षणे। द्युम्नम्। सुऽदत्र। मंहय ॥ ७ ॥

भाष्यसारः। शतक्रतो—हे बहुयज्ञ, बहुलप्रज्ञ, भूरिकर्मन् वा, इन्द्र, विभोः—प्रभावशालिनः, ते राधसः—धनस्य, रातिः—दानम्, विभ्वी—महती। अथ—अतः, हेतोः विश्वचर्षणे—हे सर्वसाक्षिन्, सुदत्र—हे शुभद इन्द्र, त्वं नः—अस्मभ्यम्, द्युम्नम्—धनम्, मंहय—देहि ॥ ७ ॥

Śatakrato (*one of many exploits*), great is thy gift of riches: so, observer of all, munificent, confer on us splendid wealth.—7.

**सा०-भा०।** हे 'शतक्रतो' बहुकर्मन्निन्द्र! 'विभोः' प्रभूतस्य 'राधसो' धनस्य 'ते' तव 'रातिः' दानं 'विभ्वी' महती 'अथ' अतः कारणात् हे 'विश्वचर्षणे' सर्वस्य द्रष्टः 'सुदत्र' कल्याणदानेन्द्र! 'नो' ऽस्मभ्यं 'द्युम्नं' धनं 'मंहय' प्रयच्छ॥ ७॥

७। ऋ० सं० ५ म० ३८ सू० १ ऋ०। ṚV. reads 'सुक्षत्र' instead of 'सुदत्र'।

राधसः—wealth; for etym. *see* SV. 1. 194.

विश्वचर्षणे *voc.*—beholder of all; *see* notes on विचर्षणि, SV. 1. 84; 200.

द्युम्नम्—wealth; *lit.* that which glitters; for etym. *vide* notes on SV. 1. 81; 113; 351. सुदत्र—good or liberal giver.

मंहय—give, grant, bestow; rt. मंह् *to give*, Ngh. 3. 20; cf. 'प्र मंहिष्ठाय···', SV. 1. 107; *see* our notes thereon.

---

प्रस्कण्व ऋषिः

१ २ ३ १ २ ३ १र २र
वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि।
२ ३ १ २ ३ १र २र ३ १र २र ३ १ २र
उषः प्रारन्नृतूं रनु दिवो अन्तेभ्यस्परि॥ ८॥ ३६७॥

वयः। चित्। ते। पतत्रिणः। द्विऽपात्। चतुःऽपात्। अर्जुनि। उषः। प्र। आरन्। ऋतून्। अनु। दिवः। अन्तेभ्यः। परि॥ ८॥

भाष्यसारः। **अर्जुनि—हे समुज्ज्वलमूर्त्ते, उषः ते—तव, ऋतून् अनु—आगमात् परमेव, द्विपात्—मनुष्यादयः, चतुष्पात्—गवादयः, पतत्रिणः वयश्चित्—पक्षयुक्ताः पक्षिणश्च, दिवः—गगनस्य, अन्तेभ्यः परि—आकाशप्रान्तपर्यन्तं सर्वत्र प्रारन्—प्रकृष्टं गच्छन्ति—प्रभाते प्रतिबुद्धाः प्राणिनः स्वस्वकर्मसु प्रवर्त्तन्ते; 'रात्रिः स्वप्नाय भूतानां चेष्टायै प्राणिनामहः' इति स्मरणादिति भावः॥ ८॥**

Bright coloured Usas, the bipeds and quadrupeds move, on thy approach, and the winged birds fly about from the skirts of heaven.—8.

**सा०-भा०।** हे 'अर्जुनि' शुभ्रवर्णे 'उषः' उषोदेवते! 'ते' तव 'ऋतूननु' गमनान्यनुलक्ष्य 'द्विपात्' मनुष्यादिकं 'चतुष्पाद्' गवादिकं तथा 'पतत्रिणः'

पतत्रवन्तः पक्षोपेता 'वयश्चित्' पक्षिणश्च 'दिवो अन्तेभ्यः' आकाशप्रान्तेभ्यः 'परि' उपरि 'प्रारन्' प्रकर्षेण गच्छन्ति। रात्रावन्धकारेणाभिभूताः सर्वे प्राणिनस्त्वदागमनानन्तरञ्चेष्टावन्तो भवन्तीत्यर्थः॥ ८॥

८। ऋ० सं० १ म० ४६ सू० ३ ऋ०। RV. reads **'द्विपच्चतुष्पत्'** instead of **'द्विपाच्चतुष्पात्'**—Sāyaṇa in his com. there supports the forms **द्विपत्** and **चतुष्पत्** by the rules of Pāṇini—v. 4. 140; vi. 4. 130.

प्र-आरन्—rt. ऋ गतौ *to go*—लुङ् (Aor.), 3. pl.

ऋतूँरनु—after thy advent; ऋतु is drvd. fr. rt. ऋ *to go* संहितायां दीर्घादटि समानपादे इति नकारस्य रुत्वम्, अत्रानुनासिकः 'पूर्वस्य तु वा' इति रोः पूर्वस्य वर्णस्य सानुनासिकत्वम्।

---

आप्त्यत्रित ऋषिः

३ १र २र ३ २ ३ २ ३ १ २ ३ २ २ २
**अमी ये देवा स्थन मध्य आ रोचने दिवः।**
१ २ ३ २उ ३ २ ३ २ ३ २ ३ २ २
**कद्ध ऋतं कदमृतं का प्रत्ना व आहुतिः॥ ६ ॥ ३६८॥**

अमी इति। ये। देवाः। स्थन। मध्ये। आ। रोचने। दिवः। कत्। वः। ऋतम्। कत्। अनृतम्। का। प्रत्ना। वः। आऽहुतिः॥ ९॥

भाष्यसारः। हे देवाः इन्द्रादयः, ये अमी—प्रसिद्धाः यूयं दिवः—दीप्तिशीलस्य सूर्यस्य, आरोचने—दीप्तिमति मध्ये—स्वर्गमर्त्त्ययोरभ्यन्तरे रविकरोद्भासिते गगने इत्यर्थः, स्थन—तिष्ठथ, वः—तेषां युष्माकं ऋतम्—स्तुतिसम्बन्धि सत्यं कत्—कुत्र विद्यते? अनृतम्—असत्यं वा, कत्—कुत्र वर्त्तते? प्रत्ना—पुरातनी पुराकृतेत्यर्थः आहुतिः किमवस्था जाता। मन्ये ममाभाग्यतया मत्कृतो यागो युष्मासु न कृतार्थो जात इत्याशयः॥ ६॥

O gods, who abide in the midst of the luminous region of heaven, where is your truth, where is your untruth, what has become of the ancient prayers (addressed by me) to you?—9.

**सा०-भा०।** हे 'देवाः' इन्द्रादयः 'येऽमी' यूयं 'दिवो' दीप्तस्य सूर्यस्य 'आरोचने' दीप्तिविषये 'मध्ये' अन्तरिक्षलोके 'स्थ' भवथ सूर्यप्रकाश्यस्थाने इत्यर्थः।

तेषां 'वो' युष्माकं सम्बन्धि स्तोत्रविषयम् 'ऋतं' सत्यं 'कत्' कस्मिन् देशे वर्त्तते? 'अनृतं' नकारस्य स्थाने मकारः अनृतं 'कत्' कुत्रास्ति? 'वो' युष्मदीया 'प्रत्ना' पुराणो 'आहुतिः' 'का' कीदृशी? युष्मदीयं दानं किमभूदित्यर्थः ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितो यागसमूहो युष्मान् न प्राप्नोदित्यनुमिमे ॥ ६ ॥

६। ऋ० सं० १ म० १०५ सू० ५ ऋ०। R̥V. reads 'त्रिष्वा' ( त्रिषु-आ ) instead of 'मध्ये' and after 'आहुतिः' has the addl. rdg. 'वित्तं मे अस्य रोदसी'।

कत् = क्व, where क्वशब्दस्य वर्णव्यापत्त्या कद्भावः—Sāy.'s notes. The legend says that *Trita* had fallen or been thrown into a well, and this stanza is a part of his prayer to the gods for deliverance.

ऋतं कदमृतम्—अमृतम् should be read as अनृतं, R̥v. has this rdg. The import of the passage—(where is your truth and where is your untruth) is—"ye gods, make no distinction between truth and falsehood, I, Trita, ever-devoted to truth and sacrifice, have fallen in this distress. You do not take mercy on me".

का प्रत्ना व आहुतिः—what is the good of my former invocations addressed to you, as you have forsaken me, the devoted worshipper and consequently my sufferings know no bounds.

---

वामदेव ऋषिः

३ १ २ १ २ ३ १ २ ३ १ २
ऋचं साम यजामहे याभ्यां कर्माणि कृण्वते ।
१र २र २ ३ ३ १ २
वि ते सदसि राजतो यज्ञं देवेषु वक्षतः ॥१०॥३६९॥

ऋचम् । साम । यजामहे । याभ्याम् । कर्माणि । कृण्वते । वि । ते । सदसि । राजतः । यज्ञम् । देवेषु । वक्षतः ॥ १० ॥

भाष्यसारः । याभ्याम्—ऋक्सामाभ्यामित्यर्थः, कर्माणि—शस्त्रस्तोत्रादीनि कृण्वते—याज्ञिकाः कुर्वन्ति—होतारो यया ऋचा, उद्गातारश्च येन साम्ना यज्ञियानि कर्माणि कुर्वन्तीत्यर्थः, ताम् ऋचं तत् साम च यजामहे—वयं परिचरामः। ते ऋक्सामे सदसि—यज्ञसभायां विराजतः, तथा यज्ञम्—यज्ञियभागम्, देवेषु—इन्द्रादिषु, वक्षतः—उपनयतः, ऋचः साम्नश्च प्रभावेणेन्द्रादयो यज्ञभागं लभन्त इत्यर्थः ॥ १० ॥

We adore the *ṚK* and the *Sāman*, by which the priests perform the sacred ceremonies; they both lead at the assembly (of the priests) and convey the sacrifice to gods.—10.

**सा०-भा०।** 'याभ्याम्' ऋक्सामाभ्यां 'कर्माणि' शस्त्र-स्तोत्रप्रमुखाणि 'कृण्वते' होतार उद्गातारः कुर्वन्ति। ताम् 'ऋचं' तत् 'साम' च 'यजामहे' वयं पूजयामः 'ते' ऋक्सामे 'सदसि' ऋत्विक्समूहे सदामण्डपे 'विराजतः' स्तोत्रशस्त्र-रूपेण विशेषेण प्रकाशयतः। ते च ऋक्सामे देवते 'देवेषु' इन्द्रादिषु 'यज्ञं' 'वक्षतः' प्रापयतः॥ १०॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
चतुर्थाध्यायस्य द्वितीयः खण्डः। चतुर्थप्रपाठकस्य च
द्वितीयार्द्धे तृतीया दशतिः॥

इत्यानुष्टुभमैन्द्रम्।

१०। इयम् ऋक् ऋग्वेदे नास्ति।

सदसि—generally means 'in public'. Here the word *sadas* means an assembly (esp. at a sacrifice).

---

अथ चतुर्थाध्यायस्य तृतीयः खण्डः। चतुर्थप्रपाठकस्य च द्वितीयार्धे चतुर्थी दशतिः।

रेभ ऋषिः। अतिजगतीच्छन्दः*।

२ ३ १ २ ३ १ २ ३ १ २
**विश्वाः पृतना अभिभूतरं नरः**
३ १ २ ३ १ २ ३ १ २ ३ १ २
**सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे।**
३ १ २ ३ २ ३ १ २ ३ १ २
**क्रत्वे वरे स्थेमन्यामुरीमुतो-**
२र ३ १ ३ १
**ग्रमोजिष्ठं तरसं तरस्विनम्॥ १॥ ३७०॥**

विश्वाः। पृतनाः। अभिऽभूतरम्। नरः। सऽजूः। ततक्षुः। इन्द्रम्। जजनुः। च। राजसे। क्रत्वे। वरे। स्थेमनि। आमुरीम्। उत। उग्रम्। ओजिष्ठम्। तरसम्। तरस्विनम्॥ १॥

---

* The metre *Atijagati* consists of 4 Padas containing 13 syllables each.

भाष्यसारः। नरः—यज्ञनेतार ऋत्विजः, सजूः—समवेताः सन्तः, विश्वाः—सर्वाः, पृतनाः—संग्रामान् शत्रुसेनाः वा, अभिभूतरम्—जयन्तम्, इन्द्रं ततक्षुः—तीक्ष्णं प्रबलं चक्रुः, राजसे—राजितुं सूर्यरूपेण प्रकाशनार्थम्, जजनुश्च—उत्पादयामासुश्च, उत—किञ्च, वरे—श्रेष्ठे, स्थेमनि—स्थितिमति स्थाने शाश्वते स्वर्गे स्थितम्, आमुरीम्—शत्रुहन्तारम्, उग्रम्—भयानकम्, ओजिष्ठम्—दीप्तिमन्तम्, तरसम्—वेगवन्तम्, तरस्विनम्—बलवन्तम्, इन्द्रं क्रत्वे—वृत्रादिवधरूपाय कर्मणे, स्तुवन्ति ॥ १ ॥

The leaders (of the sacrifice) in a body, brought forth and magnified (with praises) Indra, to shine (in the form of the sun),—Indra, the conqueror of all battles (or, the vanquisher of all the hostile armies), firm in supreme position in the field (or dwelling in his supreme permanent place, i. e., heaven), the destroyer of foes, terrific, strong, swift and vigorous.—1.

**सा०-भा० ।** सन्त्येकादश या 'विश्वाः पृतना' इति संमताः ।
जगत्य ऐन्द्र्यो रोदस्योः स्तुति 'घृतवती' इति ॥
'उभे यदिन्द्ररोदसी' महापंक्तिरितीरिता ॥ * ॥

'विश्वाः' सर्वाः व्याप्ता वा 'पृतनाः' पृङ् व्यायामे (तु० आ०) व्याप्रियन्त इति पृतनाः सेनाः। 'नरो' नेत्र्यः 'सजूः' परस्परं सङ्गताः सत्यः 'अभिभूतरं' शत्रूणामत्यर्थमभिभवितारम् 'इन्द्रं' 'ततक्षुः' आयुधादिभिस्तीक्ष्णीचक्रुः आयुधवन्तं चक्रुरित्यर्थः, यद्वा पृतना इति संग्रामनाम (नि० २, १७, ), व्याप्रियन्ते अत्रेति 'पृतनाः' संग्रामाः सर्वानेव संग्रामानभिभावुकमिन्द्रं 'नरो' नेतारोऽन्ये स्तोतारः अन्योन्यं सङ्गताः स्तुतिभिस्तीक्ष्णमकुर्वन्, स्तुते सति बलवान् भवतीति। यद्वा, यष्टारो हविःप्रदानेन वीर्यवन्तं कुर्वन्तीति। किञ्च स्तोतारः 'राजसे' राजतेस्तुमर्थे असे-प्रत्ययः। आत्मनो विराजनार्थं प्रकाशनार्थं सूर्यात्मानमिन्द्रं 'जजनुः' जनयामासुः। स्तोत्रशस्त्रैः स्वयज्ञे प्रादुरभावयन्नित्यर्थः। 'उत' अपि च 'क्रत्वे' स्वकीयवृत्रवधादिकर्मणे 'वरे'

* The next eleven stanzas forming the 3rd khaṇḍa of the 4th Adhyāya 'विश्वाः पृतना...' (I. 370)—'प्र-मन्दिने···' (I. 380) are all in Jagatī metre, except the 10th. stanza of this khaṇḍa, viz. 'उभे यदिन्द्र रोदसी···' (I. 379.), which is in Mahāpaṅkti metre ; again of these 11 stanzas, 'घृतवती भुवनानाम्···' (I. 378) is a praise of heaven and earth, and the rest are addressed to Indra.

श्रेष्ठे 'स्थेमनि' स्थिरशब्दादिमनिच् (५,१,१२२) स्थैर्ययुक्ते स्थाने स्थितम् 'आमुरी' शत्रूणां मारयितारमिन्द्रम् आत्मनां धनलाभार्थं स्तोतारः स्तुवन्तीत्यर्थः। कीदृशम्? 'उग्रम्' उद्गूर्णबलम्, अतएव 'ओजिष्ठम्' ओजस्वितमं 'तरो' बलं तद्वन्तं 'तरस्विनं' संग्रामे शत्रुवधार्थं बलवन्तं वेगवन्तं वा ॥ १ ॥

१। ऋ० सं० ८ म० ९७ सू० १० ऋ०। ṚV reads 'क्रत्वा वरिष्ठं वर आमुरिम्' in the place of 'क्रत्वे वरे स्थेमन्यामुरीम्'।

पृतनाः—fr. rt. पृङ् (व्यायामे व्यापारे च *to be busy*. 6. Ā. पृतना means battle (Ngh. 2. 17.) as soldiers are always busy in fighting with the opponents; also पृतनाः—armies, Nir. 9. 24. cf. इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः—the quiver...conquers strifes and all the hostile armies—ṚV. vi. 75. 5. VS. 29. 4.

नरः—the priests or sacrificers, the leaders of the sacrifice; ṚV. has नरम् (the hero) as an epithet of Indra.

सजूः—together, cf. 'स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद् दवीयो अप सेध शत्रून्'—O Drum, together with Indra and the gods repell the enemies far away. ṚV. vi. 47. 29; AV. 6. 126. 1; VS. 29. 55.

तरसं, तरस्विनम्—the word तरस् means strength—Ngh. 2. 9.

राजसे—Inf. rt. राज् *to shine*. I. U,—असे (in the sense of तुम्) by तुमर्थे सेसेन० Pāṇ. iii. 4. 9.

स्थेमनि—स्थिर + इमनिच् (Tad. aff.) by 'पृथ्वादिभ्य इमनिज् वा' Pāṇ. v. 1. 122. क्रत्वे वरे स्थेमनि—may be rightly rendered as—steady or firm in his actions, e. g., the slaying of Vṛtra.

---

सुवेदः शैलूषिर्ऋषिः। जगतीच्छन्दः।

१ २    ३ १ २    ३ २उ
श्रत्ते दधामि प्रथमाय मन्य-
३ २उ   ३   १ २ ३ २ ३ १ २
वेऽहन्यद्दस्युं नर्यं विवेरपः।
३ २उ   ३   १ २ ३   १ २ ३   २ ३
उभे यत्त्वा रोदसी धावतामनु
१ २ ३   १ २   ३ १   २
भ्यसात्ते शुष्मात् पृथिवी चिदद्रिवः ॥ २ ॥ ३७१ ॥

श्रत् । ते । दधामि । प्रथमाय । मन्यवे । अहन् । यत् । दस्युम् । नर्यम् । विवेः । अपः । उभे इति । यत् । त्वा । रोदसी इति । धावताम् । अनु । भ्यसाते । शुष्मात् । पृथिवी । चित् । अद्रिऽवः ॥ २ ॥

भाष्यसारः । **अद्रिवः—हे वज्रधर इन्द्र, त्वं यत्—येन कोपेन, दस्युम्—हिंसकं शत्रुम्, नर्यम्—नरहितार्थम्, अहन्—हतवान्, मन्यवे तस्मै कोपाय तं कोपमुत्तेजयितुमित्यर्थः, प्रथमाय—वरेण्याय, ते—तुभ्यं त्वां प्रसादयितुमनुकूलयितुं वेत्यर्थः, श्रद्दधामि—भजे । त्वम् अपः—मेघान्तरितं जलम्, विवेः—विसृष्टवान् । यत्—यदा, रोदसी—द्यावापृथिव्यौ, त्वा—त्वाम्, अनुधावताम्—तव वशं गच्छत इत्यर्थः, तदा पृथिवी चित्—अन्तरिक्षमपि, शुष्मात्—त्वत्प्रभावात्, भ्यसाते—बिभेति ॥ २ ॥**

I trust, Indra, in thy first wrath by which thou didst smite Vṛtra and shed the (rain) waters, to the benefit of men ; as both heaven and earth come short of thee, the wide firmament trembles at thy might, O thuderer.—2.

**सा०-भा० ।** हे 'अद्रिवः' वज्रवन्निन्द्र ! 'ते' तव 'मन्यवे' कोपाय तेजसे वा 'प्रथमाय' मुख्याय 'श्रद्धधामि' श्रद्धामादरातिशयं करोमि । 'यत्' येन मन्युना 'दस्युं' कर्माण्युपक्षपयितारम् असुरम् 'अहन्' अवधीः, नर्यमिति क्रियाविशेषणम् । नरहितं यथा भवति तथा तेन हत्वा च मेघेनावृताः 'अपः' उदकानि च 'विवेः' इमं लोकं प्रत्यागमयः,—तस्मै मन्यव इत्यन्वयः । 'यद्' यदा 'उभे' 'रोदसी' द्यावापृथिव्यौ 'त्वा' त्वाम् 'अनुधावताम्' गच्छतां त्वदधीने भवतः इत्यर्थः । तदानीं पृथिवी चित् पृथिवीत्यन्तरिक्षनाम ( नि० १,३,६ ) प्रथितं विस्तीर्णमन्तरिक्षमपि 'शुष्मात्' त्वदीयाद् बलात् भ्यसाते बिभेति भ्यस भये ( भ्वा० आ० ) पञ्चमलकारे रूपम्, विभीयात् भयेन कम्पते इत्यर्थः ॥ २ ॥

२ । ऋ० सं० १० म० १४७ सू० १ ऋ० ।

शुष्मात्—By dint of (thy) power. The word 'शुष्म' means 'strength,' Ngh. 2. 9., so called because it crushes everything ( शोषयति इति ), Nir. 2. 24. cf. इयं शुष्मेभिः अरुजत्सानुगिरीणाम्···She shatters the picks of mountains with her crushing powers. Ṛ̣V. vi. 61. 2.

अद्रिवः—Voc. of the stem—अद्रिवन्, the wielder of the thunderbolt. अद्रि is

the synonym of the thunder because with it Indra splits mountains, or it may be dervd. fr. rt. अद् to eat ( अद्रिरादृणात्येनेन, अपि वात्तेः स्यात् ), Nir. 4. 4.

---

वामदेव ऋषिः ।

३ २ ३ २ ३ १ २ ३ १ २ ३ २उ
समेत विश्वा ओजसा पतिं दिवो
३ १ २र ३ १ २
य एक इन्द्र रतिथिर्जनानाम् ।
२ ३ १ २र ३ १ २ ३ १
स पूर्व्यो नूतनमाजिगीषं तं
२ ३ १ २र ३ २ ३ २
वर्त्तनीरनु वावृत एक इत् ॥ ३ ॥ ३७२ ॥

सम्ऽएत । विश्वाः । ओजसा । पतिम् । दिवः । यः । एकः । इत् । भूः । अतिथिः । जनानाम् । सः । पूर्व्यः । नूतनम् । आऽजिगीषम् । तम् । वर्त्तनीः । अनु । वावृते । एकः । इत् ॥ ३ ॥

भाष्यसारः । विश्वाः—हे सकलाः जनाः, यूयं दिवः—स्वर्गस्य, ओजसा—बलेनोपलक्षितं पतिम्—प्रभुम्, समेत—सङ्गच्छत, स्तोत्रेण हविषा वा तत्सन्निधिं लभध्वमित्यर्थः, एक इत्—एकाकी एव, जनानाम्—यजमानानाम्, अतिथिः—अतिथिवत् पूज्यः प्रियो वा, भूः—भवति, पूर्व्यः—श्रेष्ठः, एकः—केवलः, स इत्—स इन्द्र एव, नूतनम्—प्रथमं स्तुवन्तम्, आजिगीषं—शत्रुं जेतुमिच्छन्तं स्तोतारम्, वर्त्तनीः—जयमार्गान्, अनुवावृते—प्रापयति ॥ ३ ॥

Come, all men, in a body (with praises or oblations) to (Indra), the lord of heaven through might, who, alone, is (dear like) the guest of men. He, the ancient, turns alone, as the way of success to the new (the worshipper), desiring to subdue his enemies.—3.

सा०-भा० । हे 'विश्वाः' सर्वाः प्रजाः ! 'दिवः' स्वर्गस्य 'ओजसा' बलेन 'पतिं' स्वामिनमिन्द्रं समेत स्तोत्रेण हविषा वा सम्यक् प्राप्नुत । इन्द्रः 'एक इत्' एक एव सन् 'जनानां' यजमानानाम् 'अतिथिः' 'अतिथिवत् प्रियो 'भूः' भवति ।

पूर्व्यः पुरातनः 'स' इन्द्रः 'आजिगीषं तं' स्वशत्रून् जेतुमिच्छन्तं 'नूतनम्' अद्यतनं स्तोतारं प्रति 'एक इत्' एक एव 'वर्त्तनि'र्मार्गः सन् 'अनु-वावृते' अनुवर्त्तयति ॥ ३ ॥

३। इयम् ऋक् ऋग्वेदे नास्ति।

पतिं दिवः—द्युलोकग्रहणं चात्र प्रदर्शनार्थम्, त्रयाणामपि लोकानां (i. e., of भूः, भुवः and स्वर्) स्वामिनमित्यर्थः—*Vivaraṇa.*

पूर्व्यः—पूर्व+य by Pāṇ. iv. 4. 133.

अनुवावृते—सार्वकालिको लिट् by Pāṇ. iii. 4. 6 and अभ्यासदीर्घ by Pāṇ. vi. 1. 7.

———

सव्य आङ्गिरस ऋषिः।

३१ २ ३ २ ३१ २ ३
इमे त इन्द्र ते वयं पुरुष्टुत
२ ३ २३ १२
ये त्वारभ्य चरामसि प्रभूवसो।
२उ ३ १ २ ३ २३ १ २
न हि त्वदन्यो गिर्वणो गिरः सघत्-
२ १ २ ३ २३ १ २ ३ १२
क्षोणीरिव प्रति तद्धर्य नो वचः॥ ४॥ ३७३॥

इमे। ते। इन्द्र। ते। वयम्। पुरुऽस्तुत। ये। त्वा। आऽरभ्य। चरामसि। प्रभुवसो इति प्रभुऽवसो। न। हि। त्वत्। अन्यः। गिर्वणः। गिरः। सघत्। क्षोणीःऽइव। प्रति। तत्। हर्य। नः। वचः॥ ४॥

भाष्यसारः। प्रभुवसो—हे बहुलविभव, पुरुष्टुत—हे बहुभिर्वन्दनीय इन्द्र, ये वयं त्वाम् आरभ्य—अवलम्ब्य, चरामसि—चरामः यज्ञे तिष्ठाम इत्यर्थः, ते वयं ते—तव, आत्मीया भवामः। गिर्वणः—हे स्तुतिवाक्यैः सम्भजनीय इन्द्र, त्वदन्यः—त्वां विना, कोऽपि गिरः—स्तुतिवाचः, न हि सघत्—प्राप्नोति। तत्—तस्मात् हेतोः त्वं नः—अस्माकम्, वचः, क्षोणीरिव—क्षितिर्यथा स्वीयजीवान् कामयते तद्वत्, प्रति-हर्य—कामयस्व॥ ४॥

O Indra, lauded of many, most opulent, it is we who are thine and depending (on thy grace), approach thee; O laudable, no other than thyself receives our praises; be pleased to accept this our prayer, as the earth loves all her creatures.—4.

**सा०-भा० ।** 'प्रभूवसो' प्रभूतधन हे इन्द्र ! अतएव 'पुरुष्टुत' पुरुभिर्बहुभिर्यजमानैः स्तुत ! 'ये' वयं 'त्वा' त्वाम् 'आरभ्य' आश्रयतयावलम्ब्य 'चरामसि' चरामः यागे वर्त्तामहे। 'ते इमे' वयं 'ते' तव स्वभूताः हे 'गिर्वणो' गीर्भिर्वननीयेन्द्र ! 'त्वदन्यः' त्वत्तोऽन्यः कश्चिदपि 'गिरः' स्तुतीः 'न हि सघत्' न हि प्राप्नोति । अतस्त्वं 'नो' अस्माकं 'वचः' स्तुतिलक्षणं 'प्रति-हर्य' कामयस्व 'क्षोणीरिव' यथा क्षोणी पृथिवी स्वकीयानि भूतजातानि कामयते ॥ ४ ॥

४ । ऋ० सं० १ म० ५७ सू० ४ ऋ० ।

चरामसि—*for* चरामः—Pāṇ. vi. 1. 46.

गिर्वणः—*voc.* laudable, worthy of praise, *vide* our notes on SV. I. 165.

सघत्—rt. षघ् हिंसायाम् । अत्र प्राप्त्यर्थो, धातूनामनेकार्थत्वात् । लेट्यडागमः । बहुलं छन्दसीति विकरणस्य लुक्—Sāy.'s com. on the corres. Ṛ̣V. verse.

क्षोणीः—the Earth—Ngh. I. 1. हल्ङ्याब्भ्य इति सुलोपाभावश्छान्दसः ।

प्रति-हर्य—imp. 2. sg.—long for, desire to accept, welcome ; हर्यतिः प्रेप्साकर्मा, the rt. *har* means *to desire to obtain,* Nir. 7. 17 ; cf. 'ता जुषाणो हर्यति जातवेदाः'—enjoying them, the omniscient god is gratified. ṚV. iv. 58. 8 ; VS. 17. 96.

---

विश्वामित्र ऋषिः ।

३   १ २ ३ १ २   ३   २
चर्षणीधृतं मघवानमुक्थ्यऽ-
२ ३ १ २   ३ २ ३क २र
मिन्द्रं गिरो बृहतीरभ्यनूषत ।
३   १ २ ३ १ २ ३ २ ३
वावृधानं पुरुहूतं सुवृक्तिभि-
१ २ ३ १ २   ३ १ २
रमर्त्यं जरमाणं दिवेदिवे ॥ ५ ॥ ३७४ ॥

चर्षणीऽधृतम् । मघऽवानम् । उक्थ्यम् । इन्द्रम् । गिरः । बृहतीः । अभि । अनूषत । ववृधानम् । पुरुऽहूतम् । सुवृक्तिऽभिः । अमर्त्यम् । जरमाणम् । दिवेऽदिवे ॥ ५ ॥

भाष्यसारः । बृहतीः गिरः—अस्माकं बहुलाः स्तुतिवाचः, चर्षणीधृतम्—लोकपालं मघवानम्, उक्थ्यम्—उक्थैः स्तुत्यम्, वावृधानम्—वर्धिष्णुम्, सुवृक्तिभिः—

मधुरवाक्यैः, पुरुहूतम्—निखिललोकपूज्यम्, अमर्त्यम्—मरणरहितम्, जरमाणम्—गीयमानम्, इन्द्रं दिवे दिवे—प्रतिदिवसम्, अभ्यनूषत—सर्वथा स्तुवन्तु, बहुभिः स्तोत्रैर्वयमिन्द्रं स्तवामेत्यर्थः ॥ ५ ॥

Let abundant praises glorify Indra, the supporter of men, the opulent, the adorable, ever-prospering, the invoked of many, the immortal, who is to be gratified, everyday, with pleasant hymns.—5.

**सा०-भा०।** 'बृहतीः' प्रभूताः 'गिरः' अस्मदीयाः स्तुतिलक्षणा वाचः 'चर्षणीधृतं' चर्षणीनां मनुष्याणामभिमतफलप्रदानेन धारकं पोषकम्, यद्वा आकृषत्यनेन सर्वमिति चर्षणिर्बलं तद्धारकं 'मघवानम्' 'उक्थ्यम्' उक्थैः शस्त्रैः शंसनीयं 'वावृधानं' बलधनादिसम्पत्त्या प्रतिक्षणं वर्द्धमानं 'पुरुहूतं' बहुभिः स्तोतृभिराहूतम् 'अमर्त्यं' मरणधर्मरहितं 'सुवृक्तिभिः' शोभनस्तुतिवाक्यैः 'दिवे दिवे' प्रत्यहं 'जरमाणं' स्तूयमानं तम् इमम् 'इन्द्रम्' 'अभ्यनूषत' अभितः सर्वे स्तुवन्तु ॥ ५ ॥

५। ऋ० सं० ३ म० ५१ सू० १ ऋ०।

बृहतीः—*for* बृहत्यः (*nom. pl.*) वा छन्दसीति सवर्णदीर्घः, Pāṇ. vi. 1. 106.

अनूषत—नु स्तवने। अस्मात् लुङि सिच्। गुणाभावः, *vide* notes on SV. I. 198.

सुवृक्तयः—स्तुतिकरणभूता ऋचो वृक्तिशब्देन उच्यते।

---

कृष्ण आङ्गिरस ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
अच्छा व इन्द्रं मतयः स्वर्युवः
३ २ ३ १ २ ३ १ २
सध्रीचीर्विश्वा उशतीरनूषत।
१ २ ३ १ २ ३ २ ३ २ ३
परि ष्वजन्त जनयो यथा पतिं
२ ३ २ ३ २ ३ १ २ ३ १ २
मर्यं न शुन्ध्युं मघवानमूतये ॥ ६ ॥ ३७५ ॥

अच्छा। वः। इन्द्रम्। मतयः। स्वःयुवः। सध्रीचीः। विश्वाः। उशतीः। अनूषत। परिऽस्वजन्त। जनयः। यथा। पतिम्। मर्यम्। न। शुन्ध्युम्। मघऽवानम्। ऊतये ॥ ६ ॥

भाष्यसारः। हे स्तोतारः, जनयः—स्त्रियः, यथा ऊतये—रक्षार्थम्, मर्यम्—मानवम्, पतिं, न—यथा च, शुन्ध्युं—शुद्धचरितम्, मघवानं—धनिनम्, परिष्वजन्त—आलिङ्गन्ति आश्रयन्ते, तथा वः—युष्माकम्, स्वर्युवः—स्वर्गप्रापकाः, सध्रीचीः—सङ्गताः, उशतीः—साभिलाषाः, विश्वाः—सकलाः, मतयः—स्तुतयः, इन्द्रम् अच्छ—अभितः, अनूषत—स्तुवन्तु गायन्तु, इन्द्रमुद्दिश्य वः स्तुतय उच्चरन्त्वित्यर्थः ॥ ६ ॥

Let your longing, heaven-reaching hymns, in a body, glorify Indra; they embrace immaculate Maghavan, as wives (embrace) their husbands, for (your) protection.—6.

**सा०-भा० ।** 'स्वर्युवः' स्वर्गेण मिश्रयितृयः 'सध्रीचीः' सङ्गताः विश्वा व्याप्ताः 'उशतीः' कामयमानाः 'मतयः' स्तुतयः 'इन्द्रम्' ईश्वरम् 'अच्छानूषत' अभिष्टुवन्ति। किञ्च, 'जनयो' जायाः यथा 'पतिं' भर्त्तारं 'मर्यं न' यथा च 'शुन्ध्युं' शुद्धं दोषरहितं 'मघवानं' धनवन्तम् 'ऊतये' रक्षणाय 'परिष्वजन्त' आलिङ्गन्ति, छान्दसो लोट्। तद्वदिन्द्रं मे स्तुतयः परिष्वजते ॥ ६ ॥

६। ऋ० सं० १० म० ४३ सू० १ ऋ०। Ṛ̣V. reads (1) **'मे'** for **'वः'**, **'स्वर्विदः'** instead of **'स्वयुवः'**; (2) **'परिष्वषन्ते'** instead of **'परिष्वजन्त'**।

शुन्ध्युम्—cf. *uṇ.* iii. 20.

---

सव्यऋषिः।

१ २उ ३ १ २ ३ २ ३ २ ३
अभि त्यं मेषं पुरुहूतमृग्मिय-
१ २ ३ १ २ ३ १ २ ३ २
मिन्द्रं गीर्भिर्मदता वस्वो अर्णवम्।
२ ३ २ ३ २ ३ १ २ ३ १ २
यस्य द्यावो न विचरन्ति मानुषं
३ १ २र ३ १ २र
भुजे मंहिष्ठमभि विप्रमर्चत ॥ ७ ॥ ३७६ ॥

अभि। त्यम्। मेषम्। पुरुऽहूतम्। ऋग्मियम्। इन्द्रम्। गीःऽभिः। मदत। वस्वः। अर्णवम्। यस्य। द्यावः। न। विऽचरन्ति। मानुषम्। भुजे। मंहिष्ठम्। अभि। विप्रम्। अर्चत ॥ ७ ॥

भाष्यसारः। हे स्तोतारः, यस्य—इन्द्रस्य, मानुषम्—लोकहितकराणि कर्माणि, द्यावः—रश्मयः, न—इव, यथा सूर्यरश्मयो जगद्धिताय प्रवर्त्तन्ते तद्वत्, विचरन्ति—विशेषेण विद्यन्ते, मेषं—स्पर्धमानं मेषरूपेण पीतसोमं वा, पुरुहूतं—बहुभिः स्तुतम्, ऋग्मियम्—ऋग्भिस्तूयमानम्, वस्वोः—धनस्य, अर्णवम्—आकरम्, त्यम्—प्रसिद्धं तम्, गीर्भिः—स्तुतिभिः, अभिमदत—यूयं हर्षयत। तथा भुजे—भोगाय, मंहिष्ठम्—अतिशयेन महान्तम्, विप्रं—ज्ञानमयम्, तम् अभि अर्चत—सम्मानयत ॥७॥

Propitiate, with praises, that ram (Indra), the invoked of many, to be won over by lauds, the ocean of wealth ; whose favour prevails everywhere, like the rays of the sun beneficial to mankind ; for the enjoyment ( of blessings) ; adore the most munificent and sapient Indra.—7.

**सा०-भा०।** 'त्यं' तं प्रसिद्धं 'मेषं' शत्रुभिः स्पर्द्धमानम्। यद्वा, कण्वपुत्रं मेधातिथिं यजमानमिन्द्रो मेषरूपेणागत्य तदीयं सोमं पपौ। स ऋषिस्तं मेष इत्यवोचत्। अत इदानीमपि मेष इन्द्रोऽभिधीयते। मेधातिथेर्मेषेति सुब्रह्मण्यमन्त्रैकदेशस्य व्याख्यानरूपं ब्राह्मणमेवमाम्नायते, 'मेधातिथिं ह काण्वं मेषो भूत्वा जहारेति'। आगत्य सोमम् अपहृतवानित्यर्थः। पुरुहूतं बहुभिर्यजमानैराहुतम् 'ऋग्मियम्' ऋग्भिर्विक्रियमाणं स्तूयमानमित्यर्थः। स्तुत्या हि देवता विक्रियते; यद्वा ऋग्भिर्मीयते शब्द्यत इति ऋग्मीः तं 'वस्वो अर्णवं' धनानामावासभूमिम्। एवं गुणविशिष्टमिन्द्रम्, हे स्तोतारः! 'गीर्भिः' स्तुतिभिः 'अभिमदत' आभिमुख्येन हर्षं प्रापयत। 'यस्य' इन्द्रस्य 'कर्माणि मानुषं' जात्येकवचनं मानुषाणि मनुष्याणां हितानि 'विचरन्ति' विशेषेण वर्त्तन्ते। अत्र दृष्टान्तः, 'द्यावो न' यथा सूर्यस्य रश्मयः सर्वेषां हितकराः 'भुजे' भोगाय 'मंहिष्ठम्' अतिशयेन प्रवृद्धं 'विप्रं' मेधाविनम्। तथाविधमिन्द्रम् 'अभ्यर्चत' अभिपूजयत ॥ ७ ॥

७। ऋ० सं० १ म० ५१ सू० १ ऋ०।

मेषम्—rt. मिष् स्पर्धायाम्। इगुपधलक्षणे के प्राप्ते देवसेन-मेषादयः पचादिषु द्रष्टव्या इति वचनादच् प्रत्ययः। Indra is here called the ram ; it refers to the legend that Indra came, in the form of a ram, to a sacrifice performed by Medhātithi, and drank the Soma juice. Prof. Wils., after Sāyaṇa explains, 'the victor over enemies' by this word.

ऋग्मियम्—(1) ऋग्मयं—ऋक् + मयट्, अकारस्य इकारश्छान्दसः। (2) माङ् माने शब्दे च, ऋग्भिर्मीयते इति ऋग्मीः—क्विप्। आकारस्य—ईत्वम्।

मदता—मदी हर्षे—णिच्—लोटि मध्यमपुरुषबहुवचनम् (imp. 2 pl.) णि-लोपः। Vide Say. com. on the ṚV. verse; the last vowel is lengthened by ऋचि तुनुघमक्षुतङ्।

मंहिष्ठम्—महि वृद्धि वृद्धौ। अतिशयेन मंहिता। तुश्छन्दसीतीष्ठन् प्रत्ययः। तुरिष्ठेमेयःस्विति तृलोपः।

---

सव्यऋषिः।

२उ ३ १ २ ३ १ २
त्यं सु मेषं महया स्वर्विदं
३ १ २र ३ १ २ ३ १ २र
शतं यस्य सुभुवः साकमीरते।
२ ३ १ २र २ ३ २ ३
अत्यं न वाजं हवनस्यदं रथ-
१ २ ३ १ २ ३ १ २
मेन्द्रं ववृत्यामवसे सुवृक्तिभिः॥ ८॥ ३७७॥

त्यम्। सु। मेषम्। महय। स्वःऽविदम्। शतम्। यस्य। सुऽभुवः। साकम्। ईरते। अत्यम्। न। वाजम्। हवनऽस्यदम्। रथम्। आ। इन्द्रम्। ववृत्याम्। अवसे। सुवृक्तिऽभिः॥ ८॥

भाष्यासारः। **भो जन, यस्य—इन्द्रस्य, सुभुवः—प्रशस्ताः भूमयः, साकं—सह, ईरते—गच्छन्ति, मेषं—स्पर्धमानम्, स्वर्विदं—धनस्य दातारं सर्वज्ञं वा, रथम्—रथमिव अभीष्टप्रापकम्, अत्यं वाजं न—गमनसाधकम् अश्वमिव, हवनस्यदं—वेगेन यज्ञं प्रतिगच्छन्तम् इन्द्रम्, अवसे—रक्षार्थम्, सुवृक्तिभिः—सुमधुरस्तुतिवाक्यैः, महय—पूजय, ईदृशम् इन्द्रं शतं—शतशः, आ-ववृत्याम्—आवर्त्तयामि, आमन्त्रयामीत्यर्थः॥ ८॥**

Adore well that ram, the knower of all, in 'whose adoration a hundred worshippers go in a body; with many pleasant praises may I turn, hither for protection, Indra, the chariot which hastens, like a swift horse to the call.—8.

**सा०-भा०।** 'त्यं' तं प्रसिद्धं 'मेषं' शत्रुभिः सह स्पर्द्धमानं 'स्वर्विदं' स्वरादित्यो द्यौर्वा तस्य 'वेदितारं' लब्धारं वा। यद्वा, स्वः सुष्ठु अरणीयं धनं तस्य लम्भयितारम्। एवं गुणविशिष्टमिन्द्रं, हे अध्वर्यो! 'सुमहय' सम्यक् पूजय। 'यस्य'

इन्द्रस्य ‘शतं’ शतसंख्याकाः ‘सुभुवः’ स्तोतारः ‘साकं’ सहैव युगपदेव ‘ईरते’ स्तुतौ प्रवर्त्तते। यद्वा, यस्येन्द्रस्य रथं शतं सुभ्वः शतसंख्याका अश्वाः साकं सहेरते गमयन्ति। तमिन्द्रम् ‘अवसे’ अस्मद्रक्षणाय ‘सुवृक्तिभिः’ सुष्ठ्वावर्ज्जकैः स्तोत्रैः ‘रथम्’ ‘आ-ववृत्यां’ प्रत्यावर्त्तयामि। कीदृशम् ? ‘रथं’ ‘हवनस्यदं’ हवनमाह्वानं यागं वा प्रति वेगेन गच्छन्तम्। गमने दृष्टान्तः, ‘अत्यन्नवाजं’ गमनसाधनमश्वमिव ‘महय’ पूजय ॥ ८ ॥

८। ऋ० सं० १ म० ५२ सू० १ ऋ०। Ṛ.V. reads ‘सुभ्वः’ instead of ‘सुभुवः’।

महया—rt. मह पूजायां, चुरादिरदन्तः। संहितायामन्येषामपि दृश्यते इति दीर्घत्वम्।

ईरते—rt. ईर गतौ—अदादिः।

अत्यम्—अत्य इति अश्वनाम। अत्यो हय इति पाठात्।

वाजं—वज व्रज गतौ—करणे घञ्।

हवनस्यदं—स्यन्द् प्रस्रवणे। स्यदो जवे ( Pāṇ. vi. 4. 28) इति वेगे गम्यमाने घञन्तो निपातितः।

ववृत्याम्—वृतु वर्त्तने। लिङि व्यत्ययेन परस्मैपदम्। बहुलं छन्दसीति शपः श्लुः द्विवचनादि। यासुटो ङित्त्वाल्लघूपधगुणाभावः।

---

भरद्वाज ऋषिः। स्नानप्रकरणे पार्थिवमृद्ग्रहणे विनियोगः।

३ १ २ ३ १ २ ३ २ ३
घृतवती भुवनानामभिश्रियो-
२ ३ १ २ ३ १ २ ३ १ २
र्वी पृथ्वी मधुदुघे सुपेशसा।
१ २ ३ १ २र ३ १ २ ३
द्यावापृथिवी वरुणस्य धर्मणा
१ २ ३ २ ३ १ २
विष्कभिते अजरे भूरिरेतसा ॥ ९ ॥ ३७८ ॥

घृतऽवती इति। भुवनानाम्। अभिऽश्रिया। उर्वी इति। पृथ्वी इति। मधुऽदुघे इति। सुऽपेशसा। द्यावापृथिवी इति। वरुणस्य। धर्मणा। विऽस्कभिते। अजरे इति। भूरिऽरेतसा ॥ ९ ॥

भाष्यसारः। द्यावापृथिवी—द्यावापृथिव्यौ, घृतवती—जलपूर्णे दीप्तिशालिन्यौ वा, भुवनानाम् अभिश्रिया—निखिलजीवानामाश्रयभूते, उर्वी विशाले, पृथ्वी—कर्मणा प्रथिते, मधुदुघे—सलिलस्राविण्यौ, सुपेशसा—शोभनरूपे, वरुणस्य धर्मणा—वरणीयेश्वरस्य शक्तिप्रभावेण, विष्कभिते—स्तम्भिते अवष्टब्धे स्वस्वस्थाने, अजरे—चिरन्तने अविनाशिन्यौ, भूरिरेतसा—बहुशक्तियुक्ते च भवतः॥ ९॥

Resplendent (or full of waters) Heaven and Earth, the shelter of all creatures, spacious, variant in forms and actions, water-yielding, beautiful, separately fixed by Varuṇa's ordinance, eternal, abounding in germs.—9.

**सा०-भा०।** 'द्यावापृथिवी' द्यावापृथिव्यौ 'घृतवती' दीप्तिमत्यौ उदकवत्यौ वा भवत इति शेषः, 'भुवनानां' भूतानाम् 'अभिश्रिया' अभिश्रयणीये भवत इति सर्वत्रानुसन्धेयम्, 'उर्वी' विस्तीर्णे 'पृथ्वी' बहुकार्यरूपेण प्रथिते च 'मधुदुघे' मधुन उदकस्य दोग्ध्र्यौ 'सुपेशसा' सुरूपे, 'वरुणस्य' सर्वनियामकस्य 'धर्मणा' धारणे 'विष्कभिते' पृथक् धारिते 'अजरे' नित्ये 'भूरिरेतसा' बहुरेतस्के बहुकार्ये वा भवतः; अत्र साक्षात् द्यावापृथिव्योः स्तुतिः, प्रसङ्गाद् वरुणस्येति द्रष्टव्यम्॥ ९॥

९। ऋ० सं० ६ म० ७० सू० १ ऋ०। यजुः—३४-४५।

घृतवती—The word *Ghṛtam* means water, Ngh. I. 12. घृतवती is also a synonym of the two worlds—Heaven and Earth.—Ngh. 3. 30. Etymologically—full of waters; Sāy. assigns to it an addl. mg. 'radiant' (*dīptimatyau*).

वरुणस्य—here rfs. to the Supreme God—the ordainer of all.

अभिश्रिया, सुपेशसा, भूरिरेतसा—these three are in *nom. du.* आ in the place of the case term. by 'सुपां सुलुक्०' Pāṇ. vii. 1. 39. The word पेशस means form—Ngh. 3. 7.; again, in Nir. 8. 11, it is said 'पेश इति रूपनाम पिंशतेः'—*peśas* means 'beauty', it is dervd from rt. *piś*—to adorn.

विष्कभिते—separately settled in their own positions, unattached each other.

घृतवती, उर्वी, पृथ्वी, द्यावापृथिवी—all in *nom. du*: the stems ending in long vowels retain the same in *nom. du.* spl and accus. du. *optionally* by 'वा छन्दसि'—Pāṇ. vi. 1. 106.

Guṇaviṣṇu's explanation of this verse is as follows:—

घृतवत्यौ—उदकवत्यौ द्यावापृथिव्यौ। भुवनानाम् अभिश्रिया—उदकानाम् अभि अभितः उभयतः ऊर्ध्वम् अधश्च श्रिया—संश्रिते. निदाघे पार्थिवमुदकं दिवमुद्गच्छति, वर्षासु दिवं भूमिम् अभिगच्छति। ऊर्वी—

...,पृथ्वी—विस्तृते, सुपेशसा—कल्याणरूपे, वनस्पत्यादीनि पृथ्व्या रूपाणि, नक्षत्रादीनि दिवः। मधुदुघे—उदकस्य दोग्ध्र्यौ। द्यावापृथिव्यौ इति विशेष्यं पदम्। वरुणस्य धर्मणा सूर्यस्य विधारकेण विष्णुना विष्कभिते—विरिच्य स्तम्भिते, अजरे—जरारहिते, भूरिरेतसा—प्रभूतेन रेतसा युक्ते, रेत इति उदकस्य नाम। अत्र विष्णुसम्बन्धेन द्यावापृथिव्योः स्तुतिः—The Heaven and Earth full of waters, resort to waters, on both ways, high and low ; in summer the waters of the earth rise up to heaven in the form of vapours and in the rainy season, the waters of heaven come down in the form of rain ;—spacious, extensive, of lovely beauty ;—the trees with flowers and fruits and the like form the beauty of the earth, the stars or luminaries of heaven ;—yielding water, separately fixed by Viṣṇu, the supporter of the sun ;—unwasting, i. e., ever-young ; abounding in water ; *reta* is a synonym of water. It is the praise of heaven and earth being concerned with Viṣṇu.

There is another version of the explanation which is quite different—

भूरिरेतसा—प्रभूतवीर्येण वराहरूपिणा भगवता भुवनानां मध्ये पृथ्वी मही, उर्वी महापरिमाणा, घृतवती यज्ञसम्पादनाय निर्मितेति शेषः। किम्भूतेन भगवता? अभिश्रिया—अभिमुखी श्रीर्लक्ष्मीर्यस्य तेन, तथा सुपेशसा—शोभनं पेशः रूपं यस्य तेन, वरुणस्य धर्मणा—असतां निग्रहात् सतामाप्यायनाच्च वरुणस्येव धर्मो यस्य तेन। किञ्च, द्यावापृथिव्यौ मधुदुघे मधुस्राविण्यौ निर्मिते। विष्कभिते—अन्योन्यावष्टब्धे, अजरे अविनाशिन्यौ।—By mighty God Viṣṇu of immense power in the boar incarnation, the Earth was made spacious, great, fit for the performance of sacrifice, Viṣṇu, to whom Goddess Śrī (Lakṣmī) is favourably disposed, who possesses lovely beauty, whose function is like that of Varuṇa, e. g., the oppression of the wicked and rewarding the honest. Also, heaven and earth are dripping honey, separately fixed, eternal or imperishable.

वरुणस्य—'वरुणो मध्यमस्थानः, स त्विन्द्र एव'—*Vivaraṇa.*

———

मेधातिथिर्ऋषिः। महापंक्तिश्छन्दः*।

३ १ २र ३ १ २ ३ २ ३ १ २
**उभे यदिन्द्र रोदसी आपप्राथोषा इव।**
३ १ २ ३ १ २ ३ १ २ ३ २
**महान्तं त्वा महीनां सम्राजं चर्षणीनाम्।**
३ १ २र ३ १ २र
**देवी जनित्र्यजीजनद् भद्रा जनित्र्यजीजनत्॥ १० ॥३७९॥**

* The metre Mahāpaṅkti consists of six pādas having 8 syllables each.

उभे इति । यत् । इन्द्र । रोदसी इति । आऽपप्राथ । उषाःऽइव । महान्तम् । त्वा । महीनाम् । संऽराजम् । चर्षणीनाम् । देवी । जनित्री । अजीजनत् । भद्रा । जनित्री । अजीजनत् ॥ १० ॥

भाष्यसारः । हे इन्द्र, यत्—यस्त्वम्, रोदसी—उभौ द्युलोकभूलोकौ, उषाः इव—यथोषाः स्वप्रभया सर्वमाच्छादयति तद्वत्, आ-पप्राथ—आवृणोसि, महीनां—महताम्, महान्तम्, चर्षणीनां—मनुष्याणां मध्ये, सम्राजं—सर्वेश्वरं तं, त्वा—त्वां, देवी जनित्री—देवमाता अदितिः, अजीजनत्—असूत। यतस्त्वाम् अजीजनत्—असूत, ततः जनित्री तव जनयित्री जननीति यावत्, भद्रा—मङ्गलमयी मता। वीरमातुः किमिव न गौरवमिति भावः ॥ १० ॥

Thou, Indra, like the dawn, hast filled both heaven and earth (with light). The divine mother has generated thee, the might of the mighty (gods), the supreme lord of men, the blessed mother has brought thee forth.—10.

**सा०-भा० ।** षडत्राष्टाक्षराः पादा द्वौ चार्द्धर्चा वधीमहे।

हे 'इन्द्र'! 'उभे' 'रोदसी' द्यावापृथिव्यौ 'यत्' यस्त्वम् 'आ-पप्राथ' स्वतेजसा आ-पूरयसि, प्रा पूरणे आदादिकः ( प० ), छान्दसो लिट् । 'उषा इव' यथा उषाः स्वभासा सर्वं जगदापूरयति तद्वत्। तं 'महीनां' महतां देवानामपि 'महान्तम्' नायकम्। 'चर्षणीनां' मनुष्याणामपि 'सम्राजम्' ईश्वरम् 'इन्द्रम्' 'त्वा' त्वां 'देवी' देवनशीला 'जनित्री' साधुजनयित्री अदितिः 'अजीजनत्' अजनयत्, जनेर्ण्यन्तात् लुङि चङि रूपमेतत्। यस्मादेषा जनयित्री ईदृशं पुत्रमजीजनत् अतः कारणात् सा 'भद्रा' कल्याणी प्रशस्ता जाता, जनेर्ण्यन्तात् साधुकारिणि तृन् ( ३, २, १३५ )। 'जनिता मन्त्रे' ( ६,४,५३ ) इति इडादौ णिलोपो निपात्यते। "ऋन्नेभ्यः" ( ४,१,५ ) इति ङीप् ॥ १० ॥

१० । ऋ० सं० १० म० १३४ सू० १ ऋ० ।

पप्राथ—cf. Pāṇ. iii. 2. 105.

देवी—'दानादिगुणयुक्ता'—*Vivaraṇa*: 'देवो दानाद्वा दीपनाद्वा द्युस्थानो भवतीति वा यो देवः सा देवता'—Yāska, Nir. vii. 15.

जनित्री—vide, Pāṇ. iii. 2. 135.

जगतीच्छन्दः ।

२ ३ १ २ ३ १ २ ३ २ ३
प्र मन्दिने पितुमदर्चता वचो
२ ३ १ २ ३ १ २ ३ १ २
यः कृष्णगर्भा निरहन्नृजिश्वना ।
३ २ ३ १ २ ३ १ २
अवस्यवो वृषणं वज्रदक्षिणं
३ १ २ ३ १ २
मरुत्वन्तं सख्याय हुवेमहि ॥ ११ ॥ ३८० ॥

प्र । मन्दिने । पितुऽमत् । अर्चत । वचः । यः । कृष्णऽगर्भाः । निःऽअहन् । ऋजिश्वना । अवस्यवः । वृषणम् । वज्रऽदक्षिणम् । मरुत्वन्तम् । सख्याय । हुवेमहि ॥ ११ ॥

भाष्यसारः । हे ऋत्विजः, यः—इन्द्रः, ऋजिश्वना—एतन्नाम्ना राज्ञा सह, मिलितः सन्, कृष्णगर्भाः—कृष्णासुरस्य गर्भवतीः स्त्रियः, निरहन्—यथा पुत्रोत्पत्तिर्न भवेत् तथा गर्भिणीभिः स्त्रीभिः सह कृष्णासुरं हतवानिति भावः, मन्दिने—स्तुत्याय इन्द्राय, पितुमत्—हविरन्नयुक्तम्, वचः—स्तुतिम्, प्रार्चत—प्रकृष्टमुच्चारयत । अवस्यवः—रक्षाकामा वयम्, वृषणम्—अभीष्टदोहम्, वज्रदक्षिणं—वज्रपाणिम्, मरुत्वन्तं—मरुत्-सहायम् इन्द्रम्, सख्याय—सहायकरूपेणाधिगन्तुम्, हुवेमहि—आह्वयामः ॥ ११ ॥

Offer, with oblation, hymn to him, laudable with praise, who, with *Ṛjiśvan*, destroyed the pregnant wives of Kṛṣṇa ; desiring protection, we call on him, the showerer (of blessings), the lord of the Maruts, bearing the thunderbolt in his right hand.—11.

**सा०-भा० ।** एषा गर्भस्राविण्युपनिषत्* ।

हे ऋत्विजः ! 'मन्दिने' स्तुतिमते स्तोतव्यायेन्द्राय 'पितुमत्' हविर्लक्षणे-नान्नेनोपेतं 'वचः' स्तुतिलक्षणं वचनं 'प्रार्चत' प्रकर्षेणोच्चारयत । 'यः' इन्द्रः 'ऋजिश्वना' एतत्संज्ञकेन राजर्षिणा सख्या सहितः सन् 'कृष्णगर्भाः' कृष्णो नाम कश्चिदसुरः, तेन निषिक्तगर्भाः तदीया भार्याः 'निरहन्' नितरामवधीत्, कृष्णमसुरञ्च

* 'कुत्स आत्मीयान् पुत्रान् पौत्रांश्चाह'—*Vivaraṇa.* This verse is called the *Garbhasrāviṇyupaniṣat*, told by Kutsa to his sons and grandsons.

तत्पुत्राणामनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्या अपि अवधीदित्यर्थः। 'अवस्यवः' रक्षणेच्छवो वयं 'वृषणं' कामानां वर्षितारं 'वज्रदक्षिणं' वज्रयुक्तेन दक्षिणहस्तेन उपेतं 'मरुत्वन्तम्' इन्द्रं 'सख्याय' सख्युः कर्मणे 'हुवेमहि' आह्वयामः॥ ११॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
चतुर्थाध्यायस्य तृतीयः खण्डः।
चतुर्थप्रपाठकस्य च द्वितीयार्द्धे चतुर्थी दशतिः॥

इति जागतम्।

११। ऋ० सं० १ म० १०१ सू० १ ऋ०। ṚV. reads **'हवामहे'** instead of **'हुवेमहि'**।

मन्दिने—laudable with praise, praiseworthy ; who is delighted with praise—Wils. मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। औणादिक इनिप्रत्ययः। तदुक्तं यास्केन, मन्दी मन्दतेः स्तुतिकर्म्मणः, Mandī (praiseworthy) is dervd. fr. rt. *mand*, to praise, Nir. 4. 24.

अवस्यवः—अवेरौणादिको भाविऽसुन्। अव इच्छति इति अवस्यति। सुपः आत्मन क्यच्। क्याच्छन्दसीति उ-प्रत्ययः, इति 'अवस्युः'।

ऋजिश्वना—Ṛjiśvan is said to be a king, the devoted worshipper of Indra, Kṛṣṇa, to be an Asura, who was slain, together with his wives, that none of his posterity might survive. Kṛṣṇa, the black, may be another name for Vṛtra the black cloud ; or we may have here another allusion to the dark-complexioned aborigines.

पितुमत्—the word पितुः means 'food'—Ngh. 2. 7. पितुरित्यन्ननाम पातेर्वा पिबतेर्वा प्यायतेर्वा—the word 'pituḥ' is a synonym of food, it is dervd. from rt. *pā* (to protect), or from rt. *pā* (to drink), or from *pyāy* (to swell). Cf. 'पितुं न स्तोषं महो धर्माणं तविषीम्'—I laud the food, the bearer of great strength—ṚV. i. 187. 1 ; VS. 34. 7.

---

अथ चतुर्थाध्यायस्य चतुर्थः खण्डः। चतुर्थप्रपाठकस्य च द्वितीयार्द्धे पञ्चमी दशतिः।

नारद ऋषिः। उष्णिक्छन्दः*।

१ २ ३ २ ३ १ २ ३ १ २ ३उ २क
इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम्।
३ २ ३ २ ३ १ २ ३ २
विदे वृधस्य दक्षस्य महाँ हि षः॥ १॥ ३८१॥

* The 'Uṣṇik' metre consists of 3 pādas, the first two pādas having 8 syllables each and the third pāda having twelve syllables—(8 + 8 + 12).

इन्द्र । सुतेषु । सोमेषु । क्रतुं । पुनीषे । उक्थ्यम् । विदे । वृधस्य । दक्षस्य । महान् । हि । सः ॥ १ ॥

भाष्यसारः । हे इन्द्र ! त्वं सोमेषु सुतेषु—प्रस्तुतेषु, वृधस्य—वर्द्धनशीलस्य, दक्षस्य—बलस्य, विदे—प्राप्तये, क्रतुं—यजमानम्, उक्थ्यं—स्तोतारं च, पुनीषे—पवित्रं करोषि । हि—यतः, सः—तादृशस्त्वम्, महान् भवसीति शेषः ॥ १ ॥

O Indra, when the Somas are pressed out, thou sanctifiest the sacrificer and the eulogiser, for gaining ever-growing strength ; for mighty is he.—1.

**सा०-भा० ।** अष्टाविंशतिरिन्द्रेति मुख्याः सप्तदशोष्णिहः ।
आद्या दशान्त्या ककुभः पिबेत्यष्टादशी विराट् ॥
तुचे वेत्था ह्यपामीवामित्यादित्यपरिष्टुतिः ।
आगन्त गाव इत्येते मरुतामिन्द्रदेवताः ।
अन्या ऋचोऽभिधीयन्ते ऋषयस्तत्र तत्र हि ॥

हे 'इन्द्र' ! 'सोमेषु सुतेष्व'भिषुतेषु सत्सु तान् पीत्वा 'क्रतुं' कर्मकर्त्तारम् 'उक्थ्यं' स्तोतारं च 'पुनीषे' शोधयसि । यद्वा, सोमेष्वभिषुतेषु उक्थ्यं क्रतुं यागं तैः सोमैः पुनीषे यजमानैः पूतं कारयसि । किमर्थम् ? 'वृधस्य' वर्द्धकस्य 'दक्षस्य' बलस्य 'विदे' लाभाय । 'सः' तादृश इन्द्रः 'महान् हि' महान् खलु ; अत एवं कर्त्तुं शक्नोतीति भावः ॥ १ ॥

१ । ऋ० सं० ८ म० १३ सू० १ ऋ० । ṚV. has (1) **'इन्द्रः'** (Nom.) instead of **'इन्द्र'** (Voc.) ; (2) **'पुनीते'** in the place of **'पुनीषे'** ; (3) **'दक्षसः'** instead of **'दक्षस्य'** । उ० आर्चि० १, २, १२, १ with the above reading.

क्रतुं पुनीषे उक्थ्यम्—Grfth. renders—'thou makest pure thy mind that merits laud' ; but 'thy mind'—is not obtained from the text ; Sāy. explains 'kratum'—'kartāram' (sacrificer), 'ukthyam'—'stotāram' cha (and the praiser), but he admits, as an alternative, the sacrifice called 'ukthya' ('ukthyaṃ yāgam').

---

गोषूक्त्यश्वसूक्तिनावृषी* ।

१ २ ३ १ २र ३ १ २ ३ २
तमु अभि प्र गायत पुरुहूतं पुरुष्टुतम् ।
१ २ ३ १ २ ३ १ २र
इन्द्रं गीर्भिस्तविषमा विवासत ॥ २ ॥ ३८२ ॥

तम् । ऊम् इति । अभि । प्र । गायत । पुरुऽहूतम् । पुरुऽस्तुतम् । इन्द्रम् । गीऽर्भिः । तविषम् । आ । विवासत ॥ २ ॥

भाष्यसारः । हे स्तोतारः ! यूयं पुरुहूतं पुरुष्टुतं तविषं—महान्तम्, तमु—तमेव, इन्द्रं गीर्भिः—स्तुतिभिः, अभि-प्र-गायत—अभिमुखं प्रकर्षेण स्तुत, आ-विवासत—परिचरत ॥ २ ॥

Sing in praise of him, widely invoked, eulogised by many ; serve the mighty great Indra with hymns.—2.

**सा०-भा० ।** 'पुरुहूतं' बहुभिराहूतं 'पुरुष्टुतं' बहुभिः स्तुतं 'तमु' तमेव 'इन्द्रं' हे स्तोतारः ! 'अभि-प्र-गायत' अभिमुखं प्रकर्षेण स्तुध्वम् । एतदेव स्पष्टयति, 'तविषं' महान्तम् इन्द्रं 'गीर्भिः' वाग्भिः 'आ-विवासत' परिचरत ॥ २ ॥

२ । ऋ० सं० ८ म० १५ सू० १ ऋ० ।

पुरुहूतम्—whom many men invoke—Grfth. Cf. 'उग्रो यः शम्बः (thunder) पुरुहूत तेन', ṚV. x. 42. 7 ; AV. 20. 89. 7 ; 'वृक्षस्य नु ते पुरुहूत वयाः'—of thee like the branches of a tree, O widely-invoked one, ṚV. vi. 24. 3 ; 'प्रावन्वाणीः पुरुहूत धमन्तीः', ib. iii. 30. 10.

तविषम्—a synonym of महत् (great)—Ngh. 3. 3. 'Potent'—Grfth. ; 'powerful'—Wils.

आ-विवासत—attend, विवासतिः परिचर्यायाम्—the verb 'vivasati' means to attend, Nir. 11. 23. Cf. 'दक्षस्य वाऽदिते...राजाना मित्रावरुणा विवाससि'—O Aditi, thou attendest on the two kings Mitra and Varuṇa, ṚV. x. 64. 5, Bṛh. D. vii. 104 ; 'हविष्माँ आविवासति'—rich in oblations, he attends upon (gods)—ṚV. i. 12. 9 ; SV. 2. 196 ; VS. 6. 23.

* 'गोषूक्तो वाश्वसूक्तो वा आत्मीयान् ऋत्विज आह'—*Vivaraṇa.*

गोषूक्त्यश्वसूक्तिनावृषी ।

२ ३ १ २ ३ १ २ २ १ २ ३ २
तं ते मदं गृणीमसि वृषणं पृत्सु सासहिम् ।
३ १ २ ३ १ २
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ ३ ॥ ३८३ ॥

तम् । ते । मदम् । गृणीमसि । वृषणम् । पृक्षु । सासहिम् । ऊम् इति । लोकऽकृत्नुम् । अद्रिऽवः । हरिऽश्रियम् ॥ ३ ॥

भाष्यसारः । **अद्रिवः—हे वज्रधर ! वयं वृषणम्—अभिलाषवर्षकम्, पृत्सु—युद्धेषु, सासहिं—शत्रुं जिष्णुम्, लोककृत्नुं—भुवनस्य कर्त्तारम्, हरिश्रियं—निजाश्वैः सेव्यमानम्, तं—प्रसिद्धम्, ते मदं—तव सोमपानजन्यं हर्षम्, गृणीमसि उ—गृणीमः, स्तुमः । सोमपानप्रीतं तत्तत्कर्मकरं तं प्रशंसाम इत्याशयः ॥ ३ ॥**

O thunderer, we sing the praise of thy exhilaration, the showerer of blessings, the vanquisher of enemies in battle, the maker of the world, to be served by (thy) horses.—3.

**सा० भा० ।** हे 'अद्रिवः' वज्रवन्निन्द्र ! 'ते' त्वदीयं 'तं' 'मदं' सोमपानजनितं हर्षं 'गृणीमसि' गृणीमः, प्रशंसामः, गॄ शब्दे क्र्यादिः, "प्वादीनां ह्रस्वः" ( ७, ४, ८० ), "इदन्तो मसि" ( ७, १, ४६ ) इति मस इकारागमः । कीदृशम् ? 'वृषणं' वर्षितारं कामानाम् । 'पृत्सु' वैरिसम्पर्कजनितेषु संग्रामेषु । अत एव बह्वृचाः पृत्स्वियिति पठन्ति । पृत्सु समत्स्विति संग्रामनामसु ( नि० २,१७,२१ ; २२ ) पठितम् । 'सासहिं' शत्रूणामभिभवितारं 'लोककृत्नुं' लोकस्य स्थानस्य कर्त्तारं 'हरिश्रियं' हरिभ्यामश्वाभ्यां श्रयणीयं सेव्यम् । 'उ'-शब्दः सर्वेषां समुच्चये, पादपूरणे वा ॥ ३ ॥

३ । ऋ० सं० ८ म० १५ सू० ४ ऋ० । Ṛ.V. reads **'पृतसु'** instead of **'पृत्सु'** mg. the same (in the battles).

मदम्—the rapture caused by draughts of Soma juice which inspire Indra.

पृत्सु—the same as पृतसु, *vide*, Nir. ii. 17. 21 ; and Ṛ.V. viii. 15. 4.

सासहिम्—rt. सह् to subdue, यङ्लुक्, अभ्यासदीर्घ by Pāṇ. vi. 1. 7.

लोककृत्नुम्—this seems to mean according to Sāyaṇa, 'the provider of a place for his worshipper'.

अद्रिवः—O thunderer, for अद्रिवन् voc. of अद्रिवत्.

हरिश्रियम्—'glorious with thy steeds'—Wils.; 'which shines like gold'—Grfth.

---

पर्वत ऋषिः ।

१ २र ३ १ २ ३ १ २ ३ २ ३ २
यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये ।
१ २ ३ २ ३ १ २ ३ १ २र
यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ ४ ॥ ३८४ ॥

यत् । सोमम् । इन्द्र । विष्णवि । यत् । वा । घ । त्रिते । आप्त्ये । यत् । वा । मरुत्ऽसु । मन्दसे । सम् । इन्दुऽभिः ॥ ४ ॥

भाष्यसारः। हे इन्द्र ! यत्—यदि, विष्णवि—विष्णौ यज्ञान्तरे सोमपानार्थमागते, यद्वा—यदि वा, आप्त्ये त्रिते—अपां पुत्रस्य त्रितस्य यज्ञे, सोमं पिबसि, यद् वा—किं वा, मरुत्सु—यागान्तरे मरुत्स्वागतेषु, तैः सार्द्धम्, मन्दसे—सोमपानेन माद्यसि, तथापि इन्दुभिः—अस्मदीयैः सोमैः, सम्यक् माद्य, प्रीतिं लभस्वेत्यर्थः ॥ ४ ॥

As thou drinkest the Soma along with Viṣṇu, or when offered by Trita, the son of the waters, or together with the Maruts, so now be exhilarated by our libations of the Soma juice.—4.

**सा०-भा०।** हे 'इन्द्र'! 'विष्णवि' विष्णौ सोमपानार्थमागते सति अन्यदीये यागे सोमं 'यद्' यदि तेन विष्णुना सार्द्धं पिबसि। 'यद्वा' यदि वा 'आप्त्ये' अपाम्पुत्रे 'त्रिते' एतत्संज्ञके राजर्षौ यजमाने 'सोमं' पिबसि, घेति पूरणम्, 'यद्वा' यदि च 'मरुत्सु' च सोमपानायागतेषु अन्यदीये यज्ञे 'मन्दसे' माद्यसि, तथाप्यस्मदीयैरेव 'इन्दुभिः' सोमैः सम्यक् माद्य ॥ ४ ॥

४। ऋ० सं० ८ म० १२ सू० १६ ऋ०।

विष्णवि—विष्णु + ङि, Cf. 'ह्रस्वस्य गुणः', Pāṇ. vii. 3. 108, 'जसि च', Pāṇ. vii. 3. 109 "जसादिषु छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः"—Kātyāyana. *Vivaraṇa* explains it otherwise—"सप्तम्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्, मरुद्भिश्च तृतीया, विष्णुना सह"।

---

विश्वमना वैयश्व ऋषिः ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
एदु मधोर्मदिन्तरं सिञ्चाध्वर्यो अन्धसः ।
३ २उ ३ १ २र ३ १ २
एवा हि वीरस्तवते सदावृधः ॥ ५ ॥३८५॥

आ । इत् । ऊम् इति । मधोः । मदिन्ऽतरम् । सिञ्च । अध्वर्यो इति । अन्धसः । एव । हि । वीरः । स्तवते । सदाऽवृधः ॥ ५ ॥

भाष्यसारः । हे अध्वर्यो ! त्वं मधोः अन्धसः—मादकस्यान्नस्य, मदिन्तरम्—सातिशयं मदजनकं सोमम्, आ-सिञ्च—इन्द्रार्थं सम्यक् स्रावय । हि—यतः, सदावृधः—नित्यवर्द्धिष्णुः, वीरः—इन्द्रः, स्तवते एव—निश्चितं स्तूयते ॥ ५ ॥

Offer, O Adhvaryu, the most hilarous potion of the sweet Soma juice (to Indra) ; for he alone, the evergrowing hero, is praised (by hymns).—5.

**सा०-भा०।** हे 'अध्वर्यो' अध्वरस्य नेतः ऋत्विक् ! 'मधोः' मदकरस्य 'अन्धसः' सोमलक्षणस्यान्नस्य 'मदिन्तरम्' अत्यर्थं मादयितृतमं सोमरसमेव 'आ-सिञ्च' इन्द्रार्थमभिक्षर । 'इदु' इत्यवधारणे । 'वीरः' समर्थः 'सदावृधः' सर्वदा हविर्भिर्वर्द्धनीयः । यद्वा, सर्वदा सबलस्य वर्द्धकोऽयमेवेन्द्रः 'स्तवते हि' स्तोत्रशस्त्रादिभिः स्तूयते खलु ; स्तुतायेन्द्राय सोमो दातव्यः तस्मादासिञ्चेति समन्वयः ॥ ५ ॥

५ । ऋ० सं० ८ म० २४ सू० १६ ऋ० ।

अध्वर्यो—vide f. n. on SV. 1. 360.

स्तवते—for स्तूयते by ved. anom. Pāṇ. iii. 1. 85.

इत्—उ—"इत्"-"उ" द्वावपि पदपूरणौ—*Vivaraṇa*. Vide, Ngh. 1. 9.

---

विश्वमना वैयश्व ऋषिः ।

२ ३ १ २ ३ १ २ ३ १ २र
एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
१ २र ३ २
प्र राधांसि चोदयते महित्वना ॥ ६ ॥३८६॥

आ। इन्दुम्। इन्द्राय। सिञ्चत। पिबाति। सोम्यम्। मधु। प्र। राधांसि। चोदयते। महिऽत्वना॥ ६॥

भाष्यसारः। **हे ऋत्विजः! यूयम् इन्द्राय, इन्दुम्—सोमम्, आ-सिञ्चत—सम्यक् अभिषुणुत। सोऽपि सोम्यं मधु—सोममयं मदकरमन्नम्, पिबाति—पिबतु, ततः महित्वना—स्वमाहात्म्येन, राधांसि—अन्नानि, प्र-चोदयते—प्रयच्छतु स्तोतृभ्य इति शेषः॥ ६॥**

Pour out the Soma juice for Indra, let him drink the sweet Soma; he, through his majesty, sends to the worshippers abundant food with wealth.—6.

**सा०-भा०।** हे ऋत्विजः! **'इन्दुम्' स्यन्दनशीलं सोमम् 'इन्द्राय' इन्द्रार्थम् 'आ-सिञ्चत' आभिमुख्येन प्रत्याहारयत, आग्रयणद्रव्येण सेचनं कुरुत तमभिषुणुतेत्यर्थः। ततः 'सोम्यं' सोममयं 'मधु' मदकरं सोमरसं 'पिबाति' पिबतु। पीत्वा च स इन्द्रः 'महित्वना' स्वमहत्त्वेनैव 'राधांसि' अन्नानि स्तोतृभ्यः 'प्र-चोदयते' प्रकर्षेण चोदयतु॥ ६॥**

६। **ऋ० सं० ८ म० २४ सू० १३ ऋ०।** ṚV. has (1) **'राधसा'** for **'राधांसि'**; **'चोदय ते'** (two separate words, the verb being in imp.) for **'चोदयते'** (the single word, the finite verb). **उ० आर्चि० ७, १, ५, १।**

इन्दुम्—vide Yāska, "इन्दुरिन्धेरुनत्तेर्वेति"—Nir. x. 41. Here the root is उन्द् (उन्दी क्लेदने).

पिबाति—let him drink, rt. पा—लेट् (Ved. Subj.) 3. sg.

---

**विश्वमना वैयश्व ऋषिः।**

२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
**एतो न्विन्द्रं स्तवाम सखायस्तोम्यं नरम्।**
३ १ २र ३ २उ ३ २
**कृष्टीर्यो विश्वा अभ्यस्त्येक इत्॥ ७॥३८७॥**

एतो इति। नु। इन्द्रम्। स्तवाम। सखायः। स्तोम्यम्। नरम्। कृष्टीः। यः। विश्वाः। अभि। अस्ति। एकः। इत्॥ ७॥

भाष्यसारः । सखायः—हे मित्ररूपा ऋत्विजः! यूयं नु—शीघ्रम्, एत उ—आगच्छत एव। यतः यः एकः इत्—एकक एव, विश्वाः—समग्राः, कृष्टीः—शत्रुसेनाः, अभ्यस्ति—अभिभवति, तं स्तोम्यम्—स्तवार्हम्, नरम्—निखिलनायकम् इन्द्रम्, स्तवाम—स्तवैः वन्दामहै ॥ ७ ॥

Come friends, let us sing praise to Indra, the laudable leader, who alone subdues all hostile armies.—7.

**सा०-भा०।** हे 'सखायः' समानख्याना मित्रभूता ऋत्विजः! 'नु' क्षिप्रम् 'एतो' आगच्छतैव। किमर्थं तदाह, 'स्तोम्यं' स्तोमार्हं 'नरं' सर्वस्य नेतारं तम् 'इन्द्रं' 'स्तवाम' स्तोत्रं करवाम, 'यः' इन्द्रः 'एक इत्' एकाकी, असहाय एव सन् 'विश्वाः' सर्वाः 'कृष्टीः' शत्रुसेनाः 'अभ्यस्ति' अभिभवति, तं स्तवामेति शेषः ॥ ७ ॥

७। ऋ० सं० ८ म० २४ सू० १९ ऋ०।

कृष्टीः—men, the hostile people ; for etym., vide notes on SV. 1. 11.

---

नृमेध ऋषिः।

१ २ ३ १ २ ३ १ २ ३ २ ३ २
**इन्द्राय साम गायत विप्राय बृहते बृहत्।**
३ १ २ ३ १ २ ३ १ २
**ब्रह्मकृते विपश्चिते पनस्यवे ॥ ८ ॥३८८॥**

इन्द्राय। साम। गायत। विप्राय। बृहते। बृहत्। ब्रह्मऽकृते। विपःऽचिते। पनस्यवे ॥ ८ ॥

भाष्यसारः। हे उद्गातारः! यूयं विप्राय—ज्ञानमयाय, बृहते—विश्वात्मने, ब्रह्मकृते—अन्नदायिने मुक्तिदायकाय वा, विपश्चिते—दूरदर्शिने, पनस्यवे—स्तुतिकामिने, इन्द्राय, बृहत्—बृहन्नामकं साम, गायत ॥ ८ ॥

Enchant *Sāman* and *Bṛhat* to Indra, the wise lord of food, who knows all and longs for praise.—8.

**सा०भा०।** हे उद्गातारः! 'विप्राय' मेधाविने 'बृहते' महते 'ब्रह्मकृते' ब्रह्मणः अन्नस्य कर्त्रे 'विपश्चिते' विदुषे 'पनस्यवे' स्तुतिमिच्छते 'इन्द्राय' 'बृहत्' बृहन्नामकं साम 'गायत' पठत ॥ ८ ॥

८। ऋ० सं० ८ म० ९८ सू० १ ऋ०। ṚV. has 'धर्मकृते' for 'ब्रह्मकृते'।

साम—As noticed before, the mention of the Sāman in the Ṛgvedic stanza (rfd. above, viii. 98. 1) shows the simultaneous existence of both the Vedas, if not the priority of the former.

---

गोतम ऋषिः।

२उ ३ २ ३१ २ ३ १ २ २ १ २ ३ १ २
**य एक इद्विदयते वसु मर्त्ताय दाशुषे।**
१ २ ३ १ २ ३ १ २ ३ २
**ईशानो अप्रतिष्कुत इन्द्रो अङ्ग॥ ९ ॥३८९॥**

यः। एकः। इत्। विऽदयते। वसु। मर्त्ताय। दाशुषे। ईशानः। अप्रतिऽष्कुतः। इन्द्रः। अङ्ग॥ ९ ॥

भाष्यसारः। अङ्ग—भो जनाः, किंवा, प्रियमेतत् यत्। 'अङ्ग सम्बोधने हर्षे'। यः एकः इत्—अद्वितीय एव, दाशुषे—हविर्दायिने, मर्त्ताय—मानवाय, वसु—धनम्, विदयते—सविशेषं ददाति, सः इन्द्रः, अप्रतिष्कुतः—अप्रतिकूलः, ईशानः—विश्वेश्वरः, भवतीति शेषः॥ ९ ॥

He, who alone bestows wealth on the mortal sacrificer, who offers him oblation, is Indra, the irresistible lord of all.—9.

**सा०-भा०।** 'यः' इन्द्रः 'एक इत्' एक एव 'दाशुषे' हविर्दत्तवते 'मर्त्ताय' मनुष्याय यजमानाय 'वसु' धनं विदयते विशेषेण ददाति। अङ्गेति क्षिप्रनाम, 'अप्रतिष्कुतः' परैरप्रतिशब्दितः प्रतिकूलशब्दरहित इत्यर्थः, एवम्भूतः स 'इन्द्रः' क्षिप्रम् 'ईशानः' सर्वस्य जगतः स्वामी भवति॥ ९ ॥

९। ऋ० सं० १ म० ८४ सू० ७ ऋ०।

विदयते—fr. rt. दयदानगतिरक्षणहिंसाऽऽदानेषु—here, to give.

अप्रतिष्कुतः—unopposed, unrestrainable—Nir. 6. 16. Sāy. derives the word in his com. on the ṚV. verse.—कु शब्दे प्रतिकूलं कुयते शब्दाते इति प्रतिष्कुतः पारस्करादेराकृतिगणत्वात् सुट्। सुषामादित्वात् षत्वम्। See SV. 1. 179.

दाशुषे—rt. दाशृ ( दाने, to give )—aff. क्वसु, Pāṇ. vi. 1. 12.

अङ्ग—an indec. used in address.

---

विश्वमना ऋषिः ।

१ २ ३ १ २ ३ १ २र ३ १ २
सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे ।
३ २ ३ २ ३ १ २ ३ १ २
स्तुष ऊ षु वो नृतमाय धृष्णवे ॥ १० ॥३९०॥

सखायः । आ । शिषामहे । ब्रह्म । इन्द्राय । वज्रिणे । स्तुषे । ऊँ इति । सु । वः । नृऽतमाय । धृष्णवे ॥ १० ॥

भाष्यसारः । सखायः—हे मित्ररूपा ऋत्विजः ! वयं वज्रिणे—वज्रधराय, नृतमाय—नेतृश्रेष्ठाय, धृष्णवे—शत्रुशासकाय, इन्द्राय, ब्रह्म—स्तोत्रं हवीरूपमन्नं वा, आ-शिषामहे—आशास्महे, इन्द्रं स्तोतुं हविर्दातुं वेच्छामः इत्यर्थः । अहञ्च वः—युष्मदर्थम्, स्तुषे—इन्द्रं सुष्ठु स्तौमि ॥ १० ॥

Friends, let us address our hymn to Indra, the thunderer; for you, I glorify the chief leader of all, the destroyer of enemies.— 10.

**सा०-भा० ।** 'सखायः' मित्रभूता हे ऋत्विजः ! 'वज्रिणे' वज्रहस्तायेन्द्राय 'ब्रह्म' स्तोत्रम् 'आ-शिषामहे' वयमाशास्महे च । यद्वा, ब्रह्म अस्माभिर्दीयमानं हवीरूपमन्नम् आशास्मः । शासु अनुशिष्टौ ( अदा० प० ) । व्यत्ययेनात्मनेपदम् ( ३,१,८५ ) । अत एव "आ शिषामहि" इति बह्वृचा आमनन्ति, तत्र 'वः' सर्वेषामेव युष्माकमर्थाय 'नृतमाय' सर्वेषां नेतृतमाय, यद्वा संग्रामेषु आयुधानां नेतृतमाय, 'धृष्णवे' शत्रूणां धर्षणशीलाय तस्मै इन्द्राय अहमेव 'सुस्तुषे' सुष्ठु स्तौमि ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
चतुर्थस्याध्यायस्य चतुर्थः खण्डः । चतुर्थप्रपाठकस्य च द्वितीयार्द्धे पञ्चमी दशतिः ॥

चतुर्थः प्रपाठकः समाप्तः ।

१० । ऋ० सं० ८ म० २४ सू० १ ऋ० । Ṛ.V. reads **'आ शिषामहि'** instead of **'आ शिषामहे'** ।

सु स्तुषे—vide Pāṇ. viii. 3. 107.

अथ चतुर्थाध्यायस्य पञ्चमः खण्डः। पञ्चमप्रपाठकस्य च प्रथमार्द्धे प्रथमा दशतिः।

प्रगाथ ऋषिः। उष्णिक् छन्दः* ।

३ १ २र ३ १ २ ३ २ ३ १ २
गृणे तदिन्द्र ते शव उपमं देवतातये ।
१ २र ३ १ २र
यद्धंसि वृत्रमोजसा शचीपते ॥ १ ॥३९१॥

गृणे । तत् । इन्द्र । ते । शवः । उपऽमम् । देवऽतातये । यत् । हंसि । वृत्रम् । ओजसा । शचीऽपते ॥ १ ॥

भाष्यसारः। शचीपते—हे कर्मणां नेतः! इन्द्र! यत्—यस्मात्, वृत्रम्—दानवविशेषं शत्रुं वा, ओजसा—तेजसा, हंसि—नाशयसि, तत्—तस्मात्, ते—तव, शवः—तेजः, देवतातये—यज्ञार्थम्, उपमम्—समीपे, गृणे—स्तौमि ॥ १ ॥

O Indra, I glorify thy might in the sacrifice, as thou, O lord of might, slayest Vṛtra with might.—1.

**सा०-भा०।** हे 'इन्द्र!' 'ते' तव 'तच्छवो' बलम् 'उपमम्' अन्तिकं 'देवतातये' यजमानाय यज्ञार्थं वा, 'गृणे' स्तुवे। 'यद्' यस्मात् हे 'शचीपते!' 'वृत्रम्' 'ओजसा' बलेन 'हंसि' तस्मात् ते शवो गृणे इति सम्बन्धः ॥ १ ॥

१। ऋ० सं० ८म० ६२ सू० ८ ऋ०। The Ṛ̣V. has addl. words after 'शचीपते' e. g., 'भद्रा इन्द्रस्य रातयः'। All the verses of the Ṛ̣V. hymn rfrd. above, end with this addl. portion.

शव:—strength, might, *vide* notes on SV. I. 166. *See* शवसस्पतिः, I. 248.

'उपमम्—indec., near ; 'उपमे' is read amongst the syns. of अन्तिक (near)—Ngh. 2. 16. *Viv.* has taken उपमाम् to mean—the standard of comparison of all powers, so the best or the most powerful ( सर्वबलानामुपमाभूतम् अन्यम्योत्कृष्टमित्यर्थः ).

* The metre of the verses 1-7 is Uṣṇih, which has three pādas containing altogether 28 syllables (8 + 8 + 12) ; the first two pādas are treated as a hemistich.

देवतातये—for the sacrifice, or in the sacrifice ; *vide* notes on the word, SV. I. 249. 'देवताता'—is found among the syns. of यज्ञ, Ngh. 3. 17.

शचीपते voc.—lord of rite, or lord of strength, *vide* notes on SV. I. 253, also on शचीभिः and शचीवस्, 1. 287.

———

भरद्वाज ऋषिः।

२ ३ १ २र ३ २ ३ १ २ ३ १ २
**यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयन्।**
३ १ २र ३ १ २र
**अयं स सोम इन्द्र ते सुतः पिब ॥ २ ॥३९२॥**

यस्य। त्यत्। शम्बरम्। मदे। दिवःऽदासाय। रन्धयन्। अयम्। सः। सोमः। इन्द्र। ते। सुतः। पिब ॥ २ ॥

भाष्यसारः। **हे इन्द्र ! त्वं यस्य मदे—पानजन्ये हर्षे सति, दिवोदासाय—दिवोदासार्थं तदाख्यं राजानमनुग्रहीतुमित्यर्थः, त्यत्—प्रसिद्धम्, शम्बरम्—तदाख्यमसुरम्, रन्धयन्—निहन्ता भवसि, अयं स सोमः, ते—त्वदर्थम्, सुतः—अभिषुतः प्रस्तुतस्तिष्ठति। अतः पिब तं सोममिति शेषः ॥ २ ॥**

The Soma, in the wild rapture of which thou, it is known, hast slain Śambara on behalf of Divodāsa, has been pressed out, Indra, for thee ; drink of it.—2.

**सा०-भा०।** हे इन्द्र ! त्वं 'यस्य' सोमस्य 'मदे' पानेन जनिते हर्षे सति 'शम्बरम्' असुरं 'दिवोदासाय' राज्ञे 'रन्धयन्', रध हिंसासंराद्ध्योः, हन्ता भवसि, 'त्यदि'ति क्रियाविशेषणम्, 'तत्' प्रसिद्धं यथा भवति तथा हे 'इन्द्र !' 'सः' 'अयं' 'सोमः' 'ते' त्वदर्थं 'सुतः' अभिषुतः। अत एव त्वं 'पिब' ॥ २ ॥

२। ऋ० सं० ६ म० ४३ सू० १ ऋ०।

शम्बरम्—The name of this demon occurs several times in the ṚV. He is mentioned along with other demons, e. g., *Suṣṇa*, *Pipru* (i. 101. 2, etc.) and *Varcin*. Indra, with the help of the Maruts fought with Śambara, iii. 47. 4 ; when Indra cut down Śambara, the summit of heaven shook, i. 54. 4; he found Śambara dwelling in the mountains—'यः शम्बरं पर्वतेषु क्षियन्तम्', ii. 12. 11 ; he struck him down from the mountain, i. 130. 7 ; iv. 30. 14 ; here he is called Dāsa Śambara, the son of Kulitara—उत दासं कौलितरं पर्वतादधि। अवाहन्निन्द्र

शम्बरम् ; vii. 18. 20, here he is said to think himself a little god ( देवकं चिन्मान्यमानं जघन्य···शम्बरम् ; he had forts the number of which is mentioned in i. 130. 7, as ninety, as ninety-nine in ii. 19. 6 etc., and as a hundred in ii. 14. 6 etc. Indra vanquishes Śambara in the interest of Atithigva (i. 51. 6) or of Divodāsa, both referring to the same person.

दिवोदासाय—A king of important personality, often mentioned in the ṚV. *See*—i. 112. 14 ;—116. 18 ;—119. 4 ;—130. 7 ; ii. 19. 6 ; iv. 26. 3 ;—30. 20 ; vi. 16. 59 ;—26. 5 ;—31. 4 ;—61. 1 ; vii. 18. 25 ; ix. 61. 2. etc. He is also well-known in the Puranic traditions (*see* Viṣṇupurāṇa). But no mention is there found of his war with Asura Śambara. In the defence of this prince, it is described in the ṚV., Indra is said to have destroyed Śambara, i. 51. 6. He is also named *Atithigva* which seems to be his epithet, meaning the cherisher of guests, the hospitable.

रन्धयन्—fr. rt. रध् to kill, to slay, to destroy ; *see* also ṚV. i. 50.13 ;—51.9.

---

नृमेध ऋषिः ।

१ २ ३ १ २
एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।
३ २उ ३ १ २ ३ १ २र ३ २
गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ ३ ॥३६३॥

आ । इन्द्र । नः । गधि । प्रिय । सत्राऽजित् । अऽगोह्य । गिरिः । न । विश्वतः । पृथुः । पतिः । दिवः ॥ ३ ॥

भाष्यसारः । हे प्रिय, सत्राजित्—सर्वजयिन्, अगोह्य—अन्यैरजय्य, इन्द्र ! गिरिर्न—पर्वत इव, विश्वतः—सर्वेभ्यः, पृथुः—गरीयान्, दिवः—स्वर्गस्य, पतिः, त्वं नः—अस्मान्, आ-गधि—आगच्छ ॥ ३ ॥

Indra, great in every way, like a mountain, lord of heaven, all-conquering, self-revealing, dear to all, come to us.—3.

सा०-भा० । हे 'प्रिय' सर्वेषां प्रियतम ! हे 'सत्राजित्' महतां शत्रूणां जेतः ! हे 'अगोह्य' केनापि तिरस्कर्त्तुमशक्य 'इन्द्र' ! 'गिरिर्न' पर्वत इव 'विश्वतः' सर्वतः 'पृथुः' पृथुतमः 'दिवः' स्वर्गस्य 'पतिः' ईश्वरश्च त्वं 'नो'ऽस्मात् 'आ-गधि' आगच्छ ॥ ३ ॥

३। ऋ० सं० ८ म० ६८ सू० ४ ऋ०। ṚV. has 'प्रियः', 'सत्राजित्' and 'अगोह्यः' in nom. instead of in voc. in the SV. उ० आर्चि० ५,२,११,१।

आ-गधि—आगच्छ, come; हि (imp. 2. sg. term.) is changed to धि, Pāṇ. vi. 4. 103.

सत्राजित्—ever-conquering, *vide* our notes on the word, SV. I. 231; सत्राजितः—SV. I. 251.

अगोह्य—अगूहनीय, not to be hidden, self-manifesting—Nir. 11. 16, where it is taken as a name of the sun; this word occurs only in this verse in the Sāmaveda, but is met with several times in the ṚV., see i. 161. 11; 13, where Sāyaṇa explains the word as 'agrahaṇīya', unapprehensible, unapproachable. See also i. 110. 3; iv. 33. 7; viii. 98. 4; x. 64. 3; here in the above verse Sāyaṇa explains the word differently viz., तिरस्कर्त्तुमशक्यम्—insuperable, invincible; 'whom none can conceal'—Wils.

गिरिर्न—like a mountain, न=like; vide, रथं न, SV. I. 5; अश्वं न, I. 17; द्यौर्न, I. 166.

---

काण्वः पर्वत ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
य इन्द्र सोमपातमो मदः शविष्ठ चेतति।
२ ३ २ ३ २ २ ३ १ २
येना हंसि न्यऽत्रिणं तमीमहे ॥ ४ ॥३९४॥

यः। इन्द्र। सोमपाऽतमः। मदः। शविष्ठ। चेतति। येन। हंसि। नि। अत्रिणम्। तम्। ईमहे ॥ ४ ॥

भाष्यसारः। शविष्ठ—हे बलिष्ठ, इन्द्र! त्वं सोमपातमः—सोमपानां श्रेष्ठः असि। ईदृशस्य तव यः मदः—सोमपानजन्यः हर्षः, चेतति—चेतनां लभते प्रकटीभवतीत्यर्थः, येन—मदेन, अत्रिणम्—राक्षसादिकम्, नि-हंसि—विनाशयसि, तम्—मदम्, ईमहे—ईयामहे स्तुतिभिरुपगच्छामः, स्तुमः इत्यर्थः ॥ ४ ॥

O most mighty Indra, the best drinker of the Soma, we solicit thee as possessing that exhilaration, which contemplates heroic deeds, by which thou slayest the devourer of men i. e., the demon or Rākṣasa.—4.

**सा०-भा० ।** हे 'इन्द्र' ! 'यः' त्वं 'सोमपातमः' अतिशयेन सोमस्य पाता हे 'शविष्ठ'! बलवत्तम ! शव इति बलनाम ( नै० २,९,३ ) तस्माद्विनन्ताद्रातिशयनिक इष्ठन् ( ५,३,५५ ), विन्मतोर्लुक्, टिलोपः, हे ईदृशेन्द्र ! तस्य तव सोमपानजनितो 'यो' 'मदः' 'चेतति' सम्यग् जानाति वृत्रवधादीनि कार्याणि कर्त्तुम् । 'य'इत्यस्य 'चेतती'त्यनेनापि सम्बन्धाद् "यद्वृत्तान्नित्यम्" ( ८,१,६६ ) इति तिङ् न निहन्यते । अथवैतदेवं वाक्यम्, हे बलवत्तमेन्द्र ! सोमपातमः सोमस्य पातृतमो यस्त्वं मदः सोमैर्मादयितव्यस्तर्पयितव्यः सन् चेतति । पुरुषव्यत्ययः ( ३,१,८५ ), चेतसि सम्यग् जानासि । "मदोऽनुपसर्गे" (३,३,६६) इति मदेः कर्मण्यप् प्रत्ययः । 'येन' सोमपान-जनितेन मदेन 'अत्रिणम्' अत्तारं राक्षसादिकं 'नि-हंसि' नि-हिनस्सि निकृष्टां हिंसां प्रापयसि 'तं' मदं तादृङ्मदोपेतं त्वां वा 'ईमहे', याच्ञाकर्मायम् ( नि० ३,१९,१ ), याचामहे । यद्वा, ई गतौ दैवादिकः (प०) । छान्दसो विकरणस्य लुक् ( २,४,७३ ) । ईयामहे उपगच्छामः स्तुतिभिः सम्भजामहे इत्यर्थः ॥ ४ ॥

४ । ऋ० सं० ८ म० १२ सू० १ ऋ० ।

शविष्ठ—most powerful ; vide notes on the word, SV. I. 247.

अत्रिणम्—devourer, demon or Rākṣasa, fr. rt. अद् *to eat.* Vide our notes, SV. I. 22 ; occurs also in SV. I. 113.

ईमहे—we solicit, Ngh. 3. 19, or for ईयामहे, we approach with praise ; for gram., see com., above.

———

*इरिमिठिर्ऋषिः ।

३ १ २र ३ २उ ३ १ २ ३ १ २ ३ १ २
तुचे तुनाय तत्सु नो द्राघीय आयुर्जीवसे ।
१ २ ३ १ २
आदित्यासः सुमहसः कृणोतन ॥ ५ ॥३९५॥

तुचे । तुनाय । तत् । सु । नः । द्राघीयः । आयुः । जीवसे । आदि-त्यासः । सुऽमहसः । कृणोतन ॥ ५ ॥

भाष्यसारः । **सुमहसः**—हे महातेजसः, **आदित्यासः**—अदितिसुताः, देवाः ! **नः**—अस्माकम्, **तुचे**—पुत्रार्थम्, **तुनाय**—पौत्रार्थम्, **जीवसे**—जीवनार्थम् च, **तत्**—

* 'इतिमिठिर्ऋषिः'—*Vivaraṇa.*

विख्यातम्, द्राघीयः—दीर्घतरम्, आयुः, सु—सुष्ठु, कृणोतन—यूयं कुरुत ॥ ५ ॥

Mighty, resplendent Ādityas, grant to us, our sons and grandsons, long life to enjoy.—5.

**सा०-भा० ।** हे 'सुमहसः' शोभनतेजस्काः! हे 'आदित्यासः' अदितेः पुत्राः! 'नोऽस्माकं 'तुचे' पुत्राय 'तुनाय', तनोतेर्लुक्। तनोति कुलमिति तुनः पौत्रः। उकारोपजनश्छान्दसः। अत एव बह्वृचाः "तनाय" इति पठन्ति। तस्मै तुनाय पौत्राय च 'जीवसे' जीवनाय 'द्राघीयो' दीर्घतमं 'तत्' प्रसिद्धम् 'आयुः' जीवितं 'सु' सुष्ठु 'कृणोतन' कुरुत ॥ ५ ॥

५। ऋ० सं० ८ म० १८ सू० १८ ऋ०। R̥V. reads **'तनाय'** instead of **'तुनाय'** the SV. reading both mg. the same (the grandson).

तुचे—तुक् ( from the base तुच् ) is a syn. of अपत्य (son), Ngh. 2. 2; occurs only in the dat. form; see also, SV. I. 41.

तुनाय—fr. rt. तन्, *to spread*, *to extend*; the archaic form of 'तनाय' (the later modified R̥V. reading).

जीवसे—जीवितुम्, an instance of Ved. inf., Pāṇ. iii. 4. 9.

कृणोतन—for कुरुत, imp. 2. pl., तनप् by 'तप्-तनप्-तन-थनाश्च', Pāṇ. vii. 1. 45; guṇa takes place owing to the elision of प् in the suffix ( पित्त्वात् ङित्त्वाभावः, ततः गुणः ).

---

विश्वमना ऋषिः।

२ ३ १ २र ३ १ २ ३ १ २
वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम्।
१ २ ३ १ २ ३ १ २
अहरहः शुन्ध्युः परिपदामिव ॥ ६ ॥ ३९६ ॥

वेत्थ। हि। निःऽऋतीनाम्। वज्रऽहस्त। परिऽवृजम्। अहःऽअहः। शुन्ध्युः। परिपदाम्ऽइव ॥ ६ ॥

भाष्यसारः। **वज्रहस्त—हे धृतवज्र, इन्द्र! त्वं निर्ऋतीनाम्—उत्पातकारिणां राक्षसादीनाम्, परिवृजम्—विताडनम्, अहरहः—प्रतिदिनम्, परिपदाम्—दिशि दिशि धावतां पक्षिणाम्, परिवृजम् स्थानवर्जनम्, शुन्ध्युः—सूर्य इव, वेत्थ हि—जानासि खलु। सूर्ये समुदिते यथा पक्षिणः नीडं त्यक्त्वा प्रतिदिशं धावन्ति तथा त्वयि प्रभवति रिपवः स्वस्थानं विहाय सर्वतः गच्छन्ति इत्यर्थः ॥ ६ ॥**

Thou knowest, Indra with thunder in nand, the way of dispelling the evil spirits (the destructive Rākṣasas), as the purifying sun knows, day by day, the movements of the birds flying on all sides.—6.

**सा०-भा० ।** इदानीमृषिरिन्द्रं सम्बोध्याह । हे 'वज्रहस्त' वज्रयुक्तहस्तेन्द्र 'निर्ऋतीनाम्' उपद्रवकारिणां रक्षसां 'परिवृजं' परिवर्जनम्, हिरवधारणे, त्वमेव 'वेत्थ' जानीषे । तत्र दृष्टान्तः, 'अहरहः' 'शुन्ध्युः', अस्मिन्नुदिते सति ब्राह्मणा आत्मीयं कर्म कृत्वा शुद्धा भवन्तीति शोधनहेतुत्वाच्छुन्ध्युरादित्यः । आदित्यः 'परिपदामिव' परितः पद्यमानानां यजमानानाम् । यद्वा, परितः पततां पक्षिणां वर्जनं स्वस्थानत्यागम् 'अहरहः' प्रतिदिनं यथा वेत्ति । उदिते सूर्ये पक्षिणः स्वस्थानं परित्यज्य सर्वतो गच्छन्ति खलु । एवं त्वयीन्द्रे स्वबलेन प्रकाशमाने सति शत्रवः स्वपुराणि त्यक्त्वा पलायन्त इत्यर्थः ॥ ६ ॥

६ । ऋ० सं० ८ म० २४ सू० २४ ऋ० ।

निर्ऋतीनाम्—the Rākṣasas, the evil beings, the sources of calamities ; 'ऋच्छतेः कृच्छ्रापत्तिर्निर्ऋतिः', it means the fall of calamity fr. rt. ऋ *to befall*,—Nir. 2. 7.

शुन्ध्युः—the sun ; शुन्ध्युरादित्यो भवति, शोधनात्, "Śundhyuḥ" is a name of the sun, so called from his purifying nature,—Nir. 4. 16 ; cf. 'उपो अदर्शि शुन्ध्युवो न वक्षः', she appears like the breast of the illuminator (the sun), Ṛ.V. i. 124. 4.

———

इरिमिठिर्ऋषिः । उष्णिक् छन्दः ।

१ २र ३ २ ३ २ ३ १ २ ३ २
अपामीवामप स्रिधमप सेधत दुर्मतिम् ।
१ २ ३ १ २ ३ १ २
आदित्यासो युयोतना नो अंहसः ॥ ७ ॥ ३९७ ॥

अप । अमीवाम् । अप । स्रिधम् । अप । सेधत । दुःऽमतिम् । आदित्यासः । युयोतन । नः । अंहसः ॥ ७ ॥

भाष्यसारः । आदित्यासः—हे आदित्याः, देवाः ! नः—अस्माकम्, अमीवाम्—व्याधिम्, अप-सेधत—निवारयत, स्रिधम्—बाधमानं रिपुम्, अप—अपसेधत, दुर्मतिम् अप—अपसेधत, तथा नः—अस्मान्, अंहसः—पापात्, युयोतन—वियोजयत, पापमुक्तान् कुरुतेत्यर्थः ॥ ७ ॥

O Ādityas, drive away (our) diseases, enemies and malignity, liberate us from sin.—7.

**सा०-भा० ।** हे 'आदित्यासः' आदित्याः ! 'अमीवां' रोगम् 'अपसेधत' अस्मत्तोऽपगमयत । 'स्रिधं' बाधकं शत्रुं च अपसेधत । 'दुर्मतिम्' अस्माकं दुःखस्य मन्तारञ्च अपसेधत । अपि च, हे आदित्याः ! 'नो'ऽस्मान् 'अंहसः' पापात् 'युयोतन' पृथक्कुरुत ॥ ७ ॥

७ । ऋ० सं० ८ म० १८ सू० १० ऋ० ।

अमीवाम्—disease ; for dr. and etym. vide notes on अमीव-चातनम्, SV. I. 32 ; rt. अम् *to ail*, 3. u.—aff. वन् anom. formed.

अप-सेधत—remove.

स्रिधम्—fr. rt. स्रिध् ( स्रेधति ) ( स्रध् w. r. for स्रिध् AV. ) *to fail*, *err*, *blunder*, Ṛ̣V., means erring, failing, a misbeliever, foe, enemy, Ṛ̣V. ; AV. ; VS. ; it is a feminine base.

युयोतन—sever, keep afar ; 'यौतेर्लोटि छान्दसः शपः श्लुः । तप्तनप्तनथनाश्चेति तस्य तनबादेशः' ।—Sāy.'s addl. notes in his com. on the Ṛ̣V. verse.

---

वशिष्ठ ऋषिः । विराट् छन्दः* ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
**पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।**
३ २ ३ २ ३ १ २ ३ १ २
**सोतुर्बाहुभ्यां सुयतो नार्वा ॥ ८ ॥३९८॥**

पिब । सोमम् । इन्द्र । मन्दतु । त्वा । यम् । ते । सुषाव । हरिऽअश्व । अद्रिः । सोतुः । बाहुऽभ्याम् । सुऽयतः । न । अर्वा ॥ ८ ॥

भाष्यसारः । **हर्यश्व—हे पिङ्गलाश्वयुक्त इन्द्र ! सोमं पिब ! अयं सोमः, त्वा—त्वाम्, मन्दतु—मादयतु । बाहुभ्याम् अर्वा न—रश्मिभ्याम् अश्व इव, सोतुः—सोमसवनकारिणः, बाहुभ्यां सुयतः—सुदृढं गृहीतः, अद्रिः—प्रस्तरः, ते—त्वदर्थम्, सुषाव—सोमं सुतवान् ॥ ८ ॥**

Drink the Soma, Indra, let it exhilarate thee, O lord of *Haris* (the horses), the stone held firmly like a horse by the arms of the presser, has pressed it out, for thee.—8.

---

* The metre of this verse is 'Virāj' consisting of 3 pādas having 11 syllables each (11 × 3).

**सा०-भा० ।** हे 'इन्द्र !' 'सोमं' 'पिब'। स सोमः त्वां 'मन्दतु' मादयतु हे 'हर्यश्व !' 'ते' त्वदर्थं 'सोतुः' अभिषवकर्त्तुः 'बाहुभ्याम् अर्वा न' रश्मिभ्यामश्व इव 'सुयतः' सुष्ठु परिगृहीतः 'अद्रिः' ग्रावाऽयं 'सोमं' 'सुषाव' ॥ ८ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
चतुर्थस्याध्यायस्य पञ्चमः खण्डः । पञ्चमप्रपाठकस्य च प्रथमार्द्धे प्रथमा दशतिः ॥

८ । ऋ० सं० ७ म० २२ सू० १ ऋ० ।

सुयतः—'कथं पिबामि ? उच्यते—सुयतः सुबद्धः इति'—*Vivaraṇa.*

अद्रिः—The *Vivaraṇa* comments—'अद्रिः प्रथमैकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्, अद्रिभिरधिषवभिरित्यर्थः'।

---

अथ चतुर्थाध्यायस्य षष्ठः खण्डः । पञ्चमप्रपाठकस्य च प्रथमार्द्धे द्वितीया दशतिः ।

सौभरिर्ऋषिः । ककुप् छन्दः ।

३ २ ३ १ २र ३ १ २ ३ १ २
अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।
३ १ २ ३ १ २
युधेदापित्वमिच्छसे ॥ १ ॥३९९॥

अभ्रातृव्यः । अनाः । त्वम् । अनापिः । इन्द्र । जनुषा । सनात् । असि । युधा । इत् । आपित्वम् । इच्छसे ॥ १ ॥

भाष्यसारः । हे इन्द्र ! त्वम् जनुषा—जन्मना, सनात्—चिरम्, अभ्रातृव्यः—शत्रुरहितः, अनाः—अनन्यनायकः, अनापिः—बान्धवहीनः, असि । तथा त्वं युधा इत्—युद्धेनैव शत्रुभिः सह संग्रामद्वारैव, आपित्वम्—स्तोतॄणां सख्यम्, इच्छसे—इच्छसि ॥ १ ॥

Thou, Indra, by thy birth, art, from eternity, without a foe, without a guide, without a friend; thou desirest to show thy friendship only by war, i. e., it is only by fighting (with the enemies) that thou art the friend of thy worshippers.—1.

**सा०-भा०।** हे 'इन्द्र!' त्वं 'जनुषा' जन्मनैव 'अभ्रातृव्यः'! 'व्यन् सपत्ने' (पा० ४,१,१४५) इति व्यन्प्रत्ययः—सपत्नरहितः। 'अनाः' अनेतृकः, 'ऋृतश्छन्दसि' (पा० ५,४,१५८) इति कपः प्रतिषेधः, अनियन्तृक इत्यर्थः। 'अनापिः' बन्धुवर्जितश्च। 'सनादसि' चिरादेव भ्रातृव्यादिवर्जितोऽसि। यच्च त्वम् 'आपित्वं' बान्धवम् 'इच्छसे' इच्छसि तत्र 'युधा इत्' युद्धेनैव युद्धं कुर्वन्नेव स्तोतॄणां सखा भवसीति॥ १॥

१। ऋ० सं० ८ म० २१ सू० १३ ऋ०। उ० आर्चि० ६, २,४, १।

अभ्रातृव्यः—'brotherless'—Wil.'s Ṛ V.

अनापिः—'without a kinsman.' आपित्वम्—kindred, *Vivaraṇa*.

---

सौभरिर्ऋषिः।

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २

**यो न इदमिदं पुरा प्र वस्य आनिनाय तमु वः स्तुषे।**

१ २ ३ १ २ ३ १ २

**सखाय इन्द्रमूतये॥ २ ॥४००॥**

यः। नः। इदम्ऽइदम्। पुरा। प्र। वस्यः। आऽनिनाय। तम्। ऊम् इति। वः। स्तुषे। सखायः। इन्द्रम्। ऊतये॥ २॥

भाष्यसारः। सखायः—हे मित्रभूताः, स्तोतारः! यः पुरा इदं वस्यः—उत्तमं धनम्, नः—अस्मभ्यम्, प्राणिनाय—अतिमात्रं दत्तवान्, तमु—तमेव, इन्द्रं वः—युष्माकम्, ऊतये—रक्षणाय, स्तुषे—स्तौमि॥ २॥

Friends, I praise, for your protection, Indra, who brought formerly to us this excellent wealth.—2.

**सा०-भा०।** 'सखायः' समानख्याना हे ऋत्विग्यजमानाः! 'यः' इन्द्रः 'पुरा' पूर्वम् 'इदम् इदम्' दर्शनीयतया विद्यमानं 'वस्यः' वसीयः, वसोरीयसुनी-कारलोपश्छान्दसः, प्रशस्तं वसु 'नोऽस्मान् 'प्राणिनाय' प्रकर्षेणानीतवान्। 'तमु' तमेव धनानामानेतारम् 'इन्द्रं' 'वो' युष्माकं धनलाभार्थम् 'ऊतये' रक्षणाय च 'स्तुषे' सौभरिरहं स्तौमि॥ २॥

२। ऋ० सं० ८ म० २१ सू० ६ ऋ०।

युधा इत्—the word 'इत्' is here used in the sense of 'एव'.

---

सौभरिर्ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
आ गन्ता मा रिषण्यत प्रस्थावानो माप स्थात समन्यवः।
३ १ २
दृढा चिद्यमयिष्णवः ॥ ३ ॥ ४०१ ॥

आ। गन्त। मा। रिषण्यत। प्रऽस्थावानः। मा। अप। स्थात। सऽमन्यवः। दृढा। चित्। यमयिष्णवः ॥ ३ ॥

भाष्यसारः। प्रस्थावानः—हे गमनशीला मरुतः! आ-गन्त—अस्मत्समीपमागच्छत। समन्यवः—हे क्रोधयुक्ता मरुतः! मा रिषण्यत—अस्मान् मा हिंस्त। दृढा चित् यमयिष्णवः—हे दृढाण्यपि पर्वतादीनि वशं नयन्तः मरुतः! मा अप-स्थात—अस्मत्समीपात् अन्यत्र मा तिष्ठत ॥ ३ ॥

Swift moving (winds), wrathful, draw near us, do not injure us; benders of tho solid (mountains), do not stay away from us.—3.

**सा०-भा०।** हे 'प्रस्थावानः' प्रस्थातारः प्रगन्तारो मरुतः! 'आ-गन्त' अस्मानागच्छत। 'मा रिषण्यत' अनागमनेन 'नो'ऽस्मान्मा हिंस्त। हे 'समन्यवः' समानतेजस्काः समानक्रोधाः वा! 'दृढा चित्' दृढान्यपि पर्वतादीनि हे 'यमयिष्णवः' नियमयितारः! 'माऽपस्थात' अस्मत्तोऽपेत्याऽन्यत्र मा तिष्ठत. अस्मास्वेवावतिष्ठध्वमित्यर्थः ॥ ३ ॥

३। ऋ० सं० ८ म० २० सू० १ ऋ०। ṚV. has (1) 'स्थिरा' instead of 'दृढा' and (2) 'नमयिष्णवः' in the place of 'यमयिष्णवः'।

स्थात—the Ṛgveda has 'स्थाता' in the *Saṃhitāpātha.*

---

सौभरिऋ॑षिः ।

१ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते ।
१ २
सोमं सोमपते पिब ॥ ४ ॥ ४०२ ॥

आ । याहि । अयम् । इन्दवे । अश्वपते । गोपते । उर्वराऽपते । सोमम् । सोमऽपते । पिब ॥ ४ ॥

भाष्यसारः । **अश्वपते—हे अश्वानां प्रभो ! गोपते—हे गवामीश्वर ! उर्वरापते—हे शस्यसम्पन्नभूमीनां पालक ! आ-याहि—आगच्छ । अयं सोम इन्दवे—दीप्ताय तुभ्यम्, देवस्य तवार्थे इत्यर्थः, तिष्ठतीति शेषः । हे सोमपते ! सोमं पिब ॥ ४ ॥**

Come, lord of horses, of kine (cattle), of fertile fields ; this (Soma) is for thee, who art the shedder of rain ; O lord of the Soma, drink of Soma (juice).—4.

**सा०-भा०** । 'अश्वपते' अश्वानां स्वामिन् ! 'गोपते' गवां पालयितः 'उर्वरापते' सर्वशस्याढ्या भूमिरुर्वरा, तस्याः पते हे इन्द्र ! 'इन्दवे' दीप्ताय तुभ्यम् अयं सोम अभिषुत इति शेषः । तस्माद् 'आ-याहि' सोमं प्रत्यागच्छ, आगत्य 'सोमपते' हे इन्द्र ! 'सोमं' 'पिब' ॥ ४ ॥

४ । ऋ० सं० ८ म० २१ सू० ३ ऋ० । ṚV. has the reading **'आ याहीम इन्दवः'** (come, these Somas are yours), instead of **'आ याह्ययम् इन्दवे'** (come, this (Soma) is for thee—the shedder of rain, lording it over all or the glowing one).

इन्दवे—the word *Indu* referring to Indra occurs in SV. 4. 2.

———

सौभरिऋ॑षिः ।

१ २ ३ २ ३ १ २र ३ १ २
त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि ।
३ १ २र ३ १ २
संस्थे जनस्य गोमतः ॥ ५ ॥ ४०३ ॥

त्वया । ह । स्वित् । युजा । वयम् । प्रति । श्वसन्तम् । वृषभ । ब्रुवीमहि । संऽस्थे । जनस्य । गोऽमतः ॥ ५ ॥

भाष्यसारः । वृषभ—हे वरद इन्द्र ! गोमतः—गोधनसमन्वितस्य, जनस्य संस्थे—युद्धे, वयम्, युजा त्वया ह स्वित्—सहायभूतेन त्वयैव, श्वसन्तम्—रोषात् श्वासं मुञ्चन्तं शत्रुम्, प्रति-ब्रुवीमहि—प्रत्युत्तरं दास्यामः, त्वामेकं सहायं लब्ध्वा रुष्टं शत्रुं प्रतियोत्स्यामह इत्यर्थः ॥ ५ ॥

With thee alone, O rainer (of blessings), as our ally, we bid defiance to one sighing deep (in wrath) towards us, in a contest of a man possessing herds of cattle.—5.

**सा०-भा०** । 'वृषभ' वर्षितः हे इन्द्र ! 'गोमतः' गवादियुक्तस्य 'जनस्य' 'संस्थे' स्थाने युद्धे 'श्वसन्तम्' अस्मान् प्रति क्रोधातिशयेन श्वासकारिणं शत्रुं 'युजा' सहायेन 'त्वया ह स्वित्' त्वयैव खलु 'वयम्' 'प्रति-ब्रुवीमहि' प्रतिवचनं कुर्मः, निराकरिष्याम इत्यर्थः ॥ ५ ॥

५ । ऋ० सं० ८ म० २१ सू० ११ ऋ० ।

संस्थे—The *Vivaraṇa* says, 'संतिष्ठन्ते यत्र योद्धारः स संस्थः संग्रामः ( battle ), तस्मिन् संस्थे'.

स्वित्—'स्विदिति पदपूरणः'—*Vivaraṇa.*

---

सौभरिर्ऋषिः ।

१ २ ३क २र ३ २ ३ १ २
**गावश्चिद्धा समन्यवः सजात्येन मरुतः सबन्धवः ।**
३ १ २ ३ १ २ ३ २
**रिहते ककुभो मिथः ॥ ६ ॥ ४०४ ॥**

गावः । चित् । घ । सऽमन्यवः । सऽजात्येन । मरुतः । सऽबन्धवः । रिहते । ककुभः । मिथः ॥ ६ ॥

भाष्यसारः । समन्यवः—हे तुल्यबलाः मरुतः ! गावश्चित्—युष्मन्मातृरूपाः गावश्च, सजात्येन—समानजातितया, सबन्धवः—सम्मिलिताः सत्यः, ककुभः—दिशः प्राप्येत्यर्थः, मिथः—परस्परम्, रिहते—लिहन्ति ॥ ६ ॥

O Maruts, the cows, equal in energy, related with you, together lick up the quarters of the horizon.—6.

**सा०-भा०** । 'समन्यवः' समानतेजस्काः, समानक्रोधाः वा हे मरुतः ! 'गावश्चित्' गावश्च युष्मन्मातृभूताः 'सजात्येन' समानजातित्वेन 'सबन्धवः' समान-

बन्धुकाः सत्यः 'ककुभो' दिशः प्राच्यादिदिग्भागान् प्राप्य 'मिथः' परस्परं 'रिहते' लिहन्ति। 'घे'ति पूरकः ॥ ६ ॥

६। ऋ० सं० ८ म० २० सू० २१ ऋ०।

गावः—cows ; Benfey understands by this word—the sun's rays. This interpretation seems better.

मिथः—severally—Wil.'s translation.

—o—

नृमेध ऋषिः।

१ २ ३ १ २३ १ २ ३ १ २
त्वं न इन्द्रा भर ओजो नृम्णं शतक्रतो विचर्षणे।
२ ३ १ २ ३ १ २
आ वीरं पृतनासहम्॥ ७ ॥ ४०५ ॥

त्वम्। न। इन्द्र। आ। भर। ओजः। नृम्णम्। शतक्रतो इति शतऽक्रतो। विऽचर्षणे। आ। वीरम्। पृतनाऽसहम्॥ ७ ॥

भाष्यसारः। शतक्रतो—हे बहुकर्मन्, विचर्षणे—हे विशेषेण दर्शक सर्वसाक्षिन्नित्यर्थः, इन्द्र! त्वम्, नः—अस्मभ्यम्, ओजः—तेजः, नृम्णम्—धनं च, आ-भर देहि। वीरं पृतनासहम्—शत्रुसेनाजयिनं त्वाम्, आ—आह्वयामः ॥ ७ ॥

Thou, Indra, bring us strength (and) treasures; beholder of all, of a hundred deeds, (we invoke thee)—the hero overcoming the hostile warriors.—7.

**सा०-भा०।** हे 'शतक्रतो' बहुकर्मन् 'विचर्षणे' विविधद्रष्टरिन्द्र! 'त्वं' 'नो'ऽस्मभ्यम् 'ओजो' बलं 'नृम्णं' धनञ्च 'आ-भर' आ-हर। 'वीरं' वीर्योपेतं 'पृतनासहं' सेनानामभिभवितारं त्वाम् 'आ' ह्वयामहे इति शेषः॥ ७ ॥

७। ऋ० सं० ८ म० ६८ सू० १० ऋ०। उ० आर्चि० ४, २, १३, १।

पृतनासहम्, SV. = पृतनाषहम्, ṚV.—षत्व by सहेः पृतनार्त्तभ्याञ्च—Pāṇ. viii. 3. 109.

नृमेध ऋषिः । ककुप्छन्दः ।

२ ३क २र २ १ २ ३ १ २ ३ १ २ ३ १ २
अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।

३ २ ३ १ २ ३ १ २
उदेव ग्मन्त उदभिः ॥ ८ ॥ ४०६ ॥

अध । हि । इन्द्र । गिर्वणः । उप । त्वा । काम । ईमहे । ससृग्महे । उदाऽइव । ग्मन्तः । उदऽभिः ॥ ८ ॥

भाष्यसारः । हे गिर्वणः—स्तुतिवाक्यैः प्रार्थनीय, इन्द्र ! अधा हि—अधुनैव, त्वा—त्वाम् , काम—कामान् अभिमतफलानि, ईमहे—याचामहे । तथा उदभिः—उत्क्षिप्तोदकैः, उदाग्मन्तः इव—उदकेन गच्छन्तः पुरुषाः इव, याचमानाः वयम् , उपससृग्महे—उपसृजामः, त्वां स्तुतिभिः संयोजयामः । यथा जलकेलिरता जना अन्यान् प्रति जलं निक्षिपन्ति, तथा याचनपरा वयमपि त्वामुद्दिश्य स्तुतिं कुर्म इति भावः ॥ ८ ॥

Indra, laudable by praises, we offer our earnest prayers to thee, as men going by water (splash their friends) with handfuls.—8

**सा०-भा० ।** हे 'गिर्वणः' गीर्भिर्वननीयेन्द्र ! 'अध हि' सम्प्रति 'त्वा' त्वां 'कामो' काम्ये निमित्ते, यद्वा 'काम' इति सुपां सुः (७,१,३९) कामान् 'ईमहे' याचामहे । किञ्च, याचमानाः सन्तः 'उपससृग्महे' उपसृजामः, स्तुतिभिस्त्वां संयोजयाम इत्यर्थः । तत्र दृष्टान्तमाह, 'उदेव' यथोदकेन 'ग्मन्तो' गच्छन्तः पुरुषाः 'उदभिः' अञ्जलिना उत्क्षिप्योदकैः समीपस्थान् पुरुषान् क्रीडार्थं संसृजन्ति, तद्वदित्यर्थः ।

"ससृज्महे" इति बह्वृचाः पठन्ति ॥ ८ ॥

८ । ऋ० सं० ८ म० ९८ सू० ७ ऋ० । Ṛ̣V. has the variation in the 2nd Pāda—e. g., **'त्वा काम ईमहे ससृज्महे'**, in the 3rd Pada **'यन्तः'** । **उ० आर्चि० १, १, २३, १ ।**

Sāyaṇa adds 'in sport ( क्रीडार्थम् )' ।

Benfey translates it—'wir sprengten dir, wie wellen über wellen gehn.'

सौभरिर्ऋषिः।

१ २ ३ २३ २३ १ २३ १२ ३२ ३१२
सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे।
३१ २र
अभि त्वामिन्द्र नोनुमः ॥ ९ ॥ ४०७ ॥

सीदन्तः। ते। वयः। यथा। गोऽश्रीते। मधौ। मदिरे। विवक्षणे। अभि। त्वाम्। इन्द्र। नोनुमः ॥ ९ ॥

भाष्यसारः। हे इन्द्र! गोश्रीते—गव्यमिश्रे, विवक्षणे—स्वर्गप्रापके, ते—तव, मदिरे—प्रीतिकरे, मधौ—सोमे, वयो यथा—पक्षिण इव, सीदन्तः—वसन्तः, यथा पक्षिण एकत्र मिलितास्तिष्ठन्ति, तथा वयमपि सोमयागे समवेताः सन्तः, त्वाम् अभि—उद्दिश्य, नोनुमः—पुनः पुनः भृशं वा स्तुतिं कुर्मः ॥ ९ ॥

Sitting like birds round thy gladdening heaven-bestowing Soma juice mingled with cows' products (milk or curds), we praise thee, Indra, again and again.—9.

**सा०-भा०।** हे 'इन्द्र!' 'गोश्रीते' श्रीञ् पाके। गोर्विकारो दधिपयसी गोशब्देनोच्येते, दध्ना पयसा च श्रीते मिश्रिते 'मदिरे' मदकरे 'विवक्षणे' स्वर्गप्रापणशीले त्वदीये 'मधौ' सोमे 'सीदन्तो' निवसन्तः, सदने दृष्टान्तः—'वयो यथा' पक्षिणो यथा एकत्र सङ्घीभूय तिष्ठन्ति तद्वत् सीदन्तो वयं 'त्वाम्' 'अभि' आभिमुख्येन 'नोनुमः' पुनः पुनः भृशं वा स्तुमः ॥ ९ ॥

९। ऋ० सं० ८ म० २१ सू० ५ ऋ०।

वयः—वयस् means a bird here.

गोश्रीते—cp. Sāyaṇa's commetary, above.

विवक्षणे—Sāyaṇa explains this term peculiarly—'causing to obtain heaven' (स्वर्गप्रापणशीले). The *Vivaraṇa* has 'वक्तुमिच्छते'.

---

सौभरिर्ऋषिः।

३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः।
१ २ ३ १ २
वज्रिँ चित्रँ हवामहे ॥१०॥ ४०८ ॥

वयम् । ऊम् इति । त्वाम् । अऽपूर्व्य । स्थूरम् । न । कत् । चित् । भरन्तः । अवस्यवः । वज्रिन् । चित्रम् । हवामहे ॥ १० ॥

भाष्यसारः । **वज्रिन्—हे वज्रधर ! अपूर्व्य—हे अद्भुतरूप, अद्वितीय वा ! अवस्यवः—आत्मरक्षां काङ्क्षन्तः, अत एव भरन्तः—तुभ्यं सोमं यच्छन्तः, वयम्, स्थूरं न—स्थूलं गुणैर्गरिष्ठं पुरुषमिव, चित्रम्—अद्भुतकर्माणम्, त्वामु—त्वामेव, कच्चित्—काम-प्रवेदने, अभिलाषज्ञापनमनेन द्योत्यते, हवामहे—आह्वयामः ॥ १० ॥**

Ever new, Thunderer, longing for thy protection, we call on thee, who art of manifold forms, as men filling (their houses with grains) invite some stout (i. e., efficient) man to feast.—10.

**सा०-भा० ।** हे 'वज्रिन्' वज्रयुक्त । 'अपूर्व्य' त्रिषु सवनेषु प्रादुर्भूतत्वादभिनव ! 'भरन्तः' सोमलक्षणैरन्नैस्त्वां पोषयन्तो वयं 'चित्रं' चायनीयं विविधरूपं वा 'त्वामु' त्वामेव 'अवस्यवः' अवो रक्षणमात्मन इच्छन्तः सन्तः 'हवामहे' त्वामाह्वयामः । तत्र दृष्टान्तः—'स्थूरं न' यथा भरन्तो व्रीह्यादिभिर्गृहं पूरयन्तो जनाः 'स्थूरं' स्थूलं गुणाधिकं 'कच्चित्' कञ्चिन्मानवं यथाह्वयन्ति तद्वत् ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य षष्ठः खण्डः । पञ्चमप्रपाठकस्य च प्रथमार्धे द्वितीया दशतिः ॥

इत्यौष्णिहं काकुभम् ।

१० । ऋ० सं० ८ म० २१ सू० १ ऋ० । ṚV. reads **'वाजे'** (in battle) instead of **'वज्रिन्'** in the last Pāda ; Benfey adopts the SV. reading (**'वज्रिन्'**) । **उ० आर्चि० १, १, २२, १ ।**

अपूर्व्य—unpreceded.

स्थूरम्—the *Vivaraṇa* has 'स्थूरच्छब्द ईश्वरवचनः' ; according to this view the reading is 'स्थूरन्न (स्थूरत्+न)'.

---

अथ चतुर्थाध्यायस्य सप्तमः खण्डः । पञ्चमप्रपाठकस्य च प्रथमार्धे तृतीया दशतिः ।

गोतमः सम्मदो वा ऋषिः । पङ्क्तिश्छन्दः ।

३ २ ३ १ २ ३ २ ३ १ २ ३क २र
स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः ।
१ २र ३ १ २ ३ २ ३ १ २
या इन्द्रेण सयावरीर्वृष्णा मदन्ति
३ २ ३ २ ३ १ २ ३ १ २
शोभथा वस्वीरनु स्वराज्यम् ॥ १ ॥ ४०६ ॥

स्वादोः । इत्था । विषुऽवतः । मधोः । पिबन्ति । गौर्यः । याः । इन्द्रेण । सऽयावरीः । वृष्णा । मदन्ति । शोभथाः । वस्वीः । अनु । स्वऽराज्यम् ॥ १ ॥

भाष्यसारः । **गौर्यः—गौरवर्णाः गावः, स्वादोः—सरसस्य, इत्था—इत्थम् अनेन प्रकारेण, विषूवतः—यज्ञेषु व्याप्तियुक्तस्य, मधोः—सोमस्य एवंविधं सोममित्यर्थः, पिबन्ति, याः—गावः, वृष्णा—कामवर्षकेणेन्द्रेण, सयावरीः—सह गच्छन्त्यः, मदन्ति —इन्द्रपीतावशिष्टं सोमं पीत्वा हृष्यन्ति, तथा वस्वीः—दुग्धदानेन वासकारिण्यः, ताः गावः, स्वराज्यम्— स्वस्येन्द्रस्य राजत्वम् , अनु—अनुलक्ष्य, शोभथाः—शोभन्ते ॥ १ ॥**

The bright cows drink of the sweet Soma spread forth here and going in company with Indra, the showerer of blessings, rejoice, (they) who, (by giving milk), are the means of providing habitation, shine proclaming his (Indra's) sovereignty.—1.

**सा०-भा० ।** 'स्वादो'रष्टादशस्वृक्षु चरमा 'नतमि'त्यसौ ।
उपरिष्टाद् बृहत्याम्नाताः सप्तदश पङ्क्तयः ॥
'चन्द्रमा''नतमि'त्येते वैश्वदेव्यौ 'प्रती'त्यसौ ।
आश्विनी तिस्र आग्नेय्य 'आ ते अग्न इधीमहि' ॥
'आग्नीं नाग्नीन्त'मित्येता 'महेनो अद्य' चौषसी ।
सौमी 'भद्रन्न' इत्येषा शिष्टा ऐन्द्र्य उदीरिताः ॥

आदितो गोतमो नाम ऋषिः सम्परिकीर्त्तितः ।

'स्वादोः' स्वादुभूतस्य रसयुक्तस्य 'इत्था विषूवतः' इत्थमनेन प्रकारेण सर्वेषु यज्ञेषु व्याप्तियुक्तस्य 'मधोः' मधुररसस्य सोमस्य, 'क्रियाग्रहणं कर्त्तव्यमि'ति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । एवंविधं सोमं 'गौर्यो' गौरवर्णा गावः 'पिबन्ति'। 'याः' गावः 'वृष्णा' कामाभिवर्षकेणेन्द्रेण 'सयावरीः' सह यान्त्यः गच्छन्त्यः सत्यः 'मदन्ति' हृष्टा भवन्ति। ताः इन्द्रपीतस्य सोमस्यावशेषं पिबन्तीत्यर्थः। 'शोभथाः', वचनव्यत्ययः ( ३,१,८५ ), इन्द्रेण सह शोभन्ते । 'वस्वीः' पयःप्रदानेन निवासकारिण्यः ता गावः 'स्वराज्यं' स्वस्य स्वकीयस्येन्द्रस्य यद्राज्यं राजत्वं तद् 'अनु'लक्ष्य अवस्थिता इत्यर्थः ॥ १ ॥

१ । ऋ० सं० १ म० ८४ सू० १० ऋ० । ṚV. reads **'मध्वः'** instead of **'मधोः'** and **'शोभसे'** for **'शोभथाः'** ।

Say.'s addl. gram. notes in his Com. on the ṚV. stanza : विषूवत:—विष्लृ व्याप्तौ, अस्मादौणादिक: कुप्रत्यय: (rt. विष् *to pervade*—uṇ. aff. कु), ततो मतुप्। अन्येषामपि दृश्यते इति संहितायां दीर्घ:। व्यत्ययेन मतोर्वत्वम्। सयावरी:—या प्रापणे, अस्मात् धातो र्मनिन्निति वनिप्। वनो र चेति ङीब्रेफौ। मदन्ति—मदी हर्षे, श्यनि प्राप्ते व्यत्ययेन शप्। वस्वी:—शृस्वृस्निहीत्यादिना वसेरुप्रत्यय:। गुणवचनात् ङीप् ( का० ४, १, ४४, १ ) इति वचनात् वसुशब्दात् ङीपि यणादेश:। जसि वा छन्दसीति पूर्वसवर्णदीर्घत्वम्।

इत्था—अत्र, here. cf. 'अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम्। इत्था चन्द्रमसो गृहे ॥' In this place, it is said, they thought of the ray separated from the sun, here in the moon's mansion. ṚV. 1. 84. 15. 'त्वेषमित्था समरणंशिमीवतो:'—here is the impetuous contest of the two mighty ones—i. 155. 2 ; also v. 32. 6.

सयावरी:—for gram. see Sāy.'s addl. notes, quoted above ; 'associated with'—*Wils*., 'travelling close to Indra.'—Grfth.

वस्वी: अनु स्वराज्यम्—Wilson observes—'this is rather obscure' and translates —'abiding (in their stalls), they are expectant of his sovereignty. *Rosen* has—'domicilium procurantes, quœ ipsius dominium respicientes adstant'.

*Longlois* renders—elles s'etendent sur son domain.

Grfth. means by *gauryaḥ* (lit. white cows)—the glossy milk, which drinks the Soma juice i.e., absorbs or is mixed with it and which accompanies or is united with Indra when offered to and accepted by him in libation.

---

गोतमः सम्मदो वा ऋषिः। पङ्क्तिश्छन्दः।

३ २उ ३ २उ ३ १ २ ३ २ ३ १ २
इत्था हि सोम इन्मदो ब्रह्म चकार वर्द्धनम्।
१ २ ३ १ २ ३ १
शविष्ठ वज्रिन्नोजसा पृथिव्या
२र ३ २ ३ २ ३ १ २ ३ १ २
निःशशा अहिमर्चन्ननु स्वराज्यम् ॥ २ ॥ ४१० ॥

इत्था। हि। सोमे। इत्। मदः। ब्रह्म। चकार। वर्धनम्। शविष्ठ। वज्रिन्। ओजसा। पृथिव्याः। निः। शशाः। अहिम्। अर्चन्। अनु। स्वऽराज्यम् ॥ २ ॥

भाष्यसारः। शविष्ठ—हे बलिष्ठ, वज्रिन्—हे वज्रधर इन्द्र ! इत्था हि—अनेन प्रकारेण, सोमे—प्रस्तुते सति, मदः—स्तोता, वर्धनम्—तव वृद्धिकरम्, ब्रह्म—

स्तोत्रम्, चकार—कृतवान्। अतस्त्वम् स्वराज्यम् अनु अर्चन्—स्वस्य राजत्वं प्राधान्यमित्यर्थः, प्रकटयन्, अहिम्—वृत्रासुरम्, पृथिव्याः सकाशात्, ओजसा—विक्रमेण, निःशशाः—सम्यक् शासनं कृत्वा दूरीकृतवान् ॥ २ ॥

Just when, with Soma juice having been thus poured forth (or prepared) the gladdener, (the priest) made thy encouraging prayer, thou, mightiest holder of the thunder, didst drive away by force, Ahi (Vṛtrāsura), from the earth, putting forth thy own sovereignty.—2.

**सा०-भा०।** हे 'शविष्ठ' अतिशयेन बलवन्! 'वज्रिन्' वज्रवन्निन्द्र! 'इत्था हि' इत्थम् एव अनेनं शास्त्रोक्तप्रकारेणैव 'सोमे' त्वया गृहीते सति 'मदः', मदेः स्तुतिकर्मणः, स्तोता 'वर्द्धनं' तव वृद्धिकरं 'ब्रह्म' स्तोत्रं 'चकार', अनेन सूक्तेन कृतवान्। 'इद्'ित्येतत् पदपूरणम्। अतस्त्वम् 'ओजसा' बलेन 'पृथिव्याः' सकाशात् आगत्य 'अहिम्' हन्तारं वृत्रं 'निःशशाः' निःशेषेण शशाः; मा बाधस्वेति शासनं कृत्वा पृथिव्याः सकाशान्निरगमय इत्यर्थः। किं कुर्वन्? 'स्वराज्यं' स्वस्य राज्यं राजत्वम् 'अनु'लक्ष्य 'अर्चन्' पूजयन् स्व-स्वामित्वं प्रकटयन्नित्यर्थः ॥ २ ॥

२। ऋ० सं० १ म० ८० सू० १ ऋ०। R̥V. has **'सोम (=सोमे) मदे ब्रह्मा'** (in the wild joy or rapture caused by the Soma juice, priest Brahmā or Brahman (the priest), has exalted thee) for **'मदो ब्रह्म'**, the SV. text.

Sāy'.s gram. notes in his Com. on the R̥V.—'शशाः—शासु अनुशिष्टौ। लङि लुकि प्राप्ते 'बहुलं छन्दसी'ति शपः श्लुः (cl. I. is conjugated as cl. 3; the rt. is reduplicated). स्वराज्यम्—राज्ञो भावः कर्म वा—राज्यम्, 'पत्यन्तपुरोहितादिभ्यो यक्', पा० ५, १, १२८, इति यक्। 'स्वस्य राज्यम् स्वराज्यम्'।

इत्था—thus, primarily it means '*so*'; *vide* Mcdnll's Stu. Ved. Gram., *Para* 180. P. 218.

इत्—(n. of the pron. stem i, *Lat.* i-d), it may be rendered by *just.*

मदः—the delighter, here rfs. to the priest who causes Indra's gladness by offering prayers and oblations to him. The R̥V. reading is मदे (which is rendered by Wilson as—'the exhilarating Soma juice having been drunk).

अर्चन् अनु स्वराज्यम्—अर्चन्—lit. means worshipping or honouring; Sāy. explains as *prakaṭayan*—making manifest his own mastership or supremacy.

निःशशाः—thou didst expel—*Wils.*; for gram. see Sāy.'s addl. notes cited above.

अहिम्—the great serpent, Vṛtra or a kindred demon of drought.

---

गोतमः सम्मदो वा ऋषिः। पङ्क्तिश्छन्दः।

२ ३ १ २ ३ १ २ ३ १र २र
इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः।

२उ ३ २ ३ २ ३ १र २र
तमिन्महत्स्वाजिपूतिमर्भे हवा-

३ १र २र ३ १ २
महे स वाजेषु प्र नोऽविषत् ॥ ३ ॥ ४११॥

इन्द्रः। मदाय। ववृधे। शवसे। वृत्रऽहा। नृऽभिः। तम्। इत्। महत्ऽसु। आजिषु। ऊतिम्। अर्भे। हवामहे। सः। वाजेषु। प्र। नः। अविषत् ॥ ३ ॥

भाष्यसारः। **वृत्रहा—वृष्टिनिवारकस्य मेघस्य वृत्रासुरस्य शत्रूणां वा हन्ता, इन्द्रः, मदाय—हर्षार्थम्, शवसे—बलार्थञ्च, नृभिः—यज्ञस्य नेतृभिः, ववृधे—स्तुतिभिः वर्द्धितो बभूव। महत्सु—घोरेषु, आजिषु—युद्धेषु बृहत्सु यज्ञेषु वा, अर्भे—अल्पे युद्धे यज्ञे वा, ऊतिम्—रक्षकम्, तमित्—तमेवेन्द्रम्, हवामहे—आह्वयामः, सः—इन्द्रः, वाजेषु—युद्धेषु यज्ञेषु वा, नः—अस्मान्, प्राविषत्—प्रकर्षेण अवतु ॥ ३ ॥**

Indra, the Vṛtra-slayer, has been exalted, to joy and strength, by men (the priests); we invoke (him) the protector, in great wars as well as in small battles; may he protect us in contest.—3.

**सा०-भा०।** 'वृत्रहा' वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता, यद्वा आवरकाणां शत्रूणां हन्ता, इन्द्रः 'मदाय' हर्षार्थं 'शवसे' बलार्थञ्च 'नृभिः' यज्ञस्य नेतृभिः ऋत्विग्भिः 'ववृधे' स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्द्धितो बभूव, स्तुत्या हि देवता प्राप्तबला सती प्रवर्द्धते, 'तमित्' तमेव इन्द्रं 'महत्सु' प्रभूतेषु 'आजिषु' संग्रामेषु 'ऊतिम्' अस्माकं रक्षकम् 'हवामहे' आह्वयामहे; तथा 'तम्' इन्द्रम् 'अर्भे' अल्पे संग्रामे 'हवामहे'। अस्माभिराहुतः 'स'चेन्द्रः 'वाजेषु' संग्रामेषु 'नो'ऽस्मान् 'प्राविषत्' प्रावतु, प्रकर्षेण रक्षतु ॥ ३ ॥

३। ऋ० सं० १ म० ८१ सू० १ ऋ०। Ṛ.V. reads **'उतेम्'** [ **उत ईम्** meaning **अपि च** ] instead of **'ऊतिम्'** [ **रक्षकम्**—protector ].

Say.'s gram. notes in his com. on the Ṛ.V. stanza: 'वावृधे—वृधेः कर्मणि लिट्। संहितायामभ्यासस्यान्येषामपि दृश्यते इति दीर्घत्वम्। तुजादित्वाद् वा दीर्घत्वम्। हवामहे—ह्वयतेर्लटि ह

इत्यनुवृत्तौ बहुलं छन्दसीति सम्प्रसारणम्। अपि गुणावादेशौ। अविषत्—अव रक्षणे लेठ्यडागमः। इतश्च लोप इतीकारलोपः। सिब्बहुलं लेटीति सिप्। तस्यार्धधातुकत्वाद् वलादिलक्षण इट्'।

वावृधे नृभिः—Sāy. explains—'a god acquires vigour by praise and thus increases or gets augmented i. e., becomes more powerful and mighty; for gram. in वावृधे see Sāy.'s add. notes, quoted above.

अर्भे—small; the word अर्भक is found in the list of the syns of small, Ngh. 3. 2. cf. नमो महद्भ्यो नमो अर्भकेभ्यः—ṚV. i. 27. 23; अर्भकमवहृतं भवति (drvd. fr. अव—rt. हृ), that which is easily extracted, Nir. 3. 20.

वाजेषु—in battles, Ngh. 2. 17. आजि (आजिषु in the text above) is also found in the list. cf. उत तं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु…him no one can overcome in conflicts, ṚV. X. 71. 5.

---

गोतमः सम्मदो वा ऋषिः। पङ्क्तिश्छन्दः।

२ ३ २ ३ १ २ ३ १ २ ३क २र

इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन् वीर्यम्।

२र ३ २र ३ १ २ ३ २उ ३ २ ३

यद्ध त्यं मायिनं मृगं तव त्यन्मा-

१र २र ३ २ ३ १ २ ३ १ २

ययावधीरर्चन्ननु स्वराज्यम्॥ ४॥ ४१२॥

इन्द्र। तुभ्यम्। इत्। अद्रिऽवः। अनुत्तम्। वज्रिन्। वीर्यम्। यत्। ह। त्यम्। मायिनम्। मृगम्। तव। त्यत्। मायया। अवधीः। अर्चन्। अनु। स्वऽराज्यम्॥ ४॥

भाष्यसारः। अद्रिवः—हे वाहनरूपमेघयुक्त! वज्रिन्—हे वज्रधर इन्द्र! त्वं स्वराज्यम् अनु अर्चन्—स्वस्वामित्वं प्रकाशयन्नित्यर्थः, यद् ह—येन वीर्येण खलु, मायिनम्—मायाविनम्, मृगम्—मृगरूपधरम्, त्यम्—प्रसिद्धं वृत्रम्, तव मायया अवधीः—हतवानसि, तुभ्यमित्—तवैव, त्यत्—तत्, वीर्यम्, अनुत्तम्—अतिरस्कृतं भवतीति शेषः॥ ४॥

O bearer of the thunderbolt, borne on cloud, thy verility is indeed unchecked, as thou, with thy supreme stratagem, hast slain that guileful deer (Vṛtra), proclaiming thy own sovereignty.—4.

**सा०-भा०।** अद्रिरिति मेघनाम (नै० १,१०,१), हे 'अद्रिवन्' वाहनरूपमेघयुक्त! 'वज्रिन्' वज्रवन्निन्द्र! 'तुभ्यमित्' तवैव, षष्ठ्यर्थे चतुर्थी,

'वीर्यं' सामर्थ्यम् 'अनुत्तं' शत्रुभिरतिरस्कृतम्। 'यद्ध' येन वीर्येण खलु 'मायिनं' मायाविनं 'मृगं' मृगरूपमापन्नं 'त्यं' तं 'वृत्रम्' असुरं त्वमपि माययैव 'अवधीः' हतवानसि। अतः कारणात् तव वीर्यं 'यत्' तत् प्रसिद्धं भवति। 'अर्चन्ननु स्वराज्य-मि'ति पादो व्याख्यातः ॥ ४ ॥

४। ऋ० सं० १म० ८० सू० ७ ऋ०।

अनुत्तम्—नसत्तनिषत्तेति निपातनान्निष्ठानत्वाभावः। अवधीः—rt. हन् लुङ् (aor.) 2. sg.

मायिनं मृगम्—the commentary says, Vṛtra has assumed the form of a deer; but nothing more relating to this incident occurs.

---

गोतमः सम्मदो वा ऋषिः। पङ्क्तिश्छन्दः।

२ ३ १ २ ३ २उ ३ २ ३ १ २
प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते।
१ २ ३ २उ ३ २ ३ १ २
इन्द्र नृम्णं हि ते शवो हनो
३ १र २र ३ २ ३ १ २ ३ १ २
वृत्रं जया अपोऽर्चन्ननु स्वराजयम्॥ ५ ॥ ४१३ ॥

प्र। इहि। अभि। इहि। धृष्णुहि। न। ते। वज्रः। नि। यंसते। इन्द्र। नृम्णम्। हि। ते। शवः। हनः। वृत्रम्। जयाः। अपः। अर्चन्। अनु। स्वऽराज्यम्॥ ५ ॥

भाष्यसारः। हे इन्द्र! प्रेहि—प्रकर्षेण गच्छ, अभीहि—शत्रून् आभिमुख्येन गच्छ, धृष्णुहि—तान् शत्रून् धर्षय च। ते—तव, वज्रः, न, नि-यंसते—नियम्यते, प्रतिहतो भवति। ते—तव, शवः—बलम्, नृम्णम्—नृणां बलम्। हि—यस्मादेवं तस्मात्, वृत्रम्—तदाख्यमसुरं मेघं वा, हनः—जहि, ततः अपः—तन्निरुद्धं जलम्, जयाः—जय, लभस्व ॥ ५ ॥

Come on, meet the enemies and vanquish (them); thy thunderbolt is not restrained, man's vigour, Indra, is thy strength, slay Vṛtra and make the waters under thy control, proclaiming (thereby) thy own supremacy.—5.

**सा०-भा०।** हे 'इन्द्र!' 'प्रेहि' प्रकर्षेण गच्छ। 'अभीहि' हन्तव्यान् शत्रून् आभिमुख्येन प्राप्नुहि। प्राप्य च 'धृष्णुहि' तान् शत्रून् अभिभव। 'ते' तव 'वज्रो' 'न नि-यंसते' शत्रुभिः न नियम्यते, अप्रतिहतगतिरित्यर्थः। तथा 'ते' तव 'शवः' त्वदीयं बलं 'नृम्णं' नृणां पुरुषाणां नामकम्, अभिभावकम्। 'हि' यस्मादेवं तस्मात् 'वृत्रम्' असुरं मेघं वा 'हनः' जहि। तदनन्तरं तेन निरुद्धा 'अपः' उदकानि 'जयाः' जय, वृत्रं हत्वा तेनावृतमुदकं लभस्वेत्यर्थः। शिष्टं स्पष्टम् ॥ ५ ॥

५। ऋ० सं० १म० ८० सू० ३ ऋ०।

Sāy.'s gram. notes in his com. on the ṚV. stanza :—

'यंसते—यमेः कर्मणि लेटि सिब्बहुलमिति सिप्। लेटोऽडाटावित्यडागमः। हनः—लोडर्थे छान्दसो लङ्। बहुलं छन्दसीति शपो लुगभावः। जयाः—लेच्याडागमः।

नृम्णं हि ते शवः—thy vigour destroys men—*Wils.*

अपः जयाः—win the waters, make the waters thrive; the waters mean the rain-waters which Vṛtra obstructed.

---

गोतमः सम्मदो वा ऋषिः। पङ्क्तिश्छन्दः।

२ ३ १ २   ३ १ २ ३ १ २   ३ १ २
यदुदीरत आजयो धृष्णवे धीयते धनम्।
३ १ २ ३ २ ३ २ ३ २उ ३
युंक्ष्वा मदच्युता हरी कं हनः
१ २र ३ १ २ ३ १ २
कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ ६ ॥४१४॥

यत्। उत्ऽईरते। आजयः। धृष्णवे। धीयते। धनम्। युङ्क्ष्व। मदऽच्युता। हरी इति। कम्। वसौ। हनः। कम्। दधः। अस्मान्। इन्द्र। वसौ। दधः ॥६॥

भाष्यसारः। यत्—यदा, आजयः—संग्रामाः, उदीरते—उद्गच्छन्ति उत्पद्यन्ते, तदा धृष्णवे—जयशीलाय, धनं धीयते—निधीयते, जेतुर्धनलाभो भवतीत्यर्थः। हे इन्द्र!

तादृशेषु युद्धेषु प्रवृत्तेषु, त्वम्, मदच्युता—मदस्य गर्वस्य च्यावयितारौ हर्त्तारौ, हरी—स्वकीयावश्वौ, युङ्क्ष्व—रथे योजय। ततः कम्—कमपि प्रतिकूलं जनम्, हनः—जहि, कम्—कमपि सेवमानं जनम्, वसौ—धने, दधः—धारय, धनवन्तं कुरु। हे इन्द्र! अस्मान् सेवमानान् स्तोतॄन् अपि, वसौ—धने, दधः—स्थापय, धनशालिनो विधेहि ॥ ६ ॥

When battles take place, wealth is won by the victor, yoke thy twain horses, the subjugators of the pride of enemies, thou slayest some one, (who incurs thy displeasure) and place some other (with whom thou art pleased) in the possession of wealth, do thou, Indra, enrich us.—6.

**सा०-भा०।** अत्रेदमाख्यानम्। रहूगणपुत्रो गोतमः कुरुसृञ्जयानां राज्ञां पुरोहित आसीत्। तेषां राज्ञाम्परैः सह युद्धे सति स ऋषिरनेन सूक्तेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति। तस्य च तत् पुरोहितत्वं वाजसनेयिभिराम्नातम् 'गोतमो ह वै राहूगणः उभयेषां कुरुसृञ्जयानां पुरोहित आसीत्' इति।

'यद्' यदा 'आजयः' संग्रामाः 'उदीरते' उद्गच्छन्ति, उत्पद्यन्ते तदानीं 'धनं धृष्णवे' यो धृष्णुः धर्षयिता शत्रूणां जेता भवति तस्मै 'धीयते' निधीयते; जयतो धनं भवतीत्यर्थः। हे 'इन्द्र'! त्वं तादृशेषु युद्धेषु प्रवृत्तेषु 'मदच्युता' शत्रूणां मदस्य गर्वस्य च्यावयितारौ 'हरी' त्वदीयावश्वौ 'युंक्ष्व' रथे त्वदीये योजय। योजयित्वा च 'कं' चिद्राजानं तव परिचरणमकुर्वन्तं 'हनः' हन्याः। 'कं' चन त्वां परिचरन्तं 'वसौ' धने 'दधः' स्थापयसि। अतो जयाजयौ त्वमेव कारयितासि। तस्मात् हे इन्द्र! अस्मान् अस्मदीयान् राज्ञः वसौ धने 'दधः' स्थापय ॥ ६ ॥

६। ऋ० सं० १म० ८१ सू० ३ ऋ०। R̥V. has **'धना'** (—**धनम्, सुपां सुलुगिति डादेशः**) for **'धनम्'** and **'युक्ष्वा'** instead of **'युंक्ष्वा'**।

युङ्क्ष्वा—युङ्क्ष्व—imp caus. sense suppressed; the last vowel is prolonged by द्व्यचोऽतस्तिङः।

हनः—rt. हन् लेट् (subj). सिप् अडागमश्च।

वसौ—for वसुनि (masc. form for neu.) लिङ्गव्यत्ययः।

दधः—fr. rt. दध, धारणे *to hold*, लेटि व्यत्ययेन परस्मैपदम्।

---

गोतमः सम्मदो वा ऋषिः। पङ्क्तिश्छन्दः।

२ ३ १ २ ३ १२ ३ १ २
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत।
१ २ ३ १ २ ३ २ ३ १ २
अस्तोषत स्वभानवो विप्रा नवि-
३ २उ ३क २र ३ १ २
ष्ठया मती योजा न्विन्द्र ते हरी ॥ ७ ॥ ४१५ ॥

अक्षन्। अमीमदन्त। हि। अव। प्रियाः। अधूषत। अस्तोषत। स्वऽभानवः। विप्राः। नविष्ठया। मती। योज। नु। इन्द्र। ते। हरी इति ॥७॥

भाष्यसारः। **हे इन्द्र! यजमानास्त्वद्दत्तमन्नम् अक्षन्—अभक्षयन्, अमीमदन्त हि—तृप्ता आसन् खलु, प्रियाः—स्वतनूः विशेषतः शिरांसि, अवाधूषत—अकम्पयन्, तृप्तिं वक्तुमशक्यत्वात्। स्वभानवः—स्वयं प्रकाशमानाः, विप्राः—मेधाविनः ऋत्विजः, नविष्ठया—नूतनतमया, मती—मत्या स्तुत्या, अस्तोषत—अस्तुवन्। अतस्त्वं ते हरी—अश्वौ, नु—क्षिप्रम्, योज—रथे योजय ॥ ७ ॥**

The sacrificers have eaten (the food given by thee), have been gratified and thrilled throughout the bodies; the resplendent wise priests have praised thee with hearty hymns; so quickly, Indra, yoke thy twain horses.—7.

**सा०-भा०।** हे 'इन्द्र'! त्वया दत्तान्यन्नानि 'अक्षन्' यजमाना भुक्तवन्तः। भुक्ता च 'अमीमदन्त हि' तृप्ता आसन् खलु। 'प्रियाः' स्वकीयाः तनूः 'अवाधूषत' अकम्पयन्, अतिशयितरसास्वादेन वक्तुमशक्नुवन्तः शरीराण्यकम्पयन्। तदनन्तरं 'स्वभानवः' स्वायत्तदीप्तयः 'विप्राः' मेधाविनः ऋत्विजः 'नविष्ठया' अतिशयेन नूतनया 'मती' मत्या स्तुत्या 'अस्तोषत' अस्तुवन्। अतः, हे इन्द्र! 'ते' त्वदीयौ 'हरी' एतत्सञ्ज्ञावश्वौ 'नु' क्षिप्रं 'योज' रथे योजय ॥ ७ ॥

७। ऋ० सं० १म० ८२ सू० २ ऋ०।

Sāy.'s gram. notes in his com. on the Ṛ̣V.: 'अक्षन्—अदेर्लुङि लुङ्सनोर्घस्लृ, पा० २. ४. ३७, इति 'घस्लृ' आदेशः। मन्त्रे घसेत्यादिना च्लेर्लुक्। गमहनेत्यादिना उपधालोपः। खरि चेति चर्त्वम्। शासिवसिघसीनां चेति षत्वम्। अडागम उदात्तः। अमीमदन्त—मद तृप्तियोगे चुरादिरात्मनेपदी लुङि च्लेश्चङि णिलोपोपधाह्रस्वत्वद्विर्भावसन्वद्भावेत्वदीर्घाः। अधूषत—धूञ् कम्पने। लुङि सिचि व्यत्ययेन गुणाभावः, यद्वा छन्दस्युभयथेति सिचः सार्वधातुकत्वेन ङित्त्वात् क्ङिति चेति गुणप्रतिषेधः;

अथवा धू विधूनने तौदादिकः कुटादिः। अस्मात् कर्मणि लुङि गाङ्कुटादिभ्य इति सिचो ङित्त्वाद् गुणाभावः। नविष्ठया—णु स्तुतौ, तस्मात् तृच् इष्ठन् तृलोपश्च। मती—सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वम्'। ( अक्षन्—rt. अद, *to eat*—aor. ( लुङ् ). 3. pl. अमीमदन्त—rt. मद, *to rejoice* 10 A—aor. 3. pl. अधूषत—*either* rt. धूञ्, *to shake* or rt. धू *to tremble*. 1. aor. 3. pl. नविष्ठया—rt. णु *to praise*—तृच्—spv. dg. इष्ठन्. मती. Instr. sg. for मत्या, the case term. is substituted by इ the last vowel of the stem and by euphonic rules, both combined, give rise to ई in मती ).

The verbs अक्षन् etc., agree probably with the nom. यजमानाः or ऋत्विजः 'thy worshippers'—Wils.; 'the institutors of the sacrifice'—Grfth.; 'the manes or ancestral spirits'—Sāy. प्रियाः अधूषत—'have trembled through their precious (bodies)'—Wils.; Grfth. after Ludwig, renders—'the friends have risen and passed away', but this is, he admits, is merely conjectural; acc. to Benfey, it means—'have nodded or shaken their heads in token of satisfaction'. स्वभानवः विप्राः—the self-illuminated sages—luminous in themselves.

---

गोतमः सम्मदो वा ऋषिः। पङ्क्तिश्छन्दः।

२ ३ १ २ ३ २उ ३ १ २ ३ १ २
उपो षु शृणुही गिरो मघवन्मातथा इव।
३ १ २ ३ १ २ ३ २ ३ २ ३
कदा नः सूनृतावतः कर इद-
१ २ ३ २उ ३क २र ३ १ २
र्थयास इद्योजा न्विन्द्र ते हरी ॥८॥४१६॥

उपो इति। सु। शृणुहि। गिरः। मघऽवन्। मा। अतथाऽइव। कदा। नः। सूनृताऽवतः। करः। इत्। अर्थयासे। इत्। योज। नु। इन्द्र। ते। हरी इति ॥ ८ ॥

भाष्यसारः। मघवन्—हे धनवन् इन्द्र! गिरः—अस्मदीया स्तुतीः, उपो—उपगम्यैव, संशृणुहि—सम्यक् शृणु। अतथा इव—अतद्रूपः मा भूः यथा पूर्वमासीस्तथैव भव, नः—अस्मान्, सूनृतावतः—प्रियसत्यस्तुतिवाक्यैर्युक्तान्, कदा करः—करोषि, इत्—त्वमपि, अर्थयासे इत्—अस्माकं स्तुतिभिः प्रार्थ्यसे. अतः हे इन्द्र! ते हरी, नु—क्षिप्रम्, योज—रथे योजय ॥ ८ ॥

Come and listen to our praises (Indra), the lord of riches, be not the contrary of what thou hast been to us, as thou hast made us

possessed of true attractive speeches, thou art prayed with it, so quickly yoke thy horses.—8.

**सा०-भा०।** हे 'मघवन्' धनवन्निन्द्र! 'गिरः' अस्मदीयाः स्तुतीः 'उपो' उपैव 'सुश्रृणुहि' उपगम्य सम्यक् शृणु। 'अतथाइव' पूर्वं यथाविधस्त्वं तद्विपरीतो मा भूः अस्मासु पूर्वं यथा अनुग्रहबुद्धियुक्तः तथाविध एव भवेत्यर्थः। अपिच 'नो'ऽस्मान् 'सूनृतावतः' प्रियसत्यात्मिका वाक् सूनृता तया स्तुतिरूपया वाचा युक्तान 'कदा करः' करोषि। त्वमपि 'अर्थयास इत्' अर्थयसे एव, याचयस एव, न तूदास्से। अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः। अतो हे 'इन्द्र'! 'ते' 'हरी' त्वदीयावश्वौ 'नु' क्षिप्रं 'योज' रथे योजय॥ ८॥

८। ऋ० सं० १ म० ८२ सू० १ ऋ०। Ṛ̣V. reads **'यदा'** for **'कदा'** and **'आदर्थयासे'** for **'इदर्थयासे'**।

Sāy.'s gram. notes in his com. on the Ṛ̣V. stanza :—

'करः—डुकृञ् करणे। लुङ्। कृमृदृरुहिभ्यश्छन्दसीति च्लेरङादेशः। अर्थयासे—अर्थ याच्ञायाम्, चुरादिरात्मनेपदी, लेट्याडागमः। योज (योजय)—युजिर् योगे ण्यन्ताल्लोटि छन्दस्युभयथेति शप आर्धधातुकत्वात् णेरनिटीति णिलोपः। द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वम्'।

मा तथा इव—do not leave the propitious nature thou ever bearest to us; 'be not different from what thou hast hitherto been'—*Wils.* नः सूनृतावतः करः—since thou hast inspired us with true speech, thou art solicited or asked to accept our praises.

---

त्रित ऋषिः। पङ्क्तिश्छन्दः।

३ १ २ ३ २ १ २र ३ १ २ ३ २
चन्द्रमा अप्स्वाऽन्तरा सुपर्णो धावते दिवि।
२ २ ३ १ २
न वो हिरण्यनेमयः पदं विन्दन्ति
३ १ २ ३ १ २
विद्युतो वित्तं मे अस्य रोदसी॥ ९॥४१७॥

चन्द्रमाः। अप्ऽसु। अन्तः। आ। सुऽपर्णः। धावते। दिवि। न। वः। हिरण्यऽनेमयः। पदम्। विन्दन्ति। विऽद्युतः। वित्तम्। मे। अस्य। रोदसी इति॥ ९॥

भाष्यसारः। अप्सु—अन्तरिक्षस्य जलमये मण्डले, अन्तः—मध्ये स्थितः, सुपर्णः—शोभनपतनः, किं वा सूर्यरश्मिना युक्तः, चन्द्रमाः, दिवि—द्युलोके, आ-धावते—क्षिप्रं गच्छति। हिरण्यनेमयः—हे चन्द्रसम्बन्धिनः सुवर्णसदृशपर्यन्ताः, यद्वा हितरमणीयप्रान्ताः, विद्युतः—विद्योतमानाः रश्मयः! वः—युष्माकम्, पदम्—चरणस्थानीयम् अग्रम्, न, विन्दन्ति—लभन्ते, इन्द्रियाणां कूपावृतत्वात्। रोदसी—हे द्यावापृथिव्यौ! मे—मम, अस्य—इदं स्तोत्रम्, वित्तम्—जानीतम्॥ ९॥

The Moon runs within the waters, with the beautiful wings in heaven. Ye lightnings with your golden wheels, men do not find your abiding place. Mark, Ye Earth and Sky! my prayer.—9.

**सा-०भा०।** 'अप्सु' आन्तरिक्ष्यासु उदकमये मण्डले 'अन्तः' मध्ये वर्त्तमानः 'सुपर्णः' शोभनपतनः। यद्वा, सुपर्ण इति रश्मिनाम (नि० १,५,१५) सुषुम्णाख्येन सूर्यरश्मिना युक्तः 'चन्द्रमाः' 'दिवि' द्युलोके 'आ-धावते' आङ् मर्यादायाम्, एकेनैव प्रकारेण धावते, शीघ्रं गच्छति, तादृशस्य चन्द्रमसः सम्बन्धिनः हे 'हिरण्यनेमयः' सुवर्णसदृशपर्यन्ताः, यद्वा हितरमणीयप्रान्ताः 'विद्युतो' विद्योतमानाः रश्मयः! 'वो' युष्माकं 'पदं' पदस्थानीयम् अग्रं 'न' 'विन्दन्ति' मदीयानीन्द्रियाणि कूपेनावृतत्वात् न लभन्ते। अत इदं नोचितम्, तस्मात् कूपात् मामुत्तारयतेत्यर्थः। अपिच हे 'रोदसी' द्यावापृथिव्यौ! 'मे' मदीयम् 'अस्य' इदं स्तोत्रं 'वित्त' जानीतम्॥ ९॥

९। ऋ० सं० १ म० १०५ सू० १ ऋ०।

Sāy.'s grm. notes :—

चन्द्रमाः—चन्द्रमाह्लादनं सर्वस्य जगतो निर्मिमीत इति चन्द्रमाः। चन्द्रे माङो डित, उ० ४. २२७, इत्यसुन्। वित्तम्—विद ज्ञाने लोकादादित्वाच्छपो लुक्। अस्य—क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी।

———

अवस्युर्ऋषिः। पङ्क्तिश्छन्दः।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रति प्रियतमं रथं वृषणं वसुवाहनम्।
३ १ २ ३ २ ३ १ २
स्तोता वामश्विनावृषिः स्तोमेभि-
३ २ ३ २ ३ १ २ ३ १ २
र्भूषति प्रति माध्वी मम श्रुतं हवम्॥ १० ॥४१८॥

प्रति । प्रियऽतमम् । रथम् । वृषणम् । वसुऽवाहनम् । स्तोता । वाम् । अश्विनौ इति । ऋषिः । स्तोमेभिः । भूषति । प्रति । माध्वी इति । मम । श्रुतम् । हवम् ॥ १० ॥

भाष्यसारः । हे अश्विनौ ! स्तोता, ऋषिः, स्तोमेभिः—स्तोत्रैः, वाम्—युवयोः, प्रियतमं वृषणम्—फलानां वर्षितारम्, वसुवाहनम्—धनानां वाहकम्, रथम्, प्रति-भूषति—अलङ्करोति । माध्वी—हे मधुविद्यावेदितारौ, हवम्—आह्वानम्, श्रुतम्—शृणुतम् ॥ १० ॥

The sage, your worshipper, O Aśvins, glorifies with praises, your dear car, the showerer (of blessings), the conveyor of wealth, listen to my call, O masters of 'Madhu-vidyā'.—10.

**सा०-भा० ।** हे 'अश्विनौ !' एकः प्रति-शब्दोऽनुवादः, 'वां' युवयोः 'प्रियतमं' 'रथं' 'स्तोता' 'ऋषिः' 'स्तोमेभिः' स्तोमैः 'प्रति-भूषति' अलङ्करोति । कीदृशं रथम् ? 'वृषणं' फलानां वर्षितारं 'वसुवाहनं' धनानां वाहकम् ईदृशं रथमागमनाय स्तौतीत्यर्थः । तस्मात् हे 'माध्वी' मधुविद्यावेदितारौ ! 'मम हवम्' आह्वानम् 'श्रुतं' शृणुतम् ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य सप्तमः खण्डः । पञ्चमप्रपाठकस्य च प्रथमार्धे तृतीया दशतिः ॥

१० । ऋ० सं० ५म० ७५ सू० ३ऋ० । ṚV. reads **'स्तोमेन'** (sg.) instead of **'स्तोमेभिः'** (pl.). उ० आर्चि० १०९३ ।

वृषणं वसुवाहनं रथम्—the mighty treasure-bringing car.

माध्वी—the masters of 'Madhu-vidyā', which, Grfth. says, is the knowledge that teaches where Soma is to be found ; 'masters of mystic lore'—*Wils.* The reference to 'Madhu-vidyā' is found in ṚV. i. 116. 12, where *Dadhyac* is said to have taught this science to Aśvins. It is told that Indra, having taught the sciences called *Pravargya-vidyā* and *Madhu-vidyā* to *Dadhyac*, prohibited him to teach these sciences to anybody else, and said if the sage would teach them to anybody, he would separate his head from the body. The Aśvins, however, prevailed upon him to teach them the prohibited knowledge and to evade Indra's threat, took off the head of the sage, replacing it by that of a horse. Indra, being aware of *Dadhyac's* breach of faith, cut off his horse head with the thunderbolt ; thereon the Aśvins restored to him his own head. The *Pravargya-vidyā* is said to imply certain verses of the *Ṛk*, *Yajur* and *Sāma Vedas*, and the *Madhu-vidyā*, the *Brāhmaṇa*.

---

अथ चतुर्थाध्यायस्य अष्टमः खण्डः। पञ्चमप्रपाठकस्य च प्रथमार्धे चतुर्थी दशतिः।

वसुश्रुत ऋषिः। पङ्क्तिश्छन्दः।

१ २ २ १ २ ३ १ २
आ ते अग्न इधीमहि द्युमन्तं देवाजरम्।
२ ३ २ ३ १ २ ३ २ ३
यद्ध स्या ते पनीयसी समिद्दी-
१ २ ३ १ २र ३ २ ३ १ २
दयति द्यवीषं स्तोतृभ्य आ भर॥१॥४१९॥

आ। ते। अग्ने। इधीमहि। द्युऽमन्तम्। देव। अजरम्। यत्। ह। स्या। ते। पनीयसी। सम्ऽइत्। दीदयति। द्यवि। इषम्। स्तोतृभ्यः। आ। भर॥ १॥

भाष्यसारः। हे अग्ने देव! द्युमन्तम्—दीप्तिमन्तम्, अजरम्—जरारहितम्, ते—त्वाम्, आ—सर्वतः, इधीमहि—प्रज्वालयामः; यद् ह—यतः खलु, ते—तव, स्या—सा, पनीयसी—प्रशस्ता, समित्—द्युतिः, द्यवि—दिवि, दीदयति—दीप्यते, त्वञ्च स्तोतृभ्यः, इषम्—अन्नम्, आ-भर—आहर, देहि॥ १॥

We ignite thee, radiant Agni, shining and undecaying, so that thy splendid lustre shines in heaven; do thou offer food to thy worshippers.—1.

**सा०-भा०।** हे 'अग्ने देव'! 'द्युमन्तम्' दीप्तिमन्तम् 'अजरम्' अजीर्णम् 'ते' त्वाम् 'आ' सर्वतः 'इधीमहि' दीपयामः। 'यद्ध' खलु 'ते' त्वदीया 'स्या' सा 'पनीयसी' स्तुत्यर्हा 'समिद्' दीप्तिः 'दीदयति' दीप्यते 'द्यवि' द्युलोके। किञ्च, 'स्तोतृभ्यो'ऽस्मभ्यम् 'इषम्' अन्नम् 'आ-भर' आहर॥ १॥

१। ऋ० सं० ५ म० ६ सू० ४ ऋ०। उ० आर्चि० ३७२।

ते—त्वाम्; *gen.* ते is the substitute of तुभ्यम् and तव, here stands for त्वाम्, an instance of विभक्तिव्यत्यय।

द्युमन्तम्—bright, refulgent.

पनीयसी समित्—glorious blaze—*Wils.*; Grfth. takes समित् to mean '*fuel*'. इषम्—अन्नम् food, Ngh. 2. 7; Nir. 6. 26. 29; 9. 43; 11. 29.

विमद ऋषिः । पङ्क्तिश्छन्दः ।

१ २र ३ १ २
आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
३ १ २ ३ १ २ ३ २ ३ १ २
शीरं पावकशोचिषं वि वो मदे
३ १ २ ३ १ २ ३ १ २
यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥ २ ॥ ४२० ॥

आ । अग्निम् । न । स्ववृक्तिऽभिः । होतारम् । त्वा । वृणीमहे । शीरम् । पावकऽशोचिषम् । वि । वः । मदे । यज्ञेषु । स्तीर्णऽबर्हिषम् । विवक्षसे ॥२॥

भाष्यसारः । हे अग्ने ! वयं स्ववृक्तिभिः—स्वकृतस्तुतिभिः, होतारम्—होमनिर्वाहकम् देवानामाह्वातारं वा, शीरम्—ओषध्यादिषु सर्वत्र वर्तमानम्, पावकशोचिषम्—पुण्यप्रभम्, यज्ञेषु, स्तीर्णबर्हिषम्—आस्तीर्णकुशम्, त्वा—त्वाम्, अग्निम्, न—सम्प्रति, वः, वि-मदे—सोमपानजन्यमदार्थम्, आ-वृणीमहे—आभिमुख्येन सम्भजामहे । विवक्षसे—महान् असि ॥ २ ॥

With our own offerings or praises, we adore thee, now, Agni, the invoker of the gods, all-pervading, of purifying flame, for whom holy grass has been spread, in the sacrifice, for thy delight ; thou art great.—2.

**सा०-भा० ।** हे अग्ने ! 'वः' तव स्वभूते 'वि-मदे' एतदाख्ये ऋषौ मयि इयं स्तुतिः प्रवृत्तास्ति । 'ने'ति सम्प्रत्यर्थे । अतो वयमिदानीं 'स्ववृक्तिभिः' स्वयङ्कृताभिः दोषवर्जिताभिः स्तुतिभिः 'होतारं' देवानामाह्वातारं होमनिष्पादकं वा 'अग्निं' 'त्वा' त्वाम् 'आ-वृणीमहे' आभिमुख्येन सम्भजामहे । कीदृशम्? 'यज्ञेषु' यागेषु 'स्तीर्णबर्हिषम्' आसादितबर्हिष्कम् । 'शीरम्' ओषध्यादिषु सर्वत्रानुशायिनम् । 'पावकशोचिषं' शोधकदीप्तिम् । 'विवक्षसे', महन्नामैतत्, हे अग्ने ! त्वमपि महान् भवसि । यद्वा, 'वि-मदे' यज्ञस्य सम्बन्धिनः सोमस्य पानजन्यविविधमदार्थं त्वाम्'आवृणीमहे' इति योज्यम् ॥ २ ॥

२ । ऋ० सं० १० म० २१ सू० १ ऋ० । ṚV. reads 'यज्ञाय स्तीर्णबर्हिषे वि वो मदे शीरं पावकशोचिषं विवक्षसे' in the place of the whole 2nd line 'शीरं पावकशोचिषं' etc.

स्ववृक्तिभिः—वृक्ति is fr. rt. वृज् originally meaning *cleansing* and hence secondarily it means something free from defects, here, ref. to 'praise'.

शीरम्—means, lying in all, all-pervading ; 'शीरम् अनुशायिनमिति वा आशिनमिति वा'—dr. fr. rt. शी or अश्, Nir. 4. 14 ; *vide* our notes on शीरशोचिषम्—SV. 1. 49 ; 'thee, who underliest all things'—*Wils.* ; Grfth. renders 'शीरं पावकशोचिषम्' as *piercing and brightly shining*, this is apparently inaccurate, he had perhaps no right understanding of the word शीरम्. The word शीर, with the above etymology, always refers to Agni, cf. ṚV. iii. 9. 8 ; viii. 43. 31 ; 102. 11. पावकशोचिषम्—of purifying radiance, with immaculate brilliance.

विवक्षसे—is read among the synonyms of महत् (great), Ngh. 3. 3.

---

सत्यश्रवा ऋषिः । पङ्क्तिश्छन्दः ।

२ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
महे नो अद्य बोधयोषो राये दिवित्मती ।
१ २ ३ १ २ ३ १ २
यथा चिन्नो अबोधयः सत्यश्रवसि
३ १ २र ३ १ २
वाय्ये सुजाते अश्वसूनृते ॥ ३ ॥४२१॥

महे । नः । अद्य । बोधय । उषः । राये । दिवित्मती । यथा । चित् । नः । अबोधयः । सत्यऽश्रवसि । वाय्ये । सुऽजाते । अश्वऽसूनृते ॥ ३ ॥

भाष्यसारः । हे उषः देवि ! दिवित्मती—दीप्तिमयी, त्वं यथा चित्—यथैव, पूर्वं नः—अस्मान्, अबोधयः—बोधितवती, तथैव अद्य नः महे—महते, राये—धनलाभाय, बोधय—प्रकाशय । सुजाते—हे शोभनोद्भवे, अश्वसूनृते—हे अश्वकृते प्रियसत्यस्तुतियुक्ते देवि ! त्वं वाय्ये—वय्यपुत्रे, सत्यश्रवसि मयि, प्रसीदेति शेषः ॥ ३ ॥

Refulgent Uṣas, awaken us to-day for abundant wealth, as thou didst waken us before ; O thou, well-born, served with good hymns for the gain of horses, be propitious to Satyaśravas, the son of Vayya.—3.

सा०-भा० । 'अद्य' अस्मिन् यागदिने हे 'उषः' उषोदेवि ! 'दिवित्मती' दीप्तिमती त्वं 'नो'ऽस्मान् 'महे' महते 'राये' धनप्राप्तये 'बोधय' प्रज्ञापय, प्रकाश-

येत्यर्थः, सति प्रकाशे क्रतुद्वारा द्रव्यस्योपार्जयितुं शक्यत्वात्। 'यथा चित्' यथैव पूर्वं 'नो'ऽस्मानबोधयः, अतीतेषु दिवसेषु यथा बोधितवती तद्वदद्यापीत्यर्थः। हे 'सुजाते' शोभनं जातं जन्माविर्भावो यस्यास्तादृशि! हे 'अश्वसूनृते' अश्वार्था प्रियसत्यात्मिका स्तुतिवाग् यस्याः सा, हे तादृशि देवि! 'वाय्ये' वय्यपुत्रे 'सत्यश्रवसि' मयि अनुगृहाणेत्यर्थः॥ ३॥

३। ऋ० सं० ५ म० ७९ सू० १ ऋ०। उ० आर्चि० १०९०।

The concluding phrase 'सत्यश्रवसि···अश्वसूनृते' is the burden of every stanza of the original hymn of the Ṛ̣V.

महे ( = महते ) राये—for the acquisition of ample riches—*Wils.*; to ample opulence—*Grfth.*

दिवित्मती—radiant ; सुजाते—born or becoming manifest with splendour.

अश्व-सूनृते—Sāy. explains 'अश्वार्था प्रियसत्यात्मिका स्तुतिवाक् यस्याः' who is praised with true and favourite hymns for the sake of horses ; In i. 113. I8, *Uṣasas* are called *givers of horses, of cows, of cattles and of progeny* which represent general wealth.

---

विमद ऋषिः। पङ्क्तिश्छन्दः।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
भद्रं नो अपि वातय मनो दक्षमुत क्रतुम्।
१ २ ३ १ २र ३ २ ३ २ ३
अथा ते सख्ये अन्धसो वि वो मदे
२ ३ २ ३ १ २र ३ १ २
रणा गावो न यवसे विवक्षसे॥ ४ ॥४२२॥

भद्रम्। नः। अपि। वातय। मनः। दक्षम्। उत। क्रतुम्। अथ। ते। सख्ये। अन्धसः। वि। वः। मदे। रणाः। गावः। न। यवसे। विवक्षसे॥ ४॥

भाष्यसारः। हे सोम! वः अन्धसः वि-मदे—त्वत्सम्बन्धिनि सोमरसरूपान्नपानेन प्रहर्षे सति, त्वं नः—अस्माकम्, मनः दक्षम् अपि—अन्तरात्मानं च, उत क्रतुम्—

प्रज्ञाम् अपि, भद्रम्—कल्याणम्, वातय—प्रापय। अथ—तदनन्तरम्, स्तोता, यवसे—तृणे, रणाः—प्रीतियुक्ताः, गावः न—गाव इव, ते—तव, सख्ये—सौहार्दे, रमतामिति शेषः ॥ ४ ॥

Purify (Soma), our mind, the inner soul and wisdom; may thy adorers rejoice in thy friendship, as cows in fresh grass, in the wild rapture (caused) by the food (of Soma-juice); for, thou art great.—4.

**सा०-भा०।** हे सोम! त्वं 'नो'ऽस्मदीयं 'मनः' 'भद्रं' कल्याणं शुभसङ्कल्पलक्षणं 'वातय' गमय, अस्माकं मनः शुभसङ्कल्पं कुर्वित्यर्थः। यथा 'दक्षं' वृद्धमपि सर्वव्यापिनमन्तरात्मानमपि 'भद्रं' शुभकारित्वलक्षणं प्रापय, अस्माकमन्तरात्मानं शुभकारिणं कुर्वित्यर्थः; 'उत' अपि च 'क्रतुं' प्रज्ञानं भद्रं शुभाध्यवसायलक्षणं प्रापय, शुभाध्यवसायिनं कुर्वित्यर्थः। 'अथ' अनन्तरं स्तोतारः 'ते' तव 'सख्ये' स्तुत्यस्तोतृत्वेऽयष्टृत्वलक्षणे सखिकर्मणि रमन्तामिति शेषः। तत्र दृष्टान्तः, 'यवसे' घासे 'रणाः' प्रीतियुक्ता 'गावो' 'न' गाव इव, ता यथा प्रीतिं कुर्वन्ति तद्वत्। कस्मिन् सति? 'अन्धसः' सोमाख्यस्यान्नस्य सम्बन्धिनि 'वः' तव 'वि-मदे' विविधसोमजन्यमदनिमित्ते सति। कस्मादेवम्? यस्माद् 'विवक्षसे' महान् भवसि ॥ ४ ॥

४। ऋ० सं० १० म० २५ सू० १ ऋ०।

वातय—fr. rt. वात् (वातयति) to fan; to serve; to make happy; to go *Dhātup.* xxxv, 30.

दक्षम्—Sāy. explains this word as 'अन्तरात्मानम्' which Wilson translates *the heart*; the phrases 'वि वो मदे' and 'विवक्षसे' are repeated in all the stanzas of the original hymn, as in the hymns X. 21. and X. 24.

विवक्षसे—*Vide* notes on SV. I. 420.

---

गोतम ऋषिः। पङ्क्तिश्छन्दः।

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २
क्रत्वा महाँ अनुष्वधं भीम आ वावृते शवः।
१ २ ३ १ २ ३ २ ३ २ ३ १
श्रिय ऋष्व उपाकयोर्नि शिप्री
२र ३ १ २ ३ १ २ ३ २
हरिवां दधे हस्तयोर्वज्रमायसम् ॥ ५ ॥४२३॥

क्रत्वा । महान् । अनुऽस्वधम् । भीमः । आ । ववृते । शवः । श्रिये । ऋष्वः । उपाकयोः । नि । शिप्री । हरिऽवान् । दधे । हस्तयोः । वज्रम् । आयसम् ॥ ५ ॥

भाष्यसारः। क्रत्वा—कर्मणा प्रज्ञया वा, महान् इन्द्रः, अनुष्वधम्—स्वधापानात् परम्, भीमम्—भीषणम्, शवः—बलम्, आ-ववृते—अभिमुखं प्रवर्तयते। ततः ऋष्वः—दर्शनीयः, शिप्री—शोभनहनुः, हरिवान्—स्वकीयाश्वयुक्तः, सः उपाकयोः—सन्निहितयोः, हस्तयोः आयसम्—लौहमयम्, वज्रम्, श्रिये—अस्माकं सम्पदर्थम्, वा नि-दधे—धारयति ॥ ५ ॥

Magnified through exploits, fierce (to foes) by taking sacrificial food, Indra manifests his strength ; beautiful to look at, with broad cheeks and possessed of horses, he holds the iron thunderbolt in his hands for our prosperity.—5.

**सा०-भा०।** 'क्रत्वा' कर्मणा प्रज्ञया वा 'महान्' सर्वाधिकः 'भीमः' शत्रूणां भयङ्कर इन्द्रः 'अनुष्वधं' 'स्वधे'त्यन्ननाम ( नै० २,७, १७ ), स्वधायां विभक्त्यर्थेऽव्ययीभावः, सोमलक्षणस्यान्नस्य पाने सतीत्यर्थः। 'शवः' आत्मीयं बलम् 'आ वावृते' आभिमुख्येन प्रावर्त्तयत्। तदनन्तरम् 'ऋष्वो' दर्शनीयः 'शिप्री' हनुमान्, नासिकावान्वा। 'हरिवान्' हरिभ्यामश्वाभ्यामुपेतः इन्द्रः। 'उपाकयोः' समीपवर्त्तिनो'र्हस्तयो'र्बाह्वोः 'आयसम्' अयोमयं 'वज्रं' 'श्रिये' सम्पदर्थं 'नि-दधे' निदधाति, स्थापयति। सोमपानेन हृष्टः प्रबल इन्द्रः शत्रूणां हननाय हस्ते वज्रं गृह्णातीत्यर्थः ॥ ५ ॥

५। ऋ० सं० १ म० ८१ सू० ४ ऋ०। ṚV. reads 'वावृधे' instead of 'वावृते'।

अनुस्वधम्—vide, *Pāṇ.* ii. 1. 6. ऋष्व:—Cp. *Ngh.* iii. 2.

शिप्री—cf. 'शिप्रे हनूनासिके वा', *Ngh.* xii. 17.

---

गोतम ऋषिः। पङ्क्तिश्छन्दः।

२ ३ १ २र ३ २ ३ १ २ ३ १ २
स घा तं वृषणं रथमधि तिष्ठाति गोविदम्।
१ २र ३ २ ३ १ २ ३
यः पात्रं हारियोजनं पूर्णमिन्द्र
१ २ ३ २ ३क २र ३ १ २
चिकेतति योजा न्विन्द्र ते हरी ॥ ६ ॥ ४२४ ॥

सः । घ । तम् । वृषणम् । रथम् । अधि । तिष्ठाति । गोऽविदम् । यः । पात्रम् । हारिऽयोजनम् । पूर्णम् । इन्द्र । चिकेतति । योज । नु । इन्द्र । ते । हरी इति ॥ ६ ॥

भाष्यसारः । **हे इन्द्र! यः रथः, हारियोजनम्—धानामिश्रम्, पूर्णम्—सोमपूर्णम्, पात्रम्, चिकेतति—ज्ञापयति, सः घ—स एव, त्वं तं वृषणम्—कामवर्षकम्, गोविदम्—गवां प्रापयितारम्, रथम्, अधि-तिष्ठाति—अधि-तिष्ठतु। ततः ते हरी—त्वदीयावश्वौ, नु—क्षिप्रम्, योज—रथे योजय ॥ ६ ॥**

May he ride on that car which showers (blessings), gives cattle and grants the plate filled with the mixture of Soma-juice and barley ; quickly, Indra, harness thy twain horses (to thy car).—6.

**सा०-भा० । 'स घ' स खल्विन्द्रः 'वृषणं' कामाभिवर्षकं 'गोविदं' गवां लम्भयितारं 'रथम्' 'अधि-तिष्ठाति'। ईदृशे रथे अधितिष्ठतु आरूढो भवतु। हे इन्द्र! 'यो' रथः 'हारियोजनम्' एतत्सञ्ज्ञं धानामिश्रितं 'पूर्णं' सोमेन पूर्णं 'पात्रं' 'चिकेतति' ज्ञापयति 'तं' रथमधितिष्ठेति पूर्ववान्वयः। अधिष्ठाय 'ते' त्वदीयौ 'हरी' अश्वौ 'नु' क्षिप्रं 'योज' रथे योजय ॥ ६ ॥**

**६ । ऋ० सं० १ म० ८२ सू० ४ ऋ० ।**

घा—for घ, ऋचि तु-नु-घेति दीर्घः। रथम्—'अधिशीङ्स्थासां कर्म' ( पा० १.४.४६ ) इत्यधिकरणस्य कर्मसंज्ञा। तिष्ठाति—तिष्ठतेर्लेट्याडागमः। चिकेतति—कित ज्ञाने, लेट्यडागमः। जुहोत्यादित्वाच्छपः श्लुः। बहुलं छन्दसीति वक्तव्यम् ( का० ७. ३. ८७. १ ) इति वचनाल्लाभ्यासस्याचि पितीति लघूपधगुणप्रतिषेधो न भवति।

अधि-तिष्ठाति—लेट् (Ved. subj.) 3. sg.—may he ascend or mount.

हारि-योजनम्—The appellation of a mixture of fried barley or other grain and Soma juice. It is an adj. referring to the पात्रम् ; *Grfth.* renders *—tawny coursers' harnesser.*

---

वसुश्रुत ऋषिः । पङ्क्तिश्छन्दः ।

२ १ २र ३ २उ ३ २ ३ १ २र ३ १ २
अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
२ ३ १ २ ३ २उ ३ १ २
अस्तमर्वन्त आशवोऽस्तं नित्यासो
३ २ ३ १ २ ३ २ ३ १ २
वाजिन इषं स्तोतृभ्य आ भर ॥ ७ ॥ ४२५ ॥

अग्निम् । तम् । मन्ये । यः । वसुः । अस्तम् । यम् । यन्ति । धेनवः । अस्तम् । अर्वन्तः । आशवः । अस्तम् । नित्यासः । वाजिनः । इषम् । स्तोतृऽभ्यः । आ । भर ॥ ७ ॥

भाष्यसारः । **यः वसुः—धनात्मकः, अस्तम्—गृहवदाश्रयभूतम्, यं धेनवः यन्ति, अस्तं यम् आशवः—द्रुतगाः, अर्वन्तः—अश्वाः, यन्ति, अस्तं यं नित्यासः—नित्यप्रवृत्ताः, वाजिनः—अन्नयुक्ताः, यजमानाः यन्ति, तम् अग्निं मन्ये—स्तौमि। हे अग्ने! स्तोतृभ्यः इषम्—अन्नम्, आ-भर—आहर ॥ ७ ॥**

I praise that Agni, who is the source of wealth, whom, the refuge of all, the cows, the swift horses, the constant offerers of oblations, resort to ; mayest thou, Agni, offer food to thy worshippers (hymners).—7.

**सा०-भा० । 'तम्' अग्निं 'मन्ये' स्तौमि । 'यः' अग्निः 'वसुः' वासकः । 'यम्' 'अस्तं' सर्वेषां गृहवदाश्रयभूतं 'धेनवः' गावः 'यन्ति' गच्छन्ति प्रीणयितुम् । 'अस्तम्' उक्तलक्षणम् 'अर्वन्तः' अरणवन्तोऽश्वाः 'आशवः' शीघ्रगामिनः यन्ति । तथा 'नित्यासः' नित्यप्रवृत्तयो 'वाजिनः' हविर्लक्षणान्नवन्तो यजमानाः यम् अस्तं यन्ति तं मन्ये । 'इषम्' अन्नं 'स्तोतृभ्यः' अस्मभ्यम् 'आ-भर' आहर इति ॥ ७॥**

**७। ऋ० सं० ५ म० ६ सू० १ ऋ० । उ० आर्चि० १०८७ । यजुः १५, ४१ ।**

अस्तम्—Sāyaṇa explains—सर्वेषां गृहवदाश्रयभूतम्—the house-like asylum of all ; Mahīdhara renders अस्तम् as गृहम् (the home).

वाजिनः—rfs. to the sacrificers provided with oblations to be offered to the gods. वाज is a syn. of अन्न (food). Ngh. 2. 7. Grfth. inspite of the mention of अर्वन्तः ( =अश्वाः, horses ) in the preceding clause, renders वाजिनः as *strong steeds* ; this is a mere tautology. मन्ये—fr. मन् , to know, *here* to *praise*. 4. Ā—'I glorify' —*Wils.* ; Grfth. translates, *I think of*. 'I meditate' might have been more approximate to the accurate sense.

---

अंहोमुग्वामदेव्य ऋषिः। बृहतीच्छन्दः।

२उ ३ १ २ ३१ २र ३ १ २
न तमंहो न दुरितं देवासो अष्ट मर्त्यम्।
३ १ २ १ १ २ ३ २ ३ १
सजोषसो यमर्यमा मित्रो
२र ३ १ २ ३ २ ३ १ २
नयति वरुणो अति द्विषः ॥ ८ ॥ ४२६ ॥

न। तम्। अंहः। न। दुःऽइतम्। देवासः। अष्ट। मर्त्यम्। सऽजोषसः। यम्। अर्यमा। मित्रः। नयति। वरुणः। अति। द्विषः ॥ ८ ॥

भाष्यसारः। देवासः—हे देवाः! अर्यमा—अरीणां नियामको देवः, मित्रः—मीतेः हिंसायाः रक्षिता देवः, वरुणः—पापानां वारको देवः, सजोषसः—समानाः प्रीताः सन्तः, यं द्विषः—शत्रून्, अति—अतिक्रम्य, नयति—नयन्तीत्यर्थः, तं मर्त्यम्—मानुषं स्तोतारम्, अंहः—पापम्, न अष्ट—व्याप्नोति, दुरितम्—पापजन्या दुर्गतिः, च न व्याप्नोति ॥ ८ ॥

Neither sin nor distress (caused by sin), O gods, affect the mortal, whom Aryaman, Mitra and Varuṇa, being equally pleased, lead beyond the reach of his enemies.—8.

**सा०-भा०।** हे 'देवासः' देवाः! आज्जसेरसुक् (७,१,५०), 'तं' 'मर्त्यं' मनुष्यम् 'अंहः' पापं 'दुरितं' तत्फलरूपं दुर्गमनञ्च 'नाष्ट' न प्राप्नोति, अश्नोतेर्लुङि झलो झलीति सिचो लोपः, अडभावश्छान्दसः। 'अर्यमा' अरीन् नियच्छति इति एतत्संज्ञको देवः। नयति शत्रून् 'मित्रः', प्रमीतेः त्राता देवश्च नयति। 'वरुणः' पापानां निवारको देवः 'यं' 'नयति'। एते त्रयो देवाः 'सजोषसः' सङ्गताः समानाः प्रीयमाणा वा भवन्तः 'द्विषः' द्वेष्टॄन् शत्रून् 'अति'क्रम्य यं स्तोतारं नयन्ति, अभिमतं देशं प्रापयन्ति। प्रत्येकविवक्षया एकवचनम्। तस्याग्नेस्त्यन्वयः ॥ ८ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य अष्टमः खण्डः। पञ्चमप्रपाठकस्य च प्रथमार्द्धे चतुर्थी दशतिः ॥

इति पाङ्क्तम्।

८। ऋ० सं० १० म० १२६ सू० १ ऋ०। R̥V. reads '**नयन्ति**' (pl.) instead of '**नयति**' (sg.) which seems to be separately connected with each of the three divinities mentioned in the SV. text, above.

अर्यमा, मित्रः, वरुणः—vide *ante*.

अष्ट—fr. rt. अश् to *pervade*.

---

अथ चतुर्थाध्यायस्य नवमः खण्डः। पञ्चमप्रपाठकस्य च प्रथमार्द्धे पञ्चमी दशतिः।

ऋणत्रसदस्यूसहितावृषी। द्विपदा विराट् छन्दः।

२ ३ २ ३ १ २
**परि प्र धन्वेन्द्राय सोम**
३ २ ३ १ ३ १ २र
**स्वादुर्मित्राय पूष्णे भगाय ॥ १ ॥४२७॥**

परि। प्र। धन्व। इन्द्राय। सोम। स्वादुः। मित्राय। पूष्णे। भगाय ॥ १ ॥

भाष्यसारः। **हे सोम! स्वादुः त्वम्, इन्द्रादिभ्यो देवेभ्यः, परि-प्र-धन्व—परितः प्रक्षर ॥ १ ॥**

Flow on, Soma, of sweet taste, for Indra, Mitra, Pūṣan and Bhaga.—1.

**सा०-भा०।** परिप्रधन्वप्रभृतित्रृचस्त्रिशद्भवन्ति हि।
एतासान्तु ऋषिच्छन्दोदेवतास्तु पृथक् पृथक्।
वक्ष्यन्ते सायणार्येण तत्र तत्र परिस्फुटम् ॥

आद्यानां षण्णाम् ऋणत्रसदस्यूसहितावृषी, पवमानो देवता। तत्रादिर्द्विपदा।

हे 'सोम!' 'स्वादुः' स्वादुरसस्त्वम् 'इन्द्राय' 'मित्राय' 'पूष्णे' 'भगाय', एतेभ्यो देवेभ्यः 'परि प्र धन्व' परितः पात्रेषु प्रक्षर ॥ १ ॥

१। ऋ० सं० ९ म० १०९ सू० १ ऋ०। उ० आर्चि० ६, १, ८, १ (2.714).

The metre is 'Dvipadā Virāj' (a species of Gāyatrī only of two pādas, having 20 syllables (12 + 8 or 10 + 10).

Verses 1-6 and 10 of this decade are addressed to Pavamana Soma (the Soma-juice being filtered through the strainer of wool).

---

ऋणत्रसदस्यूसहितावृषी । त्रिपदा अनुष्टुप् पिपीलिकमध्या छन्दः ।

२ ३ १   २र ३ १ २   ३ १२ ३ १ २ २ १ २

पर्यू पु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।

३ २ ३ १ २   ३ १ २

द्विषस्तरध्या ऋणया न ईरसे ॥ २ ॥ ४२८ ॥

परि । ऊम् इति । सु । प्र । धन्व । वाजऽसातये । परि । वृत्राणि । सक्षणिः । द्विषः । तरध्यै । ऋणऽयाः । नः । ईरसे ॥ २ ॥

भाष्यसारः । हे सोम ! सु—सुष्ठु, वाजसातये—अन्नदानाय, परि-प्र-धन्व—परितः प्रगच्छ । सक्षणिः—सहिष्णुस्त्वम्, वृत्राणि—शत्रून्, परि—परिगच्छ । यतः नः—अस्माकम्, ऋणयाः—ऋणानां शोधयिता, त्वं द्विषः—शत्रून्, तरध्यै—हन्तुम् ईरसे—परिगच्छसि ॥ २ ॥

Flow on, Soma, to bring us food ; endued with forbearance conquer (our) enemies ; the releaser of our debts, thou dost rush forth to do away with our foes.—2.

सा०-भा० । त्रिपदा अनुष्टुप् पिपीलिकमध्या ।

हे 'सोम !' सुष्ठु 'वाजसातये' अस्मभ्यमन्नदानायैव 'परि-प्र-धन्व' परितः प्रगच्छ । यद्वा, 'वाजसातये' अन्नलाभाय संग्रामं प्रगच्छ । किञ्च, 'सक्षणिः' सहनशीलस्त्वं 'वृत्राणि' शत्रून् 'परि' गच्छ । तदेवोच्यते, 'नः' अस्माकम् 'ऋणया' 'ऋणानां यापयिता विनाशयिता त्वं 'द्विषः' शत्रून् 'तरध्यै' तरीतुं हन्तुम् 'ईरसे' परिगच्छसि ॥ २ ॥

२ । ऋ० सं० ६ म० ११० सू० १ ऋ० । उ० आर्चि० ६, १, ७, १ (2.711).

The metre 'Anuṣṭup Pipīlikamadhyā' has a pāda of four syllables and three others of eight syllables each.

---

ऋणत्रसदस्यूसहितावृषी। द्विपदा विराट् छन्दः।

१ २ ३ १ २ ३ २
**पवस्व सोम महान्त्समुद्रः**
३ २ ३ २ ३ २ ३ १ २र
**पिता देवानां विश्वाभि धाम ॥ ३ ॥ ४२९ ॥**

पवस्व। सोम। महान्। समुद्रः। पिता। देवानाम्। विश्वा। अभि। धाम ॥ ३ ॥

भाष्यसारः। हे सोम! महान् समुद्रः—द्रवीभूतरसवाही, देवानां पिता—पालयिता, त्वं विश्वा—विश्वानि सर्वाणि, धाम—धामानि शरीराणि, अभि—उद्दिश्य, परि—परितः, पवस्व—क्षर ॥ ३ ॥

Run forth, Soma, the mighty shedder of juice, the father of the gods, towards all persons.—3.

**सा०-भा०।** हे 'सोम!' 'महान्' देवेभ्यो दीयमानत्वेन महत्त्वयुक्तः। 'समुद्रः' समुन्दनः, यस्मात् समुद्रवन्ति रसास्तादृशः। 'पिता' सर्वेषां पालयिता त्वं 'देवानां' 'विश्वा' विश्वानि सर्वाणि 'धाम' धामानि शरीराण्यभि'लक्ष्य 'परि पवस्व' परिक्षर ॥ ३ ॥

३। ऋ० सं० ९ म० १०९ सू० ४ ऋ०। उ० आर्चि० ५, १, १७, १ (2.588).
महान्त्समुद्रः—for sandhi vide *ante*.
धाम—sing for धामानि (plu.).

———

ऋणत्रसदस्यूसहितावृषी।

१ २ ३ २उ ३ २ ३
**पवस्व सोम महे दक्षायाश्वो**
२ ३ २ ३ १ २र
**न निक्तो वाजी धनाय ॥ ४ ॥ ४३० ॥**

पवस्व। सोम। महे। दक्षाय। अश्वः। न। निक्तः। वाजी। धनाय ॥ ४ ॥

भाष्यसारः। हे सोम! अश्वः न—इव, निक्तः—जलैर्विशोधितः, वाजी—वेगयुक्तः, त्वं महे—महते, दक्षाय—बलाय, धनाय च, पवस्व—क्षर ॥ ४ ॥

Flow on, mighty Soma, for abundant strength, for wealth, purified like a strong steed bathed (in water).—4.

**सा०-भा०।** हे 'सोम!' 'अश्वो न' अश्वः इव 'निक्तः' वसतीवरीभिरद्भिर्विनिर्णिक्तः। 'वाजी' वेगवान् त्वं 'महे' महते 'दक्षाय' बलाय 'धनाय' धनार्थञ्च 'पवस्व' क्षर ॥ ४ ॥

४। ऋ० सं० ६ म० १०६ सू० १० ऋ०। ṚV. reads **'क्रत्वे'** (for intelligence) for **'महे'** ( **महते** adj. to **दक्षाय** )।

दक्षाय—'दक्ष' इति बलनाम, Ngh. ii. 9.

अश्वः न निक्तः वाजी—Soma is cleansed in the waters as a race-horse is washed by his groom.

---

ऋणत्रसदस्यूसहिताषृषी।

१ २ ३ २ ३ १ २ ३ २ ३ २ १ ३ १ २र

इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ ५ ॥ ४३१ ॥

इन्दुः। पविष्ट। चारुः। मदाय। अपाम्। उपऽस्थे। कविः। भगाय ॥ ५ ॥

भाष्यसारः। चारुः—हितमनोहररूपः, कविः—प्राज्ञः, इन्दुः—सोमः, मदाय—हर्षाय, भगाय—भजनीयाय धनाय, च अपाम्—जनानाम्, उपस्थे—अभ्यन्तरे, पविष्ट—पवते, क्षरतीत्यर्थः ॥ ५ ॥

Wise exquisite *Indu* flows into the waters for joy and for wealth.—5.

**सा०-भा०।** 'चारुः' कल्याणरूपः 'कविः' क्रान्तप्रज्ञः 'इन्दुः' सोमः 'अपाम्' उदकानाम् 'उपस्थे' उपस्थाने, अन्तरिक्षे पवित्रे वा, 'मदाय' मदार्थम् 'भगाय' भजनीयधनार्थञ्च 'पविष्ट' पवते ॥ ५ ॥

५। ऋ० सं० ६ म० १०६ सू० १३ ऋ०।

अपाम् उपस्थे—'on the lap of the waters'—*Wils.* and *Grfth.* Grfth. means, the water wherein the stalks of the plant are soaked. This is not the right

sense, the waters refer to the *Vasatīvarī* etc., into which passes the Soma-juice after being filtered through the strainer.

---

ऋणत्रसदस्यूसहितावृषी। त्रिपदा अनुष्टुप् पिपीलिकमध्या छन्दः।

२ ३ १ २ ३१ २ ३ १ २ ३ १ २ ३ १ २
**अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये।**
१ २ ३ १ ३ ३ १ २
**वाजाँ अभि पवमान प्र गाहसे ॥ ६ ॥ ४३२ ॥**

अनु। हि। त्वा। सुतम्। सोम। मदामसि। महे। समर्यऽ-राज्ये। वाजान्। अभि। पवमान। प्र। गाहसे ॥ ६ ॥

भाष्यसारः। हे सोम! सुतं त्वा—त्वाम्, अनु—अभिषवादनन्तरम्, मदामसि हि—अनुमदामः, क्रमेण स्तुमः खलु। पवमान—हे पूयमान, क्षरणशील सोम! महे समर्यराज्ये—महत् मनुष्यसहितं राज्यमनुपालयितुम्, वाजान्—परबलानि, अभि—अभिलक्ष्य, प्र-गाहसे—प्रगच्छसि ॥ ६ ।

We extol thee, Soma, after thou hast been pressed out, O purified, thou flowest to (the utter destruction of) the hostile forces for thy supreme power over men.—6.

**सा०-भा०।** हे 'सोम!' 'सुतम्' अभिषुतं 'त्वा' त्वां वयम् 'अनुमदामसि हि' अनुमदामः, अनुक्रमेणाभिष्टुमः खलु। हे 'पवमान' पूयमान सोम! स त्वं 'महे' महति 'समर्यराज्ये' महत् समनुष्यं त्वदीयं राज्यमनुपालयितु 'वाजान्' शत्रूबला-'न्यभि'लक्ष्य 'प्र-गाहसे' प्रगच्छसि ॥ ६ ॥

६। ऋ० सं० ६ म० ११० सू० २ ऋ०।

अनु—'in turn'—Wils.

मदामसि—*lit.* rejoice or delight thee.

समर्यराज्ये—*loc.* with dat. sense.

---

वसिष्ठ ऋषिः। द्विपदा छन्दः। मारुती।

१ ३क २र ३ २ ३ १ २ २ २ ३ २ ३ २ ३ १ २
**क ईं व्यक्ता नरः सनीडा रुद्रस्य मर्या अथा स्वश्वाः ॥७॥४३३॥**

के। ईम्। विऽअक्ताः। नरः। सऽनीडाः। रुद्रस्य। मर्याः। अथ। सुऽअश्वाः ॥ ७ ॥

भाष्यसारः। **व्यक्ताः—कान्तिमन्तः, नरः—नेतारः, सनीडाः—समानस्थानाः, रुद्रस्य पुत्राः, मर्याः—मानवानां हितकराः, अथ—अपि च, स्वश्वाः—शोभनाश्व-युक्ताः, ईम् के, भवन्तीति शेषः ॥ ७ ॥**

Who are these luminous chiefs, the sons of Rudra, dwelling together, benevolent to men, also possessed of noble horses.—7.

**सा०-भा०।** 'व्यक्ताः' कान्तियुक्ताः। 'नरः' नेतारः। 'सनीडाः' समानौकसः। 'रुद्रस्य' रोदनशीलस्य एतत्संज्ञकस्य 'मर्याः' मर्येभ्यो नृभ्यो हिताः। 'अथा'पि च 'स्वश्वाः' शोभनवाहाः 'ईम्' इमे एवम्भूताः 'के' भवन्ति? रूपातिशयात् ऋषिः आश्चर्येणाहेति ॥ ७ ॥

७। ऋ० सं० ७ म० ५६ सू० १ ऋ०।

ईम्—here appears as a particle, with interrogative के, it signifies *who pray?*

व्यक्ताः—resplendent—*Wils.*, radiant—*Grfth.*

The brilliance of the Maruts is constantly referred to as their characteristic feature; *vide* our notes on the Maruts, SV. 1. 174.

सनीडाः—*lit.* having the same nest or abode; 'the dwellers in one abode' —*Wils.* 'in serried rank, i. e., closely united'—*Grfth.*

अथ—*indec.* mg. *and, also, moreover*; cf. इमे सोमासो अधि तुर्वशे यदौ इमे कण्वेषु वाम् अथ'—these Somas are offered to you by Turvaśu and Yadu and *also* presented to you by the Kaṇvas.

पदपङ्क्तिः। आग्नेयी। वामदेव ऋषिः।

२ ३ २ ३ २ ३ २उ २ २ ३ २ ३ १ २ ३ १ २
अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम्।
२ १ २ ३ १ २
ऋध्यामा त ओहैः॥ ८॥ ४३४॥

अग्ने। तम्। अद्य। अश्वम्। न। स्तोमैः। क्रतुम्। न। भद्रम्। हृदिऽस्पृशम्। ऋध्याम। ते। ओहैः॥ ८॥

भाष्यसारः। हे अग्ने! अश्वं न—लोकवाहकमश्वमिव हविषो वाहकमित्यर्थः, क्रतुं न—कर्त्तारमिव उपकारकमित्यर्थः, भद्रम्—भजनीयं शुभकरं वा, हृदिस्पृशम्—हृदयङ्गमं हृद्यमित्यर्थः, तम्—प्रसिद्धं त्वाम्, अद्य ओहैः—इन्द्रादिप्रापकैः, स्तोमैः—स्तोत्रैः, ऋध्याम—समर्द्धयामः॥ ८॥

Agni, with praises bearing reward or blessings, we exalt thee, who art like a horse, like a benefactor, auspicious and nearest to our heart (i. e., beloved).—8.

**सा०-भा०।** हे 'अग्ने'! 'अद्य' अस्मिन्नहनि, वयमृत्विगादयः 'ओहैः' इन्द्रादिप्रापकैः 'स्तोमैः' स्तोत्रसमूहैः 'तं' प्रसिद्धं त्वाम् 'ऋध्याम' समर्धयामः। कीदृशं त्वाम्? 'अश्वं न' वोढारमश्वमिव तथा हविषो वाहकम्। 'क्रतुं न' कर्त्तारमिव उपकारिणमित्यर्थः। तथा 'भद्रं' भजनीयम्। 'हृदिस्पृशं' हृदयङ्गमम्, अतिशयेन प्रियमित्यर्थः॥ ८॥

८। ऋ० सं० ४ म० १० सू० १ ऋ०। यजुः १५, ४४। उ० आर्चि० ६,१,५,१।

Mahīdhara, in Yajur-Veda, explains the simile अश्वं न—'As the priests celebrate the horse of the *Aśvamedha* sacrifice, so do we glorify thee, Angi. Sāyaṇa explains—'Agni is the bearer of oblations as a horse is of burdens (वोढारम् अश्वमिव हविषो वाहकम्)।

ओहैः—Sāy. and Mahī. both derive ओहैः fr. rt. वह्, *to bear*; Mahī. explains it—'*bearing or causing to acquire fruit or reward*; Sāy.—'*causing to attain to Indra and other gods.* Benfey translates ओहैः—as '*mit dich erhebenden Eiedern*—with songs that extol thee; Grassman, '*mit Andacht*—with devotion; Ludwig, '*mit deiner billigung*—with thy approval; Grfth.—*with service.* All these meanings are conjectural. Grfth. remarks—the stanza is difficult

to construe and the meaning is obscure ; Wils. comments—the text is very elliptical.

क्रतुं न—Sāy. interprets '*like a benefactor*' ( उपकर्त्तारमिव ) ; Mahī. takes it to mean—*sacrifice* and explains 'may we augment that thy sacrifice, O Agni, with praises etc.

———

उष्णिक् छन्दः ।

३ १ २ ३ १ २र ३ १ २ ३ १ २ १ २ १ २
आविर्मर्य्या आ वाजं वाजिनो अग्मं देवस्य सवितुः सवम् ।
३ १ २
स्वर्गाँ अर्वन्तो जयत ॥९॥४३५॥

आविः । मर्याः । आ । वाजम् । वाजिनः । ग्मन् । देवस्य । सवितुः । सवम् । स्वर्गान् । अर्वन्तः । जयत ॥ ९ ॥

भाष्यसारः । **मर्याः—मनुष्याणां हितकराः, आविः—प्रकाशमानाः, वाजिनः—हविर्भोजिनः देवाः, सवितुः—प्रेरकस्य, देवस्य, सवम्—सोतव्यं सोमम्, ग्मन्—अगमन् । अतः हे यजमानाः, स्वर्गान्, अर्वन्तः—अश्वान्, च जयत ॥ ९ ॥**

The resplendent *Vājins*, benevolent to men, come to the Soma, to be effused, of god Savitṛ ; ye sacrificers, win the heavens and the horses.—9.

**सा०-भा० ।** पुर उष्णिक् । वाजिनां स्तुतिः । 'मर्याः' मनुष्येभ्यो हिताः 'आविः' प्रकाशमानाः 'वाजिनः' देवविशेषाः वाजिन-भाजः 'सवितुः' प्रेरकस्य 'देवस्य' 'सवम्' अभिषोतव्यं 'वाजम्' अन्नरूपं सोमं 'ग्मन्' अगमन् । ततो हे यजमानाः ! 'स्वर्गं' (?) 'जयत' तथा 'अर्वन्तः' अर्वतोऽश्वान् जयत ॥ ९ ॥

९ । ऋगियम् ऋग्वेदे नास्ति ।—not in the Ṛgveda.

Grfth. renders वाजिनः मर्याः by strong youths and means the Maruts by the expression.

सवम्—Nir. 11. 43.

———

ऐश्वरयोर्धिष्ण्या ऋषयः । द्विपदा छन्दः ।

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ २
**पवस्व सोम द्युम्नी सुधारो महानवीनामनु पूर्व्यः ॥१०॥४३६॥**

पवस्व । सोम । द्युम्नी । सुऽधारः । महान् । अवीनाम् । अनु । पूर्व्यः ॥ १० ॥

भाष्यसारः । **हे सोम! द्युम्नी—अन्नवान् यशस्वान् वा, सुधारः—शोभनधारायुक्तः, पूर्व्यः—पुरातनः, महान्, त्वम् अवीनाम्—रोम्णां रोमभ्यः, अनु—क्रमेण, पवस्व—क्षर ॥ १० ॥**

Flow, Soma, who art mighty and time-honoured, possessed of food or fame, having exuberant stream, through the wool, gradually.—10.

**सा०-भा० ।** हे 'सोम'! 'द्युम्नी' द्युम्नं द्योततेः, यशो वान्नं वेति यास्कः (नि० नै० ५, ५), अन्नवान् यशस्वी वा। 'सुधारः' शोभनधारायुक्तः 'पूर्व्यः' पुरातनः 'महान्' त्वम् 'अवीनां' रोम्णां, रोमभ्यः सकाशात्, 'अनु' क्रमेण 'पवस्व' क्षर ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य नवमः खण्डः । पञ्चमप्रपाठकस्य च प्रथमार्धे पञ्चमी दशतिः ॥

पञ्चमप्रपाठकस्य प्रथमार्धं समाप्तम्

१० । ऋ० सं० ९ म० १०९ सू० ७ ऋ० । ṚV. reads **'महां'** ( = **महताम्**, adj. ref. to **अवीनाम्** ) instead of **'महान्'** the SV. reading.

द्युम्नी—fr. द्युम्न ( with *tad.* इन् ) meaning splendour, glory, food etc., means one, possessed of food or glory. The word द्युम्न also means wealth, *Naigh.* ii. 10, for notes, vide *ante*.

---

अथ चतुर्थाध्यायस्य दशमः खण्डः। पञ्चमप्रपाठकस्य च द्वितीयार्द्धे प्रथमा दशतिः।

ऐन्द्री।

१ २ ३ १२ ३ १ २३ २ ३ १ २३१२

**विश्वतोदावन् विश्वतो न आ भर यं त्वा शविष्ठमीमहे ॥१॥४३७॥**

विश्वतःऽदावन्। विश्वतः। नः। आ। भर। यम्। त्वा। शविष्ठम्। ईमहे ॥ १ ॥

भाष्यसारः। **विश्वतोदावन्—हे सर्वतश्छेदनशील दानशील वा इन्द्र! शविष्ठम्—बलिष्ठम्, यं त्वा—त्वाम्, ईमहे—याचामहे, सः त्वं विश्वतः—सर्वतः, नः—अस्मभ्यम्, आ-भर—अभीष्टं देहि ॥ १ ॥**

O bestower from all sides, confer on us from every side our desired object, thou the strongest to whom, we pray.—1.

**सा०-भा०।** हे 'विश्वतोदावन्' सर्वतच्छेदनवन्, सर्वत्र दानवन् वा इन्द्र! स त्वं 'विश्वतः' सर्वतः 'नः' अस्मभ्यम् अभीष्टम् 'आ-भर' आहर। किञ्च, 'शविष्ठम्' अतिशयेन बलवन्तं 'यं' 'त्वाम्' 'ईमहे' अभीष्टं याचामहे ॥ १ ॥

१। इयम् ऋक् ऋग्वेदे नास्ति।

दावन्—may be derived from the root दो (अवखण्डने—to cut) or दाङ् (to bestow).

---

ऐन्द्री।

३२ ३२उ ३ २३ २३ १ २ ३२ ३२

**एष ब्रह्मा य ऋत्विय इन्द्रो नामश्रुतो गृणे ॥२॥४३८॥**

एषः। ब्रह्मा। यः। ऋत्वियः। इन्द्रः। नाम। श्रुतः। गृणे ॥ २ ॥

भाष्यसारः। **ऋत्वियः—सर्वर्त्तुषु वर्तमानः, यः एषः इन्द्रः नामश्रुतः ब्रह्मा—स्तोतॄणामभीष्टस्य वर्धयिता च भवतीति शेषः, तमहं गृणे—स्तौमि ॥ २ ॥**

This Indra is Brahman, renowned and augmenter of the prosperity of the hymners, present in all seasons; I praise him.—2.

**सा०-भा०।** 'ऋत्वियः' ऋतौ वसन्तादिसमये भवः 'यः' 'इन्द्रः' 'नामश्रुतः' विश्रुतः 'एषः' 'ब्रह्मा' स्तोतॄणामभीष्टस्य वर्द्धयिता तमहं 'गृणे' स्तौमि ॥२॥

इयम् ऋक् ऋग्वेदे नास्ति।

ऋत्वियः—for notes, vide *ante*.

---

त्रसदस्युः ऋषिः*।

३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३ १ २

**ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्द्धयन्नहये हन्तवा उ ॥३॥४३९॥**

ब्रह्माणः। इन्द्रम्। महयन्तः। अर्कैः। अवर्धयन्। अहये। हन्तवै। ऊम् इति ॥ ३ ॥

भाष्यसारः। ब्रह्माणः—ब्राह्मणाः, अहये—वृत्राय वृत्रमित्यर्थः, हन्तवै—हन्तुम्, अर्कैः—स्तोत्रैः, महयन्तः—पूजयन्तः, इन्द्रम्, अवर्धयन्—वर्धयन्ति ॥ ३ ॥

The Brahmins exalt Indra, praising him with hymns, in order that he might slay *Ahi*.—3.

**सा०-भा०।** 'अहये' वृत्राय, क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वात् हननक्रियायां वृत्रस्य सम्प्रदानसंज्ञा, 'वृत्रहन्तवै', तुमर्थे सेऽसेनिति ( ३,४,९ ) तवैप्रत्ययः, हन्तुम् 'अर्कैः' अर्चनीयैः स्तोत्रैः मन्त्रैः हविर्लक्षणैरन्नैर्वा 'महयन्तः' पूजयन्तः 'ब्रह्माणः' ब्राह्मणाः, 'इन्द्रम्', 'अवर्द्धयन्' वर्द्धयन्ति, प्रीतं कुर्वन्तीत्यर्थः ॥ ३ ॥

३। ऋ० सं० ५ म० ३१ सू० ४ ऋ०। This and the following verse are the two hemistichs transposed, of the ṚV. stanza referred to here, the last half becoming the above SV. stanza (I. 439) and the first half forming the next one (I. 440).

ब्रह्माणः—acc. to Sāy., refers to the Aṅgirasas ; Wils. has after Sāy.—'the venerable Aṅgirasas.

महयन्तः—fr. मह ( महयति ) to worship, cf. Naigh. iii. 14.

अर्कैः—'अर्को देवो भवति यदेनमर्चन्ति। अर्को मन्त्रो भवति यदनेनार्चन्ति अर्कमन्नं भवत्यर्चति भूतानि। अर्को वृक्षो भवति स वृत्तः कटुकिम्ना,' Nir. v. 4.

अहये—दानवाय—*Vivaraṇa*. cf. Ngh. i. 10 ; अहि is a syn. of मेघ and वृत्र.

हन्तवै—to kill ; Ved. inf. with aff. तवै.

---

* Ascribed to Avasyu in the Ṛg-Vedic index.

ऐन्द्री ।

१ २ ३ २३१ २ ३ २ ३ १ २ ३ १ २

**अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥४॥४४०॥**

अनवः । ते । रथम् । अश्वाय । तक्षुः । त्वष्टा । वज्रम् । पुरुऽहूत । द्युऽमन्तम् ॥ ४ ॥

भाष्यसारः । **पुरुहूत—हे बहूनामाहूत इन्द्र ! अनवः—मानवाः ऋभवः इत्यर्थः, ते—तव, अश्वाय—अश्वार्थम्, रथं तक्षुः—कृतवन्तः । तथा त्वष्टा—विश्वकर्मा, वज्रं द्युमन्तम्—दीप्तिमन्तं कृतवान् ॥ ४ ॥**

The men (Ṛbhus) have fashioned thy car fit for the horses, Tvaṣṭṛ, thy luminous thunderbolt, O thou invoked by many.—4.

**सा०-भा० । हे इन्द्र ! 'अनवः' मनुष्याः ऋभवः 'ते' त्वत्सम्बन्धिने 'अश्वाय' वाहनाय तदर्थं 'रथं' 'ततक्षुः' (?) कृतवन्तः । हे 'पुरुहूत' बहुभिराहूतेन्द्र ! 'त्वष्टा' विश्वकर्मा च त्वदीयं 'वज्रं' 'द्युमन्तं' दीप्तिमन्तमकरोत् ॥ ४ ॥**

४ । As for its reference to the ṚV. stanza, *see* our notes on the preceding verse.

अनवः—men. Ngh. 2. 3, *here* refers to *Ṛbhus.*

त्वष्टा—*see* our notes on the characteristic features of *Tvaṣṭṛ*, SV. 1. 147.

द्युमन्तम्—bright, effulgent, cf. 'इह द्युमत्तमं वद जयतामिव दुन्दुभिः'—utter thy brightest sound like the trumpet of the victorious, ṚV. i. 28. 5 ; *also* 'यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह'—he who presses out Soma-juice for him during day and night—ṚV. v. 34. 3. (द्युमान्—द्योतनवान्—*luminous*, *bright*, Yāska, Nir. 6. 19) ; *vide* द्युमद्गामन्—singer of *glorious* songs, SV. 1. 177.

———

ऐन्द्री ।

२ ३२ ३१ २३ २३ १ २र

**शं पदं मघं रयीषिणो न काम-**

३१ २ ३ १ २ ३ २

**मव्रतो हिनोति न स्पृशद्रयिम् ॥ ५ ॥ ४४१ ॥**

शम् । पदम् । मघम् । रयिऽईषिणः । न । कामम् । अव्रतः । हिनोति । न । स्पृशत् । रयिम् ॥ ५ ॥

भाष्यसारः । रयीषिणः—हविर्लक्षणं धनं प्रेषयन्तो जनाः, शम्—श्रेयः सुखं वा, पदम्—स्थानम्, मघम्—धनम्, च लभन्ते । अव्रतः—यज्ञादिकमकुर्वाणो जनः, न, कामम्—अभीष्टम्, हिनोति—लभते, तथा रयिम्—धनम्, न, स्पृशत्—स्पृशति, प्राप्नोतीत्यर्थः ॥ ५ ॥

Peace, (exalted) position and wealth are in the lot of those who desire to offer valued oblations; the non-sacrificing man does not obtain the desired object nor win the riches.—5.

**सा०-भा० ।** 'रयीषिणः' रयिं धनं हविर्लक्षणं प्रेषयन्तो जनाः 'शं' सुखं 'पदं' स्थानं 'मघं' धनं च लभन्ते इति शेषः । 'अव्रतः' इन्द्रविषययागादिकर्मरहितः पुरुषः शं सुखादिकं 'न हिनोति' न प्राप्नोति, दातुं समर्थो न भवतीत्यर्थः । स्वयमपि 'कामम्' अभीष्टं 'रयिं' रमणीयं धनं 'न स्पृशत्' न स्पृशति ॥ ५ ॥

५ । इयम् ऋक् ऋग्वेदे नास्ति ।

रयीषिणः—*lit.* of one who longs for wealth, secondarily, acc. to Sāy., of those who desire to offer wealth, in the form of oblations, to Indra.

अव्रतः—the riteless person or one who neglects the worship of the gods.

———

वैश्वदेवी ।

२ ३ २ ३ १ २ ३ १ २
सदा गावः शुचयो विश्वधा-
३ १ २ ३ १ २ ३ १ २
यसः सदा देवा अरेपसः ॥६॥४४२॥

सदा । गावः । शुचयः । विश्वऽधायसः । सदा । देवाः । अरेपसः ॥ ६ ॥

भाष्यसारः । गावः सदा शुचयः—पवित्राः, विश्वधायसः—विश्वधारणक्षमाः, भवन्ति । देवाः—दानादिगुणयुक्ताः, सदा अरेपसः—पापहीनाः, भवन्ति ॥ ६ ॥

Always are the cows immaculate and supporters of the universe, always are the gods free from sin.—6.

**सा० भा० ।** 'गावः' गन्तारः स्तोतारो वा 'सदा' इन्द्रं पररणादिभिरुपगच्छन्ति ते 'शुचयः' निर्मलाः 'सदा' सर्वदा 'विश्वधायसः' विश्वं धारयन्ति पुष्णन्तीति विश्वधायसः, बहन्नाः भवन्तीत्यर्थः । 'सदा' सर्वदा 'देवाः' दानादिगुणयुक्ताः 'अरेपसः' पापरहिताश्च भवन्ति ॥ ६ ॥

६ । इयम् ऋक् ऋग्वेदे नास्ति ।

गाव:—acc. to Sāy. means the sunbeams, or waters or the three Vedas.

अरेपस:—spotless ; fr, rt. रिफ् (कत्थनयुद्धनिन्दाहिंसादानेषु, *to boast to fight, to speak ill* etc., 6. p.)—with aff. असुन्, फ becomes प by पृषोदर etc. ; cf. 'इहेह जाता समवावशीतामरेपसा तन्वा नामभि: स्वै:'—born here and there, they (the Aśvins) are praised together for their glorious names and a sinless body ( अरेपसा—पापेन अलिप्यमानया, unstained by sin—Yāska, Nir. 12. 3 ; Ṛ̣V. 1. 181. 4.

---

संवर्त ऋषिः ।

१ २ ३ १ २ ३ १ २र
**आ याहि वनसा सह गावः**
३ १ २र
**सचन्त वर्त्तनिं यदूधभिः ॥७॥४४३॥**

आ । याहि । वनसा । सह । गावः । सचन्त । वर्तनिम् । यत् । ऊधऽभिः ॥ ७ ॥

भाष्यसारः । हे उषः, वनसा—वननीयेन तेजसा, सह आ-याहि । यत् याः ऊधभिः—आपीनैर्विशिष्टाः ताः उषसो वाहनाः गावः, वर्तनिम्—रथम्, सचन्त—सेवन्ते, वहन्तीत्यर्थः ॥ ७ ॥

Come hither (Uṣas), with the adorable or glorious (lustre), the cows having full udders serve (i. e., bear) thy chariot.—7.

**सा०-भा० ।** द्विपात् । उषस्या । हे उषः ! 'वनसा' वननीयेन तेजसा धनेन 'सह' सार्द्धम् 'आ-याहि' आगच्छ । उषसो वाहनभूताः 'गावः' 'वर्त्तनिं'

रथं 'सचन्त' सेवन्ते, अतस्तेन रथेनायाहीत्यर्थः। 'यत्' या गावः 'ऊधभिः' उपलक्षिताः प्रभूताः पीना इत्यर्थः। ताः गावः इति सम्बन्धः॥ ७॥

७। ऋ० सं० १० म० १७२ सू० १ ऋ०। It is taken from the hymn in the Ṛg-Veda, which is addressed to Uṣas or Dawn; Sage Saṃvarta is the son of Aṅgiras; the metre is the half-stanza Triṣṭubh.

वनसा—desirable radiance—*Wils.*; dr. fr. rt. वन् ( संभक्तौ, *to adore, worship* or *serve*), 1. p.

सचन्त—सचन्ते, serve; fr. rt. सच् to serve, to attend upon, 1. Ā. cf. 'सचस्वा नः स्वस्तये'—serve us for welfare, ṚV. i. 1. 9.

वर्त्तनिम्—acc. to Sāy., here it means chariot, Wils. has adopted this mg.; elsewhere it is found to mean *path, track.* cf. 'वेद वातस्य वर्त्तनिम्', ṚV. i. 25. 9; so it is not inadequate to render —'the full-uddered cows follow on thy track'.

———

१ २ ३ १ २र ३ २ ३
उप प्रक्षे मधुमति क्षियन्तः
१ २ ३ २ ३ १ २
पुष्येम रयिं धीमहे त इन्द्र ॥ ८ ॥४४४॥

उप। प्रक्षे। मधुऽमति। क्षियन्तः। पुष्येम। रयिम्। धीमहे। ते। इन्द्र॥ ८॥

भाष्यसारः। हे इन्द्र! मधुमति—मधुमये, प्रक्षे—राजकर्त्तृकन्यग्रोधचमसे, ते—तव, उप—समीपे, क्षियन्तः—तिष्ठन्तो वयम्, रयिम्—रमणीयमन्नम्, पुष्येम—पोषयेम, तथा धीमहे—त्वां ध्यायेम॥ ८॥

May we, dwelling by the vessel (made of holy fig wood), full of honey, prosper in our wealth and meditate on thee, O Indra.—8.

सा०-भा०। हे 'इन्द्र' परमैश्वर्ययुक्त! त्वं 'मधुमति' माधुर्योपेते 'प्रक्षे' राजकर्त्तृकन्यग्रोधचमसे 'ते' त्वदीये 'क्षियन्तः' समीपे स्थिताः वयं 'रयिं' रमणीयमन्नं 'पुष्येम' पोषयेम। किञ्च, त्वां 'धीमहे' वयमनुध्यायेम॥ ८॥

८। इयम् ऋक् ऋग्वेदे नास्ति।

प्रचे—same as प्रचे. प्रच here means, a vessel made of holy fig wood (*plakṣa*) used at sacrifices for drinking the Soma (*camasa*).

चियन्तः—fr. rt. चि, *to dwell*. cf. 'यस्योरुषु त्रिषु विक्रमणेषु अधिक्षियन्ति भुवनानि विश्वा'—(Viṣṇu) in whose three wide strides all beings *dwell*—ṚV. 154. 2; again, 'यः शम्बरं पर्वतेषु क्षियन्तं चत्वारिंश्यां शरद्यन्वविन्दत्'—(Indra) who in the fortieth autumn found out Śambara *dwelling* in the mountains.

N. B.—Indra is here said to be परमैश्वर्ययुक्त, for which cp. Śabara Svāmin, 'समस्ततेजः परमेश्वरत्वनिमित्तेन्द्रशब्दवाच्यः'—*Mimāṃsābhāṣya*; Yāska, 'इन्दतेरैश्वर्यकर्मणः', *Nir.* 4. 8.

---

१ २ ३ २ ३१ २ ३ १
अर्चन्त्यर्कं मरुतः स्वर्का आ
२र ३ २उ ३ १ २र
स्तोभति श्रुतो युवा स इन्द्रः ॥ ९ ॥४४५॥

अर्चन्ति। अर्कम्। मरुतः। सुऽअर्काः। आ। स्तोभति। श्रुतः। युवा। सः। इन्द्रः॥ ९॥

भाष्यसारः। स्वर्काः—शोभनस्तोत्राः, मरुतः, अर्कम्—अर्चनीयम्, इन्द्रम् अर्चन्ति, युवा—चिरतरुणः, श्रुतः—विख्यातः, स इन्द्रः, आ-स्तोभति—मरुतां शत्रून् सम्यक् हिनस्ति॥ ९॥

The Maruts, with beautiful hymns, worship the adorable Indra; famed and ever-young Indra slays (their enemies).—9.

सा०-भा०। 'स्वर्काः' शोभनस्तोत्राः शोभनाम्ना वा 'मरुतः' 'अर्कम्' अर्चनीयमिन्द्रम् 'अर्चन्ति' स्तोत्रैर्हविर्भिः। 'युवा' नित्यतरुणः 'श्रुतः' विख्यातः 'इन्द्रः' 'आ-स्तोभति' तेषां सम्बन्धीनि शत्रुजातान्याभिमुख्येन हिनस्ति॥ ९॥

९। इयम् ऋक् ऋग्वेदे नास्ति।

अर्कम्—cp. 'अर्को देवो भवति यदेनमर्चन्ति', Naigh. 5. 4.

स्वर्काः—cp. 'अर्को मन्त्रो भवति, यदनेनार्चन्ति', Naigh. 5. 4.

आ-स्तोभति—स्तूयते—*Vivaraṇa*. Here, स्तुभ् means to *paralyse*.

---

२ ३ १ २ ३ १ २ ३
प्र व इन्द्राय वृत्रहन्तमाय
१ २ ३ १ २ ३ २ ३ १ २
विप्राय गाथं गायत यं जुजोषते ॥ १० ॥४४६ ॥

प्र । वः । इन्द्राय । वृत्रहन्ऽतमाय । विप्राय । गाथम् । गायत । यम् । जुजोषते ॥ १० ॥

भाष्यसारः । वः—यूयम्, वृत्रहन्तमाय—वृत्रस्य सातिशयं हन्त्रे, विप्राय इन्द्राय यं गाथं जुजोषते—इन्द्रः सेवते, तं गाथम्—स्तोत्रम्, प्र-गायत ॥ १० ॥

Sing to Indra the wise, the mightiest slayer of Vṛtra, the song that he accepts.—10.

**सा०-भा० ।** हे विप्राः मेधाविनः! 'वृत्रहन्तमाय' अतिशयेन वृत्रस्य हन्तमः तस्मै 'इन्द्राय' 'तं' 'गाथं' स्तोत्रं 'प्र-गायत' प्रकर्षेण पठत, हे उद्गातारः! स इन्द्रः 'यं' स्तोत्रं 'जुजोषते' सेवते ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
चतुर्थाध्यायस्य दशमः खण्डः । पञ्चमप्रपाठकस्य च द्वितीयार्द्धे प्रथमा दशतिः ॥

१० । इयम् ऋक् ऋग्वेदे नास्ति ।—not found in the Ṛgveda.

वः—यूयम्, vide notes, *ante.*

विप्राय—to one, wise, referring to Indra.

गाथम्—cf. 'गाथा' इति वाङ्नामसु अष्टत्रिंशन्नैघण्टुकम्' (१,११).

जुजोषते—fr. rt. जुष् *to enjoy* ; vide. *Mcdnll's Stu. Ved. Gram. App. I. list of vbs. P.* 384.

———

अथ चतुर्थाध्यायस्य एकादशः खण्डः । पञ्चमप्रपाठकस्य च द्वितीयार्धे द्वितीया दशतिः ।

वृषभ ऋषिः ।

१ २ ३ १ २र ३ २उ ३ १ २

अचेत्यग्निश्चिकितिर्हव्यवाड् न सुमद्रथः ॥ १ ॥४४७॥

अचेति । अग्निः । चिकितिः । हव्यऽवाट् । न । सुमत्ऽरथः ॥ १ ॥

भाष्यसारः । **चिकितिः—ज्ञानशाली, हव्यवाट्—हव्यवाहनः, अग्निः, सुमद्रथः—शोभनहविष्कः रथः, न—इव, अचेति—ज्ञायते ॥ १ ॥**

The omniscient Agni, the conveyer of oblations (to the gods) appears like the chariot well equipped.—1.

**सा० भा० ।** 'हव्यवाट्' हविषां वोढारं (?) 'चिकितिः' विशिष्टप्रज्ञः 'सुमद्रथः' सुष्ठुहविर्युक्तरथो'ऽग्निः' (?) 'अचेति' चेत्यते, सर्वैर्ज्ञायते । यद्वा, व्यत्ययेन कर्त्तरि प्रत्ययः ( ३, १, ८५ ), हविःप्रदातारं यजमानं जानाति ॥ १ ॥

१ । बालखिल्य० ८, ५ ( ऋ० सं० ८ म० ५६ सू० ५ ऋ० ) ।

चिकितिः—'चिक्यत्' इति पश्यति-कर्मसु प्रथमं नैघण्टुकम्, अथवा प्रज्ञानामसु पठितम् ।

---

गौपायनसां लौपायनसामन्यतमः बन्धुर्ऋषिः । आग्नेयी ।

२ ३ २ ३ १ २ ३ २

अग्ने त्वं नो अन्तम उत

३ २ ३ १ २ ३क २र

त्राता शिवो भवा वरूथ्यः ॥२॥४४८॥

अग्ने । त्वम् । नः । अन्तमः । उत । त्राता । शिवः । भव । वरूथ्यः ॥ २ ॥

भाष्यसारः । **हे अग्ने ! वरूथ्यः—वरेण्यः, त्वं नः—अस्माकम्, अन्तमः—अन्तिकतमः, उत—तथा, शिवः—हितकरः, त्राता भव ॥ २ ॥**

O adorable Agni, be near to us, our protector and benefactor.—2.

**सा० भा० ।** 'अग्ने !' 'वरूथ्यः' वरणीयः सम्भजनीयः यद्वा, वरूथैः यज्ञगृहैर्वृतः 'त्वं' 'नः' अस्माकम् 'अन्तमः' अन्तिकतमः भव। 'उत' अपिच 'त्राता' रक्षकः 'शिवः' सुखकरश्च भव ॥ २ ॥

२। ऋ० सं० ५ म० २४ सू० १ ऋ०। उ० आर्चि० ४, १, २२, १। (2. 456).

This is the first *pāda* of the ṚV. stanza referred to above, it occurs twice in the SV. (1. 448 ; 2. 456) ; also twice in the Yajur.V. 3. 25 ; 15. 48. Sāy. explains वरूथ्यः as वरणीयः, सम्भजनीयः—*to be worshipped, adorable* ; Mahīdhara interprets it—'*favourable or auspicious* to the family or the house, *varūtha* meaning, he says, either पुत्रसमूह (hosts of sons) or गृह (a house).

---

आग्नेयी।

२ ३ २ ३ २ ३ २ ३ २ ३ १ २ १ २
## भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ॥ ३ ॥४४९॥

भगः। न। चित्रः। अग्निः। महोनाम्। दधाति। रत्नम् ॥ ३ ॥

भाष्यसारः। **भगो न—सूर्य इव, चित्रः—चायनीयः, अग्निः, रत्नम्—रम्यं धनम्, महोनाम्—महतां तेजस्विनां मध्ये, दधाति—विदधाति ॥ ३ ॥**

Like Bhaga, wondrous Agni bears wealth for the great.—3.

**सा०-भा० ।** 'महोनां' महतां मध्ये 'भगो न' सूर्य इव 'चित्रः' चायनीयः पूजनीयः 'अग्निः' यज्वनां 'रत्नं' रमणीयं धनं 'दधाति' धारयति, प्रयच्छतीत्यर्थः ॥३॥

३। इयम् ऋक् ऋग्वेदे नास्ति।

चित्रः—for notes, vide *ante*.

---

१ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ २
## विश्वस्य प्र स्तोभ पुरो वा सन् यदि वेह नूनम् ॥ ४ ॥४५०॥

विश्वस्य। प्र। स्तोभ। पुरः। वा। सन्। यदि। वा। इह। नूनम् ॥ ४ ॥

भाष्यसारः। **विश्वस्य—सर्वस्य सर्वं शत्रुमित्यर्थः, प्र-स्तोभ—प्रस्तोभति, हिनस्ति इन्द्र इति शेषः। यदि वा—अपि च, इह—यज्ञे, नूनं पुरः—पूर्वस्यां दिशि, वा सन्—वसन्, सः प्र-स्तोभ—प्रकर्षेण स्तूयते॥ ४॥**

Thou smitest down all (foes); lying afar even here thou art extolled by all (priests).—4.

**सा०-भा०। 'विश्वस्य' सर्वस्य शत्रुजातस्य 'प्र-स्तोभ' प्रस्तोभति, हिनस्तीत्यर्थः। 'यदि वा' 'इह' यज्ञे 'नूनं' 'पुरो वा सन्' पूर्वस्मिन् देशे वसन् स्थितः स इह नूनं प्र-स्तोभ ऋत्विग्भिः प्रकर्षेण स्तूयते। स्तोभतिस्तु स्तुतिकर्मा॥ ४॥**

**४। इयम् ऋक् ऋग्वेदे नास्ति।**

नूनम्—'नूनमिति वितर्के'—*Vivaraṇa.*

प्रस्तोभ—cp. स्तुतिकर्मस्विदं चतुर्थे नैघण्टुकम् (३, १४).

---

**संवर्त्त ऋषिः। द्विपदा छन्दः। उषोदेवता।**

३ २उ ३ २ ३२ ३ १ २

**उषा अप स्वसुस्तमः सं वर्त्त-**

३ १ २३ १ २

**यति वर्त्तनिं सुजातता॥ ५ ॥४५१॥**

उषाः। अप। स्वसुः। तमः। संऽवर्त्तयति। वर्त्तनिम्। सुऽजातता ॥५॥

भाष्यसारः। **उषाः, स्वसुः—भगिन्या रात्रेः, तमः अप संवर्त्तयति—अपाकरोति, तथा सुजातता—आत्मनः सुजातत्वं सुप्रकाशत्वम्, वर्त्तनिम्—रथम्, वर्त्तयति—प्रापयति॥ ५॥**

Uṣas dispels the darkness of her sister (night), her glorious manifestation causes her to retract her way (i. e., flee away).—5.

**सा०-भा०। इयम् 'उषाः' 'स्वसुः' भगिन्याः रात्रेः सम्बन्धि 'तमः' अन्धकारम् 'अप संवर्त्तयति' आत्मीयेन तेजसा अपगमयति। 'सुजातता' सुजातत्वम् आत्मनः सुप्रकाशत्वं च 'वर्त्तनिं' वर्त्तयति, रथं प्रापयति॥ ५॥**

**५। ऋ० सं० १० म० १७२ सू० ४ ऋ०।**

स्वसुः—of her sister; night is conceived as the sister of Uṣas.

सुजातता—'her generative benevolence harnesses her chariot'—*Wils.* This conveys but no sense. The purport is—as soon as Uṣas appears, the nocturnal darkness takes to heels.

---

भौवन आत्थ ऋषिः।

२ २क ३ १२ ३१ २३ १ २ ३ २
इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥६॥४५२॥

इमा। नु। कम्। भुवना। सीषधेम। इन्द्रः। च। विश्वे। च। देवाः॥ ६ ॥

भाष्यसारः। इमा—इमानि, भुवना—भुवनानि, कम्—सुखम्, नु—क्षिप्रम्, सीषधेम—साधयन्तु। इन्द्रश्च, विश्वे देवाश्च, तमेवार्थं साधयन्तु ॥ ६ ॥

May all beings bring about our happiness, so also may Indra and all other gods do (or, may we soon win all these worlds, may Indra and all other gods help us in bringing this object into effect).—6.

**सा०-भा०।** 'इमा' इमानि परिदृश्यमानानि 'भुवना' भुवनानि 'नु' क्षिप्रं 'सीषधेम' साधयामः, वशीकुर्मः। कमिति पूरकः। यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं 'कं' सुखं सीषधेम साधयन्तु। पुरुषव्यत्ययः। 'इन्द्रश्च' 'विश्वे' सर्वेऽन्ये 'देवाश्च' स्तुत्या प्रीता इममर्थं साधयन्तु ॥ ६ ॥

६। ऋ० सं० १० म० १५७ सू० १ ऋ०। उ० आर्चि० ४, १, २३, १। यजुः० २५, ४६। The ṚV. reads 'सीषधाम' instead of 'सीषधेम'।

Wilson translates :—'May we, along with Indra and the universal gods, possess all these worlds.

सीषधेम—archaic for सीषधाम (ṚV. rdg.), mg. साधयामः, may we win or possess ; rt. साध—लेट् (Ved. subj.). कम्, in this case, is an expletive ; or, mg. साधयन्तु—anomalously for 3. *pl.* in sense, having for its subject भुवना ( = भुवनानि, 'शेश्छन्दसि बहुलम्', Pāṇ. vi. 1. 70).

---

कवष ऐलुष ऋषिः। विश्वदेवा देवताः।

२ ३ २ ३ १ २ ३ २उ ३ १ २ १ २
वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ॥७॥४५३॥

वि। स्रुतयः। यथा। पथः। इन्द्र। त्वत्। यन्तु। रातयः॥ ७ ॥

भाष्यसारः । हे इन्द्र ! यथा स्रुतयः—क्षुद्रपथाः, पथः—राजपथात्, वि—वियन्ति, निर्गच्छन्ति, तथा रातयः—दानानि, त्वत्—त्वत्सकाशात्, वि-यन्तु—निर्गच्छन्तु ॥७॥

As by-ways issue from the main way, so let all gifts (of riches) spring from thee.—7.

**सा०भा० ।** हे 'इन्द्र !' 'त्वत्' त्वत्तः सकाशात् 'रातयः' दानानि 'वि यन्तु' विविधं गच्छन्तु । तत्र दृष्टान्तः, 'पथः' राजमार्गात् क्षुद्रमार्गा यन्ति, तद्वत् ॥ ७ ॥

७। **इयम् ऋक् ऋग्वेदे नास्ति,** not found in the Ṛgveda.

स्रुतय:—'streams of water'—*Grfth.*; Stevenson translates—'as many by-paths (*after Sāy.*) meet in the high way, so let all riches meet in thee'.

रातय:—bounties, gifts, fr. रा *to give.*

——

भरद्वाज ऋषिः द्विपदा ।

३ १ २र ३ १ २ ३ १ २
**अया वाजं देवहितं सनेम**
३ १ २ ३ १ २
**मदेम शतहिमाः सुवीराः ॥८॥४५४॥**

अया । वाजम् । देवऽहितम् । सनेम । मदेम । शतऽहिमाः । सुऽवीराः ॥ ८ ॥

भाष्यसारः । अया—अनया स्तुत्या, देवहितम्—इन्द्रदेवेन दत्तम्, वाजम्—अन्नम्, सनेम—वयं लभेमहि । तथा सुवीराः—सुपुत्रवन्तः सन्तः, शतहिमाः—शतं हेमन्तान् वर्षशतमित्यर्थः, मदेम—वयं हृष्येम ॥ ८ ॥

May we, in consequence of this praise, obtain food granted by the God (Indra), may we be happy, for a hundred winters, with heroic sons.—8

**सा०-भा० ।** 'अया' अनया स्तुत्या 'देवहितं' देवेन द्योतमानेनेन्द्रेण दत्तं 'वाजम्' अन्नं 'सनेम' वयं सम्भजेम । अपि च, 'सुवीराः' शोभनपुत्रोपेता वयं 'शतहिमाः' शतं हेमन्तान् संवत्सरान् इत्यर्थः, 'मदेम' हृष्याम ॥ ८ ॥

८। ऋ० सं० ६ म० १७ सू० १५ ऋ० ।

अया—*for* अनया, *vide* our notes on this word, SV. I. 52 ;—188 ; there the reference to the above ṚV. verse, as one among many where this word occurs, has been noted.

सनेम—may we gain ; rt. सन् *to gain*. 8. p. Pot. ( लिङ् ), I. pl.

मदेम—may we be happy ; rt. मद् *to be glad* 1. u. Pot. ( लिङ् ). I. pl.

शत-हिमाः—a hundred winters ( = years) ; a hundred years being considered in Vedic times as the normal span of human life. In our daily prayers, it is solicited—'may we see for a hundred autumns (years), may we live a hundred years, may we speak and hear a hundred years' etc. ( पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्रब्रवाम शरदः शतम् ) ; the phrase शतंहिमाः occurs several times to mean *hundred years, vide* ṚV. i. 73 . 9, where the prayer is made 'may our sons live for a hundred winters (years) ; vi. 4. 8, where a prayer similar to that of the above stanza is made—'may we, living for a hundred winters, and blessed with excellent posterity, be happy ; ii. 1. 11, where this phrase ( शतहिमा ) is used as a qualifying adj. referring to Ilā (the earth) ; ix. 74. 8, where the phrase ( शतहिमाय ) refers to Kakṣīvat who has seen a hundred winters.

———

आत्रेय ऋषिः । विश्वदेवा देवताः ।

३ २ ३ १ २र ३ २ ३
ऊर्जा मित्रो वरुणः पिन्वतेडाः

१ २ ३ १ २ ३ १ २
पीवरीमिषं कृणुही न इन्द्र ॥ ९ ॥ ४५५ ॥

ऊर्जा । मित्रः । वरुणः । पिन्वत । इडाः । पीवरीम् । इषम् । कृणुहि । नः । इन्द्र ॥ ९ ॥

भाष्यसारः । हे इन्द्र, त्वं मित्रः वरुणः च ऊर्जा—सरसाः, इडाः—अन्नानि, पिन्वत—सिञ्चत, दत्त । तथा, पीवरीम्—प्रवृद्धाम्, इषम्—अन्नम्, नः—अस्मभ्यम्, कृणुहि—कुरु, देहि ॥ ९ ॥

O Indra, thou, along with Mitra and Varuṇa, grant us food, full of strength and give us abundant food.—9.

**सा०-भा० ।** हे 'इन्द्र'! 'मित्रः' 'वरुणः' त्वञ्च सर्वे यूयम् 'ऊर्जा' रसेन बलेन वा सहिताः 'इडा' अन्नानि 'पिन्वत' अस्मभ्यं सिञ्चत, प्रयच्छतेत्यर्थः। पिन्व सेचने ( भ्वा० प० ), धातूनामनेकार्थत्वादत्र प्रयच्छतेत्यर्थः। किञ्च, 'पीवरीं' प्रवृद्धाम् 'इषम्' अन्नं 'नः' अस्माकं 'कृणुहि' कुरु, देहीत्यर्थः ॥ ९ ॥

९। इयम् ऋक् ऋग्वेदे नास्ति।

ऊर्जा—*Instr. sg.* of *stem* ऊर्ज् (rt. ऊर्ज्—क्विप्); for further notes, *vide* ऊर्जाम्पते, SV. I. 36; also I. 45; Ngh. 2. 7; 2. 9.

पिन्वत—rt. पिन्व *to sprinkle*, I. p. imp. 2. pl.

---

वसिष्ठ ऋषिः। एकपदाष्टाक्षरा गायत्री छन्दः।

२ ३ १ २
इन्द्रो विश्वस्य राजति ॥१०॥४५६॥

इन्द्रः। विश्वस्य। राजति ॥ १० ॥

भाष्यसारः। इन्द्रः विश्वस्य राजति—निखिलभुवनस्य इष्टे ॥ १० ॥

Indra is the lord of the universe.—10.

**सा०-भा० ।** यतः कारणात् 'इन्द्रः' 'विश्वस्य' भुवनस्य 'राजति' ईश्वरो भवति, अतः कारणात् इन्द्रं प्राधान्येनाभिमुखीकृत्योच्यते इति पूर्वेणान्वयः ॥ १० ॥

१०। इयम् ऋक् ऋग्वेदे नास्ति।

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्यैकादशः खण्डः। पञ्चमप्रपाठकस्य च द्वितीयार्धे द्वितीया दशतिः ॥

---

अथ चतुर्थाध्याये द्वादशः खण्डः । पञ्चमप्रपाठकस्य च द्वितीयार्धे तृतीया दशतिः ।

'त्रिकद्रुकेषु' मुख्याः स्युर्दशक्ष्वंत्वाष्टिरादिमा ।
जग'त्ययं सहस्रेत्य'थैन्द्र 'याह्युप न'स्तथा ॥
'अग्निं होतारमि'त्येषा 'अस्तु श्रौषड्' 'अया रुचा' ।
चतस्रोऽत्यष्टयो'ऽभि त्वं' 'तव त्यन्नर्यमि'त्यृचौ ॥
इमे द्वे अतिशक्वर्याविष्टी इत्येक ऊचिरे ।
'प्र वो महे'ऽतिजगती 'तमिन्द्रमि'ति तादृशी ॥
सौरी ह्य'यं सहस्रे'ति, पावमानी त्व'या रुचा' ।
'अस्तु श्रौषड्'वैश्वदेवी, मारुती तु 'प्र वो महे' ॥
'अभि त्वमि'ति सावित्री स्यादाग्नेय्य'ग्निमि'त्यसौ ।
ऐन्द्रोऽवशिष्टा इत्येवं छन्दोदैवतनिर्णयः ॥*

गृत्समद ऋषिः । छन्दोदैवते कारिकासु निर्णीते ।

१ २ ३ १ २र ३ २
त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्म-
३ १ २र ३ १ २ ३ १ २ ३ २
स्तृम्पत्सोममपिबद्विष्णुना सुतं यथावशम् ।
१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १
स ईं ममाद महि कर्म कर्त्तवे महामुरुं
२र ३ २ ३ २ ३ १ २र ३ १ २र
सैनं सश्चद्देवो देवं सत्य इन्दुः सत्यमिन्द्रम् ॥१॥४५७॥

त्रिऽकद्रुकेषु । महिषः । यवऽआशिरम् । तुविऽशुष्मः । तृम्पत् । सोमम् ।
अपिबत् । विष्णुना । सुतम् । यथाऽवशम् । सः । ईम् । ममाद । महि । कर्म ।

* The stanza I of this decade is in *Aṣṭi* metre, consisting of 64 syllables (16 × 4) ; stanza 2 is in *Jagatī* ; stanzas 3, 5, 7, 9 are in *Atyaṣṭi* (17 × 4 = 68 syllables) ; stanza 8 and 10 are in *Ati-śakvarī*, or acc. to some in *Aṣṭi* ; stanza 4 and 6 in *Atijagatī* (13 × 4 = 52 syllables) ; stanza 2 is addressed to Sūrya ; stanza 7 to Pavamāna Soma ; stanza 5 to the Viśvadevas ; stanza 6 to the Maruts ; stanza 8 to Savitṛ ; stanza 9 to Agni ; the rest to Indra.

कर्त्तवे । महाम् । उरुम् । सः । एनम् । सश्चत् । देवः । देवम् । सत्यः । इन्दुः । सत्यम् । इन्द्रम् ॥ १ ॥

भाष्यसारः । महिषः—पूज्यः महान्, तुविशुष्मः—बहुबलः, तृम्पन्—तृप्तः सन्, इन्द्रः त्रिकद्रुकेषु—ज्योतिर्गौरायुरितिख्यातेषु अभिप्लव-षडहस्य आद्यदिवसत्रयेषु, सुतम्—प्रस्तुतम्, यवाशिरम्—यवसक्तुमिश्रं सोमम्, विष्णुना सहेत्यर्थः, यथावशम्—यथेच्छम्, अपिबत्। सः पीतः सोमः महि—महत्, कर्म—वृत्रवधादिरूपम्, कर्त्तवे—कर्त्तुम्, महाम्—महान्तम्, उरुम्—विपुलम्, ईम्—एनम्, इन्द्रं ममाद—प्रहृष्टमकरोत्। सत्यः देवः—दीप्तिमान्, इन्दुः—स्रवन्, सः सोमः सत्यं देवम् एनम् इन्द्रं सश्चत्—व्याप्नोतु ॥ १ ॥

The great and mighty (Indra), being pleased with the Soma-juice, mixed with (fried) barley-powder, pressed out at the *Trikadruka*-ceremonies, has drunk with Viṣṇu as much as he desired; and that (potion) exhilarated him, the great and powerful to do mighty deeds; may the divine (Soma) serve the divine (Indra), the true *Indu* (the flowing Soma) serve the true Indra.—1.

**सा०-भा०।** 'महिषः' महान् पूज्यः 'तुविशुष्मः' बहुबलः 'तृम्पत्' तृप्यन्निन्द्रः 'त्रिकद्रुकेषु' ज्योतिर्गौरायुरित्येतन्नामकेषु अभिप्लविकेष्वहःसु 'सुतम्'अभिषुतं 'यवाशिरं' यवमयैः सक्तुभिर्मिश्रितम्,—आङ्पूर्वस्य श्रीञ्धातोः क्विपि 'अपस्पृधेथामि'-त्यादिना (पा० ६,१,३६) श्रियः शिर इत्यादेशः,—तं सोमं विष्णुना सह 'अपिबत्'। 'यथावशं' पूर्वं यथा तं सोममकामयत तथा अपिबत्। वश कान्तौ (अ० प०) 'बहुलं छन्दसी'ति (पा० २,४,७३) शपो लुगभावः। 'सः' पीतः सोमः 'महाम्' महान्तम् 'उरुम्' विस्तीर्णम्। 'ईम्' एनम् 'इन्द्रम्' 'ममाद' अमादयत्। किमर्थम्? 'महि' महत् वृत्रहननादिलक्षणं 'कर्म' 'कर्त्तवे' कर्त्तुम्। 'सत्यः' 'इन्दुः' स्रवन्, 'देवः' दीप्यमानः 'सः' सोमः 'सत्यं' यथार्थभूतं 'देवं' सोमं कामयमानम् 'एनम्' 'इन्द्रं' 'सश्चत्'—सश्चतिर्व्याप्तिकर्मा,—व्याप्नोतु ॥ १ ॥

१। ऋ० सं० २ म० २२ सू० १ ऋ०। उ० आर्चि० ६, ३, १८, १।

त्रिकद्रुकेषु—*Trikadrukas* are said to denote the first three days of the sacrificial ceremony called *Abhiplava* (which lasts six days and is a part of the Gavamayana sacrifice). They are technically termed *Jyotis*, *Gauḥ*, *Ayus*. This term occurs also in ṚV. i. 32. 3; ii. 11. 17; 15. 1; viii. 13. 18; SV. II. 1. 2. 4. 5 (II. 73); ṚV. X. 14. 16; Ś. Br. vi. 3. 3. 25; Ait. Br. ii. 11;

Kausi. Br. in *Indische studien*, 2. 310. See also Tait. Saṃh. vi. 2. 3 ; Kāṭhaka. Saṃh. xxiv. 10 ; etc. According to some modern scholars, however, they are probably three peculiar Soma-vessels or an oblation consisting of three offerings of Soma. In the sense of Soma-vessels *see* Mcdnll's Vedic Index, I. 329 ; Lévi, La Doctrine du Sacrifice, 46. n. I.

महिषः—great, for dr. and etym. *vide* our notes on SV. I. 71 ; तुविशुष्मः—of great might ; for तुवि *see* SV. I. 142 ; 286.

यवाशिरम्—*see* notes on SV. I. 145 ; for आशिरम्, *see* I. 187.

ईम्—him ; *see* notes on SV. I. 94 ; तृम्पत्—being pleased, rt. तृम्प् pres. pt. कर्त्तवे—for कर्त्तुम्, Ved. inf. by 'तुमर्थे से॰' Pāṇ. iii. 4. 9. सश्चत्—rt. सच्—लेट् (Ved. subj.) 3. sg. *vide* notes on सश्चसि, SV. I. 300 ; 'may pervade'—*Wils.*

———

गौराङ्गिरस ऋषिः ।

३ २ ३ २ ३ १ २ ३ १
अयं सहस्रमानवो दृशः
२ ३ २ ३ २उ ३ १ २
कवीनां मतिर्ज्योतिर्विधर्म ।
३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३
ब्रध्नः समीचीरुषसः समैरयदरेपसः
१ २ ३ १ २ ३ १ २ ३ २
सचेतसः स्वसरे मन्युमन्तश्चिता गोः ॥२॥४५८॥

अयम् । सहस्रऽमानवः । दृशः । कवीनाम् । मतिः । ज्योतिः । विऽधर्म । ब्रध्नः । समीचीः । उषसः । सम् । ऐरयत् । अरेपसः । सऽचेतसः । स्वसरे । मन्युऽमन्तः । चिताः । गोः ॥ २ ॥

भाष्यसारः । अयं सहस्रमानवः—सहस्रमनुष्यरूपरश्मियुक्तः, दृशः—दर्शनीयः, कवीनाम्—मेधाविनाम्, मतिः—मननविषयः, विधर्म—विधातृ जगत्कारणं ज्योतिः—तेजःस्वरूपः, ब्रध्नः—सूर्यः, समीचीः—विशुद्धाः, अरेपसः—तमोरूपपापहीनाः, उषसः समैरयत्—सम्यक् प्रेरयति । ततः स्वसरे—दिवसे, मन्युमन्तः—ज्योतिष्मन्तः चन्द्रप्रभृतयः, गोः—आदित्यस्य, तेजसा चिताः—क्षीणप्रभाः भवन्तीति शेषः ॥ २ ॥

This sun, having a thousand men ( rays ), visible to all, the object of meditation of the wise, the light the upholder of all, sends

forth the clear, stainless, oneminded dawns; by day, the other luminaries ( the moon, the stars ) get faded with the rays of the sun.—2.

**सा०-भा० ।** 'सहस्रमानवः' सहस्रसंख्याका मनुष्याः यस्य सः सहस्र-संख्याकैर्मनुष्यैरिवावस्थितैः रश्मिभिर्युक्तः, 'दृशः' सर्वेषां दर्शनीयः। 'कवीनां' मेधाविनां सर्वेषां 'मतिः' स्तुत्यः मननीयो वा। 'विधर्म' विधातृ, 'ज्योतिः' तेजः अयं 'ब्रध्नः' सूर्यः। 'समीचीः' शुद्धाः निर्मलाः। 'अरेपसः' तमःपाप-रहिताः। 'सचेतसः' समानचित्ता इमाः 'उषसः' 'समैरयत्' सम्यक् प्रेरयति। ततः 'स्वसरे'—दिवसनामैतत् ( नै०१,९ )—दिवसे 'मन्युमन्तः' मन्युः प्रकाशस्तद्वन्तः तेजस्विनश्चन्द्रमःप्रभृतयः 'गोः' आदित्यस्य तेजसा 'चिताः' अपचिताः भवन्तीति, विगत-तेजस्का भवन्तीत्यर्थः। 'आदित्योऽपि गौरुच्यते' ( २, ६ ) इति निरुक्तम् ॥ २ ॥

२। इयम् ऋक् ऋग्वेदे नास्ति।

सहस्रमानवः—men here *rfs. to* the rays of the sun, who is often called 'सहस्ररश्मि' (thousand-rayed).

विधर्म ज्योतिः—in apposition to the sun ( ब्रध्नः ); it is the light which upholds the world ; विधर्म is drvd. as वि—धृ + मन्।

ब्रध्नः—the sun ; *orig.* it means 'great', Ngh. 3. 3.

स्वसरे—by day, Nir 5. 4 ; *vide* our notes on स्वसरेषु, SV. I. 236.

---

परुच्छेप ऋषिः। अत्यष्टिः छन्दः।

१ २ ३ १ २ ३ २ ३ १ २र
एन्द्र याह्युप नः परावतो नायमच्छा
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
विदथानीव सत्पतिरस्ता राजेव सत्पतिः।
१ २ ३ १ २ ३ २उ ३ २ ३ २
हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न
३ २ ३ १ २ ३ १ २ ३ १ २
पितरं वाजसातये मंहिष्ठं वाजसातये ॥३॥४५९॥

आ । इन्द्र । याहि । उप । नः । पराऽवतः । न । अयम् । अच्छ । विदथानिऽइव । सत्ऽपतिः । अस्ता । राजाऽइव । सत्ऽपतिः । हवामहे । त्वा । प्रयस्ऽवन्तः । सुतेषु । आ । पुत्रासः । न । पितरम् । वाजऽसातये । मंहिष्ठम् । वाजऽसातये ॥ ३ ॥

भाष्यसारः । **हे इन्द्र, त्वं परावतः—दूरदेशात्, अयं न—प्रत्यक्षोऽग्निः प्रस्तुतः सोम इव वा, नः अच्छ—अस्मान् अभि, उप-याहि, सत्पतिः—सतामृत्विजां पालको यजमानः, इव, विदथानि—यज्ञगृहाणि, उपायाहि, सत्पतिः राजा—सतां ताराणां पतिश्चन्द्रः, इव, अस्ता—अस्तं स्वगृहम्, उपायाहि। पुत्रासः वाजसातये पितरं न—पुत्राः यथा अन्नग्रहणाय पितरमाह्वयन्ति, तद्वत्, प्रयस्वन्तः—हविर्युक्ताः, वयं वाजसातये—हविःस्वीकाराय, मंहिष्ठम्—पूज्यतमं दातृतमं वा त्वाम्, आ-हवामहे—आह्वयामः ॥ ३ ॥**

Come to us, Indra, from afar, like this (Agni) in front, or as the sacrificer ( *yajamāna* ), the patron of the good (the priests), comes to sacrifices ( or, as the moon, the lord of the constellations comes to her own abode at the time of setting ), or, as the king, the cherisher of the honest, comes to his royal home. As soon as the Soma-juices are ex-pressed, we, bearing the libations, invoke thee, who art most adorable (or most munificent), to partake of the same, as sons invite a father to accept food.—3.

**सा०-भा० ।** हे 'इन्द्र' ! 'परावतः' दूरदेशात् स्वर्गलक्षणात् 'नः' अस्मान् 'उपायाहि' अस्मत्समीपं प्रत्यागच्छ । तत्र दृष्टान्तः—'नायम्' अयं न पुरोवर्त्ती अग्निः, 'अभिषुतः' सोमो वा प्रस्तुतत्वान्निर्दिश्यते स इव । यद्यपि पुरस्तादुपचारान्निषेधार्थीयो नकारः सर्वत्र, तथाऽप्यत्रौचित्येनोपमार्थीयो गृह्यते । यद्वा, 'परावतः न' दूरदेशादिव । यद्यपि यज्ञे सर्वदा सन्निहितः तथाऽपि स्वर्गाख्याद् दूरदेशादिव । अस्मिन् पक्षे अयमिति विभक्तिव्यत्ययः—'अयम्' इमं देवयजनदेशम् 'अच्छ' अभि प्राप्तुम् आ-याहीति शेषः । तत्र दृष्टान्तः—'सत्पतिं' सतां सर्वदा वर्त्तमानानामृत्विजाम्पालको यजमान इव, 'पत्यावैश्वर्ये' ( पा० ६, २, १८ ) इति पूर्वपदप्रकृतिस्वरत्वम् । त्वमपि यज्ञगृहाण्यागच्छ । यद्वा, सतां नक्षत्राणां पतिः चन्द्रमाः । स यथा स्वधाम स्थानमागच्छति तद्वत् । 'अस्ता' अस्तम्, सुप आकारः (पा० ७,१,३९) । अत एव बह्वृचा 'अस्तं राजे'त्यामनन्ति अस्तं गृहं 'राजेव' राजा यथा आगच्छति तद्वत् । किञ्च, 'प्रयस्वन्तः'

हविर्लक्षणान्नवन्तः यजमाना वयं 'त्वा' त्वां 'सुतेषु' अभिषुतेषु सोमेषु 'आ-हवामहे' आभिमुख्येनाह्वयामहे। आह्वाने दृष्टान्तः—'पुत्रासः' पुत्राः 'पितरं न' पालकं जनकमिव तं यथा 'वाजसातये' संग्रामप्राप्तये तज्जयाय हविःस्वीकरणाय वा आह्वयामः ॥ ३ ॥

३। ऋ० सं० १ म० १३० सू० १ ऋ०। R̥V. has the modified modern form **'अस्तम्'** for **'अस्ता'** the archaic SV. rdg.

परावतः--from a distance ; *see* our notes on SV. I. 127.

विदथानि—at the sacrifices ; in this sense, *vide* Nir. 8. 12 ; 9. 3 ; cf. 'प्रचोदयन्ता विदथेषु कारू' R̥V. X. 110. 7 ; 'प्रवक्ष्यामो विदथे वीर्याणि' ib. i. 162. 1 ; 'मदन्ति वीरा विदथेषु घृष्वयः' i. 85. 1, where Sāy. gives the etym.—'विदन्त्येषु यष्टव्यतया देवानिति विदथा यज्ञाः' ; dr. विद—aff. अथ।

प्रयस्वन्तः—having food, Nir. 2. 13 ; cf. 'प्र स मित्र मर्तो अस्तु प्रयस्वान्', R̥V. iii. 59. 2 ; 'अच्छा नो याह्या वहाभि प्रयांसि वीतये' come and bring hither the gods to feast on *sacrificial food*, vi. 16. 44. (SV. II. 6. 2. 2. 2).

वाजसातये—for winning the spoil in the battle ; or, for accepting the food ; वाज means (1) battle, (2) food.

मंहिष्ठम्—most munificent, bounteous, or most adorable,—*vide* our notes on SV. I. 107.

---

रेभा ऋषिः।

१ २र ३ १ २ ३ २ ३ १
तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा
२र ३ १ २ ३ १ २ ३ १ २
दधानमप्रतिष्कुतं श्रवांसि भूरि।
१ २ ३ १ २र ३ १ २
मंहिष्ठो गीर्भिरा च यज्ञियो ववर्त्त
३ २ ३ १ २ ३ १ २ ३ २
राये नो विश्वा सुपथा कृणोतु वज्री ॥ ४ ॥ ४६० ॥

तम्। इन्द्रम्। जोहवीमि। मघऽवानम्। उग्रम्। सत्रा। दधानम्। अप्रतिष्कुतम्। श्रवांसि। भूरि। मंहिष्ठः। गीःऽभिः। आ। च। यज्ञियः। ववर्त्त। राये। नः। विश्वा। सुऽपथा। कृणोतु। वज्री ॥ ४ ॥

भाष्यसारः। मघवानम्—प्रशस्तधनयुक्तम्, उग्रं सत्रा—सत्यम्, भूरि—बहूनि, श्रवांसि—बलानि, दधानम् अप्रतिष्कुतम्—अप्रतिहतम्, तम् इन्द्रं जोहवीमि—पुनः पुनराह्वयामि। मंहिष्ठः—पूज्यतमः, यज्ञियः—यज्ञार्हः, इन्द्रः गीर्भिः—स्तुतिभिः आ-ववर्त्त—यज्ञे आवर्त्तते। वज्री इन्द्रः राये—धनार्थम्, विश्वा—सर्वाणि अभिमत वस्तूनि धनादीनि, सुपथा—सुगमानि सुलभानि, कृणोतु—करोतु ॥ ४ ॥

Repeatedly I call on the mighty Indra, the lord of riches, really possessing immense strength, the resistless; may he, the munificent and worthy of sacrifice, come near, through our songs; may he, the thunder-bearer, make all things easy of access, for our prosperity—4.

**सा०-भा०।** 'तम्' पूर्वोक्तगुणोपेतम् 'इन्द्रं' 'जोहवीमि' यष्टाऽहं पुनः पुनराह्वयामि। ह्वयते'रभ्यस्तस्य चे'ति सम्प्रसारणम्। कीदृशम्? 'मघवानं' महनीयधनवन्तम्, 'उग्रम्' उद्गूर्णबलम्, 'सत्रा' सत्यं यथार्थमेव 'श्रवांसि' बलानि 'भूरि' भूरीणि 'दधानम्', अत एव 'अप्रतिष्कुतं' शत्रुभिरप्रतिरोधनीयम् आह्वयामि। किञ्च, 'मंहिष्ठः' पूज्यतमो दातृतमो वा 'यज्ञियः' यज्ञार्हः इन्द्रः 'गीर्भिः' अस्मदीयाभिः स्तुतिभिः 'आ ववर्त्त' यज्ञेष्वाभिमुख्येन वर्त्तते। वर्त्ततेर्लिटि रूपम्। ततो 'वज्री' वज्रवान् इन्द्रः 'राये' धनार्थं 'विश्वा' सर्वाण्येव 'सुपथा' सुमार्गाणि 'कृणोतु' करोतु, धनं सर्वदिग्जमस्मान् प्राप्नोतु इत्यर्थः ॥ ४ ॥

४। ऋ० सं० ८ म० ९७ सू० १३ ऋ०।

जोहवीमि—again and again I invoke; it is the Intens. form of rt. ह्वे.

सत्रा—truly, really, Ngh. 3. 10.

अप्रतिष्कुतम्—irresistible, unrestrainable; *vide* our notes on the word अप्रतिष्कुतः, SV. I. 179; Nir. 6. 16.

---

छन्दोदैवते प्राङ् निर्णीते । परुच्छेप ऋषिः ।*

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १
अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु
२र ३ १ २ ३ १ २
त्यच्छर्द्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे ।
१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे
२ ३ २ ३ १ २र ३ १ २ ३ २उ ३ २ ३ १ २
अध प्र नूनमुपयन्ति धीतयो देवाँ अच्छ न धीतयः ॥ ५ ॥४६१॥

अस्तु । श्रौषट् । पुरः । अग्निम् । धिया । दधे । आ । नु । त्यत् । शर्धः । दिव्यम् । वृणीमहे । इन्द्रऽवायू इति । वृणीमहे । यत् । ह । क्राणा । विवस्वते । नाभा । सम्ऽदाय । नव्यसे । अध । प्र । नूनम् । उप । यन्ति । धीतयः । देवान् । अच्छ । न । धीतयः ॥ ५ ॥

भाष्यसारः । पुरः—पुरतः, अग्निम् आहवनीयाख्यं धिया—प्रणयनादिना कर्मणा, दधे—स्थापितवानस्मि । त्यत्—प्रसिद्धम्, दिव्यं शर्धः—तेजः तेजस्विनमग्निं वा, नु—क्षिप्रम्, आवृणीमहे, तथा यद्द ह—यौ खलु, विवस्वते—हविर्लक्षणधनयुक्ताय, नव्यसे—नवीनाय, यजमानाय, नाभा—नाभौ यज्ञे, सन्दाय—सम्यक् योजयित्वा, क्राणा—धनादिकं कुर्वाणौ भवतः, तौ इन्द्रवायू वृणीमहे, एवं सति अस्तु श्रौषट्—स्तुतेः श्रवणं भवतु । अध—अनन्तरम्, धीतयः—अस्माकं स्तुतयः, प्र-नूनम्—अवश्यमेव, उप-यन्ति—युष्मान् प्राप्नुवन्ति, किञ्च, देवान् अच्छ न—अग्न्यादिदेवान् अभिमुखं प्राप्तुमिव धीतयः उप-यन्ति ॥ ५ ॥

May our hymn be heard, I have established Agni in front with (due) ceremonies, I adore that divine power (i.e., mighty Agni), I adore Indra and Vāyu, who, linking together the young sacrificer (in possession of oblations) with the sacrifice, the navel of the world, are making wealth; then our hymns go forward to the gods, do our hymns proceed towards the gods.—5.

* One of the peculiarities of the verses ascribed to *Parucchepa Ṛṣi* is to reiterate a leading word which occurs the 3rd or 4th from the end of the first line, and sometimes also of the second, third or fourth line, and to repeat it as the last word of the line. See also stanza 3, of which also this remark can be maid.

**सा०-भा०।** अहं 'पुरः' पुरतः उत्तस्वेद्याम् 'अग्निम्' आहवनीयाख्यं 'धिया' प्रणयनादिकर्मणा 'दधे' धारितवानस्मि। 'त्यत्' तत् 'शर्धः' तादृशं बलं बलवन्तं वाऽग्निम्। यद्वा, त्यच्छर्धः तादृशं मरुतां सङ्घरूपं बलं 'दिव्यं' दिवि भवं 'नु' क्षिप्रम् 'आ वृणीमहे' आभिमुख्येन सम्भजामहे ; किञ्च, 'इन्द्रवायू' 'वृणीमहे' प्रार्थयामहे। यद्व, सुपो लुक् ( पा० ७, १, ३९ ), यः 'विवस्वते' विवो हवीरूपं धनं तद्वते 'नव्यसे' नवतराय यजमानाय 'नाभा' नाभौ भूम्या नाभिस्थाने देवयजने यद्वा, वेदिरूपे अथवा नाभौ सर्वस्य फलस्य सम्बन्धके यज्ञे—'यज्ञमाहुर्भुवनस्य नाभिः' इति श्रुतेः, 'सन्दाय' सम्यक् बद्ध्वा मिथः संयुज्य 'क्राणा' धनादिकं कुर्वाणौ भवतः। तौ वृणीमहे इति समन्वयः। यस्मादेवं तस्मात् 'अस्तु' 'श्रौषट्' अस्याः स्तुतेः श्रवणं भवतु श्रोता भवतु वा मरुतां गणोऽग्निर्वा। इन्द्रवायुपक्षे प्रत्येकापेक्षयैकवचनम्। 'अध' अनन्तरं 'नः' 'धीतयः' अस्मदीयानि कर्माणि स्तुत्यादिरूपाणि 'प्र नूनम्' 'उप-यन्ति' प्रकर्षेण युष्मानुपेत्य गच्छन्ति। किञ्च, 'देवानच्छ न' अग्न्यादिदेवान् आभिमुख्येन प्राप्तुमिव 'धीतयः' अस्मदीयानि कर्माणि 'उप-यन्ति' तेषां समीपं प्रापयन्ति ॥ ५ ॥

५। ऋ० सं० १ म० १३९ सू० १ ऋ०। ṚV. has (1) **'आ नु तत्'** for **'आ नु त्यत्'** ; (2) **'नवसि'** for **'नव्यसे'** ; (3) **'प्रसूनम्'** for **'प्र नूनम्'**।

श्रौषट्—ordinarily *Śrauṣaṭ* is an exclamation uttered when the butter is poured upon the fire, on the altar, as an offering to the gods, and it is not impossible that it may have some signification here. Sāyaṇa explains—'may our prayers be heard,' or 'may Agni and other deity be a hearer'. (अस्याः स्तुतेः श्रवणं भवतु, श्रोता भवतु वा)।

शर्धः—strength, Ngh. 2. 9.

क्राणा *du*—कुर्वाणौ, doing, Nir. 4. 19 ; cf. 'गोभिः क्राणा अनूषत', ṚV. I. 134. 2.

विवस्वते—Sāy. construes it with नव्यसे (the young sacrificer) and means by it—'possessed of oblations' ; Prof. Wilson takes it with नाभा ( नाभौ ) and translates—'to the radiant navel of the earth' ; by नाभि, he means the altar ; Sāy. means by it—'the sacrifice'.

एवयामरुदृषिः । अतिजगती छन्दः ।

१ २ ३२ ३१ २ ३ १ २
प्र वो महे मतयो यन्तु विष्णवे
३१ २ ३ १ २३ १ २
मरुत्वते गिरिजा एवयामरुत् ।
१ २र ३ १ २र ३ १ २ ३ १
प्र शर्धाय प्र यज्यवे सुखादये तवसे
३ १ २ ३ १ २ ३ १ २
भन्ददिष्टये धुनिव्रताय शवसे ॥ ६ ॥ ४६२ ॥

प्र । वः । महे । मतयः । यन्तु । विष्णवे । मरुत्ऽवते । गिरिऽजाः । एवयामरुत् । प्र । शर्धाय । प्र । यज्यवे । सुऽखादये । तवसे । भन्दत्ऽइष्टये । धुनिऽव्रताय । शवसे ॥ ६ ॥

भाष्यसारः । एवयामरुत्—एवयामरुतः ऋषेः, गिरिजाः—वाचा निष्पन्नाः, मतयः—स्तुतयः, विष्णवे—व्यापकाय, मरुत्वते—मरुत्सहिताय, महे—महते, वः—तुभ्यम् इन्द्राय, प्र-यन्तु, तथा प्रयज्यवे—प्रशस्याय, सु-खादये—सदलंकृताय, तवसे—बलवते, भन्ददिष्टये—स्तुतिप्रियाय, धुनिव्रताय—मेघादिसंचालनकर्मणे, शवसे—वेगवते, शर्धाय—मरुतां बलाय, प्र—प्रयन्तु ॥ ६ ॥

May the prayers, sprung in the form of songs of (the sage) Evayāmarut, proceed to Viṣṇu (or, all-pervading Indra) attended by the Maruts (also) to the mighty, adorable, beautifully adorned, impetuous, praise-loving band of the Maruts, setting (clouds and trees etc., ) in motion.—6.

**सा०-भा० ।** 'प्र-यन्तु' प्रगच्छन्तु 'गिरिजाः' गिरौ वाचि निष्पन्नाः । 'मतयः' स्तुतयः । 'महे' महते 'वः' तुभ्यं—वचनव्यत्ययः ( पा० ३,१,८५ ), 'विष्णवे' व्याप्ताय इन्द्राय विष्णवे वा 'मरुत्वते' मरुद्भिस्तद्वते(?)। कस्य स्तुतयः इत्युच्यते—'एवयामरुत्' एतन्नामकस्य ऋषेः। षष्ठ्या लुक् (पा० ७,१,३९) । अथवाऽयमृषिः गिरिजाः स्तुतेर्जनयिता भवति । किञ्च, 'प्रयन्तु' स्तुतयः । कस्मै ? 'शर्धाय' बलाय मारुताय । इतरत्सर्वं बलविशेषणम् । 'प्रयज्यवे' प्रकर्षेण यष्टव्याय । 'सु-खादये' शोभनाभरणाय । खादिराभरणविशेषः । 'हस्तेषु खादिश्च कृतश्च सन्दधे' इति, 'अंसेषु व ऋष्टयः पत्सु खादयः' इति च श्रुतेः । 'तवसे' बलवते । 'भन्ददिष्टये' स्तुतिरूपा इष्टिर्यस्य तत् भन्ददिष्टि, तस्मै । 'धुनिव्रताय' मेघानां चालनं कर्म यस्य तादृशाय । 'शवसे' गमनवते ॥ ६ ॥

६। ऋ० सं० ५ म० ८७ सू० १ ऋ०।

गिरिजा मतयः—'the voice-born praises or prayers'—*Wils.*

एवयामरुत्—the name of a Ṛṣi to whom this verse is ascribed. Only a single hymn (V. 87.) of the Ṛgveda is found in his name; the above verse, as the reference shows, occurs there; nowhere else any mention of the Ṛṣi is found.

विष्णवे मरुत्वते—*Viṣṇave* is considered by Sāyaṇa as an adjective to Indra, mg. pervading (व्यापकाय), *Marutvat* (=attended by the Maruts) being an usual epithet of Indra; Sāy., further, assigns an alternative sense—'*Viṣṇave vā*' (=or to Viṣṇu).

शर्धाय—to the host or company of the Maruts.

सु-खादये—brilliantly adorned—*Wils.*; 'adorned with bracelets'—*Grfth.* खादि is a kind of ornament generally worn in hands,—*see* the citation in the Com. above. As regards the Maruts being adorned with ornaments, references are often found—'प्र ये शुम्भन्ते जनयो न सप्तयः, ṚV. 1. 85. 1.

भन्ददिष्टये—praise-loving; fr. rt. भन्द *to praise*, (भन्दतेः स्तुतिकर्मणः), Nir. 5. 2; *see* भन्दनाः—greetings of praise, Ngh. 4. 2; cf. 'पुरुप्रियो भन्दते धामभिः कविः', ṚV. iii. 3. 4; 'स भन्दना उदियर्ति प्रजावतीः', ṚV. ix. 86. 41.

धुनिव्रताय—whose function is to quake or move all. It is the Maruts who shake the trees and move the clouds. धुनि is drvd. fr. rt. धु *to shake*, 5. u.

---

अनानतः पारुच्छेपिर्ऋषिः। अत्यष्टिश्छन्दः।

३२ ३१ २र ३ २उ ३ १ २
अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि
३ १ २ ३ २ ३ २ ३ १ २
तरति सयुग्वभिः सूरो न सयुग्वभिः।
१ २ ३ १ २ ३ १ २ ३ १ २र
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः
२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
विश्वा यद्रूपा परियात्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥७॥४६३॥

अया। रुचा। हरिण्या। पुनानः। विश्वा। द्वेषांसि। तरति। सयुग्वऽभिः। सूरः। न। सयुग्वऽभिः। धारा। पृष्ठस्य। रोचते। पुनानः। अरुषः। हरिः। विश्वा। यत्। रूपा। परिऽयाति। ऋक्वऽभिः। सप्तास्यऽभिः। ऋक्वऽभिः॥ ७॥

भाष्यसारः । **सूरो न—सूर्यो यथा, सयुग्वभिः—सहयुक्तै रश्मिभिस्तमांसि नाशयति, तद्वत्, पुनानः—पूयमानः सोमः, अया—अनया, हरिण्या—हरितवर्णया, रुचा—रोचमानया धारया, द्वेषांसि—द्वेष्टॄन्, तरति—हिनस्ति। पुनानः—पूयमानः, हरिः—हरितवर्णः सोमः, अरुषः—आरोचमानः, भवति। यत्—यः सोमः, सप्तास्येभिः—रसग्रहणशीलास्यैः ऋक्वभिः—स्तुतिमद्भिः, ऋक्वभिः—तेजोभिः, विश्वा—विश्वानि, रूपा—रूपाणि, परियाति—व्याप्नोति, पृष्ठस्य—धारकस्य, तस्य धारा रोचते—दीप्यते ॥ ७ ॥**

With this resplendent green-coloured stream, the Soma, being cleansed through the filter, subdues all the enemies, as the sun with his allies (the rays), (overcomes darkness); the green stream of the Soma, the upholder of all, being filtered, shines and pervades all luminaries with seven-mouthed applauding effulgences.—7.

**सा०-भा० । 'पुनानः' पूयमानः सोमः । 'हरिण्या' हरितवर्णया । 'अया' अनया । 'रुचा' रोचमानया धारया । 'विश्वा' सर्वाणि 'द्वेषांसि' द्वेष्टॄणि रक्षांसि 'तरति' विनाशयति । तत्र दृष्टान्तः—'सूरो न' यथा सूर्यः 'सयुग्वभिः' सहयुक्तैः रश्मिभिः तमांसि हिनस्ति तद्वत्। सयुग्वभिरिति द्विरुक्तिरादरार्था। यद्वा, धारया युक्तः सोमो युक्तैस्तेजोभिः सह रक्षांसि तरति। तस्य 'पृष्ठस्य'—पृष्ठ इति धारक उच्यते—जगतो धारकस्य सोमस्य पतन्ती धारा 'रोचते' दीप्यते। 'पुनानः' पूयमानः 'हरिः' हरितवर्णः सोमः 'अरुषः' आरोचमानो भवति। 'यद्' यः सोमः 'सप्तास्येभिः' रसाहरणशीलास्यैः 'ऋक्वभिः' स्तुतिमद्भिः, 'ऋक्वभि'स्तेजोभिः 'विश्वा' विश्वानि सर्वाणि 'रूपाणि' 'परियाति' परितो व्याप्नोति ॥ ७ ॥**

**७ । ऋ० स० ९ म० १११ सू० १ ऋ० ।** ṚV. has **'सुतस्य'** instead of **'पृष्ठस्य'**.

अया—*for* अनया ; *vide* our notes on SV. I. 52.

सूरः—the sun ; cf. 'सूरादश्वं वसवो निरतष्ट', ṚV. i. 163. 2 ; also 'सौधन्वना ऋभवः सूरचक्षसः' (radiant like the sun),—ṚV. i. 110. 4.

सयुग्वभिः—with the rays yoked to it.

ऋक्वभिः ऋक्वभिः—acc. to Sāyaṇa, mg. is—'with encomiastic splendours' (स्तुतिमद्भिस्तेजोभिः). Prof. Wilson has left the terms untranslated.

——

नकुल ऋषिः । अष्टिच्छन्दः ।

३ २उ ३ १ २ ३ १ २ ३क २र ३ १ २ ३
अभि त्यं देवं सवितारमोण्योः कविक्रतु-
१ २ ३ १ २ ३ २ ३ २ ३ २ ३ २
मर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ।
३ २उ ३ २ ३ १ २र ३ १ २ ३
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि
१ २ ३ १ २ ३ १ २
हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥८॥४६४॥

अभि । त्यम् । देवम् । सवितारम् । ओण्योः । कविऽक्रतुम् । अर्चामि । सत्यऽसवम् । रत्नऽधाम् । अभि । प्रियम् । मतिम् । ऊर्ध्वा । यस्य । अमतिः । भाः । अदिद्युतत् । सवीमनि । हिरण्यऽपाणिः । अमिमीत । सुऽक्रतुः । कृपा । स्वः ॥ ८ ॥

भाष्यसारः । त्यम्—तम्, कविक्रतुम्—क्रान्तप्रज्ञम्, सत्यसवम्—सत्यप्रेरणम्, रत्नधाम्—रत्नानां दातारम्, अभि—सर्वतः, प्रियं मतिम्—मनन-विषयम्, सवितारं देवम् अर्चामि । यस्य—सवितुरित्यर्थः, ऊर्ध्वा भाः—दीप्तिः, ओण्योः—द्यावापृथिव्योः, अदिद्युतत्—सातिशयं दीप्यते । यस्य च सवीमनि—प्रसवे सति, अमतिः—सर्वेषां कान्तिः, अत्यर्थं दीप्यते, सुक्रतुः—शोभनप्रज्ञः शोभनकर्मा वा, हिरण्यपाणिः—सुवर्णकरः, सः, कृपा—कृपया, स्वः—स्वर्गम्, अमिमीत—निर्ममे ॥ ८ ॥

I adore that god (the sun), the progenitor of heaven and earth, the exceedingly wise, possessed of real energy, the bestower of riches, the dear object of meditation to all, at the appearance of whom, the splendour of all shines exceedingly, who, golden-handed and noble in action, created heaven through good grace.—8.

**सा०-भा०** । 'सवितारं' प्रेरकं 'देवम्' । वाग्व्यापारेण 'अभि अर्चामि' सर्वतः पूजयामि । कीदृशम् ? 'कविक्रतुं' क्रान्तप्रज्ञं 'सत्यसवम्' अवितथप्रेरणम् । 'रत्नधां' रमणीयानां धनानां दातारम् । 'अभि प्रियं' सर्वतः प्रीतियुक्तम् । 'मतिं' मननीयं स्तुत्यम् । 'यस्य' सवितुः 'भाः' दीप्तिः 'ऊर्ध्वा' उन्नता सती 'ओण्योः' द्यावापृथिव्योः 'अदिद्युतत्' अतिशयेन दीप्यते । यस्य सवितुः 'सवीमनि' प्रसवे सति । 'अमतिः'

सर्वेषां कान्तिः 'अदिद्युतत्' भृशं प्रकाशते। सः 'सुक्रतुः' शोभनकर्मा। 'हिरण्यपाणिः' हिरण्यहस्तः सविता देवः 'कृपा' कृपया 'स्वः' स्वर्गे निमित्तभूते सति 'अमिमीत' इमं सोमम् इयत्तया मितवान्। यद्वा, स्वः सर्वस्या (?) कृपया सङ्कल्पेन निरमिमीत ॥ ८ ॥

८। इयम् ऋक् ऋग्वेदे नास्ति।

श्रोण्योः—of heaven and earth, *vide* श्रोणी among the 24 syns. of द्यावापृथिव्यौ, Ngh. 3. 30.

अमतिः—splendour—*Grfth.* 'ऊर्ध्वा यस्यामतिः' is rendered by him as 'whose splendour is sublime'. Yāska renders 'अमतिरमामयी, मतिरात्ममयी', this conveys no sense; Durga, therefore, takes *Amati* to mean manifestation ( प्रकाश )—Nir. 6. 12.

सवीमनि—प्रसवे, at the appearance, in creation, Nir. 6. 7; cf. 'देवस्य वयं सवितुः सवीमनि', ṚV. vi. 71. 2.

हिरण्यपाणिः—Savitṛ is pre-eminently a golden deity: the epithets golden-eyed, golden-handed, golden-tongued are peculiar to him, cf. 'हिरण्यपाणिः सविता विचर्षणिः'—ṚV. i. 35. 9; 'हिरण्यहस्तो असुरः सुनीथः', ib. 10.

अमिमीत कृपा स्वः—*Grfth.* renders—'in his beauty made the sky'; for कृपा *see* notes on SV. 1. 83.

---

परुच्छेप ऋषिः। अत्यष्टिश्छन्दः।

३ १ २र ३ १ २ ३ १ २ ३ १
अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं
२र ३ १ २ ३ २ ३ २ ३ १ २
सहसो जातवेदसं विप्रं न जातवेदसम्।
२ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥६॥४६५॥

अग्निम्। होतारम्। मन्ये। दास्वन्तम्। वसोः। सूनुम्। सहसः। जातऽवेदसम्। विप्रम्। न। जातवेदसम्। यः। ऊर्ध्वया। सुऽअध्वरः। देवः।

देवाच्या । कृपा । घृतस्य । विऽभ्राष्टिम् । अनु । शुक्रऽशोचिषः । आऽजुह्वानस्य । सर्पिषः ॥ ९ ॥

भाष्यसारः । यः स्वध्वरः—यज्ञानां सुसम्पादकः, देवः, ऊर्ध्वया—उत्कृष्टया, देवाच्या—देवप्रवणया, कृपा—कृपया देवार्थं हविर्वहनशक्त्येत्यर्थः, शुक्रशोचिषः—दीप्तरूपस्य, आजुह्वानस्य—सर्वतः हूयमानस्य, सर्पिषः—तरलतया सरणशीलस्य, घृतस्य विभ्राष्टिम् अनु—विशिष्टदहनात् परम्, स्वयं तत् स्वीकरोति, तम् अग्निं होतारं दास्वन्तम्—परमदानशीलम्, वसोः—वसु धनस्वामितया धनात्मकं निवासकारणं वा, सहसः सूनुम्—बलस्य पुत्रं मन्थनाज्जातमित्यर्थः, जातवेदसम्—जातप्रज्ञं देवम्, जातवेदसं विप्रं न—जातविद्यं ब्राह्मणमिव, मन्ये—मानयामि, अर्चामि ॥ ९ ॥

I glorify Agni, the Hotṛ (the ministrant priest of the gods), the liberal bestower of riches, the giver of dwellings, the son of strength, the knower of all who are born, like a Brāhmaṇa endowed with knowledge, the excellent performer of sacrifices, who, with his noble grace turned to the gods, burns the flowing (liquified) ghee offered in oblation, glowing with flames.—9.

**सा०-भा० ।** 'अग्निं' सर्वासां देवसेनानामग्रगण्यं यज्ञेष्वग्रं नीयमानं वा । 'होतारम्' अस्मद्यागं प्रति देवानामाह्वातारम् । यद्वा, होमनिष्पादकं होतारं 'जुहोतेर्होते'त्यौर्णवाभः (नि० ७,१५) इति यास्कवचनात् । 'अग्निमद्य होतारमवृणीते'ति श्रुतेः । अग्निमग्न आवहेति च अग्नेराह्वातृत्वं प्रसिद्धम् । अग्निं होतारं मन्ये इत्येवं प्रतिविशेषणं मन्ये इति सम्बन्धः । यद्वा, यागनिष्पत्तेरेवोपलक्षितत्वादेतदेव विधेयविशेषणम् । इतराणि वक्ष्यमाणविशेषणानि स्तुतिपराणि । 'दास्वन्तम्' अतिशयेन दानवन्तम् । 'वसोः' प्रशस्यस्य सर्वेषाम् । 'सहसः सूनुं' बलस्य पुत्रमग्निं मन्थनकाले बलेन मथ्यमान उत्पद्यत इति तत्पुत्रत्वमुपचर्यते । 'जावेदसं' जातानां वेदितारं जातप्रज्ञं जातधनं वा, जातवेदःशब्दो यास्केन बहुधा निरुक्तः । अग्नेर्जातवेदस्त्वे दृष्टान्तः—'विप्रं न जातवेदसम्' जातविद्यं मेधाविनं ब्राह्मणमिव, तं यथा बहुमन्यते तथा त्वामपि स्तौमीत्यर्थः । उक्तगुणविशिष्टो यो देवः 'स्वध्वरः' शोभनयज्ञवान् यज्ञं सम्यक् निर्वहन् । 'ऊर्ध्वया' उन्नतया उत्कृष्टया 'देवाच्या' देवान् पूजयन्त्या देवान् प्रत्युक्तया वा 'कृपा' कृपया सामर्थ्यलक्षणया 'देवान् प्रत्युक्तया कृपे'ति (नि० ६,८) यास्कः । तेभ्यो हविर्वहनबुद्ध्या युक्तः सन् । 'शुक्रशोचिषः' दीप्ततेजस्कस्य । 'आजुह्वानस्य' आ समन्ताद्

हूयमानस्य। 'सर्पिषः' सरणशीलस्य घृतस्य विलापनेन दीप्तस्याऽऽज्यस्य 'विभ्राष्टिं' विशेषेण भ्राजमनु स्वयमपि तदाज्यं 'वष्टि' कामयते स्वीकरोतीत्यर्थः ॥ ६ ॥

६। ऋ० स० १ म० १२७ सू० १ ऋ०। ṚV. has 'वसुम्' the modified regular rdg. adj. to चग्निम्, instead of 'वसोः' the archaic SV. rdg. in *gen.*

वसोः—Agni is often called *Vasu* (wealth) and identified with it, as he is the master of the same ; *vide* our notes on वसुः, SV. 1. 110.

सहसः सूनुम्—Agni is termed the son of strength, inasmuch as he is generated by the energy required for rubbing the *Araṇis* (the fire-sticks) ; *see* our notes on सहसः यहो, SV. I. 99 ; Nir. 8. 2.

जातवेदसम्—one who knows all that exists ; *see* notes on SV. 1. 99. The word is repeated twice in the second line, which, Prof. Wilson thinks, is nothing else but a kind of verbal alliterative jingle, but Sāyaṇa assigns to the repeated word a distinct signification. As regards the repetition of the words in the verses ascribed to *Ṛsi Parucchepa*, *see* the foot note of the stanza 5 of this decade.

ऊर्ध्वया देवाच्या कृपा—through his lofty and reverential devotion—*Wils.*

सर्पिषः घृतस्य—सर्पिः is here taken in the literal sense, namely, flowing, i. e., liquified (ghee) ; fr. rt. सृप् *to go, to flow*, 1. p.

---

गृत्समद ऋषिः। अतिशक्करीच्छन्दः।

२ ३ १ २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम्।
२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
यो देवस्य शवसा प्रारिणो असु रिणन्नपः
२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २र
भुवो विश्वमभ्यदेवमोजसा विदेदूर्जं शतक्रतुर्विदेदिषम् ॥१०॥४६६॥

तव। त्यत्। नर्यम्। नृतः। अपः। इन्द्र। प्रथमम्। पूर्व्यम्। दिवि। प्रऽवाच्यम्। कृतम्। यः। देवस्य। शवसा। प्र। अरिणः। असु। रिणन्। अपः। भुवः। विश्वम्। अभि। अदेवम्। ओजसा। विदेत्। ऊर्जम्। शतऽक्रतुः। विदेत। इषम् ॥ १० ॥

भाष्यसारः। नृतः—हे सर्वेषां नर्तयितः आनन्ददायक इन्द्र, देवस्य—जिगीषोरसुरस्य, असु—असून् प्राणान्, रिणन्—हिंसन्, त्वम् अपः—तन्निरुद्धानि जलानि,

अरिणः—प्रेरितवान् इति यत्, त्यत्—तत्, तव नर्यम्—नराणां हितकरम्, प्रथमम्—श्रेष्ठम्, पूर्व्यम्—पुरातनम्, कृतम्—कर्म, दिवि प्रवाच्यम्—प्रकर्षेण प्रशस्यं भवति। सः त्वं विश्वम् अदेवम्—तमोरूपमसुरम्, ओजसा अभिभुवः—अभिभव। शतक्रतुः—इन्द्रः, ऊर्जम्—बलम्, विदेत्—लभेत, इषम्—अन्नम्, च विदेत्—लभेत ॥ १० ॥

Indra, who sets all to dance or to rejoice, thy first and ancient work was beneficial to men, highly spoken of in heaven, thou, who, killing the mighty demon (of drought) didst send down the rain-waters; may he subdue, with his might, all that is godless; may Śatakratu gain strength; may he gain sacrificial food.—10.

**सा०-भा०।** 'नृतः' सर्वेषां नर्त्तयितः प्रवर्त्तयितः, हे 'इन्द्र!' 'नर्यं' नराणां हितकरम्। 'प्रथमं' प्रतमम्। 'प्रथमं प्रतमम्' इति यास्कः। 'पूर्व्यं' पूर्वकालभवम्। त्वया कृतं 'तव' त्यद्' तदपः कर्म 'दिवि' स्वर्गलोके 'प्रवाच्यं' देवैः प्रकर्षेण वक्तव्यं श्लाघनीयमित्यर्थः। किन्तत्? 'देवस्य' विजिगीषोः 'असुरस्य' 'असु' असु प्राणं 'रिणन्' हिंसन्। त्वम् 'अपः' उदकानि तेन निरुद्धानि 'अरिणः' प्रैरयः इति यदेतत् कर्म तत्प्रवाच्यमिति समन्वयः। परोक्षनिर्देशविशिष्टः सः इन्द्रः 'विश्वं' व्याप्तम् 'अदेवं' तमोरूपम् असुरम् 'ओजसा' बलेन 'अभि भुवत्' (?) अभिभवतु। किञ्च 'शतक्रतुः' इन्द्रः 'ऊर्जं' बलं 'विदेत्' लम्भयेत्। 'इषं' हविर्लक्षणमन्नं च विदेत्, विद्लृ लाभे (तु० उ०)॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य द्वादशः खण्डः। पञ्चमप्रपाठकस्य च द्वितीयार्धे तृतीया दशतिः॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थ-महेश्वरः॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने ऐन्द्रकाण्डे चतुर्थोऽध्यायः।

समाप्तम् ऐन्द्रं पर्व ऐन्द्रकाण्डं वा।
इति द्वितीयं पर्व।

१०। ऋ० सं० २ म० २२ सू० ४ ऋ०। Ṛ V. has (1) 'यत्' (when) for 'यः'; (2) 'विदा' for 'विदेत्'।

नर्यम्—meant for the good of man; *see* our notes on the word, SV. I. 56. ( अच्छा वीरं नर्यम् ) and on नर्यापसम्, SV. I. 125.

नृतः—*lit.* dancer; the epithet elsewhere occurs as one who dances or exults in battle; here it is explained by Sāyaṇa as one who causes to dance or rejoice.

देवस्य—*lit.* of the divine, or of the deity, but Sāyaṇa here explains—'of the demon ( असुरस्य )' referring to the demon of drought, in possessive case, to be connected with असु (life). Indra, doing away with his life, sends down rain.

विदेदूर्जम् विदेदिषम्—'may Śatakratu obtain vigour, may he obtain food'—*Wils.*; 'Lord of hundred powers, find for us strength and food'—*Grfth.*

———

# सामवेद-संहिता

## पञ्चमाध्यायः

अस्मिन् अध्याये सोमः स्तूयते।

### पवमानं पर्व*

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्॥
तृतीयं पर्व सोमस्य पवमानस्य संस्तुतिः।
'उच्चात' इति गायत्र्यश्चत्वारिंशच्चतुर्युताः॥

अथ पञ्चमाध्याये प्रथमः खण्डः। पञ्चमप्रपाठकस्य च द्वितीयार्धे चतुर्थी दशतिः।

अमहीयुर्ऋषिः। गायत्रीच्छन्दः**।

३ १ २ ३ १ २र ३ १ २र
उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे।
३ २उ ३ २ ३ १ २
उग्रं शर्म महि श्रवः॥ १॥ ४६७॥

---

* पवमान is used anomalously for पूयमान (active in form, passive in sense), which means *purified*, *cleansed or filtered*, refers to the Soma-juice being filtered or in Active sense simply *flowing Soma-juice* (fr. पव *to go*). The process of filtration is that the *Adhvaryu* takes the skin (*carma* or *tvac*) and puts on it the shoots of the Soma plant *(aṃśu)*. He then takes two boards (*Adhiṣavaṇa*, अधिषवण), puts one on the top of the Soma shoots and beats it with the stones (*grāvaṇa*, ग्रावण). Then the shoots are put between the two boards, and water is poured on them from the *Vasatīvarī* pot. The shoots are then shaken in the *Hotṛ*'s cup (*camasa*), wetted again with *Vasatīvarī* waters and put on a stone. *Kuśa* grass is laid on them, and they are beaten so that the juice comes out. The juice is allowed to run into the trough (ādhavanīya), then is filtered through the cloth (*daśāpavitra* or *pavitra*) which is held by the *Udgātṛ*. The filtered juice is caught in a pitcher (*pūtabhṛt*) ; this is often called *yoni*, the final station or destination of the Soma-juice in the process of filtration. It is then said to be finally prepared and ready for being offered as libation to gods. Libations are poured from two kinds of vessels—*grahas* ( ग्रह ) and *camasas.—Aitareya Brāhmaṇa.*

** All the 44 verses, to the end of the 4th decade of this Adhyāya, are in Gāyatrī metre.

उच्चा । ते । जातम् । अन्धसः । दिवि । सत् । भूमिः । आ । ददे । उग्रम् । शर्म । महि । श्रवः ॥ १ ॥

भाष्यसारः । हे सोम, ते—तव, अन्धसः—पानीयस्य रसस्य, उच्चा—उपरि, जातम्, दिवि, सत्—वर्तमानम्, उग्रम्—प्रभूतम्, शर्म—सुखम्, महि—महत्, श्रवः—अन्नम्, च भूमि—भूमिः, भूमिभवैः सर्वजनैः आददे—आदीयते ॥ १ ॥

The birth of thy juice is on high, the earth has enjoyed thy great bliss and ample food, though these rest in heaven.—1.

**सा०-भा० ।** हे सोम ! 'ते' तव सम्बन्धिनः 'अन्धसः' रसस्य 'उच्चा' उपरि 'जातम्' जन्म। अपि च, 'दिवि' द्युलोके 'सत्' विद्यमानम् 'उग्रम्' उद्गूर्णं 'शर्म' सुखं 'महि' महत् 'श्रवः' अन्नञ्च 'भूम्याददे' इत्यत्र यमामनन्ति। विसर्जनीय-लोपः सांहितिकः। भूमिः भौमजन्यः अस्मादृशः, भूमिष्ठैरादीयत इत्यर्थः ॥ १ ॥

१। ऋ० सं० ६ म० ६१ सू० १० ऋ०। यजुः० २६, १६।

भूम्या—The *pada* text takes *bhūmyā* as two words—भूमिः ; आ ; the *Visarga* being elided in the *saṃhitā* text.

अन्धसः—of (thy) food, Ngh. 2. 7 ; here rfs. to the Soma-juice ; 'अन्ध इत्यन्ननाम, आध्यानीयं भवति'—'*andhas*' means food, because it is to be sought with eagerness, Nir. 5. 1 ; or drvd. fr. rt. अद *to eat*, with *aff.* असुन् (uṇ. iv. 205) ; *see* sāy.'s *addl.* notes quoted in our notes under SV. I. 180. cf. 'प्र वो महे मन्दमानायान्धसोऽर्चा'—worship the great god, who is being exhilarated (and who is the giver of food).—ṚV. x. 50. 1.

शर्म—सुखम्, शरणम्, *happiness* or *protection*—Nir. 9. 16. 32 ; 12. 45 ; cf. —'नो देवीः सुहवाः शर्म यच्छत', grant us happiness or protection, O goddesses,—who are easy to invoke, ṚV. v. 46. 7 ; 'यच्छा नः शर्म सप्रथः'—give us wide *protection*, ṚV. i. 22. 15 ; 'इषवः शर्म यंसन्'—may the arrows grant *protection*.—ṚV. vi. 75. 11.

महि—great, cf. 'महि श्रवो नृम्णं च रोदसी सपर्यतः'—heaven and earth honour the *great* glory and power.

श्रवः—अन्नम्, food—Ngh. 2. 7. cf. 'अभि श्रव ऋज्यन्तो वहेयुः'—(the horses) moving straight bring (Indra) towards *food*—ṚV. vi. 37. 3.

---

मधुच्छन्दा ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २
स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
१ २ ३ १ २ ३ २
इन्द्राय पातवे सुतः ॥ २ ॥ ४६८ ॥

स्वादिष्ठया । मदिष्ठया । पवस्व । सोम । धारया । इन्द्राय । पातवे । सुतः ॥ २ ॥

भाष्यसारः । हे सोम, इन्द्राय, पातवे—पातुम्,—इन्द्रस्य पानार्थम्, सुतः—अभिषुतस्त्वम्, स्वादिष्ठया—स्वादुतमया, मदिष्ठया—मादकतमया, धारया पवस्व—क्षर ॥ २ ॥

In a sweetest and most exhilarating stream, flow on, Soma, pressed out for Indra, for (his) drink.—2.

सा०-भा० । हे 'सोम !' इन्द्राय 'पातवे' पातुं 'सुतः' अभिषुतस्त्वं 'स्वादिष्ठया' स्वादुतमया 'मदिष्ठया' अतिशयेन मादयित्र्या 'धारया' 'पवस्व' क्षर ॥२॥

२ । ऋ० सं० ९ म० १ सू० १ ऋ० । यजुः २६, २५ ।

This verse is cited by Yāska in Nirukta, 11. 3. in connection with the characterization of the Soma.

पातवे—पातुम्, an instance of Vedic infinitive with *aff.* 'तवेन्', by 'तुमर्थे से-सेन् ···तवेनः', Pāṇ. iii. 4. 9.

स्वादिष्ठया—most delicious. मदिष्ठया—most gladdening, exhilarating.

---

भृगुर्वारुणिर्ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ २
वृषा पवस्व धारया मरुत्वते च मत्सरः ।
२ ३ १ २ ३ १ २
विश्वा दधान ओजसा ॥ ३ ॥ ४६९ ॥

वृषा । पवस्व । धारया । मरुत्ऽवते । च । मत्सरः । विश्वा । दधानः । ओजसा ॥ ३ ॥

भाष्यसारः। वृषा—कामानां वर्षकस्त्वम्, धारया पवस्व—दशापवित्रादधः क्षर। ततः ओजसा विश्वा—विश्वानि धनानि, दधानः—विदधत्, मरुत्वते—मरुत्सहायाय इन्द्राय, मत्सरः—मादयिता, च भवेति शेषः ॥ ३ ॥

Flow on, in a stream, thou, who art the rainer of blessings, invigorating to the lord of the Maruts, bearing (for us) all riches by dint of thy might.—3.

**सा०-भा०।** हे 'सोम!' त्वं 'वृषा' स्तोतॄणामभिमतं वर्षकः सन् 'धारया' त्वदीयया 'पवस्व' द्रोणकलशमागच्छ। पवतिर्गतिकर्मा। आगतस्त्वं यदा अस्माभिरिन्द्राय दीयते, तदा 'मरुत्वते' सहाया मरुतो यस्य सन्ति—तस्मै इन्द्राय 'मत्सरः' मदकरश्च भव। कीदृशः? 'विश्वा' विश्वानि सर्वाणि व्याप्तानि वा धनानि, 'ओजसा' आत्मीयेन बलेन युक्तः सन् स्तोतृभ्यस्तानि प्रयच्छन् त्वं मादयिता भवेति समन्वयः ॥ ३ ॥

३। ऋ० सं० ६ म० ६५ सू० १० ऋ०।

मरुत्वते—मरुत् with *aff.* मतुप्, rfs. to Indra, as he has the hosts of the Maruts for his associates and allies. cf. 'मरुत्वाँ इन्द्रो वृषभो रणाय'—Indra, the rainer, accompanied by Maruts is for battle, Ṛ̣V. iii. 47. 1.

वृषा—showerer (of blessings or benefits) fr. rt. वृष् *to rain*, Nir. 6. 17; cf. 'वृषा सिन्धूनां वृषभः स्तियानाम्'—the sprinkler of rivers and the rainer of waters —Ṛ̣V. vi. 44. 21.

मत्सरः—an epithet referring to the Soma, sometimes the synonym of it, being intoxicating or exhilarating by nature. 'मत्सरः सोमः, मन्दतेस्तृप्तिकर्मणः'—*Matsara* means *Soma*, it is dervd fr. rt. *mand*, to gladden, Nir. 2. 5. cf. 'गोभिः श्रीणीत मत्सरम्'—mix Soma with milk (here मत्सर stands for the Soma as its syn.), Ṛ̣V. ix. 46. 4.

---

अमहीयुर्ऋषिः।

२ ३ २ ३ १२ ३ १ २ ३ १ २
यस्ते मदो वरेण्यस्तेना पवस्वान्धसा।
३ १२ ३२
देवावीरघशंसहा ॥ ४ ॥ ४७० ॥

यः । ते । मदः । वरेण्यः । तेन । पवस्व । अन्धसा । देवावीः । अघशंसऽहा ॥ ४ ॥

भाष्यसारः । ते—तव, यः वरेण्यः—वरणीयः, देवावीः—देवकामः, अघशंसहा—पापप्रथनशीलानां राक्षसानां हन्ता, मदः—मदकरो रसः अस्ति, तेन अन्धसा—अद्नीयेन पानीयेनेत्यर्थः, आध्यानीयेन वा रसेन पवस्व—पवित्रादधः क्षर, द्रोणकलशमागच्छ ॥ ४ ॥

Flow on, with that juice of thine, which is most exquisite, exhilarant, pleasing to gods, and destructive of the vaunters of evil deeds, (i. e., the wicked, the demons or Rākṣasas).—4.

**सा०-भा० ।** हे सोम ! 'ते' तव 'देवावीः' देवकामः, 'अघशंसहा' राक्षसानां हन्ता, 'वरेण्यः' सर्वैर्वरणीयः, 'मदः' मदकरः, 'यः' रसो विद्यते, 'तेन' रसेन 'अन्धसा' अद्नीयेन आदरणीयेन वा 'पवस्व' क्षर ॥ ४ ॥

४ । ऋ० सं० ६ म० ६१ सू० १६ ऋ० ।

अघशंसहा—the killer of those who profess sin, i. e., of the wicked, the demons, the Rākṣasas. The compd. consists of 3 parts : अघ *sin* ; शंस ( fr. rt. शंस् *to speak*—अच् ) one who speaks ; हा *the slayer* (fr. rt. हन् to kill); the word 'अघशंस' is found among the synonyms of thief, Ngh. 3. 2 ; literally it means vaunters of evil deeds, i. e., the wicked. cf. 'अव स्वेदघशंसोऽवतरम्'—may the wicked drop down lower and lower, ṚV. i. 129. 6. 'इन्द्रासोमा समघशंसम् . . . तपुः'—O Indra and Soma, let the wicked man, the vaunter of evil deeds, be heated or tormented by you. ib. vii. 104. 2. 'अघशंसम्—अघस्य शंसितारम्, अघं हन्तेः—one who brags or speaks highly of his sin ; *agha* is sin, dervd. fr. rt. हन्—Nir. 6. 11.

देवावीः *(sometimes* देववीः)—gratifying the gods.

---

त्रित ऋषिः ।

२ २उ ३ १ २ ३ १ २ ३ १ २
तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।
१ २ ३ १ २
हरिरेति कनिक्रदत् ॥ ५ ॥ ४७१ ॥

तिस्रः । वाचः । उदीरते । गावः । मिमन्ति । धेनवः । हरिः । एति । कनिक्रदत् ॥ ५ ॥

भाष्यसारः । **तिस्रः—त्रिविधाः, वाचः उदीरते—उच्चारयन्ति, ऋत्विजः इति शेषः । धेनवः—प्रीतिकारिण्यः गावः, मिमन्ति—शब्दायन्ते दोहार्थम्, हरिः—हरितवर्णः सोमः, कनिक्रदत्—भृशं शब्दायमानः, एति—द्रोणकलशम् आगच्छति ॥ ५ ॥**

The three holy texts are being sung, the milch cows are lowing, the golden-hued Soma hastens, with a roar (to the pitcher, the final resting place).—5.

**सा०-भा० ।** 'तिस्रो वाचः' ऋगादिभेदेन त्रिविधाः 'उदीरते'—स्तुतीः प्रोद्गायन्ति ऋत्विजः । 'धेनवः' आशिरेण प्रीणयित्र्यः 'गावः' 'मिमन्ति' शब्दायन्ति दोहार्थम् । 'हरिः' हरितवर्णः सोमश्च 'कनिक्रदत्' शब्दं कुर्वन् गच्छति कलशम् ॥५॥

५ । ऋ० सं० ६ म० ३३ सू० ४ ऋ० ।

तिस्रः वाचः—refers to the hymns or praises from the three Vedas.

मिमन्ति—the cows low ; cf. 'गौरमीमेदनु वत्सं मिषन्तं'. . . अभि वावशाना मिमाति मायुम्', ib. 28. 'गौरमीमेदनु वत्सं

कनिक्रदत्—making sound, refers to the sound made by the juice, as it flows through the filter into the pitcher to hold the juice.

---

कश्यप ऋषिः ।

१ २     ३ १ २ ३ १ २ ३ १ २
इन्द्रायेन्द्रो मरुत्वते पवस्व मधुमत्तमः ।
३ २ ३   १ २ ३ १ २
अर्कस्य योनिमासदम् ॥ ६ ॥ ४७२ ॥

इन्द्राय । इन्दो । मरुत्ऽवते । पवस्व । मधुमत्ऽतमः । अर्कस्य । योनिम् । आसदम् ॥ ६ ॥

भाष्यसारः । **इन्दो—हे क्षरणशील सोम, मधुमत्तमः—मधुरतमस्त्वम्, अर्कस्य—अर्चनीयस्य यज्ञस्य, योनिम्—स्थानं कलशरूपम्, आसदम्—उपवेष्टुम्, मरुत्वते—मरुत्सहिताय इन्द्राय, पवस्व—क्षर ॥ ६ ॥**

For Indra, the lord of Maruts, flow on, Indu, most sweet, to sit on the final station (the pitcher).—6.

**सा०-भा०।** हे 'इन्दो' सोम! 'मधुमत्तमः' अतिशयेन मधुमान्, 'अर्कस्य' अर्चनीयस्य यज्ञस्य, 'योनिं' स्थानम्, 'आसदम्' उपवेष्टुम्, 'मरुत्वते' 'इन्द्राय' इन्द्रार्थं 'पवस्व' क्षर ॥ ६ ॥

६। ऋ० सं० ९ म० ६४ सू० २२ ऋ०।

अर्कस्य योनिम्—'in the place of song'—*Grfth.* He is apparently wrong, as he takes the word *arka* to mean here song; Sāyaṇa takes the word in the sense of holy sacrifice (अर्चनीयस्य यज्ञस्य). For different mgs. of अर्क *see* Nir. 5. 4, and also our notes on 'अर्कम् (अर्चनीयम्) अर्चन्तु', SV. I. 158.

आसदम्—*Inf.* to sit on, to settle in.

जमदग्निर्ऋषिः।

१ २ ३ १ २र ३ १ २र ३ २
असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः।
३ २उ ३ १ २
श्येनो न योनिमासदत् ॥ ७ ॥ ४७३ ॥

असावि। अंशुः। मदाय। अप्सु। दक्षः। गिरिऽस्थाः। श्येनः। नः। योनिम्। आसदत् ॥ ७ ॥

भाष्यसारः। गिरिष्ठाः—गिरिजातः, अंशुः—सोमः, मदाय—हर्षजननाय, असावि—अभिषुतः, तथा अप्सु—उदकेषु वसतीवरीषु, दक्षः—प्रवृद्धः भवतीति शेषः, अपि च श्येनः न—इव, योनिम्—द्रोण-कलशरूपं स्थानम्, आसदत्—आसीदति ॥७॥

The mountain-born Soma, strongly augmented in the waters (Vasatīvarī), has been pressed out for the exhilaration (of the gods); like a hawk, he comes down to his place of rest.—7.

**सा०-भा०।** 'गिरिष्ठाः' पर्वते जातः 'अंशुः' सोमः 'मदाय' मदार्थम् 'असावि' अभिषुतः। 'अप्सु' वसतीवरीषु 'दक्षः' प्रवृद्धश्च भवति। किञ्च, 'श्येनो न' यथा श्येनो वनादागत्य स्थानमासीदति, तद्वद् 'अयं' सोमः 'योनिं' स्वकीय-स्थानम् 'आ सदत्' आसीदति ॥ ७ ॥

७। ऋ० सं० ६ म० ६२ सू० ४ ऋ०।

अंशुः—the filament or the stalk (esp. of the Soma plant), here it refers to the Soma itself.

अप्सु—in the waters, rfs. to the *Vasatīvarī*.

गिरिष्ठाः—the Soma plant is so called as it is said to have grown on mountains. Mount Mūjavat is alluded to in ṚV. x. 34. 1, where, it is said, the best Soma plants are found.

---

इळच्युत आगस्त्य ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
पवस्व दक्षसाधनो देवेभ्यः पीतये हरे।
३ १ २ ३ २३ १ २
मरुद्भ्यो वायवे मदः॥ ८॥ ४७४॥

पवस्व। दक्षऽसाधनः। देवेभ्यः। पीतये। हरे। मरुत्ऽभ्यः। वायवे। मदः॥ ८॥

भाष्यसारः। हरे—हे हरितवर्ण, पापहर वा सोम! दक्षसाधनः—बलविधायकः, मदः—मादयिता, त्वं देवेभ्यः इन्द्रादिभ्यः, पीतये—पानाय, मरुद्भ्यः वायवे च पानाय पवस्व—पवित्रादधः क्षर॥ ८॥

Green-tinted Soma, the means of acquiring strength, the exhilarating draught, flow on, for the gods, the Maruts, for Vāyu to drink.—8.

**सा०-भा०।** हे 'हरे' हरितवर्ण पापहर्तर्वा सोम! 'दक्षसाधनः' दक्षो बलन्तस्य साधकः, 'मदः' मदकरश्च त्वं 'पवस्व' क्षर। किमर्थम्? 'देवेभ्यः' इन्द्रादिभ्यः 'पीतये' पानाय। तथा 'मरुद्भ्यः' वायवे च पीतये पानाय 'पवस्व' क्षर॥ ८॥

८। ऋ० सं० ६ म० २५ सू० १ ऋ०।

हरे—(*voc.* of the *stem.* हरि)—Sāyaṇa assigns two meanings to this word e. g., (1) tawny-coloured, green-hued : (2) the remover of sins.

दक्ष-साधनः—the implement of strength ; it is a common epithet of the Soma, cf. 'स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी', SV. ii. 6. 2. 3. 3 ; ṚV. ix. 101. 15.

---

काश्यपोऽसित ऋषिः ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् ।
१ २ ३ १ २
मदेषु सर्वधा असि ॥ ९ ॥ ४७५ ॥

परि । स्वानः । गिरिऽस्थाः । पवित्रे । सोमः । अक्षरत् । मदेषु । सर्वऽधाः । असि ॥ ९ ॥

भाष्यसारः । **सोमः पवित्रे पर्यक्षरत्—परिक्षरति, हे सोम ! गिरिष्ठाः—गिरिजातः, स्वानः—सुवानः अभिषूयमाणः, त्वं मदेषु—मादकेषु स्तोतृषु, सर्वधाः—सर्वस्य धाता दाता वा असि ॥ ९ ॥**

The hill-born Soma, being pressed out, is poured on the filter; thou holdest out all benefits to the praisers.—9.

**सा०-भा० ।** अयं 'सोमः' 'पवित्रे' 'पर्यक्षरत्' परिक्षरति । 'स्वानः' सुवानः अभिषूयमाणः, 'गिरिष्ठाः' गिरिस्थायी गिरौ वर्त्तमान इत्यर्थः । स त्वं 'मदेषु' मादकेषु स्तोतृकेषु 'सर्वधा असि' सर्वस्य धाता दाता वा भवसि ॥ ९ ॥

९ । ऋ० सं० ९ म० १८ सू० १ ऋ० । ṚV. reads **'सुवानः'** instead of **'स्वानः'** and **'अक्षरः'** for **'अक्षरत्'** ।

स्वानः—extracted, effused ; pres. pt. pass. of rt. सु—to *press out*, *to extract* (esp. the juice from the Soma plant for libations) ; the ṚV. form is *Suvāna* (सुवान), while in the SV. it is generally read—*Svāna* ( स्वान ) ; the gram. correct form, however, is सूयमान.

मदेषु—Sāyaṇa explains as *Stotrikeṣu*—'those who praise thee'. Wils. follows this mg. Grfth. renders 'in carouse', i. e., in rapture, transport or wild joy, produced by drinking the exhilarating Soma juice.

---

काश्यपोऽसित ऋषिः ।

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २
परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः ।
३ १ २ ३ १ २
स्वानैर्याति कविक्रतुः ॥ १० ॥ ४७६ ॥

परि । प्रिया । दिवः । कविः । वयांसि । नप्त्योः । हितः । स्वानैः । याति । कविऽक्रतुः ॥ १० ॥

भाष्यसारः । **कविक्रतुः—क्रान्तप्रज्ञः क्रान्तकर्मा वा सोमः, नप्त्योः—अधिषवण-फलकयोः, हितः—निहितः सन्, स्वानैः—शब्दैः, दिवः प्रिया—प्रियाणि, वयांसि—पाषाणखण्डानि परि-याति ॥ १० ॥**

The wise (Soma), accomplished in action or wisdom, most dear to heaven, placed between the two pressing boards, goes forth, with roars, to the stones.—10.

**सा०-भा० ।** कविर्मेधावी । 'कविक्रतुः' क्रान्तप्रज्ञः क्रान्तकर्मा वा सोमः 'नप्त्योः' अधिषवणफलकयोः 'हितः' निहितः । 'दिवः' द्युलोकस्य 'प्रिया' प्रियाणि 'वयांसि' वयन्ति गच्छन्तीति वयांसि ग्रावाणः, तानि । तथाच मन्त्रवर्णः 'श्येना अतिथयः पर्वतानां ककुभः' इति । 'स्वानैः' अभिषुण्वद्भिरध्वर्युभिः प्रयुक्तानि तानि 'वयांसि' 'परि-याति' गच्छति ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्य प्रथमः खण्डः । पञ्चमप्रपाठकस्य च द्वितीयार्धे चतुर्थी दशतिः ॥

१० । ऋ० सं० ९ म० ९ सू० १ ऋ० । Ṛ V. reads **'सुवानः'** (effused or pressed out) instead of **'स्वानैः'** (with roars).

नप्त्योर्हितः—(*lit.*) between the two grand daughters—*naptyoḥ*. Terms of relationship are often used in the Vedas to express material objects, thus 'the sisters' are the fingers, etc. Sāyaṇa interprets the term of the two boards used in pressing the Soma.

वयांसि—Sāyaṇa means 'the stones' and derives it from—वी to go; adopted in Wilson's translation but it is remarked, there, that the meaning is very doubtful. Grfth. renders—'powers of life'; goes to the birds dear to heaven.

स्वानैः—'with roars'—Grfth. Perhaps 'स्वान' is derived from स्वन (n)—with aff. घञ् in the same sense, fr. स्वन्—*to sound*, I. P. This interpretation being more rational and appropriate, we have adopted it.

अधिषवण—in the Sāyaṇa's Com. means the hand press for extracting or straining the Soma juice, fr. अधि—सु—to extract or prepare the Soma juice, ṚV. IX. 91. 2. अधिषवण्य—the two parts of the hand press, ṚV. i. 28. 2.

---

अथ पञ्चमाध्यायस्य द्वितीयः खण्डः। पञ्चमप्रपाठकस्य च द्वितीयार्धे पञ्चमी दशतिः।

श्यावाश्व ऋषिः। गायत्रीच्छन्दः* ।

१ २र ३ २ ३ १ २ ३ १ २
प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्।
३ २ ३ १ २
सुता विदथे अक्रमुः ॥ १ ॥ ४७७ ॥

प्र। सोमासः। मदऽच्युतः। श्रवसे। नः। मघोनाम्। सुताः। विदथे। अक्रमुः ॥ १ ॥

भाष्यसारः। सोमासः—सोमाः, मदच्युतः—हर्ष-वर्षिणः, सुताः—अभिषुताः सन्तः, मघोनाम्—हविर्धनानाम्, नः—अस्माकम्, विदथे—यज्ञे, श्रवसे—अन्नाय कीर्तये वा, प्राक्रमुः—प्रगच्छन्ति ॥ १ ॥

The Somas, shedding joy, being extracted, flows forward to the sacrifice of us, rich in oblations, for (securing us) food or glory.—1.

**सा०-भा०।** 'सोमासः' सोमाः 'मदच्युतः' मदस्राविणः 'सुताः' अभिषुताः सन्तः 'मघोनां' हविष्मतां 'नः' अस्माकं सम्बन्धिनि 'विदथे' यज्ञे 'श्रवसे' अन्नाय कीर्त्तये वा 'प्राक्रमुः' प्रगच्छन्ति ॥ १ ॥

१। ऋ० सं० ९ म० ३२ सू० १ ऋ०। उ० आर्चि० १, २, २१, १।

मदच्युतः—'diffusing exhilaration'—*Wils.*
श्रवसे नः—'for the sustenance of us,' *ibid.* विदथे—*vide* notes on SV. I. 459.

---

त्रित ऋषिः।

१ २र ३ २ ३ १ २ ३ १ २
प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः।
१ २ ३ १ २
वनानि महिषा इव ॥ २ ॥ ४७८ ॥

प्र। सोमासः। विपःऽचितः। अपः। नयन्ते। ऊर्मयः। वनानि। महिषाःऽइव ॥ २ ॥

* As noticed before, all the verses of this decade are in Gāyatrī metre.

भाष्यसारः। विपश्चितः—मेधाविनः, सोमासः—सोमाः, अपः ऊर्मयः—अपां तरङ्गा इव—यथा तरङ्गाः सततमुद्भवन्ति तद्वत्, महिषाः वनानि इव—यथा व प्रवृद्धाः मृगाः वनानि विशन्ति तद्वत्, प्र नयन्ते—पात्राणि प्रति गच्छन्ति ॥ २ ॥

The sapient Somas hasten forth (to the vessel) like waves of water, like buffaloes to the woods.—2.

**सा०-भा०।** 'विपश्चितः' मेधाविनः 'सोमासः' सोमाः 'प्र नयन्ते' पात्राणि प्रति गच्छन्ति। किमिव? 'अप ऊर्मयः'—अप इति षष्ठीव्यत्ययेन द्वितीया—अपामूर्मयः, अत एव बह्वृचाः अपान्नयन्तीति पठन्ति। ते यथा सततमुद्भवन्ति तद्वत्। बाहुल्येऽयं दृष्टान्तः। अर्थतो गमने दृष्टान्तान्तरमभिधीयते—'वनानि महिषाः' प्रवृद्धा मृगा 'इव'। अथवा स्वाश्रयात् प्रद्रवणे प्रथमो दृष्टान्तः। द्वितीयस्तु दशापवित्राद्धःप्रदेशे ॥ २ ॥

२। ऋ० सं० ६ म० ३३ सू० १ ऋ०। उ० आर्चि० १, २, १६, १। ṚV. has the modified rdg. 'न यन्ति' for the corrupt SV. rdg. 'नयन्ते'; also ṚV. has 'अपाम्' (the correct gen. form) for 'अपः' the corrupt SV. rdg. in accus.

विपश्चितः—the wise; fr. rt. विप् or वेप् *to tremble, to be stirred;* the word विप्रः *lit.* stirred, or excited (inwardly), inspired, wise (mg. a Brahmaṇa) is drvd. fr. this rt; *see* our notes on विपाम्, SV. I. 98.

महिषाः—Sāy. explains as—large wild animals.

———

अमहीयुर्ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने।
२ ३ २ ३ १ २
विश्वा अप द्विषो जहि ॥ ३ ॥ ४७६ ॥

पवस्व। इन्दो। वृषा। सुतः। कृधि। नः। यशसः। जने। विश्वा। अप। द्विषः। जहि ॥ ३ ॥

भाष्यसारः। इन्दो—हे सोम, सुतः—अभिषुतः, वृषा—कामानां वर्षिता, त्वं पवस्व—क्षर। जने—जनानां मध्ये, नः—अस्मान्, यशसः—यशस्विनः, कृधि—कुरु। विश्वा—विश्वान् सर्वान्, द्विषः—शत्रून्, अप-जहि—विनाशय ॥ ३ ॥

Flow on, Indu, thou, the showerer of blessings, being pressed out; make us famous among men, kill all our foes.—3.

**सा०-भा० ।** हे 'इन्दो' सोम ! 'सुतः' अभिषुतः, 'वृषा' सेक्ता, त्वं 'पवस्व' धारया क्षर। 'जने' जनपदेषु, 'नः' अस्मान्, 'यशसः' यशस्विनः, 'कृधि' कुरु। 'विश्वा' सर्वान्, 'द्विषः' द्वेष्टॄन् शत्रून्, 'अप जहि' मारय ॥ ३ ॥

३। ऋ० सं० ६ म० ६१ सू० २८ ऋ०। उ० आर्चि० २, १, २, १।

---

भृगुर्ऋषिः।

२ ३ १ २ ३ १ २ ३ १ २
**वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे ।**
३ १ ३ १ २ २
**पवमान स्वर्दृशम् ॥ ४ ॥ ४८० ॥**

वृषा। हि। असि। भानुना। द्युऽमन्तम्। त्वा। हवामहे। पवमान। स्वःऽदृशम् ॥ ४ ॥

भाष्यसारः। **पवमान—हे क्षरणशील पूयमान सोम, त्वं वृषा—काम्यफलानां वर्षिता, असि हि। अतः भानुना—प्रभया, द्युमन्तम्—दीप्यमानम्, स्वर्दृशम्—सर्वसाक्षिणम्, त्वां हवामहे—आह्वयामः ॥ ४ ॥**

Thou art the showerer (of benefits), we invoke thee, purified Soma, flowing in stream, bright with effulgence, the seer of all.—4.

**सा०-भा० ।** हे 'सोम ! त्वं 'वृषा' अभिलषितफलानां वर्षिता 'असि हि' भवसि खलु। तस्मात् हे 'पवमान' पूयमान पुनान वा सोम ! 'स्वर्दृशं' सर्वस्य द्रष्टारं 'भानुना' तेजसा 'द्युमन्तं' दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः। स्तुतिमन्तं वा 'त्वा' त्वां 'हवामहे' यज्ञेषु आह्वयामहे ॥ ४ ॥

४। ऋ० सं० ६ म० ६५ सू० ४ ऋ०। उ० आर्चि० २, १, ४, १।

द्युमन्तम्—resplendent, shining, sparkling; *see* notes on SV. I. 440.

स्वर्दृशम्—all-seeing; for different mgs. of स्वः, *see* our notes on स्वर्वान्, SV. I. 254; स्वर्दृशम्, I. 233; स्वर्णरम्, I. 109.

---

कश्यप ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ २ ३ २

इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः ।

३ १ २र ३ १ २

सृजदश्वं रथीरिव ॥ ५ ॥ ४८१ ॥

इन्दुः । पविष्ट । चेतनः । प्रियः । कवीनाम् । मतिः । सृजत् । अश्वम् । रथीःऽइव ॥ ५ ॥

भाष्यसारः । चेतनः—ज्ञानस्य साधनभूतः, प्रियः—प्रीतिकरः, इन्दुः—सोमः, कवीनाम्—मेधाविनां स्तोतॄणाम्, मतिः—मननीयः, पविष्ट—पवते, अश्वं रथीरिव—रथीव, सृजत्—ऊर्मिं सृजति ॥ ५ ॥

Beloved Indu, the source of knowledge, flows onward with the praise of the sages; he causes his wave to flow, as a charioteer lets loose his horse.—5.

**सा०-भा० ।** 'चेतनः' प्रज्ञापकः 'प्रियः' देवानां प्रीतिकरः । 'इन्दुः' सोमः 'कवीनां' क्रान्तकर्मणां स्तोतॄणां 'मतिः' मत्या स्तुत्या 'पविष्ट' पवते । 'अश्वं' हयं 'रथीरिव' रथीव ऊर्मिं 'सृजत्' सृजति ॥ ५ ॥

५ । ऋ० सं० ९ म० ६४ सू० १० ऋ० ।

कवीनां मतिः—It is better to render it as—the object of meditation of the wise (i. e., laudable or adorable to them)—than what Sāy. has done (namely, *with the praise*, मतिः = मत्या = स्तुत्या).

चेतनः—enlightener. रथीः—रथोऽस्यास्ति = रथ + ई, 'छन्दसीवनिपौ'—वा० ।

---

कश्यप ऋषिः ।

१ २ ३ २ ३ १ २ ३ १ २र ३ २

असृक्षत प्र वाजिनो गव्या सोमासो अश्वया ।

३ १ २ ३ १ २र

शुक्रासो वीरयाशवः ॥ ६ ॥ ४८२ ॥

असृक्षत । प्र । वाजिनः । गव्या । सोमासः । अश्वया । शुक्रासः । वीरया । आशवः ॥ ६ ॥

भाष्यसारः । वाजिनः—बलिनः, आशवः—वेगिनः, शुक्रासः—दीप्यमानाः, सोमासः—सोमाः, गव्या—गोलाभेच्छया, अश्वया—अश्वलाभेच्छया, वीरया—वीरेच्छया वीरपुत्राधिगमकामनया, प्रासृक्षत—प्रकर्षेण सृज्यन्ते, पवित्रोपरि प्रक्षिप्यन्ते ॥ ६ ॥

The mighty, resplendent, swift Soma juices are made to flow, in the hope of obtaining cows, horses and heroic sons.—6.

**सा०-भा० ।** 'वाजिनः' बलवन्तः 'आशवः' वेगवन्तश्च 'सोमासः' सोमाः 'गव्या' गवेच्छया 'अश्वया' अश्वेच्छया 'वीरया' वीरेच्छया च 'प्रासृक्षत' ऋत्विग्भिः प्रकर्षेण सृज्यन्ते ॥ ६ ॥

६ । ऋ० सं० ९ म० ६४ सू० ४ ऋ० । उ० आर्चि० ४, १, २, १ ।

गव्या, अश्वया, वीरया—for gram. and mg. *vide* our notes on SV. I. 186.

———

निध्रुविः काश्यप ऋषिः ।

१ २ ३ १ २ ३ १ २र ३ १ २
पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः ।
३ १ २र ३ १ २
वायुमा रोह धर्मणा ॥ ७ ॥ ४८३ ॥

पवस्व । देवः । आयुऽसक् । इन्द्रम् । गच्छतु । ते । मदः । वायुम् । आ । रोह । धर्मणा ॥ ७ ॥

भाष्यसारः । हे सोम, देवः—द्योतमानस्त्वम्, पवस्व—क्षर । ते—तव, मदः—मादकः रसः, आयुषक्—अनुषक्तं यथा भवति तथा, इन्द्रं गच्छतु । त्वमपि धर्मणा—धारकेण रसेन, वायुम् आ-रोह—प्राप्नुहि ॥ ७ ॥

Flow on, bright Soma ; let thy exhilarant juice go continuously to Indra, rise with thy supporting juice to Vāyu.—7.

**सा०-भा० ।** हे सोम ! 'देवः' द्योतमानस्त्वं 'पवस्व' धारया क्षर। अपिच तव 'मदः' मदकरो रसः 'आयुषक्' अनुषक्तं यथा भवति तथा 'इन्द्र' प्रति 'गच्छतु'। अपिच त्वं 'वायुं' 'धर्मणा' धारकेण रसेन 'आ-रोह' प्राप्नुहि ॥ ७ ॥

७। ऋ० सं० ६ म० ६३ सू० २२ ऋ०। उ० आर्चि० ५, १, १५, १।

आयुषक् *indec.* continuously, this word occurs once more only in R̥V. ix. 25. 5. आनुषक् of the same sense occurs very frequently.

---

अमहीयुर्ऋषिः ।

१ २ ३ २ ३ १ २र ३ २
पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।
१ २ ३ २ ३ २
ज्योतिर्वैश्वानरं बृहत् ॥ ८ ॥ ४८४ ॥

पवमानः । अजीजनत् । दिवः । चित्रम् । न । तन्यतुम् । ज्योतिः । वैश्वानरम् । बृहत् ॥ ८ ॥

भाष्यसारः । **पवमानः—क्षरणशीलः पवित्रेण पूयमानः सोमः, बृहत् वैश्वानरम्—वैश्वानराख्यम् आग्नेयं ज्योतिः, दिवः—स्वर्गस्य, चित्रं तन्यतुं न—वज्रमिव, अजीजनत्—अजनयत् ॥ ८ ॥**

The purified Soma has generated the mighty *Vaiśvānara* fire like the thunderbolt, the wonder of heaven.—8.

**सा०-भा० ।** 'पवमानः' सोमः 'बृहत्' महत् 'वैश्वानरं' वैश्वानराख्यं 'ज्योतिः' तेजः 'दिवः' द्युलोकस्य 'चित्रं' विचित्रं 'तन्यतुं न' अशनिमिव 'अजीजनत्' अजनयत् ॥ ८ ॥

८। ऋ० सं० ९ म० ६१ सू० १६ ऋ०।

वैश्वानरं ज्योतिः बृहत्—the great light common to all men is Agni Vaiśvānara. Muir translates this verse thus :—'The purified (Soma) has generated the great light which is common to all mankind, like the wonderful thundering of the sky.'—Muir, Original Sanskrit Texts, IV. 112.

तन्यतु—the thunder ; the word also occurs in R̥V. i. 23. 11 ;—32. 13 ;—52. 6 ,—116. 12 ; v. 25. 8 ; vi. 6. 2 ; vii. 3. 6 ; ix. 100. 3 ; x. 65. 13 ;—66. 10.

---

काश्यपोऽसित ऋषिः ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २ ३
परि स्वानास इन्दवो मदाय बर्हणा गिरा ।
१ २ ३ १ २
मधो अर्षन्ति धारया ॥ ६ ॥ ४८५ ॥

परि । स्वानासः । इन्दवः । मदाय । बर्हणा । गिरा । मधो अर्षन्ति । धारया ॥ ९ ॥

भाष्यसारः । **स्वानासः—अभिषूयमाणाः, इन्दवः—दीप्ताः, मधोः—मदकराः सोमाः, बर्हणा—महत्या, गिरा—स्तुतिवाचा, धारया मदाय परि अर्षन्ति—दशापवित्रादधः तरन्ति ॥ ६ ॥**

The delighting Somas, being pressed out, flow on in a stream along with mighty praise, for the exhilaration (of the gods).—9.

**सा०-भा० ।** 'स्वानासः' सुवानाः अभिषूयमाणाः 'इन्दवः' दीप्ताः । 'बर्हणा' महत्या, 'गिरा' स्तुतिरूपया वाचा । 'मधो' इति विभक्तिव्यत्ययः (पा० ३, १, ८५) । मधवो मदकराः सोमाः, 'धारया' सह देवानां 'मदाय' तदर्थं 'पर्यर्षन्ति' दशापवित्रादधः तरन्तीत्यर्थः ॥ ६ ॥

**६ । ऋ० सं० ६ म० १० सू० ४ ऋ० । उ० आर्चि० ४, २, १, ७ ।**
Ṛ.V. has the modified rdg. '**सुताः**' instead of '**मधोः**' the corrupt SV. rdg.(for मधवः)

बर्हणा गिरा—with loud praise—*Wils.*

अर्षन्ति—proceed ; fr. rt. ऋष् *to go.*

---

१ ३ १ २ ३ १ २र ३ १ २र ३ २
परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः ।
३ १ २र ३ १ २
कारुं बिभ्रत्पुरुस्पृहम् ॥ १० ॥ ४८६ ॥

परि । प्रऽअसिष्यदत् । कविः । सिन्धोः । ऊर्मौ । अधि । श्रितः । कारुम् । बिभ्रत् । पुरुऽस्पृहम् ॥ १० ॥

भाष्यसारः। **कविः—मेधावी, सिन्धोः—समुद्रस्य, ऊर्मौ—तरङ्गे, अधिश्रितः, पुरुस्पृहम्—बहुभिः स्पृहणीयम्, कारुम्—स्तोतारम्, बिभ्रत्—पुष्णन्, सोमः परिप्रासिष्यदत्—परिस्यन्दते ॥ १० ॥**

Flows on in a stream the wise Soma, the sustainer of the praiser, beloved of many, resting in the waves of the river.—10.

**सा०-भा० ।** 'परि प्रासिष्यदत्' परिस्यन्दते, 'कविः' मेधावी, 'सिन्धोरूर्मावधिश्रितः' आश्रितः सन् 'पुरुस्पृहं' बहुभिः स्पृहणीयं 'कारु' स्तोतारं 'बिभ्रत्' धारयन् सोमः परिस्यन्दते इति सम्बन्धः ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्य द्वितीयः खण्डः । पञ्चमप्रपाठकस्य च द्वितीयार्धे पञ्चमी दशतिः ॥

पञ्चमप्रपाठकः समाप्तः

१० । ऋ० सं० ९ म० १४ सू० १ ऋ० । Ṛ V. reads **'कारम्'** instead of **'कारुम्'** ।

सिन्धोरूर्मौ—in the waves of the river, referring to the *Vasativarī* waters which were used to sprinkle the stalks of the Soma plants.

कारुम्—the singer of praise; for gram. and etym. *see* notes on SV. 1.158.

---

अथ पञ्चमाध्यायस्य तृतीयः खण्डः । षष्ठप्रपाठकस्य च प्रथमार्धे प्रथमा दशतिः ।

अमहीयुर्ऋषिः ।

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र
उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
१ २ ३ १ २
इन्दुं देवा अयासिषुः ॥ १ ॥४८७ ॥

उपो इति । सु । जातम् । अप्तुरम् । गोऽभिः । भङ्गम् । परिऽकृतम् । इन्दुम् । देवाः । अयासिषुः ॥ १ ॥

भाष्यसारः । सुजातम्—सम्यगुत्पन्नम्, अप्तुरम्—सत्वरम्, गोभिः—दधिदुग्धादिभिर्गव्यैः, परिष्कृतम्—संस्कृतं मिश्रितम्, भङ्गम्—शत्रूणां भञ्जकम्, इन्दुम्—सोमम्, देवाः उपायासिषुः—उपगच्छन्ति ॥ १ ॥

The gods come to active *Indu*, well-produced, adorned with milk, the destroyer of foes.—1.

**सा०-भा०** । 'सुजातं' सम्यक् प्रादुर्भूतम् 'अप्तुरं' वसतीवरीभिः प्रेरितं 'भङ्गं' शत्रूणाम्भञ्जकं 'गोभिः' गोर्विकारैः पयोभिः 'परिष्कृतम्' अलङ्कृतं संस्कृतम् । 'इन्दुं' सोमं 'देवाः' इन्द्रादयः 'उपायासिषुः' उपगच्छन्ति ॥ १ ॥

१ । ऋ० सं० ६ म० ६१ सू १३ ऋ० । उ० आर्चि० १,२, १८,२ ; ५,२, २०,१ ।

सुजातम्—well-prepared ; 'completely generated'—*Wils*. 'Well-descended, well-born'—*Grfth.*

अप्तुरम्—only accus. sg. & pl.—( अप्तुरम्, अप्तुरः )—fr. *ap*—rt. *tvar*—active, quick, busy ;—applied to the Aświns, to Soma, to Agni, to Indra. For अप्तुरः, *see* ṚV. i. 3. 8 ;—118. 4 ; ii. 21. 5 ; ix. 63. 5 ; अप्तुरम्, iii. 27. 11 ;—51. 2 ; ix. 63. 21 ;—108. 7.

गोभिः परिष्कृतम्—mixed with milk ; beautified with milk—*Grfth.* ; adorned with milk and curds—*Wils.* भङ्गम्—the demolisher or crusher of enemies.

———

बृहन्मतिर्ऋषिः ।

३ १ २ ३ २उ ३ २ ३ १ २
**पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।**
३ २ ३ १ २ ३ १ २
**शुम्भन्ति विप्रं धीतिभिः ॥ २ ॥ ४८८ ॥**

पुनानः । अक्रमीत् । अभि । विश्वाः । मृधः । विऽचर्षणिः । शुम्भन्ति । विप्रम् । धीतिऽभिः ॥ २ ॥

भाष्यसारः । विचर्षणिः—विश्वद्रष्टा, पुनानः—पूयमानः, सोमः विश्वाः मृधः—शत्रुसेनाः, अभ्यक्रमीत्—आक्रामति । विप्रम्—मेधाविनं सोमम्, धीतिभिः—स्तोत्रैः, शुम्भन्ति—अलङ्कुर्वन्ति याज्ञिकाः ॥ २ ॥

The purified Soma, the seer of all, overpowers all enemies ; (the priests) glorify the sapient Soma with praises.—2.

**सा०-भा०।** 'विचर्षणिः' द्रष्टा, 'पुनानः' सोमः 'विश्वाः' सर्वाः, 'मृधः' शत्रुसेनाः, 'अभ्यक्रमीत्' अभिक्रामति। 'विप्रं' मेधाविनं तं सोमं 'धीतिभिः' स्तुतिभिर्वा 'शुम्भन्ति' अलंकुर्वन्ति॥ २॥

२। ऋ० सं० ६ म० ४० सू० १ ऋ०। उ० आर्चि० ३, १, १२, १।

विचर्षणि:—all-seeing ; *vide* our notes on the word, SV. I. 84 ; 200.

मृधः—enemies ; *vide* our notes on the word, SV. I. 134.

शुम्भन्ति—rt. शुम्भ *to adorn*, *to embellish*, *to beautify*. 1. p. sometimes used in *Atmanepada*, *cf*. 'प्र ये शुम्भन्ते जनयो न सप्तयः' 'the moving (Maruts) *adorn* themselves like women—ṚV. i. 85. 1. 'deck'—*Grfth.* ; 'grace'—*Wils.*

धीतिभिः—generally pl. mg.—devotion, prayer.

विप्रम्—the sage—*Wils.* ; rfs. to the Soma, as it is the source of wisdom.

---

जमदग्निर्ऋषिः।

२ २ २ १ २ ३ २उ ३ १ २ ३ १ २र
आविशन् कलशं सुतो विश्वा अर्षन्नभि श्रियः।
२ ३ १ २
इन्दुरिन्द्राय धीयते॥ ३॥ ४८६॥

आऽविशन्। कलशम्। सुतः। विश्वाः। अर्षन्। अभि। श्रियः। इन्दुः। इन्द्राय। धीयते॥ ३॥

भाष्यसारः। सुतः—अभिषुतः, कलशम् आविशन्, विश्वाः श्रियः—सर्वाः सम्पदः, अभ्यर्षन्—सर्वतः प्रापयन्, इन्दुः—दीप्तः सोमः, इन्द्राय धीयते—प्रदीयते॥३॥

Passing into the pitcher, bringing (us) all blessings, the extracted *Indu* is offered to Indra.—3.

**सा०-भा०।** 'सुतः' अभिषुतः 'सोमः', 'कलशं' द्रोणम्, 'आ विशन्' 'विश्वाः' सर्वाः, 'श्रियः' सम्पदः, 'अभ्यर्षन्' अभितो गमयन्, 'इन्दुः' दीप्तः सोमः, 'इन्द्राय' इन्द्रार्थं 'धीयते' दशापवित्रे अध्वर्युभिर्निधीयते॥ ३॥

३। ऋ० सं० ६ म० ६२ सू० १६ ऋ० ।—the last pāda varies in the ṚV.

इन्द्राय धीयते—Sāyaṇa explains—'is placed on the straining cloth by the *Adhvaryus*, for the sake of Indra'.

कलशम्—the beaker or jar into which the Soma juice flows after being filtered.

विश्वाः श्रियः अभि-अर्षन्—bringing all success—*Wils.*; pouring all glories hither—*Grfth.*

---

प्रभूवसुर्ऋषिः ।

१ २ ३ २ ३ १ २ ३ १ २ ३क २र ३ २
**असर्जि रथ्यो यथा पवित्रे चम्बोः सुतः ।**
१ २ ३ १ २
**कार्ष्मन् वाजी न्यक्रमीत् ॥ ४ ॥ ४६० ॥**

असर्जि । रथ्यः । यथा । पवित्रे । चम्बोः । सुतः । कार्ष्मन् । वाजी । नि । अक्रमीत् ॥ ४ ॥

भाष्यसारः । रथ्यो यथा—रथवाहनः अश्वः इव, सः यथा विसृज्यते तद्वत्, चम्बोः—अधिषवणफलकयोः, सुतः—अभिषुतः सोमः, पवित्रे—शोधन-पात्रे, असर्जि—निक्षिप्यते । एवम्भूतः वाजी—वेगवान् सोमः, कार्ष्मन्—कार्ष्मणि युद्धे यज्ञरूपे, न्यक्रमीत्—नितरां क्रामति, गच्छति ॥ ४ ॥

Squeezed between two pressing boards, (the Soma) is sent forth into the filter like a horse of the chariot; the mighty, swift (Soma) proceeds to the god-attracting fight (i. e., sacrifice).—4.

**सा०-भा० ।** 'रथ्यो यथा' रथसम्बन्धी अश्व इव, स यथा विसृज्यते यज्ञे तद्वत् 'चम्बोः' अधिषवणफलकयोः 'सुतः' अभिषुतः सोमः 'पवित्रे' 'असर्जि' सृष्टोऽभूत् । तथाभूतो 'वाजी' वेगवान् सोमः 'कार्ष्मन्' कार्ष्मणि युद्धे—इतरेतराकर्षणात् । अत्र देवानामाकर्षणवति यज्ञाख्ये संग्रामे 'न्यक्रमीत्' नितरां क्रामति ॥ ४ ॥

४। ऋ० सं० ६ म० ३६ सू० १ ऋ० ।

चम्वोः—the two planks between which the stalks of the Soma plant, after they have been bruised by the pressing stones, are thoroughly squeezed so that all the juice may be extracted.

कार्ष्मन्—Sāyaṇa explains the word as 'the god-attracting battle-field called a sacrifice', he derives the word from *kris*, to attract. The sacrifice is called a battle-field inasmuch as a keen competition prevails among the gods to present themselves there. The St. Petersb. Dict. takes *kurṣman* as—'the furrow drawn as the goal of a race'; Sāyaṇa himself takes it as 'a piece of wood serving for a goal', in his explanation of R̥V. I. 116. 17. The true translation is undoubtedly—'as the courser steps out to the goal'.—*Wils.* This word occurs in R̥V. i. 116. 17; ib. ix. 31. 1; ix. 74. 8.

---

मेध्यातिथिर्ऋषिः ।

२उ ३ १ २र ३ २ ३ २ ३ १ २
**प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः ।**
१ २ ३ २उ ३ १ २
**घ्नन्तः कृष्णामप त्वचम् ॥ ५ ॥ ४९१ ॥**

प्र । यत् । गावः । न । भूर्णयः । त्वेषाः । अयासः । अक्रमुः ।
घ्नन्तः । कृष्णाम् । अप । त्वचम् ॥ ५ ॥

भाष्यसारः । यत्—ये, भूर्णयः—क्षिप्राः, त्वेषाः—दीप्तिमन्तः, अयासः—अयाः गमनशीलाः, कृष्णां त्वचम्—वारकं तमः, अपघ्नन्तः—नाशयन्तः, सोमाः, गावो न—गावो यथा गोष्ठं गच्छन्ति, यद्वा स्तुतिवाचो यथा स्तुत्यं गच्छन्ति तद्वत्, यज्ञं प्राक्रमुः—प्रवर्तयन्ति, तान् स्तौमीति शेषः ॥ ५ ॥

Like waters (or, like the cows to their pasture ground), the nimble, bright, swift-flowing (Soma juices) rush on warding off the dark skin.—5.

**सा०भा० ।** 'यत्' ये 'भूर्णयः' क्षिप्राः 'त्वेषाः' दीप्ताः 'अयासः' अया गमनकुशलाः 'कृष्णां' 'त्वचम्' 'अपघ्नन्तः' अभिषवेण निरस्यन्तः—त्वचिः संवरणकर्मा (तु०प०) । ईदृग्भूताः सोमाः 'प्राक्रमुः' यज्ञं प्रवर्त्तयन्ति । तत्र दृष्टान्तः—'गावो न' उदकानीव—तानि यथा क्षिप्रमधः पतन्ति तद्वत् । गाव एव वा उपमीयते, ता यथा स्वगोष्ठमाशु गच्छन्ति तद्वत् । अथवा, गावः स्तुतिवाचः ता यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति तद्वत् ।—यज्ञं प्रवर्त्तयन्ति तान् स्तुवे इति शेषः ॥ ५ ॥

५। ऋ० सं० ६ म० ४१ सू० १ ऋ०। उ० आर्च्चि० २, १, ३, १।

कृष्णां त्वचम्—literally, 'the black skin'; or 'the black cover' (i. e., the darkness). The Rākṣasas are perhaps the personification of darkness, especially the darkness of the night.

भूर्णयः—fr. rt. भुर् to *quiver*, 6. u.—restless, active. *See* also SV. I. 302, 308.

त्वेषाः—impetuous, vehement, glittering, brilliant fr.—त्विष् *to be stirred.*

अयासः—Sāy. explains the word (in his com. on Ṛ.V. i. 154. 6.) as अयनाः—गन्तारः, wandering; *here* flowing.

---

निध्रुविर्ऋषिः।

२ १ २ ३ १ २ ३ १ २ ३ २
अपघ्नन् पवसे मृधः क्रतुवित्सोम मत्सरः।
२ १ २र ३ १ २
नुदस्वादेवयुं जनम् ॥ ६ ॥ ४९२ ॥

अपऽघ्नन्। पवसे। मृधः। क्रतुऽवित्। सोम। मत्सरः। नुदस्व। अऽदेवयुम्। जनम् ॥ ६ ॥

भाष्यसारः। हे सोम, मत्सरः—मदकरः यस्त्वम्, मृधः—शत्रुसेनाः, अपघ्नन्—नाशयन्, क्रतुवित्—प्रज्ञां प्रयच्छन्, पवसे—क्षरसि, स त्वम् अदेवयुम्—अदेवकामं जनम्, नुदस्व—अपसारय, दूरीकुरु ॥ ६ ॥

Soma, thou art exhilarant, the giver of knowledge, thou flowest destroying the enemies; ward off the godless people.—6.

**सा०-भा०।** हे 'सोम'! 'मत्सरः' मदकरः यः त्वम् 'मृधः' हिंसकान् शत्रून्, 'अपघ्नन्' मारयन्, 'क्रतुवित्' अस्मभ्यं प्रज्ञां प्रयच्छन्, 'पवसे' क्षरसि, स त्वम् 'अदेवयुम्' अदेवकामं जनं राक्षसवर्गम्, 'नुदस्व' प्रेरय ॥ ६ ॥

६। ऋ० सं० ६ म० ६३ सू० २४ ऋ०।

क्रतुवित्—granting power or knowledge; causing inspiration; for the mg. of the word क्रतु, *vide* our notes on सुक्रतुम्, SV. I. 3; and on शतक्रतो, I. 116.

मत्सरः—fr. rt. मद् *to exhilarate*, Uṇ. 3. 73—exhilarating, intoxicating.

अ-देवयुं जनम्—the people who love not the gods—*Wils.*; the word *Devayu* is dervd. as देवम् देवान् वा आत्मनः इच्छति—one who desires to be with gods, i. e., devoted to gods, क्यच् by Pāṇ. iii. 1. 8; *next* उ is added by 'क्याच्छन्दसि', Pāṇ. iii. 2. 170.

---

निध्रुविर्ऋषिः ।

२ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अया पवस्व धारया यया सूर्यमरोचयः ।
३ १ २र ३ २
हिन्वानो मानुषीरपः ॥ ७ ॥ ४९३ ॥

अया । पवस्व । धारया । यया । सूर्यम् । अरोचयः । हिन्वानः । मानुषीः । अपः ॥ ७ ॥

भाष्यसारः । हे सोम, त्वं मानुषीः—मनुष्याणां हितकराः, अपः—जलानि, हिन्वानः—प्रेरयन्, यया धारया सूर्यम् अरोचयः—रोचयसि, अया—अनया, धारया, पवस्व—क्षर ॥ ७ ॥

Flow on with that stream with which thou, (Soma), renderest the sun radiant, sending forth the waters beneficial to man.—7.

**सा०-भा० ।** हे सोम ! 'मानुषीः' मनुष्याणां हितानि, 'अपः' उदकानि, 'हिन्वानः' प्रेरयन्, त्वं 'यया' 'धारया' 'सूर्यम्' 'अरोचयः' प्रकाशयः, तया 'अया' अनया धारया 'पवस्व' क्षर ॥ ७ ॥

७ । ऋ० सं० ९ म० ६३ सू० ७ ऋ० । उ० आर्चि० ५,१,८,१ ।

अया—for अनया, *vide* notes on SV. I. 52; 188.

हिन्वानः—urging on—*Wils.*; speeding—*Grfth.* Pres. pt. of rt. हि *to send, to impel*, 5. u.

अमहीयुर्ऋषिः ।

१ २ ३ २उ ३ १ २ ३ २ ३ १ २
**स पवस्व य आविथेन्द्रं वृत्राय हन्तवे ।**
३ १२ ३ २ ३ २
**वव्रिवांसं महीरपः ॥ ८ ॥ ४९४ ॥**

सः । पवस्व । यः । आविथ । इन्द्रम् । वृत्राय । हन्तवे । वव्रि-वांसम् । महीः । अपः ॥ ८ ॥

भाष्यसारः । **हे सोम, यः त्वं महीः—महतीः, अपः—जलानि, वव्रिवांसम्—निवारयन्तम्, वृत्राय—वृत्रम्, हन्तवे—हन्तुम्, इन्द्रम् आविथ—रक्षितवान्, सः त्वं पवस्व—क्षर ॥ ८ ॥**

Flow on, thou who supportest Indra to kill Vṛtra, the obstructer of the mighty waters.—8.

**सा०-भा० ।** हे सोम ! 'य'स्त्वं 'महीः' महतीः, 'अपः' महान्त्युदकानि, 'वव्रिवांसं' निरुन्धानं 'वृत्राय' वृत्रं 'हन्तवे' हन्तुम् 'इन्द्रम् आविथ' अरक्षः 'स' त्वं 'पवस्व' धारया क्षर। सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानि रुन्धानं वृत्रं जघानेत्यर्थः ॥ ८ ॥

८ । **ऋ० सं० ९ म० ६१ सू० २२ ऋ० ।**

आविथ—rt. अव—perf. ( लिट् ) 2. sg., perf. for pres.

वव्रिवांसम्—rt. वृ *to cover*, *to obstruct*, p. pt. with क्वसु.

———

अमहीयुर्ऋषिः ।

३ २ ३ १ २र ३ १ २ ३ २३ २
**अया वीती परि स्रव यस्त इन्दो मदेष्वा ।**
३ १ २ ३ १ २र
**अवाहन्नवतीर्नव ॥ ९ ॥ ४९५ ॥**

अया । वीती । परि । स्रव । यः । ते । इन्दो । मदेषु । आ । अवाहन् । नवतीः । नव ॥ ९ ॥

भाष्यसारः । इन्दो—हे सोम, ते—तव, यः रसः मदेषु—संग्रामेषु, नवतीः नव—नवनवतिसंख्याकाः शम्बरपुरीः, अवाहन्—जघान, अया—अनेन रसेन, वीती—वीत्यै इन्द्रस्य भक्षणाय, परि-स्रव—क्षर ॥ ९ ॥

For (Indra's) meal, flow on, *Indu*, thou, who in wild raptures, destroyed the ninety-nine (cities of *Śambara*, the demon).—9.

**सा०-भा० ।** हे 'इन्दो' सोम ! 'अया' अनेन रसेन, 'वीती' वीत्यै—इन्द्रस्य भक्षणाय 'परि-स्रव' परिक्षर । कीदृशेन रसेनेत्यत आह—'ते' तव 'यः' रसः 'मदेषु' संग्रामेषु 'नवतीर्नव' नवनवतिसङ्ख्याकाः शम्बरपुरीः, 'अवाहन्' जघान । अमुं सोमरसं पीत्वा मत्तः सन्निन्द्रः उक्तसङ्ख्याकाः शम्बरपुरीर्जघानेति मत्वा रसो जघानेत्युपचारः ॥ ९ ॥

९ । ऋ० सं० ९ म० ६१ सू० १ ऋ० । उ० आर्चि० ५, १, ६, १ ।

नवतीर्नव—*rfs.* to the ninety-nine forts of Śambara ; for details *see* our notes on Śambara the demon, SV. I. 392. Perhaps they refer to the indefinite number of cloud castles of the demon of drought.

वीती—*for* वीतये *dat.* ; पूर्वसवर्णदीर्घः by 'सुपां सुलुक्', Pāṇ. vii. 1. 39.

---

उकथ्य ऋषिः ।

१ २ ३१ २र ३ २उ ३ १ २ ३ १ २
परि द्युक्षं सनद्रयिं भरद्वाजं नो अन्धसा ।
३ १ २ ३ २ ३ २
स्वानो अर्ष पवित्र आ ॥ १० ॥ ४९६ ॥

परि । द्युक्षम् । सनत्ऽरयिम् । भरत् । वाजम् । नः । अन्धसा । स्वानः । अर्ष । पवित्रे । आ ॥ १० ॥

भाष्यसारः । सोमः द्युक्षम्—दीप्तम्, सनद्रयिम्—धनं ददत्, वाजम्—बलम्, अन्धसा—अन्नेन सह, नः—अस्मभ्यम्, परि-भरत्—सर्वथा हरतु, प्रयच्छतु । हे सोम, स्वानः—अभिषूयमाणस्त्वम्, पवित्रे आ अर्ष—सम्यग् आगच्छ ॥ १० ॥

May Soma, bestow on us glittering wealth, strength along with food ; being pressed out, proceed on to the filter.—10.

**सा०-भा०।** 'द्युत्तं' दीप्तम्, 'सनत्' दीयमानं 'रयिम्' धनं यस्य तादृशम्, 'वाजं' बलम्, 'अन्धसा' अन्नेन सह सोमः 'नः' अस्माकम्, 'परि-भरत्' परितो हरतु, प्रयच्छतु इत्यर्थः। अथ प्रत्यक्षस्तुतिः—हे सोम! 'स्वानः' सुवानोऽभिषयमाणस्त्वम् 'पवित्रे' 'आ अर्ष' आभिमुख्येन क्षर ॥ १० ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्य तृतीयः खण्डः। षष्ठप्रपाठकस्य च प्रथमार्धे प्रथमा दशतिः ॥

१०। ऋ० सं० ६ म० ५२ सू० १ ऋ०। RV. has **'द्युत्तः सनद्रयिः'** (Nom. case, adjs. referring to the 'Soma' mg.—celestial, winner or acquirer of wealth.) instead of **'द्युत्तं सनद् रयिं'** (acquiring glittering wealth); also RV. reads **'सुवानः'** for **'स्वानः'**.

---

अथ पञ्चमाध्यायस्य चतुर्थः खण्डः। षष्ठप्रपाठकस्य च प्रथमार्धे द्वितीया दशतिः।

मेध्यातिथिर्ऋषिः।

१ २ ३ २ ३ १ २ ३ २ ३ १ २र ३ २
**अचिक्रदद्वृषा हरिर्महान् मित्रो न दर्शतः।**
१ २र
**संसूर्येण दिद्युते ॥ १ ॥ ४९७ ॥**

अचिक्रदत्। वृषा। हरिः। महान्। मित्रः। न। दर्शतः। सम्। सूर्येण। दिद्युते ॥ १ ॥

भाष्यसारः। **वृषा—अभीष्टवर्षकः, हरिः—हरितवर्णः, महान् मित्रः न—सखा इव, दर्शतः—दर्शनीयः सोमः, अचिक्रदत्—भृशं शब्दं करोति। सः सोमः सूर्येण सह दिद्युते—दिवि द्योतते ॥ १ ॥**

(The Soma) the sprinkler of blessings, mighty, green-coloured, lovely to look at, like a friend, produces sound; and shines brilliantly with the sun (in the sky).—1.

**सा०-भा०।** 'वृषा' कामानां वर्षकः 'हरिः' हरितवर्णः 'महान्' पूज्यः 'मित्रो न' यथा सखा तद्वत्। 'दर्शतः' दर्शनीयो यः सोमः 'अचिक्रदत्' शब्दं करोति, सोऽयं सोमः 'सूर्येण' सह 'दिद्युते' दिवि प्रकाशते ॥ १ ॥

१। ऋ० सं० ६ मं० २ सू० ६ ऋ०। RV. reads 'रोचते' instead of 'दिद्युते'। उ० आर्चि० ४, १, ३, ६।

दर्शतः—दर्शनीयः ; dr. दृश्—*aff.* अतच् ; by 'भृ-मृ-दृशि०' uṇ. iii. 110. cf. यजतः—यष्टव्यः in 'याति देवः···यजतो हरिभ्याम्', Ṛ V. i. 35. 3.

---

भृगुर्ऋषिः।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे।
२ ३ १ २ ३ १ २
पान्तमा पुरुस्पृहम् ॥ २ ॥ ४९८ ॥

आ। ते। दक्षम्। मयःऽभुवम्। वह्निम्। अद्य। वृणीमहे। पान्तम्। आ। पुरुऽस्पृहम् ॥ २ ॥

भाष्यसारः। हे सोम! वयम् अद्य मयोभुवम्—सुखकरम्, वह्निम्—धनादिप्रापकम्, पान्तम्—रक्षाविधायकम्, पुरुस्पृहम्—बहुभिः स्पृहणीयम्, ते—तव, दक्षम्—बलम्, आ-वृणीमहे—आराधयामः ॥ २ ॥

We glorify, to-day, thy strength, the source of bliss, the carrier of blessings, the means of protection, the desired of many.—2.

सा०-भा०। हे सोम! यष्टारो वयं 'ते' तव, स्वभूतं 'दक्षं' बलम्, 'अद्य' अस्मिन् यागदिने, 'आ' आभिमुख्येन 'वृणीमहे' सम्भजामहे। कीदृशम्? 'मयोभुवं' सुखस्य भावयितारम्, 'वह्निं' धनादीनां प्रापकम्, 'पान्तं' शत्रुभ्यो रक्षकम्, 'पुरुस्पृहं' बहुभिः स्पृहणीयं काम्यमानं बलमिति ॥ २ ॥

२। ऋ० सं० ९म० ६५ सू० २८ ऋ०। उ० आर्चि० ४, २, २, १०।

मयोभुवम्—causing happiness ; for etym. and mg. of मयः, *see* our notes on मयः, SV. 1. 102 ; मयोभु, 1. 184.

---

उचथ्य ऋषिः।

१ २ ३ १ २ ३ १ २र ३ २ ३ १ २
**अध्वर्यो अद्रिभिः सुतं सोमं पवित्रे आ नय।**
३ १ २ ३ १ २
**पुनाहीन्द्राय पातवे ॥ ३ ॥ ४९९ ॥**

अध्वर्यो। अद्रिभिः। सुतम्। सोमम्। पवित्रे। आ। नय। पुनाहि। इन्द्राय। पातवे ॥ ३ ॥

भाष्यसारः। हे अध्वर्यो, अद्रिभिः—पाषाणखण्डैः, सुतं सोमं पवित्रे—सोमरस-शोधनपात्रे, आ-नय, तथा इन्द्राय पातवे—इन्द्रस्य पानाय, पुनाहि—शोधय ॥ ३ ॥

Adhvaryu, pour the Soma juice, that has been pressed out with stones, on the filter, and cleanse it for Indra's drink.—3.

**सा०-भा०।** हे 'अध्वर्यो!' 'अद्रिभिः' ग्रावभिः 'सुतम्' अभिषुतं सोमं 'पवित्रे' 'आ-नय' प्रापय। एतदेव दर्शयति—'इन्द्राय' इन्द्रस्य 'पातवे' पानाय 'पुनाहि' पुनीहि, पावय ॥ ३ ॥

३। ऋ० सं० ९ म० ५१ सू० १ ऋ०। Ṛ̣V. has **'पुनीहि'** instead of **'पुनाहि'** and **'आ-सृजे'** in the place of **'आ-नय'**। उ० आर्चि० ५, १, ११, १। यजुः० २०।३१।

पुनाहि—is the corrupt form for पुनीहि (the modified Ṛ̣V. rdg.), *vide* Pāṇ. vi. 4. 113.

पातवे—Ved. Inf. with *aff.* तवेन्, Pāṇ. iii. 4. 9.

---

अवत्सार ऋषिः।

२ ३ २ ३ १ २ ३ १ २ ३ १ २र
**तरत्स मन्दी धावति धारा सुतस्यान्धसः।**
२ ३ २ ३ १ २
**तरत्स मन्दी धावति ॥ ४ ॥ ५०० ॥**

तरत्। सः। मन्दी। धावति। धारा। सुतस्य। अन्धसः। तरत्। सः। मन्दी। धावति ॥ ४ ॥

भाष्यसारः। सुतस्य—अभिषुतस्य निष्कासितस्य, अन्धसः—सोमरसरूपस्य अन्नस्य, धारा मन्द्री—हर्षजनकः, तरत्—पापात् तारयन्, धावति—द्रोणकलशं गच्छति ॥४॥

He, the source of delight, the deliverer of sin, flows,—the stream of the ex-pressed draught, he, the source of delight, the deliverer of sin, flows.—4.

**सा०-भा०।** 'मन्द्री' देवानां हर्षकः स सोमः 'तरत्' स्तोतॄन् पाप्मनः सकाशात् तारयन् 'धावति' द्रोणकलशं गच्छति। धावतीति पुनरपि तदेवाहात्यन्ताऽऽदरार्थं तरत्स मन्द्री धावतीति। यद्वा, अस्या ऋचो यास्केनोक्तार्थो द्रष्टव्यः। तद्यथा—'तरति स पापं सर्वं मन्द्री यः स्तौति, धावति गच्छत्यर्ध्वां गतिम्, धारा सुतस्यान्धसो धारयाभिषुतस्य मन्त्रपूतस्य वाचा स्तुतस्येति' (नि० प० १३,६) ॥४॥

४। ऋ० सं० ६म० ५८ सू० १ ऋ०। उ० आर्चि० ४, १, ५, १।

---

मिध्रविर्ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
आ पवस्व सहस्रिणं रयिं सोम सुवीर्यम्।
३ १ २र
अस्मे श्रवांसि धारय ॥ ५ ॥ ५०१ ॥

आ। पवस्व। सहस्रिणम्। रयिम्। सोम। सुऽवीर्यम्। अस्मे। श्रवांसि। धारय ॥ ५ ॥

भाष्यसारः। सुगमः ॥ ५ ॥

Pour (on us), Soma, thousand-fold wealth along with excellent strength, bear for us abundant food.—5.

**सा०-भा०।** हे 'सोम!' त्वं 'सहस्रिणं' बहुसङ्ख्याकं 'सुवीर्यं' शोभनसामर्थ्योपेतं 'रयिं' धनम् 'आ पवस्व' आभिमुख्येन क्षर। अपि च 'अस्मे' अस्मासु 'श्रवांसि' अन्नानि 'धारय' स्थापय ॥ ५ ॥

५। ऋ० सं० ६ म० ६३ सू० १ ऋ०।

अस्मे—*for* अस्मासु, Pāṇ. vii. 1. 39 ; *vide* SV. 1. 76, 99 ; अस्मे also sometimes stands for वयम्, sometimes for अस्मान्, अस्माभिः, अस्मभ्यम्, अस्मत्, अस्माकम् ; for examples *see* Nir. 6. 7.

---

असितो देवलो वा ऋषिः ।

१ २   ३ १   २   ३ १ २   ३ १   २र

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः ।

३ १   २   ३ १ २

रुचे जनन्त सूर्यम् ॥ ६ ॥ ५०२ ॥

अनु । प्रत्नासः । आयवः । पदम् । नवीयः । अक्रमुः । रुचे । जनन्त । सूर्यम् ॥ ६ ॥

भाष्यसारः । प्रत्नासः—पुरातनाः, आयवः—गमनशीला अश्वाः सोमा इत्यर्थः, नवीयः—नूतनतरं पदं द्रोणकलशरूपम्, अन्वक्रमुः—आक्रमन्ते । रुचे—दीप्त्यै, सूर्यं जनन्त—उत्पादयन्ति ॥ ६ ॥

The ancient, quickly moving horses (the Soma-juices) come to a new place; they have generated the sun for giving light.—6.

**सा०-भा० ।** 'प्रत्नासः' पुराणाः केचित् 'आयवः' गमनवन्तोऽश्वाः 'नवीयः' नवतरं 'पदम्' 'अन्वक्रमुः' अनुक्रमन्ते । रूपकव्यवहारेण सोमाः स्तूयन्ते । 'रुचे' दीप्त्यै तदर्थं 'सूर्यं' 'जनन्त' जनयन्ति ॥ ६ ॥

६ । ऋ० सं० ६ म० २३ सू० २ ऋ० ।

प्रत्नास: आयव:—Benfey takes *Pratnāsa āyavaḥ* as "Ewigen lebendigen." Grfth. renders—"the ancient living ones, i. e., the Soma drops.

पदं नवीयः—A new field—*Wils.*; newer resting place.—*Grfth.* By the 'new field' Wilson means the newly arranged place of sacrifice. It probably refers to the pitcher where the Soma-juices rest after being filtered.

---

भृगुर्ऋषिः ।

१ २   ३ १ २ ३   १   २र ३ १ २

अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् ।

३ १ २ ३ २ ३ २

सीदन्योनौ वनेष्वा ॥ ७ ॥ ५०३ ॥

अर्ष । सोम । द्युमत्ऽतमः । अभि । द्रोणानि । रोरुवत् । सीदन् । योनौ । वनेषु । आ ॥ ७ ॥

भाष्यसारः । **हे सोम ! द्युमत्तमः—अतिशयेन दीप्तिमान् त्वम्, रोरुवत्—भृशं शब्दं कुर्वन्, द्रोणानि—द्रोणकलशान्, अर्ष—आगच्छ। वनेषु—यज्ञेषु काष्ठमयपात्रेषु वा, योनौ—तद्रूपे स्थाने, आसीदन्—अधितिष्ठन् ॥ ७ ॥**

Flow on, Soma, who art exceedingly bright, with a loud sound to the wooden reservoirs, thy resting place.—7.

**सा०-भा० ।** हे 'सोम !' 'द्युमत्तमः' अतिशयेन दीप्तिमान् त्वं 'द्रोणानि'—प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम्—द्रोणकलशानभिलक्षीकृत्य 'रोरुवत्' पुनः पुनर्भृशं वा शब्दं कुर्वन् 'अर्ष' आगच्छ। दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्नधारया पतन् शब्दङ्करोति खलु। तत्र दृष्टान्तः—'वनेषु' वननीयेषु यज्ञेषु वनसम्बन्धिषु यज्ञगृहेषु वा 'योनौ' स्थाने 'आसीदन्'। यद्वा, वनेषु योनौ भूमौ आसीदन् पूर्वं स्थितः सन् यज्ञगृहम् अभ्यर्षतीति सम्बन्धः ॥ ७ ॥

७। **ऋ० सं० ६ म० ६५ सू० १६ ऋ०।** ṚV. has the reading **'सीदन् श्येना न योनिम्'** instead of the last pāda of the above SV. verse. **उ० आर्चि० ३, २, ११, १।**

वनेषु—literally, in woods. According to Sāyaṇa—'in waters.' The last line, as we have shown above, differs from the ṚV. text which means —as a hawk flies to its nest.

---

कश्यप ऋषिः ।

१ २ २ १ २ ३ १ २ ३ १ २
वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः ।
१ ३ १ २
वृषा धर्माणि दध्रिषे ॥ ८ ॥ ५०४ ॥

वृषा । सोम । द्युमान् । असि । वृषा । देव । वृषऽव्रतः । वृषा । धर्माणि । दध्रिषे ॥ ८ ॥

भाष्यसारः । **हे सोम ! वृषा—अभीष्टवर्षकस्त्वम्, द्युमान्—द्योतमान असि । हे देव सोम, वृषा त्वं वृषव्रतः असि । वृषा त्वम् धर्माणि दध्रिषे—धारयसि ॥ ८ ॥**

O Soma, thou art the bright showerer of blessings, thou art one whose function is showering blessings, thou, the fulfiller of desires, maintainest the sacred deeds ( of gods and men ).—8.

**सा०-भा० ।** हे 'सोम !' 'वृषा' कामानां वर्षकस्त्वं 'द्युमान्' दीप्तिमान् 'असि' । अपि च हे 'देव' द्योतमान सोम ! 'वृषा' त्वं 'वृषव्रतः' वर्षणशीलकर्मासि । किञ्च, हे सोम ! 'वृषा' त्वं 'धर्माणि' देवानां मनुष्याणां च हितानि कर्माणि 'दध्रिषे' धारयसि ॥ ८ ॥

८ । ऋ० सं० ९ म० ६४ सू० १ ऋ० । ṚV. reads 'दधिषे' in the place of 'दध्रिषे' । उ० आर्चि० २, १, ३, १ ।

वृषा—Grfth. has taken it to mean—strong, mighty ; he cites in support of his interpretation from the Vedic Hymns (Sacred Books of the East), Part I. pp. 139-40. *See* our notes on the word, SV. I. 119.

द्युमाँ असि = द्युमान् असि, *vide* Sandhi rules 'दीर्घादटि समानपादे', Pāṇ. viii. 3. 9 ; 'आतोऽटि नित्यम्', viii. 3. 3.

———

कश्यप ऋषिः ।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
१ २ ३ १ २र
इन्दो रुचाभि गा इहि ॥ ९ ॥ ५०५ ॥

इषे । पवस्व । धारया । मृज्यमानः । मनीषिऽभिः । इन्दो । रुचा । अभि । गाः । इहि ॥ ९ ॥

भाष्यसारः । **हे इन्दो—सोम, मनीषिभिः—ऋत्विग्भिः, मृज्यमानः—पूयमानस्त्वम्,**

इषे—अन्नाय, धारया पवस्व—क्षर। रुचा—शोभमानेन अन्नेन, गाः—पशून्, अभीहि—अभिगच्छ ॥ ९ ॥

O Indu, purified by the wise priests, flow in a stream, for our food ; come, with thy brightness to the milk.—9.

सा०-भा० । हे 'इन्दो' सोम! 'मनीषिभिः' ऋत्विग्भिः 'मृज्यमानः' शोध्यमानस्त्वम् 'इषे' अस्माकमन्नाय 'धारया' 'पवस्व' क्षर। 'रुचा' रोचमानेनान्धसा 'गाः' पशून् 'अभीहि' अभिगच्छ ॥ ९ ॥

९। ऋ० सं० ९ म० ६४ सू० १३ ऋ०। उ० आर्चि० २, २, ४, १।

Sāyaṇa does not explain how *ruc*, which he derives from the rt. *ruc*—to shine, comes to mean food. He often interprets the word *gāḥ* as milk and curds and this interpretation would be more appropriate here.

मनीषिभिः मृज्यमानः—'cleansed and made bright by sapient men'—*Grfth.*

अभीहि—come to, i. e., mix with.

---

असितो देवलो वा ऋषिः।

३ १ २ ३ १ २ ३ १ २ ३ २
मन्द्रया सोम धारया वृषा पवस्व देवयुः।
२ ३ १ २ ३ २
अव्या वारेभिरस्मयुः ॥ १० ॥ ५०६ ॥

मन्द्रया। सोम। धारया। वृषा। पवस्व। देवयुः। अव्याः। वारेऽभिः। अस्मयुः ॥ १० ॥

भाष्यसारः। हे सोम! वृषा—अभीष्टवर्षकः, देवयुः—देवकामः, अस्मयुः—अस्मत्-कामः त्वम्, अव्याः—अवेः मेषस्य, वारेभिः—वालैः मेषरोमनिर्मिते पवित्रे, मन्द्रया—मदकरया, धारया पवस्व—क्षर ॥ १० ॥

Soma, you, who art the showerer of blessings, devoted to the gods, friendly to us, flow on, with thy gladdening stream, into the filter made of wool.—10.

**सा०-भा०** । हे 'सोम !' 'वृषा' कामानां वर्षिता, 'देवयुः' देवकामः,'अस्मयुः' अस्मत्कामश्च, त्वम् 'अव्या' अवेः 'वारेभिः' वालैः कृते दशापवित्रे 'मन्द्रया' मदकरया धारया 'पवस्व' क्षर ॥ १० ॥

१० । ऋ० सं० ६ म० ६ सू० १ ऋ० । R̥V. reads **'अव्या वारेषु'** (loc. being more appropriate, it seems to be the modified rdg.) instead of **'अव्या वारेभिः'**।

देवयुः—god-seeking ; अस्मयुः—friendly to us ; instances of nom. vb. with *aff.* क्यच्, Pāṇ. iii. 1. 8 and उ by क्याच्छन्दसि, iii. 2. 170 ; *see* अदेवयुम्, SV. 7. 492.

---

कविर्ऋषिः ।

३ १ २ ३ १ २ ३ २उ २क २र

**अया सोम सुकृत्यया महांत्सन्नभ्यवर्धथाः ।**

३ १ २र

**मन्दान इद्वृषायसे ॥ ११ ॥ ५०७ ॥**

अया । सोम । सुऽकृत्यया । महान् । सन् । अभि । अवर्धथाः । मन्दानः । इत् । वृषायसे ॥ ११ ॥

भाष्यसारः । अया—अनया, सुकृत्यया—शोभनकर्मणा अभिषवादिना, महान् सन् अभ्यवर्धथाः—अभिवर्धसे । मन्दानः—प्रसन्नः, इत्—एव, वृषायसे—वृषवत् शब्दं करोषि ॥ ११ ॥

Soma, great as thou art, hast been augmented by this sacred action ; in exhilaration thou roarest like a bull.—11.

**सा०-भा०** । हे 'सोम !' 'अया' अनया, 'सुकृत्यया' शोभनया अभिषवादिलक्षणया क्रियया, 'महान्' पूज्यमानः 'सन्', देवान् प्रति 'अभ्यवर्धथाः' अभ्यवर्धयः । 'मन्दानः इत्' मोदमानः एव, 'वृषायसे' वृषवदाचरसि । यथा मोदमानो वृषभः शब्दं करोति तथाभिषव-वेलायाम् उपरवेषु शब्दं करोषीत्यर्थः ॥ ११ ॥

११। ऋ० सं० ६ म० ४७ सू० १ ऋ०। ṚV. has '**सोमः**' (*Nom.*) instead of '**सोम**' (*Voc.*); '**अभ्यवर्धत**' instead of '**अभ्यवर्धथाः**'; and '**वृषायते**' instead of '**वृषायसे**'.

अया—*for* अनया, *see* SV. I. 52; also I. 463.

महांत्सन् = महान् + सन्, *vide* Sandhi rule, Pāṇ. iii. 3. 30.

---

जमदग्निर्ऋषिः।

२ १ २र ३ १ २र ३ १ २

**अयं विचर्षणिर्हितः पवमानः सचेतति।**

२ १ २र ३ २

**हिन्वान आप्यं बृहत् ॥ १२ ॥ ५०८ ॥**

अयम्। विऽचर्षणिः। हितः। पवमानः। सचेतति। हिन्वानः। आप्यम्। बृहत् ॥ १२ ॥

भाष्यसारः। **विचर्षणिः—विश्वदर्शनः, विशेषेण ज्ञानमय इत्यर्थः। हितः—पात्रे निहितः, पवमानः—पूयमानः, अयं सोमः, आप्यम्—जलेषु उत्पन्नम्, बृहत्—महत्, अन्नं हिन्वानः—प्रेरयन्, सचेतति—सर्वैः संज्ञायते ॥ १२ ॥**

This all-seeing Soma, purified and placed (in the vessels) sending forth to us abundant (food) produced from the waters, is known by all.—12.

**सा०-भा०।** 'विचर्षणिः' विश्वद्रष्टा, 'हितः' पात्रे निहितः, 'पवमानः' शोध्यमानः, 'अयं' सोमः, 'आप्यम्' अप्सु भवम्, 'बृहत्' महत्, अन्नं 'हिन्वानः' प्रेरयन्, 'सचेतति' सर्वैः सञ्ज्ञायते ॥ १२ ॥

१२। ऋ० सं० ९ म० ६२ सू० १० ऋ०।

Grfth. translates this verse differently, he renders विचर्षणिः as *active*, हितः as *benevolent*, सचेतति as *meditates* and आप्यम् as *friendship*.

Prof. Wilson adopts Sāyaṇa's explanation *verbatim*; we also follow this interpretation.

आप्यम्—the product of the waters—*Wils.*

---

अयास्य ऋषिः ।

१ २ २ १ २र ३ १ २र
प्र न इन्दो महे तुन ऊर्मिं न बिभ्रदर्षसि ।
३ २ ३ २ ३ १ २
अभि देवान् अयास्यः ॥ १३ ॥ ५०६ ॥

प्र । नः । इन्दो । महे । तुने । ऊर्मिम् । न । बिभ्रत् । अर्षसि । अभि । देवान् । अयास्यः ॥ १३ ॥

भाष्यसारः । हे इन्दो—सोम, त्वम् नः—अस्माकम्, महे—महते, तुने—धनाय, प्रार्षसि—प्रगच्छसि । न—सम्प्रति, अयास्यः—एतन्नामकः ऋषिः, तव ऊर्मिम्—तरङ्गम्, बिभ्रत्—धारयन्, देवान् अभि—अभि-गच्छति ॥ १३ ॥

O Indu (flowing Soma), thou dost proceed to bring us plenteous wealth ; (Sage) Ayāsya, bearing thy waves, advances towards the gods.—13.

**सा०-भा०।** हे 'इन्दो' क्लिद्यमान ! त्वं 'नः' अस्माकम्, 'महे' महते, 'तुने' धनाय, 'प्रार्षसि' प्रगच्छसि । 'न' सम्प्रत्यर्थे, अयास्यश्चायमृषिः, तव 'ऊर्मिं' तरङ्गम्, 'बिभ्रद्' धारयन्, 'देवान्' यष्टुं'मभि'गच्छति ॥ १३ ॥

**१३ । ऋ० सं० ६ म० ४४ सू० १ ऋ० ।**

Grfth. takes 'Ayāsya' as an epithet of Soma, meaning 'unwearied', and renders महे तुने as 'for this great rite'.

तुने—the word is found neither in Nighaṇṭu nor in Nirukta ; it occurs only twice in the Sāmaveda : here in the above verse and in the verse I. 395—'तुचे तुनाय etc.' where Sāy. interprets the word—as grandson or progeny ( तुनाय—पौत्राय ) ; and derives it fr. rt. तन् *to spread*. 'त' becomes 'तु'—an instance of anomalous Vedic transformation. As a grandson or progeny spreads the family or lineage, तुन becomes its synonym. In the corres. ṚV. stanza, the reading is तनाय (for wealth—*vide*. Ngh. 2. 10).

———

अमहीयुर्ऋषिः ।

२ १ २ ३ २उ ३ २ ३ १ २
अपघ्नन् पवते मृधोऽप सोमो अराव्णः ।
२ ३ १ २ ३ २
गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥ ५१० ॥

अपघ्नन् । पवते । मृधः । अप । सोमः । अराव्णः । गच्छन् । इन्द्रस्य । निष्कृतम् ॥ १४ ॥

भाष्यसारः । मृधः—हिंसकान् शत्रून्, अराव्णः—अदातॄन्, अप—अपघ्नन्, निष्कृतम्—स्थानम् । शिष्टं सुगमम् ॥ १४ ॥

Slaying the malicious enemies and doing away with the non-givers (misers), the Soma flows, proceeding to Indra's place.—14.

**सा०-भा० ।** 'सोमः' 'मृधः' हिंसकान् शत्रून्, 'अपघ्नन्' मारयन्, 'अराव्णः' शक्तौ सत्यां धनानामदातॄंश्च, 'अप'घ्नन् 'इन्द्रस्य' 'निष्कृतं' स्थानम्, 'गच्छन्' प्राप्नुवन्, 'पवते' धारया क्षरति ॥ १४ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थाध्यायस्य चतुर्थः खण्डः । षष्ठप्रपाठकस्य च प्रथमार्धे द्वितीया दशतिः ॥

१४ । ऋ० सं० ९ म० ६१ सू० २५ ऋ० । उ० आर्चि० ५, १, ७, १ ।

अप (*indec.*)—stands for अपघ्नन् । The Vedic prefixes often supply verbs suited to the context ( उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ).

अराव्णः—those who present no sacrificial offerings—*Grfth.* fr. rt. रा *to give* with *aff.* वनिप् ।

निष्कृतम्—the meeting place, cf. 'एमीदेषां निष्कृतं जारिणीव'—I go to their *meeting place* as a female to her lover—ṚV. X. 85. 20 ; AV. 14. 1. 61. Grfth. means by this word the vessel set apart for the Soma-juice that is to be offered to Indra.

अथ पञ्चमाध्यायस्य पञ्चमः खण्डः। षष्ठप्रपाठकस्य च प्रथमार्धे तृतीया दशतिः।

भरद्वाजादयः सप्त ऋषयः। बृहतीच्छन्दः।

२ १ २ ३ १ २ ३ १ २र
पुनानः सोम धारयापो वसानो अर्षसि।
१ २ ३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥१॥ ५११॥

पुनानः। सोम। धारया। अपः। वसानः। अर्षसि। आ। रत्नधा। योनिम्। ऋतस्य। सीदसि। उत्सः। देवः। हिरण्ययः॥ १ ॥

भाष्यसारः। हे सोम, पुनानः—पूयमानः सन्, अपः—वसतीवरीः, वसानः—अधितिष्ठन्, धारया अर्षसि—गच्छसि। किञ्च, रत्नधा—रमणीयधनदाता त्वम्, ऋतस्य—यज्ञस्य, योनिम्—स्थानम्, आ-सीदसि—अधितिष्ठसि। अपि च देवः—दीप्यमानः सोमः, उत्सः—स्यन्दमानः सन्, हिरण्ययः—देवानां हितरमणीयो भवसि ॥ १ ॥

Purified thou, Soma flowest in a stream wrapped in the waters; the bestower of riches thou takest thy seat in the place of sacrifice, the flowing radiant Soma, the source of pleasure and weal (to the gods).—1.

**सा० भा०।** हे 'सोम'! 'पुनानः' शोधकः 'अपः' वसतीवरीः 'वसानः' आच्छादयन् 'धारया' 'अर्षसि' गच्छसि द्रोणकलशे। किञ्च, 'रत्नधा' रमणीयाणां धनानां दाता त्वम् 'ऋतस्य' यज्ञस्य 'योनिं' स्थानम् 'आ-सीदसि' अपि च 'देवः' द्योतमानः सोमः 'उत्सः' प्रस्यन्दनशीलः सन् 'हिरण्ययः' देवानां हितरमणीयो भवसि खलु ॥१॥

१। ऋ० सं० ९ म० १०७ सू० ४ ऋ०। ṚV. reads **'देव'** (*Voc.*) instead of **'देवः'** (*Nom.*)—the above SV. rdg. or as Prof. Wilson thinks **'देव-हिरण्ययः'** seems to be one comp. word. **उ० आर्चि० १, १, ६, १।**

अपः—refers to *Vasativarī*—i. e., the consecrated waters, which are left standing within a vessel, drawn from a stream on the eve of the Soma sacrifice.

हिरण्ययः—Sāyaṇa's interpretation is given in our translation. Prof. Wilson renders—'the origin of gold.' Grfth. takes it as an adj. to *Utsa* and translates—'a fountain of gold'.

ऋषिच्छन्दसी पूर्ववत् ।

२ ३ १ २ ३ २उ ३ १ २ ३२ ३ २
परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
३ १ २र ३ २ २उ ३ २ ३ २ ३ १ २
दधन्वाँ यो नर्यो अप्स्वा३न्तरा सुषाव सोममद्रिभिः ॥२॥ ५१२॥

परि । इतः । सिञ्चत । सुतम् । सोमः । यः । उत्तमम् । हविः ।
दधन्वान् । यः । नर्यः । अप्सु । अन्तः । आ । सुषाव । सोमम् । अद्रिभिः ॥२॥

भाष्यसारः । हे ऋत्विजः, सुतं सोमम्, इतः—अस्मात् प्रदेशादूर्ध्वं परिषिञ्चत । यश्च सोमः देवानाम् उत्तमं हविः, अपि च नर्यः—मनुष्याणां हितकरः । यश्च सोमः अप्सु—वसतीवरीषु, अन्तः—अभ्यन्तरे, दधन्वान्—गच्छन् भवति, गच्छतीत्यर्थः । तं सोमम् अद्रिभिः—ग्रावभिः, अध्वयुः सुषाव—अभिषुतवान् ॥ २ ॥

(O priests) hence pour the extracted Soma-juice, which, the best libation (to the gods), wholesome to man, runs into the waters (*Vasatīvarī*) ; *Adhvaryu* has pressed out the Soma with the stones.—2.

**सा०-भा० ।** हे ऋत्विजः ! 'सुतम्' अभिषुतं 'सोमः' 'इतः' अस्मात् कर्मणः 'ऊर्ध्वम्' अथवा अस्मात् प्रदेशादूर्ध्वं 'परिषिञ्चत' वसतीवरीभिः, 'इतो षिञ्चत' इत्यत्र संहितायां छान्दसं रोरुत्वम् । आदेशप्रत्यययोरिति षत्वम् । 'यश्च' सोमः देवानाम् 'उत्तमं' प्रशस्तं 'हविः' भवति । अपि च 'नर्यः' मनुष्याय हितः 'यः' च सोमः 'अप्सु' वसतीवरीषु 'अन्तरं'(?) अन्तरिक्षे वा 'दधन्वान्' गच्छन् भवति । तं सोमम् 'अद्रिभिः' ग्रावभिः अध्वर्युः 'सुषाव' अभिषुतं चकार, तं परिषिञ्चतेति समन्वयः ॥ २ ॥

२ । ऋ० सं० ९ म० १०७ सू० १ ऋ० । यजुः १९,२ । उ० आर्चि० ५,२,१२,१ ।

अन्त—into the midst of firmament—*Wils.* This is what has been suggested by Sāy. as an alternative sense.

दधन्वान्—prt. PT. of rt. धन् *to run* with aff. क्वसु ।

नर्यः—good for man, *see* notes on नयम्, SV. I. 466.

अत्रिर्ऋषिः ।

१ २ ३ १ २र ३ १ २र ३ १ २
आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
२ ३ २ ३ २ ३क २र ३ २ ३ २ ३ १ २
जनो न पुरि चम्बोर्विशद्धरिः सदो वनेषु दध्रिषे ॥३॥५१३॥

आ । सोम । स्वानः । अद्रिभिः । तिरः । वाराणि । अव्यया ।
जनः । न । पुरि । चम्बोः । विशत् । हरिः । सदः । वनेषु । दध्रिषे ॥ ३ ॥

भाष्यसारः । हे सोम, अद्रिभिः—प्रस्तरैः, स्वानः—अभिषूयमाणस्त्वम्, अव्यया वाराणि—मेषलोमनिर्मितानि पवित्राणि, तिरः—अतिक्रम्य, आ पवसे—आभिमुख्येन क्षरसि । जनो न पुरि—यथा जनः पुरे प्रविशति, तथा हरिः—हरितवर्णः सोमः, चम्बोः विशत्—प्रविशति, वनेषु—काष्ठपात्रेषु, सदः—स्थानम्, दध्रिषे—धारयसि, अवतिष्ठस इत्यर्थः ॥ ३ ॥

O Soma, pressed out by the stones, flowing through the strainer of sheep's wool, green-coloured, entering into the *camūs* as a man (enters) a fort, thou restest in the wooden vessels.—3.

**सा०-भा० ।** हे 'सोम'! 'अद्रिभिः' ग्रावभिः 'स्वानः' अभिषूयमाणस्त्वम् 'अव्यया' अविमयानि 'वाराणि' वालानि पवित्राणि 'तिरस्'कुर्वन् व्यवधायकानि कुर्वाणः सन् 'आ पवसे' आभिमुख्येन क्षरसि । 'हरिः' हरितवर्णः स सोमः चम्बोरधिषवणफलकयोरुपरि स्थिते कलशे 'विशत्' प्रविशति । तत्र दृष्टान्तः—'जनो न' यथा जनः 'पुरि' पुरे प्रविशति । स त्वं 'वनेषु' काष्ठनिर्मितेषु पात्रेषु 'सदः' स्थानं "दध्रिषे" "दधिषे" इति, साम्न ऋचः पाठौ ॥ ३ ॥

३ । ऋ० सं० ६ म० १०७ सू० १० ऋ० । उ० आर्चि० ८, २, १२, १ ।

चमू—चम्बौ ṚV. X. 91. 15. चम्वा (nom. du.) ib. iii. 55. 20. ; चम्वः (nom. pl.) ib. viii. 2. 8.

*Camū* is a vessel or part (two or more in number) of the reservoir into which the Soma is poured. Grfth. after Sāy. means by it—'the press-boards between which the crushed stalks of the Soma were thoroughly squeezed.

See Zimmer, *Altindisches Leben*, P. 277.

Others take *Camū* to be two saucers or beakers into which the filtered juice dropped ; 'the cups'.—Wils. 'Gefass.'—Grassman. 'Zur Presse'.—Benfey.

वनेषु—The wooden vessels or barrels (for the Soma juice).

विश्वामित्र ऋषिः ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
३ १ २र ३ १ २र ३ २ २ १ २ ३ १ २
अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥४॥५१४॥

प्र । सोम । देवऽवीतये । सिन्धुः । न । पिप्ये । अर्णसा । अंशोः । पयसा । मदिरः । न । जागृविः । अच्छ । कोशम् । मधुऽश्चुतम् ॥४॥

भाष्यसारः । देववीतये—देवानां भक्षणार्थं पानार्थम्, अर्णसा—उदकेन, सिन्धुर्न नदीव,—सा यथा जलेन वर्धते तथा हे सोम त्वम् अर्णसा वसतीवर्याख्येनोदकेन—प्र-पिप्ये—प्रवर्धसे । त्वं मदिरः—हर्षकरः, जागृविः—जागरणशीलः, अंशोः—(सोम)-लताखण्डस्य, पयसा—तन्निःसृतेन रसेन, मधुश्चुतम्—मधुररसस्य स्रावयितारम्, कोशम्—द्रोणकलशम्, अच्छ—अभिमुखं गच्छसि ॥ ४ ॥

O Soma, thou art dilated with water, like a river, for the feast of the gods; with the juice of thy stalk, exhilarant and awakening, thou flowest into the pitcher, shedding ambrosia.—4.

**सा०-भा० ।** हे 'सोम !' त्वं 'देववीतये' देवानां पानाय तदर्थम् 'अर्णसा' वसतीवर्याख्येनोदकेन 'प्र-पिप्ये' प्राप्यायसे । तत्र दृष्टान्तः, 'सिन्धुः न' यथा सिन्धुरुदकेन प्राप्यायते तद्वत्, प्यायतेः लिटि लिट्याङोर्श्चेति पीभावः । ततः स त्वम् 'मदिरः' मदकरः सुरादिरिव 'जागृविः' जागरणशीलः यद्वा न सम्प्रत्यर्थे, इदानीं मदकरो जागरणशीलस्त्वम् 'अंशोः' लताखण्डस्य 'पयसा' रसेन 'मधुश्चुतं' मधुररसस्य क्षारयितारं 'कोशं' द्रोणकलशम् 'अच्छ' अभिगच्छसि ॥ ४ ॥

४ । ऋ० सं० ६ म० १०७ सू० १२ ऋ० । उ० आर्चि० १, २, २०, १ ।

देववीतये—for the banquet of gods.—*Wils.* For dr. and mg. of the word वीतये *see* our notes on SV. I. I.

पिप्ये अर्णसा—fed with water—*Wils.* पिप्ये is the perf. (लिट्) form of rt. प्याय्—वृद्धौ, *to grow, to swell* I. Ā. अर्णम्—water, Ngh. I. 12; cf. यदर्दं कतमम् ...त्वमर्णवान् etc.—ṚV. v. 32. 1; SV. I. 315. अर्णवान्—अर्णस्वन्तः, full of waters—Yāska, Nir. 10. 9.

अंशोः—अंशु is the filament, the stalk of the Soma plant.

अच्छा—for अच्छ, the final vowel is prolonged by 'निपातस्य च', Pāṇ. vi. 3.136.

कोशं मधुश्चुतं—honey-dropping receptacle.—*Wils.* श्चुतं—fr. rt. श्चुत्—*to ooze, to trickle.* 1. p.

---

१ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
**सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।**
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
**अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥५॥५१५॥**

सोमः । ऊँ इति । स्वानः । सोतृभिः । अधि । स्नुभिः । अवीनाम् ।
अश्वयाऽइव । हरिता । याति । धारया । मन्द्रया । याति । धारया ॥५॥

भाष्यसारः । सोतृभिः—अभिषवकारिभिः, स्वानः—अभिषूयमाणः सोमः, अवीनां स्नुभिः—सानुभिः सुदीर्घरोमभिः पवित्रैः दीर्घमेषरोमनिर्मितशोधनयन्त्रैः, अश्वया इव, हरिता—हरितवर्णया, मन्द्रया—हर्षकारिण्या, धारया द्रोणकलशम् अधि—अधिकम्, याति—गच्छति ॥ ५ ॥

Extracted by the pressers, Soma is passing through the long, lofty wool; thou proceedest, as on a mare, in a green gladdening stream.—5.

**सा०-भा० ।** 'सोतृभिः' सुण्वद्भिः 'स्वानः' सुवानोऽभिषूयमाणः 'सोमः' 'अवीनां स्नुभिः'—मातृस्पृत्स्नूनामुपसंख्यानमिति वार्त्तिकेन सानु-शब्दस्य स्नु-भावः—समुच्छ्रितैर्वालैः पवित्रै'रधियाति' अधि अधिकं गच्छति । 'उ' इति प्रसिद्धौ । 'अश्वयेव' वडवयेव, हरितवर्णया धारया याति । 'मन्द्रया' मदकारिण्या धारया द्रोणकलशमधिगच्छति ॥ ५ ॥

५ । ऋ० सं० ६ म० १०७ सू० ८ ऋ० । उ० आर्चि० ३, २, १२, १ ।

स्वानः सोतृभिः—effused by the effusers—*Wils.*

अधि ष्णुभिः अवीनाम्—'स्नु' stands for 'सानु' meaning elevated ; here the whole phrase means—through the long elevated hairs of sheep of which the filter or cleansing of the Soma juice was made.

---

२ ३ १ २ ३ १ २ ३ १ २
तवाहं सोम रारण सख्य इन्दो दिवे दिवे ।
३ १ २ ३ १ २ ३ १ २र ३ २उ ३ १ २
पुरूणि बभ्रो नि चरन्ति मामव परिधीँ रति ताँ इहि ॥६॥५१६॥

तव । अहम् । सोम । रारण । सख्ये । इन्दो । दिवेऽदिवे । पुरूणि । बभ्रो । नि । चरन्ति । माम् । अव । परिधीन् । अति । तान् । इहि ॥ ६ ॥

भाष्यसारः । **हे इन्दो—सोम, तव सख्ये अहं दिवेदिवे—प्रतिदिनम्, रारण—रमे, नन्दामीत्यर्थः। हे बभ्रो—हरितवर्ण सोम, पुरूणि—बहूनि रक्षांसि, मां न्यवचरन्ति—परिबाधन्ते, तान् परिधीन्—परितो बाधकान्, अतीहि—अतिक्रम्य आगच्छ ॥ ६ ॥**

O Soma, Indu, I rejoice in thy friendship, day by day ; O tawny-hued (Soma), many (fiends) obstruct me, overthrow these my obstructers besetting me on all sides.—6.

**सा०-भा० ।** हे 'इन्दो' सोम ! तव 'सख्ये' सखिकर्मणि अहं 'दिवे दिवे' अन्वहं 'रारण' रमे—रणेर्लिटि उत्तमे णलि रूपम् । हे 'बभ्रो' बभ्रुवर्ण ! सोम ! 'पुरूणि' बहूनि रक्षांसि 'मां' तव सख्ये स्थितं 'न्यवचरन्ति' नीचीनं चरन्ति, बाधन्ते । ये मां बाधन्ते तान् 'परिधीन्' राक्षसान् त्वम् 'अतीहि' आगच्छ ॥ ६ ॥

६ । ऋ० सं० ६ म० १०७ सू० १६ ऋ० । उ० आर्चि० ३, १, ११, १ ।

रारण—rt. 'रण'—*to rejoice*, perf. ( लिट् ) I. sg. ; here perf. is used for pres. such usage is frequently found in the Vedas, by 'छन्दसि लुङ्लङ्लिटः', Pāṇ. iii. 4. 6.

परिधीन् अति तान् इहि—pass on beyond these barriers—*Grfth.* Come within our enclosure.—*Steven.* Prof. Wilson has adopted Sāyaṇa's explanation. As to sandhi, *vide* Pāṇ. viii. 3. 9 ; viii. 3. 3.

पुरूणि—Sāyaṇa supplies 'रक्षांसि' after it.

वशिष्ठ ऋषिः ।

२ १ २ ३ १ २र
मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
२ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३क २र
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥७॥५१७॥

मृज्यमानः । सुहस्त्या । समुद्रे । वाचम् । इन्वसि । रयिम् । पिशङ्गम् । बहुलम् । पुरुऽस्पृहम् । पवमान । अभि । अर्षसि ॥ ७ ॥

भाष्यसारः । हे सुहस्त्या—सुन्दराङ्गुलिभिः सम्पादित सोम, मृज्यमानः—पूयमानस्त्वम्, समुद्रे—द्रोणकलशे प्रविशन्, वाचमिन्वसि—शब्दं प्रेरयसि, करोषीत्यर्थः । हे पवमान सोम, पिशङ्गम्—सुवर्णरजतादिमयत्वात् पिङ्गलवर्णम्, बहुलम्—प्रभूतम्, पुरुस्पृहम्—बहुभिः स्पृहणीयम्, रयिम्—धनम्, अभ्यर्षसि—स्तोतृभ्य अभिवर्षसि ॥ ७ ॥

(O Soma) (urged) with beautiful fingers, being purified, thou producest a sound in the jar (or raisest a sound in the air); thou bringest (to us), O Pavamāna (purified Soma), abundant, brown-coloured, much-desired riches.—7.

**सा० भा० ।** हे 'सुहस्त्या' हस्ते भवाः हस्त्याः अङ्गुलयः, शोभनाङ्गुलिक सोम! 'मृज्यमानः' शोध्यमानस्त्वं 'समुद्रे' अन्तरिक्षे कलशे वा 'वाचं' शब्दम् 'इन्वसि' प्रेरयसि । किञ्च, हे 'पवमान' पूयमान सोम! 'पिशङ्गं' हिरण्यं रजतादिभिः पिशङ्गवर्णं 'बहुलं' प्रभूतं 'पुरुस्पृहं' बहुभिः स्पृहणीयं 'रयिं' धनम् 'अभ्यर्षसि' स्तोतृणामभिक्षरसि, प्रयच्छसीत्यर्थः ॥ ७ ॥

७। ऋ० सं० ९ म० १०७ सू० २१ ऋ० । उ० आर्चि० ४, १, १२, १ ।

समुद्रे—amid the sea—*Grfth.* in the air, Ngh. 1. 3.

पिशङ्गं रयिम्—The wealth has, here, got the epithet—'brown', as it comprises gold which is yellow and silver which is white, their mixed colour being brown. Wils. renders—'golden-hued', Grfth. simply—'yellow'.

---

विश्वामित्र ऋषिः।

२ १ २र ३ २ ३ १ २ ३ २ ३ १ २
अभि सोमास आयवः पवन्ते मद्यं मदम्।
२ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥८॥५१८॥

अभि। सोमासः। आयवः। पवन्ते। मद्यम्। मदम्। समुद्रस्य। अधि। विष्टपे। मनीषिणः। मत्सरासः। मदऽच्युतः ॥ ८ ॥

भाष्यसारः। आयवः—द्रुतगमनशीलाः, मनीषिणः—मनोऽभिरामाः, मत्सरासः—मादकाः, मदच्युतः—मधुररसस्राविणः, सोमासः—सोमाः, मद्यम्—हर्षजनकम्, मदम्—रसम्, समुद्रस्य—द्रोणकलशस्य, अधि—उपरि स्थिते, विष्टपे—स्थाने पवित्रे, अभि-पवन्ते—अभिक्षरन्ति ॥ ८ ॥

The swift, exhilarating Somas, mind-winning and shedding ambrosia, pour intoxicating juice on the elevated filter placed above the pitcher.—8.

**सा०-भा०।** 'आयवः' गमनशीलाः 'सोमासः' सोमाः 'मद्यं' मदकरं 'मदम्' आत्मीयं रसम् 'अभि-पवन्ते' अभितो निर्गमयन्ति। कुत्रेत्युच्यते 'समुद्रस्य' अन्तरिक्षस्य 'अधि-विष्टपे' अधिकं समुच्छ्रितपवित्रे। यद्वा, समुद्रस्य—यस्मात् समुद्द्रवन्ति रसाः—तस्य कलशस्य 'अधि' उपरि 'विष्टपे' स्थाने 'पवित्रे' निर्गमयन्ति। कीदृशाः? 'मनीषिणः' मनस ईशितारः 'मत्सरासः' मदकराः 'मदच्युतः' मदकरेण रसेन च्यावयितारः ॥ ८ ॥

८। ऋ० सं० ९ म० १०७ सू १४ ऋ०। ṚV. has (1) 'त्रिष्टपि' instead of 'विष्टपे' and 'स्वर्विदः' in the place of 'मदच्युतः'। उ० आर्चि० २, २, ९, १।

आयवः—moving, (आयुः अयनः, Nir. 9. 3.) fr. rt. इ to go.

समुद्रस्याधि विष्टपे—Wilson takes 'समुद्र' in the sense of the firmament. This word occurs in *Nighaṇṭu* among the synonyms of 'अन्तरिक्ष'—Ngh. 1. 3. Grfth. renders peculiarly—'above the station of the sea'. This conveys but no sense. Sāyaṇa takes it to mean the jar or pitcher into which the juice flows after being filtered. He assigns the derivative sense to the word—e.g., 'यस्मात् समुद्द्रवन्ति रसाः'—from which juices flow, i.e., the pitcher.

मनीषिणः—West. scholars have meant—'intelligent' by this word. We have suggested a more rational meaning—'captivating mind'.

विष्टपे—*Orig.*—a seat, here it refers to the filter on the mouth of the pitcher.

---

काश्यप ऋषिः ।

३ १ २ ३ १ २ ३२ ३ २ ३ १ २ ३ २
**पुनानः सोम जागृविरव्या वारैः परि प्रियः ।**
१ २र ३ २ ३ १ २ ३ १ २
**त्वं विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः ॥९॥५१९॥**

पुनानः । सोम । जागृविः । अव्याः । वारैः । परि । प्रियः । त्वम् । विप्रः । अभवः । अङ्गिरःऽतम । मध्वा । यज्ञम् । मिमिक्ष । नः ॥ ९ ॥

भाष्यसारः । हे सोम, जागृविः—जागरणशीलः, प्रियः त्वं पुनानः—पूयमानः, अव्याः—मेष्याः, वारैः—रोमभिः निर्मिते पवित्रे, परि—परिक्षरसि । अङ्गिरस्तम—अङ्गिरसां वरिष्ठगुणोपेत, विप्रः—विज्ञः, अभवः—भवसि । एवंविधस्त्वं नः—अस्माकम्, यज्ञं मध्वा—मधुना स्वकीय मधुररसेन, मिमिक्ष—सिञ्च ॥ ९ ॥

Soma, thou, when purified, art awakening and most pleasant; thou passest through the hairs of the sheep; most like to the Aṅgirasas, thou art the source of wisdom; sprinkle our sacrifice with (thy) sweet juice.—9.

**सा०-भा० ।** हे 'सोम'! 'जागृविः' जागरणशीलः 'प्रियः' प्रीणयिता त्वं 'पुनानः' पूयमानः सन् 'अव्याः' मेष्याः 'वारैः' वालैर्निर्मिते दशापवित्रे 'परि'क्षरसि । 'अङ्गिरस्तम' हे अङ्गिरसां वरिष्ठ! 'विप्रः' मेधावी त्वं पितॄणां नेता 'अभवः' भवसि । स 'त्वं' 'नः' अस्मदीयं 'यज्ञं' 'मध्वा' मधुना आत्मीयेन रसेन 'मिमिक्ष' सेक्तमिच्छसि । मिहेः सेचनार्थस्य (भ्वा० प०) सनि रूपम् ॥ ९ ॥

९ । ऋ० सं० ९ म० १०७ सू० ६ ऋ० ।

अङ्गिरस्तम—Soma is addressed by this name, Grfth. means, by this, most richly endowed with the qualities of Aṅgiras, the representative of the great family of priestly fathers or typical first sacrificers, frequently mentioned in the Ṛgveda.

---

जमदग्नि ऋषिः ।

१ २ ३ २ ३ १ २ ३ १ २ ३ २

इन्द्राय पवते मदः सोमो मरुत्वते सुतः ।

३ १ २ ३ १ २र ३ १ २ ३ १ २

सहस्रधारो अत्यव्यमर्षति तमीं मृजन्त्यायवः ॥१०॥५२०॥

इन्द्राय । पवते । मदः । सोमः । मरुत्ऽवते । सुतः । सहस्रऽधारः । अति । अव्यम् । अर्षति । तम् । ईम् । मृजन्ति । आयवः ॥१०॥

भाष्यसारः । मदः—हर्षकरः, सुतः—अभिषुतः सोमः, मरुत्वते—इन्द्राय, पवते—स्रवति । सहस्रधारः—बहुधाराभिर्युक्तः सोमः, अव्यम्—मेषरोम-निर्मितं पवित्रम्, अत्यर्षति—अतिगच्छति । आयवः—मनुष्या ऋत्विजः, तम् ईम्—इमम्, मृजन्ति—शोधयन्ति ॥ १० ॥

Intoxicating Soma, being pressed out for Indra, the lord of the Maruts, flows; he passes through the woollen filter, in a thousand streams; men (priests) purify him.—10.

**सा० भा०** । 'मदः' मदकरः 'सुतः' अभिषुतः 'सोमः' 'मरुत्वते' मरुद्भिस्तद्वते 'इन्द्राय' इन्द्रार्थं 'पवते' क्षरति । ततः 'सहस्रधारः' बहुधारोपेतः सोमः 'अव्यम्' अविमयं पवित्रम् 'अत्यर्षति' अतिगच्छति तमिमम् 'आयवः' मनुष्या ऋत्विजः 'मृजन्ति' शोधयन्ति ॥ १० ॥

१० । ऋ० सं० ९ म० १०७ सू० १७ ऋ० ।

आयवः—men, in *plu.* Ngh. 2. 3; *see* also in this sense, SV. 1. 256.
ईम्—him; *vide* our notes on SV. 1. 94.

---

वशिष्ठ ऋषिः ।

१ २ ३ ३ १ ३ १ २र ३ १ २

पवस्व वाजसातमोऽभि विश्वानि वार्या ।

१ २ ३ १ २ ३ २र ३ १ २ ३ २

त्वं समुद्रः प्रथमे विधर्मन् देवेभ्यः सोम मत्सरः ॥११॥५२१॥

पवस्व । वाजसाऽतमः । अभि । विश्वानि । वार्या । त्वम् । समुद्रः । प्रथमे । विधर्मन् । देवेभ्यः । सोम । मत्ऽसरः ॥ ११ ॥

भाष्यसारः । **हे सोम, देवेभ्यः—देवानाम्, मत्सरः—तृप्तिकरः, समुद्रः—समुन्दनशीलः, विधर्मन्—विशेषेण धारक, त्वं प्रथमे—श्रेष्ठे यज्ञे, विश्वानि—सर्वाणि, वार्या—वरणीयाणि स्तोत्राणि, अभि—अभि-लक्ष्य, वाजसातमः—अतिशयेन अन्नप्रापकस्त्वम्, पवस्व—देवानां कृते क्षर ॥ ११ ॥**

Flow on, Soma, the best supplier of food, to all praises ; thou, Soma, gladdening to the gods, upholder of all, flow in the principal sacrifice.—11.

**सा०-भा० । 'हे सोम !' 'विश्वानि' सर्वाणि 'वार्या' वरणीयानि स्तोत्राणि 'अभि'लक्ष्य 'वाजसातमः' अतिशयेनान्नस्य लम्भकस्त्वं 'पवस्व' क्षर । हे सोम ! 'देवेभ्यः' देवानां 'मत्सरः' मदकरः 'समुद्रः' समुन्दनशीलः 'विधर्मन्' विशेषेण पोषक ! त्वं 'प्रथमे' मुख्ये श्रेष्ठे यज्ञे 'देवेभ्य'स्तदर्थं क्षर ॥ ११ ॥**

**११ । ऋ० सं० ६ म० १०७ सू० २३ ऋ० ।** ṚV. reads (1) **'समुद्रं प्रथमो विधारयन्'** instead of **'समुद्रः प्रथमे विधर्मन्'** ; (2) **'वाजसातये'** in the place of **'वाजसातमः'** ; (3) **'काव्या'** for **'वार्या'**.

---

१ २ ३ २ ३ २ ३ १ २
**पवमाना असृक्षत पवित्रमति धारया ।**
३ १ २ ३ १ २ ३ १ २र ३ २ ३ १ २र
**मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयांसि च ॥१२॥५२२॥**

पवमानाः । असृक्षत । पवित्रम् । अति । धारया । मरुत्ऽवन्तः । मत्ऽसराः । इन्द्रियाः । हयाः । मेधाम् । अभि । प्रयांसि । च ॥ १२ ॥

भाष्यसारः । **मरुत्वन्तः—मरुद्भिः सह स्थिताः, मत्सराः—मदकराः, इन्द्रियाः—इन्द्रसेविताः, मेधाम्—स्तुतिम्, प्रयांसि—अन्नानि, च अभि-लक्ष्य, हयाः—अश्वा इव यज्ञे द्रुतगमनशीलाः, पवमानाः—पूयमानाः, धारया—धाराकारेण, पवित्रम् अति असृक्षत—अतिक्रम्य प्रक्षिप्यन्ते ॥ १२ ॥**

Through the strainer, are poured in a stream, the purified Somas attended by the Maruts, exhilarant, pleasant to Indra, swift like horses, for procuring food and praise.—12.

**सा०-भा०।** 'पवमानाः' पूयमानाः सोमाः 'धारया' आत्मीयया 'पवित्रम्' 'अति' अतीत्य 'असृक्षत' सृज्यन्ते। कीदृशाः? 'मरुत्वन्तः' मरुद्भिर्युक्ताः 'मत्सराः' मदकराः 'इन्द्रियाः' इन्द्रजुष्टाः। 'मेधां' स्तुतिं 'प्रयांसि' अन्नानि च 'अभि'लक्ष्य स्तोतृभ्य उभयं कर्त्तुं वा 'हयाः' यज्ञे गन्तारः सृज्यन्ते ॥ १२ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्य पञ्चमः खण्डः। षष्ठप्रपाठकस्य च प्रथमार्धे तृतीया दशतिः ॥

१२। ऋ० सं० ६ म० १०७ सू० २५ ऋ०।

प्रयांसि—food, Nir. 2. 13 ; *see* notes on प्रयस्वन्तः, SV. I. 459.

---

अथ पञ्चमाध्यायस्य षष्ठः खण्डः। षष्ठप्रपाठकस्य च प्रथमार्धे चतुर्थी दशतिः।

उशना ऋषिः। त्रिष्टुप् छन्दः।

१ २र ३ २ ३ २ ३ १ २ ३
प्र नु द्रव परि कोशं नि षीद
१ २ ३ २ ३ १ २र
नृभिः पुनानो अभि वाजमर्ष।
२ ३ १ २ ३ १ २ ३ २ ३ १
अश्वं न त्वा वाजिनं मर्जयन्तो-
२ ३ १ २ ३ १ २
ऽच्छा बर्ही रशनाभिर्नयन्ति ॥ १ ॥ ५२३ ॥

प्र। नु। द्रव। परि। कोशम्। नि। सीद। नृभिः। पुनानः। अभि। वाजम्। अर्ष। अश्वम्। न। त्वा। वाजिनम्। मर्जयन्तः। अच्छा। बर्हिः। रशनाऽभिः। नयन्ति ॥ १ ॥

भाष्यसारः । हे सोम ! नु प्र-द्रव—द्रुतमागच्छ, कोशं परि-निषीद—द्रोणकलशे च अवतिष्ठस्व । नृभिः—यज्ञनेतृभिः अध्वर्युप्रभृतिभिः, पुनानः—पूयमानः, वाजम्—यजमानस्य कृते अन्नमुद्दिश्य, अभ्यर्ष—अभिगच्छ । वाजिनम्—बलवन्तम्, अश्वं न—इव, त्वां मर्जयन्तः—मार्जयन्तः शोधयन्तः अध्वर्य्वादयः, बर्हिः—यज्ञम्, अच्छ—प्रति, रशनाभिः—रश्मिभिरिवाङ्गुलीभिः, नयन्ति ॥ १ ॥

Flow quickly (Soma), sit within the pitcher, cleansed by the leaders of the sacrifice (priests); come forward for (procuring) food (to the sacrificer), cleansing thee like a strong horse, they lead thee with reins (the fingers) to the holy rite.—1.

**सा०-भा० ।** हे सोम, 'नु' क्षिप्रं 'प्र-द्रव' प्रगच्छ । आगत्य च 'कोशं' द्रोणकलशं 'परि-निषीद' निषण्णो भव । 'नृभिः' नेतृभिः 'पुनानः' पूयमानः 'वाजम्' अन्नं यजमानार्थमुद्दिश्य 'अभ्यर्ष'। वाजं संग्रामं वा 'वाजिनं' बलवन्तम् 'अश्वं न' अश्वमिव तं यथा मार्जयन्ति तद्वत् त्वाम् 'मर्जयन्तः' शोधयन्तः 'बर्हिः' यज्ञम् 'अच्छ' 'प्रति 'रशनाभिः' रशनावदायताभिरङ्गुलीभिः 'नयन्ति' अध्वर्युप्रमुखाः ॥ १ ॥

१ । ऋ० सं० ६ म० ८७ सू० १ ऋ० । उ० आर्चि० १, १, १०, १ ।

---

वृषगणो वासिष्ठ ऋषिः ।

१ २र ३ १ २ ३ २ ३ २
प्र काव्यमुशनेव ब्रुवाणो देवो
३ २ ३ १ २
देवानां जनिमा विवक्ति ।
१ २ ३ १ २ ३ २
महिव्रतः शुचिबन्धुः पावकः
३ १ २ ३ २ ३क २र ३ १ २
पदा वराहो अभ्येति रेभन् ॥ २ ॥५२४॥

प्र । काव्यम् । उशना । इव । ब्रुवाणः । देवः । देवानाम् । जनिमा । विवक्ति । महिऽव्रतः । शुचिऽबन्धुः । पावकः । पदा । वराहः । अभिऽएति । रेभन् ॥ २ ॥

भाष्यसारः । उशना—एतन्नामकऋषिरिव, काव्यम्—स्तोत्रम् , ब्रुवाणः अयं वृषगण ऋषिः, देवानाम् , जनिमा—जन्मानि, प्र-विवक्ति—प्रकर्षेण वदति । महिव्रतः—प्रभूतकर्मा, शुचिबन्धुः—प्रदीप्ततेजाः, पावकः—पापशोधकः सोमः, पदा भूमिं लिखन् , वन्यवराह इव रेभन्—शब्दं कुर्वन्, पदा--स्थानानि पात्राणि, अभ्येति—अभिगच्छति ॥ २ ॥

Singing praise like Uśanas, (Vṛṣagaṇa) describes the births of the gods ; engaged in great deeds, brilliantly resplendent, sanctifying, he (Soma) comes near the receptacles, making a noise (like) a boar making a noise with its foot.

**सा०-भा० ।** 'उशनेव' तन्नामक ऋषिरिव, 'काव्यं' कविकर्म स्तोत्रम् , 'ब्रुवाणः' 'देवः' स्तोता अयमृषिर्वृषगणो नाम, 'देवानाम्' इन्द्रादीनां 'जनिमा' जन्मानि 'प्र-विवक्ति' प्रकर्षेण वदति । वच परिभाषणे ( अदा० प० ) । व्यत्ययेन विकरणस्य श्लुः ( पा० ३,१,८५ ), 'बहुलं छन्दसी'ति ( पा० ७,४,७८ ) अभ्यासस्य इत्वम् । 'महिव्रतः' प्रभूतकर्मा । 'शुचिबन्धुः'—बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा—दीप्ततेजस्कः । 'पावकः' पापानां शोधकः । 'वराहः' वरश्च तदहश्च वराहः—'राजाहः सखिभ्यष्टच्' इति टच् समासान्तः । तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान्—अर्श आदित्वान्मत्वर्थीयोऽच् । तादृशः सोमः 'रेभन्' शब्दं कुर्वन् , 'पदा' पदानि स्थानानि पात्राणि 'अभ्येति' अभिगच्छति । यद्वा, यदा कश्चन वराहः 'पदा' पदेन भूमिं विक्रियमाणः शब्दं करोति तद्वत् ॥ २ ॥

२ । ऋ० सं० ९ म० ९७ सू० ७ ऋ० । उ० आर्चि० ४, २, १, १ ।

देवः—brilliant, shining ; more probably refers to Soma. Acc. to Sāy. it means *here* the hymner ( स्तोता ) referring to Sage Vṛṣagaṇa.

वराहः—'Sāyaṇa gives another explanation of '*Varahaḥ*'—effused on a good (*vara*) day (*ahan*)—epithet of Soma, in which case *padā* is for *padāni* and means 'the abodes' i. e., 'the filters'—*Wils.*

———

पराशर ऋषिः ।

२ १ २र ३ १ २र
तिस्रो वाच ईरयति प्र वह्नि-
३ १ २ ३ १ २र ३ २
र्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
१ २ ३ १ २ ३ १ २ ३
गावो यन्ति गोपतिं पृच्छमानाः
१ २ ३ १ २ ३ २
सोमं यन्ति मतयो वावशानाः ॥ ३ ॥ ५२५ ॥

तिस्रः । वाचः । ईरयति । प्र । वह्निः । ऋतस्य । धीतिम् । ब्रह्मणः । मनीषाम् । गावः । यन्ति । गोऽपतिम् । पृच्छमानाः । सोमम् । यन्ति । मतयः । वावशानाः ॥ ३ ॥

भाष्यसारः । वह्निः—यज्ञस्य वाहकः यजमानः, तिस्रो वाचः—त्रिविधाः स्तुतीः, प्रेरयति । ऋतस्य धीतिम्—यज्ञस्य धारयित्रीम्, ब्रह्मणः—महतः सोमस्य, मनीषाम्—मनोऽभिरामां स्तुतिं च प्रेरयति । यथा गोपतिं वृषभं गावो यन्ति अभिगच्छन्ति, तथा वावशानाः—कामयमानाः, मतयः—स्तोतारः, सोमं यन्ति स्तोतुमभिगच्छन्ति ॥ ३ ॥

The bearer (of sacrifice) utters the three hymns, sings alaud pleasing to the supreme Soma, as the eager cows proceed to the bull, so the praisers come to the Soma with eager longing—3.

**सा०भा० ।** 'वह्निः' वोढा यजमानः, 'तिस्रो वाचः' ऋग्यजुःसामात्मिकाः स्तुतीः 'प्रेरयति'। तथा 'ऋतस्य' यज्ञस्य, 'धीतिं' धारयित्रीम्, 'ब्रह्मणः' परिवृढस्य सोमस्य 'मनीषां' मनस ईशित्रीं कल्याणवाचं च प्रेरयति । किञ्च, 'गोपतिं' वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं 'गावः' 'पृच्छमानाः' पृच्छन्त्यः सत्यो 'यन्ति' स्वपयसाऽऽश्रयितुमभिगच्छन्ति । तथा 'वावशानाः' कामयमानाः 'मतयः' स्तोतारः 'सोमं' 'यन्ति' स्तोतुमभिगच्छन्ति ॥ ३ ॥

३। ऋ० सं ६ म० ६७ सू० ३४ ऋ० । उ० आर्चि० २, २, १०, १ ।

वह्निः—Sāyaṇa explains it as the bearer of oblation i. e., the worshipper, the three texts ( तिस्रः वाचः )—as *Ric*, *Yajus* and *Sāman* ; *brahmaṇaḥ* means

'the supreme' (parivṛdhasya). In the next line he explains that the kine come to the Soma to mix their milk with him. Grfth. remarks—'three tones of the voice are probably intended'—*Wils.*

---

वसिष्ठ ऋषिः ।

२ २ ३२ ३ १ २ ३ १ २
अस्य प्रेषा हेमना पूयमानो
३ २ ३ २ ३ १ २ ३ १ २
देवो देवेभिः समपृक्त रसम् ।
३ २ ३ २ ३ १ २ ३ १ २ ३
सुतः पवित्रं पर्येति रेभन्मि-
२ ३ १ २ ३ २ ३ १ २
तेव सद्म पशुमन्ति होता ॥ ४ ॥ ५२६ ॥

अस्य । प्रेषा । हेमना । पूयमानः । देवः । देवेभिः । सम्ऽअपृक्त । रसम् । सुतः । पवित्रम् । परिऽएति । रेभन् । मिता । इव । सद्म । पशुऽमन्ति । होता ॥ ४ ॥

भाष्यसारः । अस्य—सोमस्य, प्रेषा—प्रेरकेण, हेमना—अध्वर्योः हिरण्यभूषित-करेण, पूयमानः देवः—दीप्यमानः सोमः, स्वकीयं रसं देवेभिः—देवैः सह, समपृक्त—संयोजयति । सुतः—अभिषुतः सोमः, रेभन्—शब्दं कुर्वन्, पवित्रम्—शोधनपात्रम्, पर्येति—परिगच्छति. यथा होता—देवानामाह्वाता, मिता—यज्ञनिर्माता ऋत्विक्, पशुमन्ति—बद्धपशुम्, सद्म—यज्ञशालाम्, प्रविशति ॥ ४ ॥

The radiant Soma being cleansed by the gold-adorned hand (of the priest), which urges it, brings its juice into contact with the gods; when pressed out, it comes to the strainer with a roar, as the invoker of gods (Hotṛ), the perpetrator of sacrifice, proceeds to the (sacrificial) house holding animals (to be slaughtered).—4.

**सा०-भा०** । 'अस्य' सोमस्य 'प्रेषा'—प्रेषतिर्गत्यर्थः ( भ्वा० प० ), क्विपि रूपम्, सावेकाच इति विभक्तेरुदात्तत्वम्,—प्रेषा प्रेरकेण 'हेमना' हिरण्येन 'पूयमानः'

—'हिरण्यपाणिरभिषुणोती'ति हिरण्यसम्बन्धः। तादृशः 'देवो' दीप्यमानः अंशुः 'रसम्' आत्मीयं 'देवेभिः' देवैः सह 'समपृक्त' सम्पर्कयति, संयोजयति। पृची सम्पर्के (अदा० आ०)। ततः 'सुतः' अभिषुतः सोमः 'रेभन्' शब्दायमानः 'पवित्रम्' उर्णास्तुकेन निर्मितं 'पर्येति' परिगच्छति। कथमिव ? 'होता' देवानामाह्वाता ऋत्विक् 'मितेव' निर्मातेव 'पशुमन्ति' बद्धपशून् 'सद्म' सदनानि यज्ञगृहान् यथा पर्येति तद्वत् ॥ ४ ॥

४। ऋ० सं० ६ म० ६७ सू० १ ऋ०। उ० आर्चि० ६, २, ८, १।

पवित्रम्—the filter ;—*Grfth.*

सद्म पशुमन्ति—'to the halls prepared (for sacrifice) containing victims. —*Wils.*

—

प्रतर्दन ऋषिः।

१ २ ३ १ २ ३ १
सोमः पवते जनिता मतीनां
२ ३ २ ३ १ २ ३ १ २ ३ २
जनिता दिवो जनिता पृथिव्याः।
३ १ २र ३ १ २र
जनिताग्नेर्जनिता सूर्यस्य
३ १ २ ३ १ २र
जनितेन्द्रस्य जनितोत विष्णोः ॥ ५ ॥ ५२७ ॥

सोमः। पवते। जनिता। मतीनाम्। जनिता। दिवः। जनिता। पृथिव्याः। जनिता। अग्नेः। जनिता। सूर्यस्य। जनिता। इन्द्रस्य। जनिता। उत। विष्णोः ॥ ५ ॥

भाष्यसारः। सुगमत्वादन्वयमात्रं दीयते—मतीनां जनिता, दिवो जनिता, पृथिव्याः जनिता, अग्नेर्जनिता, सूर्यस्य जनिता, इन्द्रस्य जनिता, उत—अपि च विष्णोर्जनिता सोमः पवते ॥ ५ ॥

The Soma flows, the father of sacred praises, the father of heaven, the father of earth, the father of Agni, the progenitor of the Sun, the generator of Indra, also of Viṣṇu.—5.

**सा०-भा० ।** 'सोमः' अभिषूयमाणः 'पवते' पात्रेषु क्षरति। कीदृशः? 'मतीनां' बुद्धीनाम्। यद्वा, मननीयानां स्तुतीनां 'जनिता' जनयिता। 'जनिता मन्त्रे' (पा० ६,४,५३) इति निपातेन णिलोपः। किञ्च, 'दिवः' द्युलोकस्य 'जनिता' प्रादुर्भावयिता। तथा 'पृथिव्याः जनिता'। 'अग्नेः' 'जनिता' प्रकाशयिता। 'सूर्यस्य' सर्वप्रेरकस्यादित्यस्य 'जनिता'। 'इन्द्रस्य जनिता' पानेन मदस्य जनयिता। 'उत' अपि च। 'विष्णोः' व्यापकस्य 'जनिता' जनयिता। एतत्सर्वं सोमेऽभिषूयमाणे भवति। सोमेन हि देवताप्यायन्त इति ॥ ५ ॥

५। ऋ० सं० ६ म० ९६ सू० ५ ऋ०। उ० आर्चि० ३, १, १६, १।

---

वसिष्ठ ऋषिः।

२ १ २ ३ १ २र २ १
अभि त्रिपृष्ठं वृषणं वयोधा-
२ ३ १ २ ३ १ २
मङ्गोषिणमवावशन्त वाणीः।
२ ३ १ २ ३ १ २ ३ २उ ३
वना वसानो वरुणो न सिन्धु-
१ २ ३ १ २ ३ १ २
र्विरत्नधा दयते वार्याणि ॥ ६ ॥ ५२८ ॥

अभि। त्रिऽपृष्ठम्। वृषणम्। वयःऽधाम्। अङ्गोषिणम्। अवावशन्त। वाणीः। वना। वसानः। वरुणः। न। सिन्धुः। वि। रत्नऽधाः। दयते। वार्याणि ॥ ६ ॥

भाष्यसारः। त्रिपृष्ठं वृषणम्—कामवर्षकम्, वयोधाम्—अन्नस्य प्रदातारम्, अङ्गोषिणम्—शब्दायमानम्, सोमं वाणीः—स्तोत्राणि, अवावशन्त—कामयन्ते, शब्दायन्ते वा। वना—वनानि जलानि, वसानः—अधितिष्ठन्, वरुणः न—इव, रत्नधाः—रत्नानां दाता, सोमः वार्याणि—वरणीयानि धनानि, दयते—प्रयच्छति ॥ ६ ॥

The songs of praise seek him (Soma), the triple-backed, the showerer of blessings, the bestower of food, resting in water, like Varuṇa (the Soma), the giver of precious treasures, gives wished-for riches.—6.

**सा०-भा०**। 'त्रिपृष्ठ' त्रीणि पृष्ठानि द्रोणकलशादिस्थानानि सवनानि वा यस्य स तथोक्तस्तम्, 'वृषणं' वर्षकम्, 'वयोधाम्' अन्नस्य दातारम्, 'अङ्गोषिणं' आघोषन्तम्, सोमं 'वाणीः' स्तोत्ररूपा वाचः, 'अवावशन्त' कामयन्ते, शब्दायन्ते वा। 'वना' वनानि उदकानि, 'वसानः' आच्छादयन्, 'वरुणो न' वरुण इव, 'सिन्धुः' अपां स्यन्दयिता, पर्यन्तप्रदेशानाच्छादयति। तद्वत् 'रत्नधाः' रत्नानां दाता, सोमः 'वार्याणि' धनानि 'दयते' स्तोतृभ्यः प्रयच्छति ॥ ६ ॥

६। ऋ० सं० ६ म० ६० सू० २ ऋ०। उ० आर्चि० ६, २, ११, १।

---

पराशर ऋषिः।

१ २ ३ १ २ ३ १ २र
अक्रांत्समुद्रः प्रथमे विधर्मञ्
३ १ २ ३ १ २र ३ १ २
जनयन् प्रजा भुवनस्य गोपाः।
१ २ ३ २ ३ २ ३ २ ३ १ २
वृषा पवित्रे अधि साना अव्ये
३ १ २र ३ १ २र
बृहत्सोमो वावृधे स्वानो अद्रिः ॥ ७ ॥५२६॥

अक्रान्। समुद्रः। प्रथमे। विधर्मन्। जनयन्। प्रजाः। भुवनस्य। गोपाः। वृषा। पवित्रे। अधि। सानौ। अव्ये। बृहत्। सोमः। वावृधे। स्वानः। अद्रिः ॥ ७ ॥

भाष्यसारः। **समुद्रः**—वर्षोदकद्रावकः जलवर्षकः, **गोपाः**—यज्ञरक्षकः, **वृषा**—कामाभिवर्षकः, **प्रथमे**—प्रथनशीले विस्तीर्णे, **भुवनस्य**—उदकस्य, **विधर्मन्**—विधारके अन्तरिक्षे, **प्रजाः जनयन्**, **बृहत्**—महान्, **सोमः**, **अद्रिः**—अद्रिभिः, **स्वानः**—अभिषूयमानः, **सानौ**—समुच्छ्रिते, **अव्ये**—मेषरोमनिर्मिते, **पवित्रे अधि**—उपरि, **वावृधे**—भृशं वर्धितः, **अक्रान्**—सर्वम् अतिक्रामति। भाष्यमत्राऽसम्पूर्णतया प्रतिभाति ॥ ७ ॥

The Soma, the showerer of waters, generating progeny (the waters) in the spacious firmament, the upholder of the water, excels all; mighty Soma, the fulfiller of desires, pressed out with the stones, increases greatly in the lofty woollen strainer.—7.

**सा०-भा० ।** 'समुद्रः'—अस्मादापः सन्द्रवन्ति—स समुद्रः अपां वर्षकः । 'गोपाः' यज्ञस्य रक्षकः, सोमः 'प्रथमे' विस्तृते, 'भुवनस्य' उदकस्य, 'विधर्मन्' विधारकेऽन्तरिक्षे, 'प्रजाः' 'जनयन्' उत्पादयन्, 'अक्रान्' सर्वमतिक्रामति । क्रमतेर्लुङि, तिपि, इडभावे वृद्धौ च कृतायां सिज्लोपे मकारस्य 'मोनोधातो'रिति नकारे रूपम् । 'वृषा' कामानां वर्षिता, 'स्वानः' अभिषूयमाणः ॥ ७ ॥

७ । ऋ० सं० ६ म० ६७ सू० ४० ऋ० । R̥V. reads 'इन्दुः' instead of 'अद्रिः' (the corrupt form *for* अद्रिभिः). उ० आर्चि० ५, २, १, १ ।

समुद्रः—West. scholars render this word as the sea, the ocean.

भुवनस्य गोपाः—the guard of all beings—*Grfth.* Supporter of the water—*Wils.* (after Sāy.).

साना—*for* सानौ *loc.* of सानु ; loc. term. is changed to 'आ' by 'सुपां सुलुक्०', Pāṇ. vii. I. 39.

अव्ये—The filter made of wool (from अवि a sheep).

अद्रिः—Prof. Ludwig suggests that *Adreḥ* may have been the original reading. Benfey translates 'durchsteine' as though the word were *Adribhiḥ.*

Actually अद्रिः stands for अद्रिभिः, instr. case-term, being replaced by सु (:) by 'सुपां सुलुक्०', Pāṇ. vii. I. 39.

---

प्रस्कण्व ऋषिः ।

१ २ ३ २ ३ २ ३ १ २ ३
कनिक्रन्ति हरिरा सृज्यमानः
२ ३ १ २ ३ १ २ ३ २
सीदन् वनस्य जठरे पुनानः ।
१ २ ३ १ २ ३ २ ३ १
नृभिर्यतः कृणुते निर्णिजं गा-
२र ३ १ २ ३ १ २
मतो मतिं जनयत स्वधाभिः ॥ ८ ॥ ५३० ॥

कणिक्रन्ति । हरिः । आ । सृज्यमानः । सीदन् । वनस्य । जठरे । पुनानः । नृभिः । यतः । कृणुते । निर्णिजम् । गाम् । अतः । मतिम् । जनयत । स्वधाऽभिः ॥ ८ ॥

भाष्यसारः । **आ-सृज्यमानः—सर्वतोऽभिषूयमाणः, हरिः—हरितवर्णः सोमः, पुनानः—पूयमानः, वनस्य जठरे—द्रोणकलशस्य अभ्यन्तरे, सीदन्—स्थितः सन्, कणिक्रन्ति—शब्दं करोति। तथा नृभिः—यज्ञनेतृभिः ऋत्विग्भिः, यतः—संयतः, सोमः, गाम्—मिश्रितदुग्धादीन्, आच्छादयन्—अभिभवन्, निर्णिजम्—निजं रूपम्, कृणुते—करोति, प्रकटयतीत्यर्थः। अतः—अस्मै सोमाय, मतिम्—स्तुतिम्, स्वधाभिः—हविर्भिः सह, जनयत—हे स्तोतारः! कुरुत ॥ ८ ॥**

The green-coloured Soma, resting within the vessel on being cleansed, roars loudly; collected by the leaders (of sacrifices) he manifests his own form over the milk and curds. So offer praises to him with oblations.—8.

**सा०-भा०।** 'आ सृज्यमानः' समन्ताद्विसृज्यमानोऽभिषूयमाणः 'हरिः' हरितवर्णः सोमः 'कनिक्रन्ति' पुनः पुनः शब्दायते। क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, 'दाधर्त्तिदर्धर्ती'त्यादिना निपातनादभ्यासस्य निगागमः, अभ्यस्तस्वरः। तथा 'पुनानः' पूयमानः 'वनस्य' वननीयस्य चास्य द्रोणकलशस्य 'जठरे' 'सीदन्' उपविशन् शब्दायते। किञ्च, 'नृभिः' कर्मनेतृभिर्ऋत्विग्भिः 'यतः' संयतः सोमः 'गाः' (?) गोविकारान् क्षीरादीन् आच्छादयन् 'निर्णिजं' शुद्धम् आत्मनो रूपं 'कृणुते' प्रहावित्रु करोति। अतोऽस्मै सोमाय, 'मतिं' मननीयां स्तुतिं 'स्वधाभिः' हविर्भिः सह 'जनयत' स्तोतारोऽजनयन्। झस्यान्तादेशाभावः छान्दसः, अदादेशः। यद्वा, हे स्तोतारः, अस्मै सोमाय स्तुतिं जनयत उत्पादयत, कुरुतेति यावत् ॥ ८ ॥

**८। ऋ० सं० ६ म० ६५ सू० १ ऋ०।**

सीदन् वनस्य जठरे—Settling in the belly of the wood is the literal rendering; *here* 'वनस्य' means, of wooden vessel or pitcher.

निर्णिजम्—रूपम्, form, Ngh. 3. 7; cf. 'बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजम्'. This word occurs not infrequently (twelve times) in the Ṛgveda; dr. fr. rt. निज *to purify, to nourish* ( शौच-पोषणयोः ), 3. u.

———

उशना ऋषिः ।

२ २उ   ३ १ २   ३   २ ३
**एष स्य ते मधुमाँ इन्द्र सोमो**
२ ३ २ ३   १ २ ३ १ २
**वृषा वृष्णः परि पवित्रे अक्षाः ।**
३   १   २ ३ १   २ ३ १ २
**सहस्रदाः शतदा भूरिदावा**
३ २ ३ २उ   ३क २र
**शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ९ ॥ ५३१ ॥**

एषः । स्यः । ते । मधुऽमान् । इन्द्र । सोमः । वृषा । वृष्णः । परि । पवित्रे । अक्षाः । सहस्रऽदाः । शतऽदाः । भूरिऽदावा । शश्वत्ऽतमम् । बर्हिः । आ । वाजी । अस्थात् ॥ ९ ॥

भाष्यसारः । हे इन्द्र, वृष्णः—वाञ्छितवर्षकस्य, ते—तव तुभ्यमित्यर्थः, एषः स्यः—स सोमः, मधुमान्—मधुररसोपेतः, वृषा—कामाभिवर्षकः, पवित्रे पर्यक्षाः—परिस्रवति । स सहस्रदाः—सहस्रपरिमितधनदाता, शतदाः—शतपरिमितधनदाता, भूरिदावा—बहुधनदाता, वाजी—बलवान्, सोमः शश्वत्तमम्—पुराणतमम्, बर्हिः—यज्ञम्, अस्थात्—अधितिष्ठति ॥ ९ ॥

This sweet Soma, for thee, O Indra, the showerer of blessings is flowing through the strainer; the bestower of thousand-fold wealth, the giver of hundred-fold wealth, the giver of (still more) abundant treasures, the mighty Soma presents himself at the eternal sacrifice.—9.

**सा०-भा० ।** हे 'इन्द्र' ! 'वृष्णः' वर्षकस्य 'ते' तुभ्यम्—चतुर्थ्यर्थे षष्ठी । 'एषः' 'स्यः' स सोमः 'मधुमान्' माधुर्योपेतः 'वृषा' वर्षकः 'पवित्रे' 'पर्यक्षाः' पर्यस्रवत्—क्षरतेर्लुङि रूपम् । स एव 'सहस्रदाः' सहस्रसङ्ख्याकस्य धनस्य दाता 'शतदाः' शतसङ्ख्याकस्य दाता 'भूरिदावा' ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः 'शश्वत्तमम्' अतिशयेन पुराणं 'बर्हिः' यज्ञम् 'अस्थात्' अधितिष्ठति ॥ ९ ॥

९ । ऋ० सं० ९ म० ८७ सू० ४ ऋ० ।

—

प्रतर्दन ऋषिः ।

१ २ ३ १ २ ३ २ ३ १
पवस्व सोम मधुमाँ ऋतावापो
२र ३ २ ३ २ ३ १ २
वसानो अधि साना अव्ये ।
१ ३ १ २ ३ १ २
अव द्रोणानि घृतवन्ति रोह
३ १ २ ३ १ २ ३ १ २
मदिन्तमो मत्सर इन्द्रपानः ॥१०॥५३२॥

पवस्व । सोम । मधुऽमान् । ऋतावा । अपः । वसानः । अधि । सानौ । अव्ये । अव । द्रोणानि । घृतऽवन्ति । रोह । मदिन्ऽतमः । मत्सरः । इन्द्रऽपानः ॥ १० ॥

भाष्यसारः । हे सोम, मधुमान्—मधुररसोपेतस्त्वम्, अपः—उदकवन्ति, द्रोणानि वसानः—अधितिष्ठन्, अधि—अधिकम्, सानौ—समुच्चे, अव्ये—मेषलोमनिर्मिते पवित्रे, पवस्व—क्षर । मदिन्तमः—सातिशयमदकरः, इन्द्रपानः—इन्द्रस्य पानीयः, मत्सरः—मादकः, सोमः, घृतवन्ति—जलयुक्तानि, द्रोणानि—द्रोणकलशान्, अव-रोह—अधितिष्ठ ॥ १० ॥

O Sweet-flavoured Soma, ever connected with sacrifice, wrapped in the waters, flow on the lofty woollen filter ; flow down into the pitchers containing water ; thou art the most exhilarating, cheering drink of Indra.—10.

**सा०-भा० ।** हे 'सोम !' 'मधुमान्' मत्वर्थीयः । तादृशस्त्वम् 'अपः' वसतीवरीः एकधनाः 'वसानः' आच्छादयन् 'अधि' अधिकं 'सानौ' समुच्छ्रिते 'अव्ये' अवि-भवे पवित्रे 'पवस्व' क्षर । ततः 'मदिन्तमः' अतिशयेन मदकरः 'इन्द्रपानः' इन्द्रेण पातव्यः 'मत्सरः' मादयिता सोमः 'घृतवन्ति' उदकवतः 'द्रोणानि' द्रोणकलशान् 'अव-रोह' प्रादुर्भवसि ॥ १० ॥

१० । ऋ० सं० ९ म० ९६ सू० १३ ऋ० ।

अपः—वसतीवरीः—Sāy. on SV. I. 6. 1. 3. 1 ; again अप्सु—वसतीवरीषु—ib. 2. वसतीवरी is the water which, drawn from a stream on the eve of the Soma sacrifice, is left standing over night.

अव्ये—the woollen Soma-strainer (from *avi*—a sheep).

घृतवन्ति—Full of fatness.—*Grfth.* घृत very often means, in the Vedas, water. According to Sayaṇa 'घृतवन्ति' means holding water. Prof. Wilson follows this meaning. *See* Ngh. 1. 12.

---

**अथ पञ्चमाध्यायस्य सप्तमः खण्डः। षष्ठप्रपाठकस्य च प्रथमार्धे पञ्चमी दशतिः।**

प्रतर्दन ऋषिः। त्रिष्टुप् छन्दः।

१ २ ३ २उ ३ २ ३ १ २
**प्र सेनानीः शूरो अग्रे रथानां**
३ १ २ ३ १ २ ३ १ २
**गव्यन्नेति हर्षते अस्य सेना।**
३ २ ३ १ २ ३ १ २र ३
**भद्रान् कृण्वन्निन्द्रहवांत्सखिभ्य**
२उ ३ १ २ ३ १ २
**आ सोमो वस्त्रा रभसानि दत्ते॥ १॥ ५३३॥**

प्र। सेनानीः। शूरः। अग्रे। रथानाम्। गव्यन्। एति। हर्षते। अस्य। सेना। भद्रान्। कृण्वन्। इन्द्रऽहवान्। सखिभ्यः। आ। सोमः। वस्त्रा। रभसानि। दत्ते॥ १॥

भाष्यसारः। **सेनानीः—सेनानाम् नेता, शूरः, गव्यन्—यजमानानां पश्वादिधनमिच्छन्, रथानाम् अग्रे—पुरतः, प्रैति—प्रकर्षेण गच्छति। अस्य सेना हर्षते—हृष्यति, सखिभ्यः—यजमानेभ्यः, इन्द्रहवान्—इन्द्रस्य आह्वानानि, भद्रान्—कल्याणानि, कृण्वन्—कुर्वन्, सोमरसेन सह आहूत इन्द्रः कल्याणं विधत्ते इत्यर्थः। रभसानि—महान्ति, वस्त्राणि—आवरकाणि दुग्धदधिप्रभृतीनि संमिश्रण-द्रव्याणि, आ-दत्ते—आगृह्णाति॥ १॥**

(Soma), the leader of the army, the hero, proceeds in front of the cars, seeking wealth in cattle (for the worshippers); his army rejoices; rendering the invocations of Indra full of blessings for the friends (the votaries); *Soma* wears the mighty clothes (of milk and curds).—1.

**सा०-भा०।** 'सेनानीः' सेनानामग्रे नेता 'शूरः' शत्रूणां बाधकः 'सोमः' 'गव्यन्' इच्छन् यजमानानां पश्वादिकमिच्छन् 'रथानाम्' 'अग्रे' पुरतः 'प्रैति' प्रकर्षेण

संग्रामं गच्छति। 'अस्य' सोमस्य 'सेना' च 'हर्षते' हृष्यति, वाक्यभेदादनिघातः। किञ्च, 'सखिभ्यः' समानख्यानेभ्यो यजमानेभ्यः 'इन्द्रहवान्' तैः कृतानि इन्द्रस्य आह्वानानि 'भद्रान्' कल्याणानि यथार्थानि 'कृण्वन्', आहूतो हीन्द्रः सोमं पीत्वा कामान् प्रयच्छतीति। 'रभसानि' इन्द्रस्य वेगेनागमननिमित्तानि 'वस्त्रा' वस्त्रान्याच्छादकानि पयःप्रभृतीन्याश्रयणानि 'आ-दत्ते' आगृह्णाति ॥ १ ॥

१। ऋ० सं० ६ म० ९६ सू० १ ऋ०।

सेनानीः, शूरः etc.—refer, acc. to Sāyaṇa, to Soma ; Prof. Wilson takes these words independently without reference to Soma and translates—'the leader of the host, a hero, advances in front of the chariots intent on seizing the cattle of the enemy'.

गव्यन्—'*literally* seeking cows, with allusion, perhaps, to the milk which will be mingled with the juice'.—*Grfth.*

वस्त्रा—for वस्त्राणि, *lit.* robes, refers to the milk and curds, with which the Soma-juice is to be mixed.

रभसानि—*adj. to* वस्त्रा(णि). Sāyaṇa explains—'caused by Indra's hasty arrival.' 'Hastily made'—*Wils.* 'splendid'—*Benfey.* 'Brilliant'—*Grassman.* The word *Rabhasa* is found in the list of the synonyms of महत् (great), Ngh.—3. 3.

---

पराशर ऋषिः।

२ ३ २ ३ १ २ ३
प्र ते धारा मधुमतीरसृग्रन्
१ ३ २ ३ २ ३ १ २र
वारं यत्पूतो अत्येष्यव्यम्।
१ २ ३ १ २ ३ १ ३ १ २
पवमान पवसे धाम गोनां
३ १ ३ १ २ ३ २
जनयन्त्सूर्यमपिन्वो अर्कैः ॥ २ ॥५३४॥

प्र। ते। धाराः। मधुऽमतीः। असृग्रन्। वारम्। यत्। पूतः। अति। एषि। अव्यम्। पवमान। पवसे। धाम। गोनाम्। जनयन्। सूर्यम्। अपिन्वः। अर्कैः ॥ २ ॥

भाष्यसारः । ते—तव, मधुमतीः—मधुमत्यः मधुररसयुक्ताः, धाराः प्रासृग्रन्—प्रवहन्ति, यत्—यदा, पूतः त्वम् अव्यं वारम्—मेषरोमनिर्मितं पवित्रम्, अत्येषि—अतिक्रम्य गच्छसि। हे पवमान—पूयमान सोम, गोनाम्—गवाम्, धाम—पयः, पवसे—क्षरसि। जनयन्—जायमानस्त्वम्, अर्कैः—स्वतेजोभिः, सूर्यम् अपिन्वः—पूरयसि ॥ २ ॥

Thy sweet intoxicating streams flow, when thou, being cleansed, passest through the woollen strainer; O purified Soma, thou flowest to the cows' milk; no sooner born than thou dost fill the sun with splendours.—2.

**सा०-भा०।** 'ते' तव स्वभूता 'मधुमतीः' मधुमत्यः 'धाराः प्रासृग्रन्' तदा प्रसृज्यन्ते 'यद्' यदा 'पूतः' वसतीवरीभिस्त्वम् 'अव्यम्' अवि-भवं 'वारं' वालं पवित्रम् 'अत्येषि' अतीत्य गच्छसि। किञ्च, हे 'पवमान' शोध्यमान सोम! 'गोनां' गवां 'धाम'—धीयते पीयत इति धाम पयः, तत् लक्षीकृत्य 'पवसे' क्षरसि। ततः 'जनयन्' जायमानस्त्वम् 'अर्कैः' अर्चनीयैः स्वतेजोभिः 'सूर्यम्' आदित्यम् 'अपिन्वः' पूरयसि ॥ ३ ॥

२। ऋ० सं० ६ म० ६७ सू० ३१ ऋ०। ṚV. reads (1) **'वारान् यत् पूतो अत्येष्यव्यान्'** instead of **'वारं यत् पूतो अत्येष्यव्यम्'** and (2) **'जज्ञानः'** (regular modified form) for **'जनयन्'** (corrupt form).

प्रासृग्रन्—are poured, sent forth; 'are let loose'—*Wils.*

गोनां धाम—Sāyaṇa derives धाम from the rt. धेट् *to suck* I. P; the derivative sense being, acc. to him, the milk which is suck or drunk (*dhīyate*—pīyate).

अपिन्वः—imperf. (लङ्) of rt. पिन्व *to fatten*, 1. p.

---

इन्द्रप्रमतिर्वासिष्ठ ऋषिः।

१ २ ३क २र ३ १
प्र गायताभ्यर्चाम देवान्त्-
२र ३ १ २र
सोमं हिनोत महते धनाय।
२ १ २ ३ २ ३ २ ३ २ १
स्वादुः पवतामति वारमव्य-
१ २ ३ १ २ ३ १ २र
मासीदतु कलशं देव इन्दुः ॥३॥५३५॥

प्र । गायत । अभि । अर्चाम । देवान् । सोमम् । हिनोत । महते । धनाय । स्वादुः । पवताम् । अति । वारम् । अव्यम् । आ । सीदतु । कलशम् । देवः । इन्दुः ॥ ३ ॥

भाष्यसारः । हे स्तोतारः, सोमं प्रगायत । वयं देवान् अभ्यर्चाम । महते धनाय—प्रभूतं धनं प्राप्तुम्, सोमं हिनोत—अभिषवार्थं प्रेरयत । स्वादुः सोमः अव्यं वारम्—मेषरोमनिर्मितं पवित्रम्, अति-पवताम्—अतिक्रम्य क्षरतु । देवः—दीप्यमानः, इन्दुः—सोमः, कलशम्—द्रोणकलशम्, आ-सीदतु—अधितिष्ठतु ॥ ३ ॥

Sing praises (to the Soma), let us sing to the gods, urge (him) on for great wealth, let the delicious (Soma) flow through the woollen strainer; let brilliant Indu be seated in the pitcher.—3.

**सा०-भा० ।** हे स्तोतारः! 'प्र-गायत' 'सोमं' प्रकर्षेणाभिष्टुत । वयन्तु 'देवान्' 'अभ्यर्चामः' (?) अभिष्टुमः । यद्वा, देवानभ्यर्चामोऽभ्यर्चत पुरुषव्यत्ययः । किञ्च, 'महते धनाय' महत् प्रभूतं धनं प्राप्तुं सोमं 'हिनोत' अभिषवार्थं प्रेरयत । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (पा० २,३,१४) इति धनशब्दस्य चतुर्थी । ततः 'स्वादुः' मधुरः सोमः 'अव्यम्' अवि-भवं 'वारं' वालं पवित्रम् 'अति-पवताम्' अतीत्य क्षरतु । 'देवः' द्योतमानः सोमः 'इन्दुः' दीप्तः सन् 'कलशं' द्रोणम् 'आ-सीदतु' आभिमुख्येन तिष्ठतु ॥ ३ ॥

३ । ऋ० सं० ९ म० ९७ सू० ४ ऋ० । Ṛ.V. reads (1) **'पवाते'** instead of **'पवताम्'**; (2) **'देवयुर्न'** in the place of **'देव इन्दुः'**.

---

वसिष्ठ ऋषिः ।

१ २ ३ १ २ ३ १ २र ३
प्र हिन्वानो जनिता रोदस्यो
२ ३ १ २र ३ १ २
रथो न वाजं सनिष्यन्नयासीत् ।
२ ३ २ ३ १ २ ३ १ २ ३
इन्द्रं गच्छन्नायुधा संशिशानो
२ ३ २ ३ १ २ ३ १ २
विश्वा वसु हस्तयोरादधानः ॥४॥५३६॥

प्र । हिन्वानः । जनिता । रोदस्योः । रथः । न । वाजम् । सनिष्यन् । अयासीत । इन्द्रम् । गच्छन् । आयुधा । समऽशिशानः । विश्वा । वसु । हस्तयोः । आ । दधानः ॥ ४ ॥

भाष्यसारः । **प्र-हिन्वानः—अध्वर्युभिरभिषवार्थं प्रेर्यमाणः, रोदस्याः—द्यावा-पृथिव्योः, जनिता—जनयिता, सोमः, वाजम्—अन्नम्, सनिष्यन्—दातुमिच्छन्, इन्द्रं गच्छन् आयुधा—आयुधानि, संशिशानः—सम्यक् तीक्ष्णीकुर्वन्, विश्वा—विश्वानि सर्वाणि, वसु—धनानि, हस्तयोः आदधानः अस्मभ्यं दातुम्, रथः न—इव, क्षिप्रं प्रायासीत्—प्रगच्छति ॥ ४ ॥**

Sent forth (by the Adhvaryus), (the Soma) the progenitor of heaven and earth, proceeds, like a car, desiring to win food, reaching Indra, sharpening his weapons, bearing all treasures in hands.—4.

**सा०-भा० ।** 'प्र-हिन्वानः' अध्वर्युभिः प्रेर्यमाणः 'जनिता' उत्पादयिता 'रोदस्योः' द्यावापृथिव्योः—तयोर्जनयितृत्वं वृष्टिप्रदानहविःप्रापणाभ्याम् । तादृक् सोमो 'वाजम्' अन्नम् 'सनिष्यन्' दास्यन् 'प्रायासीत्' प्रगच्छति । 'इन्द्रं गच्छन्' प्राप्नुवन् 'आयुधा' आयुधानि 'संशिशानः' सम्यक् तीक्ष्णीकुर्वन् इन्द्रं सहायगमनार्थं तीक्ष्णायुधः सन् 'विश्वा' सर्वाणि 'वसु' वसूनि धनानि 'हस्तयोरा-दधानः' अस्मभ्यं दानाय एवं कुर्वन् प्रायासीत् ॥ ४ ॥

४ । ऋ० सं० ६ म० ६० सू० १ ऋ० ।

जनिता रोदस्योः—Sāyaṇa explains—'the Soma is the generator of earth by giving rain and of heaven by conveying the oblation to the gods in heaven ; cf. 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः'—SV. I. 527.

सनिष्यन्—fut. pt. of rt. सन् *to gain*, 8. p.

———

मृडीको वासिष्ठ ऋषिः ।

२ ३ २ ३ १ २ ३ १ २ ३
तद्वद्यदी मनसो वेनतो

१ २र ३ १ २ ३ १ २र
वागज्येष्ठस्य धर्मन् द्युक्षोरनीके ।

१ २ ३ २ ३ १ २ ३ २उ
आदीमायन् वरमा वावशाना
३ १ २ ३ २ ३ २ ३ १ २
जुष्टं पतिं कलशे गाव इन्दुम् ॥ ५ ॥ ५३७ ॥

तक्षत् । यदि । मनसः । वेनतः । वाक् । ज्येष्ठस्य । धर्मन् । द्युक्षोः । अनीके । आत् । ईम् । आयन् । वरम् । आ । वावशानाः । जुष्टम् । पतिम् । कलशे । गावः । इन्दुम् ॥ ५ ॥

भाष्यसारः । वेनतः—कामयमानस्य, मनसः—स्तोतुः, वाक्—स्तुतिः, यदि—यदा, एनं तक्षत्—संस्करोति स्तौति, धर्मन्—यज्ञे, ज्येष्ठस्य—प्रशस्यस्य, द्युक्षोः—दीप्तस्तुतिकस्य सवनस्य, अनीके—मुखे, यज्ञेषु सवनमुखे इत्यर्थः । आत्—अनन्तरमेव, वरम्—श्रेष्ठम्, जुष्टम्—देवसेवायै पर्याप्तम्, सर्वेषां पतिम्, कलशे स्थितम्, ईम्—एनम्, इन्दुम्—सोमम्, वावशानाः—कामयमानाः, गावः, आयन्—आगच्छन्ति ॥५॥

When the hymn of the devoted mind glorifies him, at the commencement of the most splendid extraction ceremonies in the Soma sacrifices, then the eager cows come to the excellent, exhilarant Indu, the lord of all, resting in the pitcher.—5.

**सा०-भा० ।** 'वेनतः'—वेनो वेनतेः कान्तिकर्मणः इति यास्कः—कामयमानस्य 'मनसः'—मनो मन्यतेः स्तुतिकर्मणः—स्तोतुः 'वाक्' स्तुतिलक्षणा यद्येनं 'तक्षत्' संस्करोति । 'धर्मन्' धारके यज्ञे 'ज्येष्ठस्य' प्रशस्यस्य 'द्युक्षोः' दीप्तस्तुतिकस्य—टु क्षु शब्दे ( अ० प० ) इत्यस्मात् कुप्रत्ययः, सवनस्य 'अनीके' प्रमुखे—यदा यज्ञेषु सवनमुखे स्तोतुर्वाक् सोमं स्तौतीत्यर्थः । 'आ' अनन्तरमेव 'वरं' वरणीयं 'जुष्टं' देवानां मदाय पर्याप्तं 'पतिं' सर्वस्य पालकं 'कलशे' स्थितम् 'इन्दुम्' 'ईम्' एनं सोमं 'वावशानाः' कामयमानाः 'गावः' 'आयन्' पयसा स्वीयेन मिश्रयितुमागच्छन्ति ॥ ५ ॥

५ । ऋ० सं० ९ म० ९७ सू० २२ ऋ० । Ṛ̣V. reads 'धर्मणि' for 'धर्मन्' and 'द्योरनीके' in the place of 'द्युक्षोरनीके' .

तक्षत्—*for* तक्षति 'sanctifies'—*Wils.* *Orig.* to fashion.

वेनतः मनसः वाक्—The praise of the zealous worshipper—*Wils.*

द्युम्नोरनीके—'In presence of heaven and earth'—*Grfth.*; for अनीके *vide* our notes on SV. I. 13; I. 89. द्युम्नो:—of brilliant praise; occurs only in this verse.

धर्मन् *loc.*—for धर्मणि, in the sacrifice. ईम्—him, *see* our notes on SV. I. 94.

वावशाना:—desiring, eager,—*Sāy. Wils.*; 'loudly lowing'—*Grfth.* 'वावशानो वष्टेर्वा वाश्यतेर्वा'—drvd. fr. rt. वश् *to desire*, 2. p.—यङ्लुक्, pres. PT. with शानच्, or fr. rt. वाश् *to bellow* 4. Ā, Nir. 5. 1.

गाव आयन्—The cows come to the Soma in order to mix their milk with it.

---

नोधा ऋषिः।

३ १ २ ३ १ २ ३
साकमुक्षो मर्जयन्त स्वसारो
२ ३ १ २ ३ २ ३ १ २
दश धीरस्य धीतयो धनुत्रीः।
२ ३ १ २ ३ १ २र ३
हरिः पर्यद्रवज्जाः सूर्यस्य
१ २ ३ २ ३ २ ३ २
द्रोणं ननक्षे अत्यो न वाजी ॥ ६ ॥ ५३८ ॥

साकम्ऽउक्षः। मर्जयन्त। स्वसारः। दश। धीरस्य। धीतयः। धनुत्रीः। हरिः। परि। अद्रवत्। जाः। सूर्यस्य। द्रोणम्। ननक्षे। अत्यः। न। वाजी ॥ ६ ॥

भाष्यसारः। साकमुक्षः—सहयोगेन सेचनशीलाः, स्वसारः—इतस्ततः सुष्ठु सरन्त्यः गच्छन्त्यः, धीरस्य—प्राज्ञस्य देवैर्ध्यातव्यस्य वा सोमस्य, धनुत्रीः—प्रेरयित्र्यः, दश धीतयः—अङ्गुलयः, मर्जयन्त—सोमं शोधयन्ति। हरिः—हरितवर्णः सोमः, सूर्यस्य जाः—जायाः दिशः, पर्यद्रवत्—परितः गच्छति। अत्यः—अतनशीलः क्षिप्रगमनः, वाजी—अश्वः, न—इव, सोमः द्रोणं—द्रोणकलशम्, ननक्षे—गच्छति ॥ ६ ॥

The freely-moving (svasāraḥ) ten fingers sprinkling together, urging the wise (Soma) purify (the Soma); the green (Soma) flows round the wives of the sun, he proceeds to the pitcher like a speedy courser.—6.

**सा०-भा०।** 'साकमुक्षः'—उक्ष सेचने (भ्वा० प०) क्विपि रूपम्, तादृश्यः 'स्वसारः' कर्मकरणार्थमितस्ततः सुष्ठु गच्छन्त्यः अङ्गुलयः 'मर्जयन्त' सोमं शोधयन्ति, मृजु शौचालङ्कारयोः (चु० उभ०)। ताः दशसंख्याकाः 'धीतयः'—अङ्गुलिनामैतत् (नै० २,५,७), अङ्गुलयः 'धीरस्य' समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य 'धनुत्रीः' प्रेरयित्र्यो भवन्ति। ततः 'हरिः' हरितवर्णः सोमः 'सूर्यस्य' 'जाः' प्रादुर्भूता जाया दिशस्ताः 'पर्यद्रवत्' परितो गच्छति। सूर्यस्य तेजसा हि आविर्भवन्तीति दिशां तस्य जायात्वम्। 'अत्यः' अतनशीलः 'वाजी न' अश्व इव स्थितः सोमः 'द्रोणं' कलशं 'ननक्षे' व्याप्नोति—नक्षतिर्व्याप्तिकर्मा (नै० २,१८,२॥ ६॥

६। ऋ० सं० ९ म० ९३ सू० १ ऋ०। उ० आर्चि० ६, २, १५, १।

स्वसारः—the sisters, *refers to* the fingers; *see* notes on नप्त्रीः, SV. I. 476. Sāyaṇa explains etymologically—'कर्मकरणार्थमितस्ततः सुष्ठु गच्छन्त्यः', moving well or freely in performing works; dr. fr. rt. सृ *to go*, I. P.

धीतयः—Grfth. has made a blunder in rendering the term as 'thoughts'; the word *dhītayaḥ* is clearly read in the list of the synonyms of fingers, Ngh. 2. 5.

सूर्यस्य जाः—Sāyaṇa explains *jāḥ* by *Jāyāḥ* (wives); the quarters of the horizon are called the sun's wives because they are made manifest by the light of the sun; dr. fr. rt. जन् *to be born*. अत्यः—swift; fr. rt. अत् *to move continually* (सातत्यगमने), I. p.

---

काण्वोघौर ऋषिः।

२ ३ १ २ ३ १ २ ३ २ ३
अधि यदस्मिन् वाजिनीव शुभः
१ २ ३ २ ३ २ ३ १ २र
स्पर्धन्ते धियः सूरे न विशः।
३ १ २ ३ १ २ ३ १ २
अपो वृणानः पवते कवीयान्
३ १ २र ३ १ २ ३ १ २
व्रजं न पशुवर्धनाय मन्म ॥ ७ ॥ ५३९ ॥

अधि । यत् । अस्मिन् । वाजिनि । इव । शुभः । स्पर्धन्ते । धियः । सूरे । न । विशः । अपः । वृणानः । पवते । कवीयान् । व्रजम् । न । पशुऽवर्धनाय । मन्म ॥ ७ ॥

भाष्यसारः । यत्—यदा, अस्मिन्—सोमे, वाजिनि—अश्वे, इव, शुभः—शोभासम्पादका अलङ्काराः, सन्ति, सूरे—सूर्ये, न—इव, विशः—प्रजाः रश्मयः, तथा धियः—अङ्गुलयः, अधि-स्पर्धन्ते—एनं सोमम् अहं पूर्वं शोधयामि इति परस्परं स्पर्धमानाः उपतिष्ठन्ते। कवीयान्—स्तोतॄन् इच्छन् सोमः, अपः—वसतीवरीः, वृणानः—आच्छादयन्, पशुवर्धनाय, मन्म—मननीयम्, व्रजं न—गवां गोष्ठम् इव, यथा गोपालो तदर्थं गोष्ठं गच्छति तथा देवप्रीतये पात्रेषु पवते—क्षरति ॥ ७ ॥

Like the decorations in a horse and like the splendours in the sun, the fingers vie with each other in (purifying) this (Soma), robed in the waters, the most wise (Soma) flows, as a cowherd goes to the pleasant pasture ground for the growth of the cattle.—7.

**सा०-भा० ।** 'यद्' यदा, 'अस्मिन्' सोमे, 'वाजिनीव शुभः' अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति, यदा वास्मिन् सोमे 'सूरे न' सुर्ये न—यथा सूर्ये 'विशः' रश्मयः उदिता भवन्ति, तदा 'धियः' अङ्गुलयः, 'अधि-स्पर्धन्ते'—अहं पुरस्ताच्छोधयाम्यहं पुरतः शोधयामीत्यहमहमिकया उपतिष्ठन्ते। ततोऽयं सोमः 'अपः' वसतीवरीः 'वृणानः' आच्छादयन् 'पवते' पात्रेषु क्षरति कलशानभिगच्छति। कीदृशः? 'कवीयान्' कविरिवाचरन्। यद्वा, कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः—'व्रजं न' 'मन्म' मननीयं बोद्धव्यं रक्षितव्यं गवां गोष्ठं 'पशुवर्धनाय' गोपालः परिगच्छति यथा, तथा देवानां प्रीणनाय पात्राणि पवते ॥ ७ ॥

७। ऋ० सं० ६ म० ६४ सू० १ ऋ०। Ṛ V. reads 'सूर्ये' for 'सूरे' and 'कवीयन्' instead of 'कवीयान्'।

विशः—men, *here* refers to the rays of the sun ; *see* his epithet सहस्रभानवः, SV. I. 458.

कवीयान्—wise, or desiring the worshippers. In the Ṛ V. कवीयन् is the gram. correct form ; so seems to be the modified rdg.

---

मन्युर्वासिष्ठ ऋषिः ।

१ २ ३ १ २ ३ १ २ ३
इन्दुर्वाजी पवते गोन्योघा
२ ३ २ ३ २ ३ २ ३ १ २
इन्द्रे सोमः सह इन्वन्मदाय ।
२ ३ २ ३ १ २ ३ १ २र ३
हन्ति रक्षो बाधते पर्यरातिं
१ २ ३ २ ३ १ २ ३ १ २
वरिवस्कृण्वन् वृजनस्य राजा ॥८॥५४०॥

इन्दुः । वाजी । पवते । गोऽन्योघाः । इन्द्रे । सोमः । सहः । इन्वन् । मदाय । हन्ति । रक्षः । बाधते । परि । अरातिम् । वरिवःऽकृण्वन् । वृजनस्य । राजा ॥ ८ ॥

भाष्यसारः । वाजी बलवान्, इन्दुः—सोमः, गोन्योघाः—निम्नाभिमुखस्रवणशीलरसभूयिष्ठः, इन्द्रे, सहः—बलम्, इन्वन्—प्रेरयन्, मदाय—तस्य हर्षजननाय, पवते—क्षरति। वृजनस्य राजा—बलस्य ईश्वरः, वरिवः कृण्वन्—स्तोतॄणां वरणीयं धनं कुर्वन्, सोमः रक्षः—राक्षसान् हन्ति, तथा अरातिम्—शत्रून् परि-बाधते ॥ ८ ॥

The mighty Soma, an accumulation of down-pouring juices, flows on, instilling strength into Indra for his delight; the king of strength, bringing desirable wealth, kills the demons and oppresses the enemy.—8.

**सा० भा० ।** 'इन्दुः' क्षरणशीलः 'वाजी' बलवान् 'गोन्योघाः' गमनशीलनीचीनाग्ररससङ्घातः 'इन्द्रे' 'सहः' बलकरं रसम् 'इन्वन्' प्रेरयन् 'सोमः' 'मदाय' तस्य मदार्थं 'पवते' क्षरति। किञ्च, 'रक्षः' रक्षःकुलं 'हन्ति' हिनस्ति। किञ्च, 'अरातीः' (?) अरातीन् शत्रून् 'परि-बाधते' परितः संहरति। कीदृशः ? 'वरिवः' वरणीयं धनं 'कृण्वन्' स्तोतॄणां कुर्वन् 'वृजनस्य' बलस्य 'राजा' ईश्वरः सोम इति ॥ ८ ॥

८। ऋ० सं० ६ म० ९७ सू० १० ऋ०। उ० आर्चि० ३, २, २०, १ ।

गोन्योघाः—having quantities of juice flowing down.—*Wils.* This word occurs only in this verse.

वृजनस्य—the word is a syn. of बल (strength), Ngh. 2. 9.

कुत्स ऋषिः।

३ २ ३ १ २ ३ १ २१
अया पवा पवस्वैना वसूनि
३ १ २ ३ १ २ ३ १ २
मांश्चत्व इन्दो सरसि प्र धन्व।
३ २ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्य वातो न जूतिं
२ ३ १ २ ३ १ २ ३ १ २
पुरुमेधाश्चित्तकवे नरं धात्॥ ६ ॥ ५४१ ॥

अया। पवा। पवस्व। एना। वसूनि। मांश्चत्वे। इन्दो। सरसि। प्र। धन्व। ब्रध्नः। चित्। यस्य। वातः। न। जूतिम्। पुरुऽमेधाः। चित्। तकवे। नरम्। धात्॥ ९ ॥

भाष्यसारः। अया—अनया, पवा—पूयमानया धारया, एना—एतानि वसूनि, पवस्व—क्षर। हे इन्दो, मांश्चत्वे सरसि—मननीये वसतीवरीनामके उदके, प्र-धन्व—प्रक्षर। यस्य—यं सोमम्, ब्रध्नश्चित्—सर्वेषां मूलस्वरूप आदित्यः, वातो न—वायुरिव, जूतिम्—वेगं कुर्वन्, पुरुमेधाश्चित्—बहुप्रज्ञः इन्द्रः, तकवे—अभिगच्छताम्, नरम्—पुत्रम्, धात्—दधातु॥ ६ ॥

With this purified stream pour forth those riches (on us); flow on, Indu, to the pleasant water; whom (the Soma), the sun, the illuminator of all (or the root of all) swift as the wind and Indra, the source of wisdom (or the object of many sacrifices), approach; may he grant a son.—9.

**सा०-भा०।** हे सोम! 'अया' अनया 'पवा' पवमानया धारया सह 'एना' एतानि 'वसूनि' धनानि 'पवस्व' क्षर। पवा—पूञ् पवने (क्र्या० उ०) 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३,२,१०१) इति विच् प्रत्ययः, आर्धधातुकलक्षणो गुणः। 'सावेकाचः' (पा० ६,१,१६८) इति तृतीयाया उदात्तत्वम्। तथा हे 'इन्दो'! त्वं 'मांश्चत्वे' मन्यमानानां स्नातके 'सरसि' उदके वसतीवर्याख्ये कलशे 'प्र-धन्व' प्रगच्छ। ततः 'यस्य' यं 'ब्रध्नश्चित्' सर्वेषां प्रज्ञापकः मूलभूतो वा आदित्यः 'वातो न' वात इव 'जूतिं' वेगं कुर्वन्। किञ्च, 'पुरुमेधाश्चित्' बहुविध-प्रज्ञ इन्द्रश्च 'तकवे'—तकतिर्गति-

कर्मसु पठितः। अस्मादौणादिक उन्प्रत्ययः। 'यस्ये'ति (पा० २,३,३७) कर्मणि षष्ठी। 'न लोकाव्यये'ति (पा० २,३,६९) षष्ठीप्रतिषेधश्छान्दसः। सोममभिगच्छतामित्यर्थः॥ ९॥

९। ऋ० सं० ९ म० ६७ सू० ५२ ऋ०। उ० आर्चि० ४, १, २१, १।

मांश्चत्वे—this word occurs very rarely. Sāy. explains as मन्यमानानां चातके (scaring away) (?) those who are respectful. In criticising this explanation, Prof. Wilson suggests, 'Perhaps we ought to read *manyamānānāṃ cetake* (who is mindful of the adorers or those who are respectful) or *abhimanyamānānāṃ vā cātake* (the destroyer of the arrogant)'. *See* Sāyaṇa on ṚV. vii. 44. 3. मांश्चत्व is found among the syns. of horse, Ngh. 1. 14; so also the word ब्रध्नः, *here* it is explained as the sun, *see* SV. I. 458.

धन्व— imp. of rt. धन्व *to go*.

तकवे—fr. rt. तक *to go*, Ngh. 2. 14, this word occurs only in this verse.

---

पराशर ऋषिः।

२ १ २र ३ १ २
महत्तत्सोमो महिषश्चका-
३ १ २र ३ २
रापां यद्गर्भोऽवृणीत देवान्।
१ २ ३ २ ३ १ २ ३ १
अदधादिन्द्रे पवमान ओजो-
२र ३ २ ३ २ ३ १ २
ऽजनयत् सूर्ये ज्योतिरिन्दुः॥१०॥५४२॥

महत्। तत्। सोमः। महिषः। चकार। अपाम्। यत्। गर्भः। अवृणीत। देवान्। अदधात्। इन्द्रे। पवमानः। ओजः। अजनयत्। सूर्ये। ज्योतिः। इन्दुः॥ १०॥

भाष्यसारः। महिषः—महान्, अपां गर्भः—उदकानां गर्भभूतः जनकत्वात्, सोमः महत् तत् कर्म चकार। किं किं महत् कर्म तदुच्यते—देवान् अवृणीत—समभजत। पवमानः—पूयमानः सोमः, इन्द्रे ओजः—बलम्, अदधात्। इन्दुः—सोमः, सूर्ये ज्योतिः अजनयत्॥ १०॥

The mighty (or, adorable) Soma, the germ of the waters, has performed the great work: he has nourished the gods, being purified,

has infused strength to Indra; Indu has created light in the sun.—10.

**सा०-भा० ।** 'महिषः' महान् पूज्यो वा 'सोमः' 'महत्' प्रभूतं 'तत्' कर्म 'चकार' अकरोत् । किं तत् ? 'अपां गर्भः' उदकानां गर्भभूतः—जनयितृत्वाज्जन्यत्वाद्वा स सोमः देवान् 'अवृणीत' समभजतेति 'यत् तत्' कृतवान् इति । किञ्च, 'पवमानः' पूयमानः सोमः, 'ओजः' सोमपानजन्यं बलम् 'इन्द्रे' अदधात्, न्यधात् । तथा 'इन्दुः' सोमः सूर्ये 'ज्योतिः' तेजः अजनयत् ॥ १० ॥

१० । ऋ० सं ९ म० ९७ सू० ४१ ऋ० । उ० आर्चि० ५, २, १, ३ ।

---

कश्यप ऋषिः ।

१ २ ३ २ ३ २ ३ २ ३ २
**असर्जि वक्वा रथ्ये यथाजौ**
३ २ ३ १ २ ३ १ २ ३ १
**धिया मनोता प्रथमा मनीषा ।**
२ ३ १ २ ३ २ ३ २ ३ १ २
**दश स्वसारो अधि सानो अव्ये**
३ २ ३ २ ३ १ २ ३ १ २
**मृजन्ति वह्निं सदनेष्वच्छ ॥११॥५४३॥**

असर्जि । वक्वा । रथ्ये । यथा । आजौ । धिया । मनोता । प्रथमा । मनीषा । दश । स्वसारः । अधि । सानौ । अव्ये । मृजन्ति । वह्निम् । सदनेषु । अच्छ ॥ ११ ॥

भाष्यसारः । वक्वा—शब्दायमानः, पवमानः सोमः, आजौ—यज्ञे, धिया—स्तोत्रेण सह, असर्जि—पात्रेषु सृज्यते, रथ्ये—रथयोग्ये संग्रामे अश्व इव । मनोता—देवानां मनःप्रीतिकरः, मनीषा—मनोऽभिमतः सोमः असर्जीत्यन्वयः । दश स्वसारः—दश-संख्यकाः अङ्गुलयः, सदनेषु अच्छ—पात्राभिमुखम्, वह्निं—यज्ञस्य वाहकं सोमम्, अधिसानौ—समुच्चे, अव्ये—मेषरोमनिर्मिते पवित्रे, मृजन्ति—शोधयन्ति ॥ ११ ॥

As in a battle of chariots, a horse is sent forward, so in a sacrifice the roaring Soma, pleasant to the mind, to which the




minds of the gods are fastened, is sent forth with praise; the ten sisters (fingers) urge him, the carrier of sacrifices, through the elevated filter of wool towards the pitchers where he rests.—11.

**सा०-भा० ।** 'वक्वा' शब्दायमानः,—वच परिभाषणे ( अदा० प० ) वनिप् । तादृशः पवमानः सोमः, 'आजौ'—अजन्ति कर्मार्थमृत्विज इति आजिर्यज्ञः—तस्मिन्, 'धिया' कर्मणा स्तोत्रेण वा साकम्, 'असर्जि' पात्रेषु सृज्यते । तत्र दृष्टान्तः—'रथ्ये यथा' रथ्ये रथार्हे आजौ, सङ्ग्रामनामैतत्—अजन्ति प्रत्तिपन्त्यायुधान्यत्रेति तस्मिन्, अश्वो यथा सृज्यते, तद्वत्, 'मनोता' यस्यां देवानां मनांसि प्रोतानि सा । तथाच ब्राह्मणम्—'तस्यां हि तेषां मनांस्योतानि' इति । 'प्रथमा' मुख्या, 'मनीषा' मनस ईषा मनीषा स्तुतिः तद्वान् । यद्वा, धिया विदधाति स्तुतिरिति धीः स्तोता तेन स्तुतिः प्रेर्यते । किञ्च, 'दश स्वसारः' दशसङ्ख्याका अङ्गुलयः, 'सदनेषु' यज्ञगृहेषु, पात्राण्यभिमुखीकृत्य 'वह्निं' वोढारं सोमं सानौ समुच्छ्रिते । अधिः सप्तम्यर्थानुवादकः । 'अव्ये' अवि-भवे अविबालेन कृते पवित्रे, 'अञ्जन्ति' प्रेरयन्ति ॥ ११ ॥

११ । ऋ० सं० ६ म० ६१ सू० १ ऋ० ।

वक्वा—occurs also in Ṛ V. i. 141. 7, cf. 'ह्वारी न वक्वा जरणा अनाकृतः', where *vakvā* is explained by *bahu-vaktā*, a much-speaker.

मनोता—on whom the mind of the gods is attached or fixed i. e., devoted 'देवानां मनो यत्र उतम् सम्बद्धम्'—*Sāy.* on Ṛ V. vi. 1. 1, where the text is 'त्वं हि अग्ने प्रथमो मनोता'; again the term is fully explained in *Ait. Br.* 2. 10. 1; 'देवानां मनांसि उतानि—दृढप्रविष्टानि यस्यां देवतायाम्' the deity on whom the minds of gods are fastened, firmly concentrated. This word occurs also in Ṛ V. ii. 9. 4.

स्वसारः—*rfs.* to the ten fingers; *vide* notes on SV. 1. 538, and the *etym.* suggested by Sāy. in the com. there.

वह्निः—is *here* used in etym. sense—the bearers of oblations.

---

प्रस्कण्व ऋषिः ।

३ २ ३ २ ३ २ ३ १ २
अपामिवेदूर्मयस्तर्तुराणाः
१ २ ३ १ २ ३ २ ३ १ २
प्र मनीषा ईरते सोममच्छ ।

[ ६४१ ]

३ २ ३ १ २ ३ २ २ १
नमस्यन्तीरुप च यन्ति सं
२र ३ २ ३ १ २
चाच विशन्त्युशतीरुशन्तम् ॥१२॥५४४॥

अपाम् । इव । इत् । ऊर्मयः । तर्तुराणाः । प्र । मनीषाः । ईरते । सोमम् । अच्छ । नमस्यन्तीः । उप । च । यन्ति । सम् । च । आ । च । विशन्ति । उशतीः । उशन्तम् ॥ १२ ॥

भाष्यसारः । **अपाम्—उदकानाम्, ऊर्मय इव, तर्तुराणाः—त्वरमाणाः, ऋत्विजः, सोमम् अच्छ—प्रति, मनीषाः—स्तुतीः, ईरते—प्रेरयन्ति । ता उशतीः—कामयमानाः, स्तुतयः, नमस्यन्तीः—नमस्कुर्वन्त्यः, उशन्तम्—कामयमानं सोमम्, उप-यन्ति—समीपे गच्छन्ति, संयन्ति—सङ्गतो मिलिता भवन्ति, आ-विशन्ति च ॥ १२ ॥**

The priests, hurrying like the waves of the waters, send hymns towards Soma ; they, making obeisance, longing for him who longs for them, approach him, get united with him and enter him.—12.

**सा०-भ० ।** 'अपामिव' यथा उदकानाम् 'ऊर्मयः' त्वरन्ते । 'इत्' इति पूरणः । तद्वत् 'तर्तुराणाः' कर्मणि देवान् स्तोतुं त्वरमाणाः । तुर त्वरणे जौहोत्यादिकः (आ०). यङ्लुगन्तस्य शानचि रूपम् । अभ्यासस्य उवर्णस्य रेफादेशश्छान्दसः, अभ्यस्तस्वरः । तादृशा ऋत्विजः, 'मनीषाः' मनस ईशित्रीः स्तुतीः, 'सोममच्छ' सोमं प्रति प्रेरयन्ति । 'नमस्यन्तीः' नमस्यन्त्यः सोमं पूजयन्त्यः सत्यः, तम् 'उप-यन्ति च' उप समीपे गच्छन्ति । तमेव 'संयन्ति' च सङ्गच्छन्ते । च वा योगे प्रथमा (पा० ८,१,५९) इति न निघातः । 'उशतीः' कामयमानाः स्तुतयः, 'उशन्तं' कामयमानं सोमम्, 'आ-विशन्ति च' प्रविशन्ति च ॥ १२ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्य सप्तमः खण्डः । षष्ठप्रपाठकस्य च प्रथमार्धे पञ्चमी दशतिः ॥

इति त्रैष्टुभम् ।

षष्ठप्रपाठकस्य प्रथमार्धः समाप्तः

१२ । ऋ० सं० ९ म० ९५ सू० ३ ऋ० ।

तर्तुराणाः—for mg. and dr. *see* com. above ; this word occurs only in this verse. मनीषाः—praises winning the mind or heart ; *see* notes on SV. 1. 525. उशतीः, उशन्तम्—p. p. forms of rt. वश् *to desire*, 2. u.

अथ पञ्चमाध्यायस्य अष्टमः खण्डः । षष्ठप्रपाठकस्य च द्वितीयार्धे प्रथमा दशतिः ।

श्यावाश्व ऋषिः । अनुष्टुप् छन्दः* ।

३ १ २ ३ १ २ ३ १२ ३१२
पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
२ ३ १ २ ३ १ २ ३क २र
अप श्वानं श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ १ ॥५४५॥

पुरःऽजिती । वः । अन्धसः । सुताय । मादयित्नवे । अप । श्वानम् । श्नथिष्टन । सखायः । दीर्घऽजिह्व्यम् ॥ १ ॥

भाष्यसारः । हे सखायः—स्तोतारः, वः—यूयम्, पुरोजिती—पुरोवर्त्तिजयस्य, अन्धसः---सोमरूपस्य अन्नस्य, सुताय--अभिषुताय, मादयित्नवे—मादकाय रसाय, दीर्घजिह्व्यं श्वानम्, अप-श्नथिष्टन—अपबाधध्वम् ॥ १ ॥

For the protection of the extracted exhilarating Soma-juice which has placed victory before you, drive off, O friends, the long-tongued dog.—1.

**सा०-भा० ।** 'पुरोजिती'तिमुख्यास्तु नवर्चो बृहतीत्यसौ ।
'आ हर्यताय धृष्णवे' शिष्टा अनुष्टुभः स्मृताः ॥
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे ॥

हे 'सखायः' सखिभूताः समानख्याना वा हे स्तोतारः! 'वः' यूयम्, 'पुरोजिती'—षष्ठ्याः पूर्वसवर्णदीर्घः—पुरःस्थितजयस्य, 'अन्धसः' अदनीयस्य सोमस्य, स्वभूताय 'सुताय' अभिषुताय, 'मादयित्नवे' अत्यन्तं मदकराय, रसाय, 'दीर्घजिह्व्यम्'—दीर्घा जिह्वा अस्य स दीर्घजिह्वी –'दीर्घजिह्वी च छन्दसि' (पा० ४, १, ६६) इति ङीषन्तत्वेन निपातितः । तादृशं 'श्वानं' च 'अप-श्नथिष्टन' अपश्नथयत, अपबाधध्वम् । यथा श्वा राक्षसा वा सुतं सोमं न लिहन्ति तथा कुरुतेत्यर्थः ॥ १ ॥

---

* All the verses of this decade are in *Anuṣṭup* metre except the 7th which is in *Bṛhatī*.

१। ऋ० सं० ९ म० १०१ सू० १ ऋ०। उ० आर्च्चि० १, १, १८, १।

श्वानम् अप अथिष्टन—destroy or prevent the dogs or Rakshasas who disturb and defile sacrifices from lapping the Soma.

पुरोजिती—who has placed victory before; this comp. occurs only in this verse.

---

ययातिर्नाहुष ऋषिः।

३ २ ३ २ ३ २उ ३ १ २ ३ १ २
**अयं पूषा रयिर्भगः सोमः पुनानो अर्षति।**
१ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ २
**पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥२॥५४६॥**

अयम्। पूषा। रयिः। भगः। सोमः। पुनानः। अर्षति। पतिः। विश्वस्य। भूमनः। वि। अख्यत्। रोदसी इति। उभे इति॥ २॥

भाष्यसारः। **पूषा—पोषकः, भगः—भजनीयः, पुनानः—पूयमानः पवित्रेण शोध्यमानः, विश्वस्य भूमनः—निखिलभूतजातस्य, पतिः सोमः, रोदसी—द्यावापृथिव्यौ, व्यख्यत्—विशेषेण प्रकाशयति॥ २॥**

This Soma, the cherisher (of all), the giver of wealth, enjoyable to all, the lord of all beings, when purified, flows (into the pitcher); he illumines both heaven and earth.—2.

**सा०-भा०।** 'पूषा' पोषकः सर्वेषाम्। 'भगः' भजनीयः। 'रयिः' धनहेतुः 'अयं सोमः' 'पुनानः' पवित्रे पूयमानः सन्, 'अर्षति' कलशमभिगच्छति। तथा 'विश्वस्य' सर्वस्य, 'भूमनः' भूतजातस्य, 'पतिः' पालयिता, सोमः, 'उभे' 'रोदसी' द्यावापृथिव्यौ, 'व्यख्यत्' स्वतेजसा प्रकाशयति। अनेन लोकद्वयपतित्वं सूचितम्॥ २॥

२। ऋ० सं० ९म० १०१ सू० ७ ऋ०। उ० आर्च्चि०—२, १, १६, १।

भूमनः—the multitude of all beings; a derivative of बहु; in the sense of abundant, see Ṛ̣V. ix. 74. 7.

---

यथातिर्नाहुष ऋषिः ।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
३ १ २ ३ १ २ ३ १ २
पवित्रवन्तो अक्षरन्देवान् गच्छन्तु वो मदाः ॥ ३ ॥५४७॥

सुतासः । मधुमत्ऽतमाः । सोमाः । इन्द्राय । मन्दिनः । पवित्रऽवन्तः । अक्षरन् । देवान् । गच्छन्तु । वः । मदाः ॥ ३ ॥

भाष्यसारः । **मधुमत्तमाः—अतिशयेन मधुराः, मन्दिनः—मादकाः हर्षजनकाः, पवित्रवन्तः—दशापवित्रम् अधितिष्ठन्तः, अक्षरन्—कलशेषु क्षरन्ति। शिष्टं सुगमम् ॥ ३ ॥**

The most sweet, exhilarant Somas, ex-pressed and placed on the filter, flow for Indra; may your intoxicating juices go to the gods.—3.

**सा०-भा० ।** 'मधुमत्तमाः' अतिशयेन माधुर्योपेताः, अत एव मन्दिनः मदकराः, 'सुतासः' अभिषुताः, सोमाः 'पवित्रवन्तः' पवित्रे वर्त्तमानाः सन्तः, 'इन्द्राय' इन्द्रार्थम्, 'क्षरन्' पात्रेषु क्षरन्ति। अथ प्रत्यक्षस्तुतिः—'वः' युष्माकम्, 'मदाः' मदहेतवो रसाः, 'देवान्' इन्द्रादीन् गच्छन्तु ॥ ३ ॥

३। ऋ० सं० ६म० १०१ सू० ४ ऋ० । उ० आर्चि० २, २, १५, १ ।

---

मनुः सांवरण ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २
सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
३ २ ३ १ २ ३ १ २ २क २र ३ १ २
मित्राः स्वाना अरेपसः स्वाध्याः स्वर्विदः ॥ ४ ॥५४८॥

सोमाः । पवन्ते । इन्दवः । अस्मभ्यम् । गातुवित्ऽतमाः । मित्राः । स्वानाः । अरेपसः । सुऽआध्याः । स्वःऽविदः ॥ ४ ॥

भाष्यसारः । **गातुवित्तमाः—पथप्रदर्शकाः, इन्दवः—दीप्ताः सोमाः, स्वानाः—अभिषुताः, अरेपसः—पापरहिताः, स्वर्विदः—सर्वज्ञाः । शिष्टं सुगमम् ॥ ४ ॥**

Flow forward for us the bright, extracted Soma-juices, the best knowers of right path, friendly to the gods, sinless, well-meaning omniscient.—4.

**सा०-भा० । 'गातुवित्तमाः' अतिशयेन मार्गस्य लम्भकाः, 'इन्दवः' दीप्ताः सोमाः, 'पवन्ते' अस्मभ्यं मदर्थम्, क्षरन्ति आगच्छन्ति वा । कीदृशाः ? 'मित्राः' देवानां सखिभूताः, 'स्वानाः' अभिषूयमानाः, 'अरेपसः' पापरहिताः, अत एव 'स्वाध्याः' शोभनध्यानाः, 'स्वर्विदः' सर्वज्ञाः ॥ ४ ॥**

**४ । ऋ० सं० ६ म० १०१ सू० १० ऋ० । उ० आर्चि० ४, १, २०, १ ।**

गातुवित्तमाः—for etym. and dr. *see* our notes on SV. 1. 47 ; Nir. 4. 21.

अरेपसः—sinless, spotless, *vide* notes on SV. 1. 442 ; Nir. 12. 3 ; occurs also in SV. 458. स्वर्विदः—all-knowing ; *see* SV. 1. 361 ; 1. 377.

स्वाध्यः—contemplative—*Wils.* ; benevolent—*Grfth.* ; well-intentioned i. e., kindly disposed. This word occurs only in this verse.

———

**अम्बरीष ऋजिश्वानौ द्वावृषी ।**

२ १ २ ३ १ २ ३ १ २ ३ १ २
**अभी नो वाजसातमं रयिमर्ष शतस्पृहम् ।**
१ २ ३ १ २ ३ १ २ ३ १ २
**इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ ५ ॥५४६॥**

अभि । नः । वाजसाऽतमम् । रयिम् । अर्ष । शतऽस्पृहम् । इन्दो । सहस्रऽभर्णसम् । तुविऽद्युम्नम् । विभाऽसहम् ॥ ५ ॥

भाष्यसारः। **वाजसातमम्—अतिशयेन बलप्रदम् अन्नप्रदं वा, सहस्रभर्णसम्—बहूनां पोषकम्, तुविद्युम्नम्—बहुधनं बह्वन्नं बहुयशोयुक्तं वा, विभासहम्—सर्वतेजोऽभिभाविनं पुत्रम्, अभि अर्ष—अभिगमय, प्रापय ॥ ५ ॥**

Grant us, Indu, an offspring, the most liberal dispenser of food, coveted by hundreds, the maintainer of thousands, rich in fame or in food, vanquishing the glory of all.—5.

**सा०-भा०।** हे 'इन्दो' दीप्यमान सोम! 'वाजसातमम्' अत्यन्तं बलप्रदमन्नप्रदं वा धनं पुत्रं 'नः' अस्माकम् 'अभ्यर्ष' अभिगमय। कीदृशम्? 'शत-स्पृहं' बहुभिः स्पृहणीयम्। 'सहस्रभर्णसं' बहुविधभरणम् अनेकपोषणयुक्तमित्यर्थः। 'तुविद्युम्न''—द्युम्नं द्योततेर्यशो वान्नं वेति यास्कः, बह्वन्नं बहुयशोयुक्तं वा। 'विभासहं' महतः प्रकाशस्याभिभवितारम् अतितेजस्विनमित्यर्थः ॥ ५ ॥

५। ऋ० सं० ६म० ६८ सू० १ऋ०। उ० आर्चि० ५, १, १६, १।

वाजसातमम्—strength bestowing—*Wils.*; 'abundant bestower of food; occurs also in SV. 1. 521.

सहस्रभर्णसम्—the supporter of thousands; occurs also in ix. 60. 2;—64. 25, 26.

तुविद्युम्नम्—तुवि—many, abundant, Ngh. 3. 1; *see* our notes on SV. 1. 286; —316. द्युम्नम्—*vide* notes on SV. 1. 81; 113; occurs also in 1. 262, 351; 366; Nir. 5. 5.

विभासहम्—this compd. occurs only in this verse.

---

ऋभसूनू काश्यपौ ऋषी।

३ १ २ ३ १ २ ३ १ २र ३ १ २
अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम्।
३ २उ ३ १ २ ३ १ २ ३ १ २
वत्सं न पूर्व आयुनि जातं रिहन्ति मातरः ॥ ६ ॥५५०॥

अभि। नवन्ते। अद्रुहः। प्रियम्। इन्द्रस्य। काम्यम्। वत्सम्। न। पूर्वे। आयुनि। जातम्। रिहन्ति। मातरः ॥ ६ ॥

भाष्यसारः। **मातरः—गावः, पूर्वे आयुनि—प्रथमे वयसि, जातम्, वत्सम्, लिहन्ति, तथा अद्रुहः—द्रोहरहिताः, आपः—वसतीवर्यः, इन्द्रस्य प्रियं काम्यं सोमम्, अभि-नवन्ते—अभिगच्छन्ति ॥ ६ ॥**

Harmless waters tend towards the Soma, deer to Indra, desired of many, as the mother cows lick the calf born in early age.—6.

**सा०-भा०।** यथा 'मातरः' गावः, पूर्वे प्रथमे, 'आयुनि' वयसि, 'जातं' 'वत्सं' 'रिहन्ति' लिहन्ति, तथा 'अद्रुहः' अद्रोहाः वसतीवर्याख्या आपः, 'इन्द्रस्य' 'प्रियं' 'काम्यं' सर्वैः काम्यमानम्, सोमम् 'अभि-नवन्ते' अभिगच्छन्ति ॥ ६ ॥

**६। ऋ० सं० ६म० १०० सू० १ ऋ०।**

आयुनि—in life ; occurs also in R̥V. iii. 3. 7 ; x. 5. 7 ; only here in SV.

---

ऋभसूनू काश्यपौ ऋषी। बृहतीच्छन्दः।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

**आ हर्यताय धृष्णवे धनुष्टन्वन्ति पौंस्यम्।**

३ २उ ३ १ २ ३ १ २ ३ १ २र ३ १ २

**शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः ॥७॥५५१॥**

आ। हर्यताय। धृष्णवे। धनुः। तन्वन्ति। पौंस्यम्। शुक्रा। वि। यन्ति। असुराय। निर्णिजे। विपाम्। अग्रे। महीऽयुवः ॥ ७ ॥

भाष्यसारः। **हर्यताय—स्पृहणीयाय, धृष्णवे—शत्रुधर्षणशीलाय, सोमाय, पौंस्यम्—बलाभिव्यञ्जकम्, धनुः, आ-तन्वन्ति—पवित्रं सोमरस-शोधनार्थं विस्तारयन्ति। विपाम्—मनीषिणां देवानाम् इत्यर्थः, अग्रे—पुरस्तात्, महीयुवः—पूजाकामा अध्वर्यवः, शुक्रा—शुक्रानि गोदुग्धानि, असुराय—बलवतः सोमस्य कृते, निर्णिजे—पोषणाय शोधनाय वा, वि-यन्ति—गच्छन्ति ॥ ७ ॥**

They stretch the bow expressing vigour (i. e., the straining cloth), for the beloved, valiant (Soma); the worshippers (*Adhvaryus*), mix the white (milk), for the consecration or adding to the beauty of the mighty (Soma), in the presence of the wise (gods).—7.

**सा०-भा०।** 'हर्यताय' सर्वैः स्पृहणीयाय 'धृष्णवे' शत्रूणां धर्षणशीलाय सोमाय 'पौंस्यं' पुंस्त्वस्याभिव्यञ्जकं वरं 'धनुरा-तन्वन्ति' धनुषि ज्यां कुर्वन्तीति। सोमस्य धाराविसर्गार्थं वितायमानं पवित्रमभिधीयते। तदेव विवृणोति—'विपां' मेधाविनाम् 'अग्रे' पुरस्तात् 'महीयुवः' पूजाकामा अध्वर्यवः 'शुक्रा' शुक्लवर्णानि गो-पयांसि 'असुराय' बलवते 'निर्णिजे' स्वरूपाय शोधनार्थं 'वि-यन्ति' आच्छादयन्ती(?)त्यर्थः॥ ७॥

७। ऋ० सं० ९ म० ९९ सू० १ ऋ०। ṚV. has **'शुक्रान् वयन्त्यसुराय निर्णिजम्'** instead of **'शुक्रा वि-यन्त्यसुराय निर्णिजे'.**

The meaning of the ṚV. text of the first part of the second hemistich is—they weave a garment for the mighty Soma.

महीयुवः—desiring to worship; drvd. with *aff.* क्यच्, Pāṇ. iii. 1. 8 and उ, Pāṇ. iii. 2. 170.

निर्णिजे—fr. rt. निज् ( शौच-पोषणयो: *to cleanse, to nourish*), 3. u.

---

ऋजिश्वाम्बरीषावृषी।

१ ३ १ २ ३ १ २र ३ १ २ ३ १ २
**परि त्यं हर्यतं हरिं बभ्रुं पुनन्ति वारेण।**
२ ३ २उ ३ २उ ३ १ २ ३ १ २र
**यो देवान् विश्वाँ इत्परि मदेन सह गच्छति॥ ८ ॥५५२॥**

परि। त्यम्। हर्यतम्। हरिम्। बभ्रुम्। पुनन्ति। वारेण। यः। देवान्। विश्वान्। इत्। परि। मदेन। सह। गच्छति॥ ८॥

भाष्यसारः। **हर्यतम्—स्पृहणीयम्, सोमं वारेण—बालेन मेषरोमनिर्मितपवित्रेण, परि-पुनन्ति—सम्यक् शोधयन्ति। यः सोमः विश्वान्—सर्वान्, देवान्, इत्—एव, मदेन—मादक-रसेन, परि-गच्छति॥ ८॥**

They (the *Adhvaryus*) purify, with the sheep's hair (the strainer), him (the Soma), green-hued, brown, coveted by all; who, with his intoxicating juice, proceeds to all the gods.—8.

**सा०-भा० ।** 'हर्यतं' सर्वैः स्पृहणीयम्, 'हरिं' हरितवर्णम्, 'बभ्रुं' बभ्रुवर्णम्, 'त्यं' तं सोमम्, 'वारेण' बालेन पवित्रेण, 'परि-पुनन्ति' परिशोधयन्ति। यः सोमः 'विश्वान्' सर्वानिन्द्रादीन् 'देवानित्' देवानेव, मदेन मदकरेण रसेन सह, 'परि-गच्छति' इति ॥ ८ ॥

८। ऋ० सं० ६ म० ९८ सू० ७ ऋ०। उ० आर्चि० ५,२,१८,१ ; ८,२,८,३।

हर्यतम्—rt. हर्य, *to desire*, with *aff.* अतच्, uṇ. iii. 110. भृमृदृशि···हर्यिभ्योऽतच्।

---

प्रजापतिर्ऋषिः ।

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
**प्र सुन्वानायान्धसो मर्त्तो न वष्ट तद्वचः ।**
२ ३ १ २ ३ १ २ ३ २ ३ १ २र
**अप श्वानमराधसं हता मखं न भृगवः ॥ ९ ॥५५३॥**

प्र । सुन्वानाय । अन्धसः । मर्तः । न । वष्ट । तत्ऽवचः । अप । श्वानम् । अराधसम् । हता । मखम् । न । भृगवः ॥ ९ ॥

भाष्यसारः। **सुन्वानाय—अभिषूयमानस्य, अन्धसः—सोमस्य, तद् वचः—शब्दम्, मर्त्तः न वष्ट—इच्छतु शृणोतु, अराधसम्—अन्नहीनं यज्ञरहितम्, श्वानम्, भृगवः, मखम्—एतन्नामकं यज्ञविघ्नकरं दानवम्, न—इव, अपहत—दूरीकुरुत ॥ ९ ॥**

Let no mortal hear the sound of the Soma being pressed ; scare away the dog averse to sacrifice, as the Bhṛgus drove off Makha.—9.

**सा०-भा० ।** 'सुन्वानाय' अभिषूयमाणाय—षष्ठ्यर्थे चतुर्थी—अभिषूयमाणस्य 'अन्धसः' सोमस्य 'तत्' प्रसिद्धं 'वचः' वचनं 'मर्त्तो न' मर्त्य इव कर्मविघ्नकारी 'वष्ट न' कामयतां न शृणोत्वित्ति यावत्। तथा हे स्तोतारः! 'अराधसं' साधककर्मरहितं 'श्वानम्' 'अप-हत'। तत्र दृष्टान्तः—'मखं न', यथा पुरा अराधसं मखम् एतन्नामानं 'भृगवो'ऽपहतवन्तः तथा अपहतेत्यर्थः ॥ ९ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्य अष्टमः खण्डः। षष्ठप्रपाठकस्य च द्वितीयार्धे प्रथमा दशतिः ॥

इत्यानुष्टुभम् ।

६। ऋ० सं० ६ म० १०१ सू० १३ ऋ०। उ० आर्चि० ६,२,३,१; १,२,२२,३।
Ṛ.V. has **'सुन्वानस्य'** (apparently the corrected rdg. as it qualifies 'अन्धस:' in *gen.*) for **'सुन्वानाय'** (the corrupt rdg.) and **'वृत'** in the place of **'वष्ट'**।

Prof. Ludwig's explanation of the SV. text is—as a mortal (let him not be too proud) let him honour (let him have power over, let him dispose of) this speech of the juice for him (in favour of him), who presses out thereof.

मखम्—meaning, elsewhere—strong, brisk, combatant or champion; here seems to be the name of a demon, who obstructed the sacrifice of the Bhṛgus.

अराधसं श्वानम्—the niggard hound: the Rākṣasa or demon, who offers no oblation to the gods.—*Grfth.* 'Dog' is not here literally meant.

---

अथ पञ्चमाध्यायस्य नवमः खण्डः। षष्ठप्रपाठकस्य च द्वितीयार्धे द्वितीया दशतिः।

कविर्ऋषिः। जगतीच्छन्दः।

१ २ ३ १ २ ३ १ २ ३
अभि प्रियाणि पवते चनोहितो
१ २ ३ २उ ३ २ ३ १ २
नामानि यह्वो अधि येषु वर्धते।
१ २र ३ २ ३ २उ ३
आ सूर्यस्य बृहतो बृहन्नधि
२ ३ १ २ ३ २
रथं विष्वञ्चमरुहद्विचक्षणः॥ १ ॥५५४॥

अभि। प्रियाणि। पवते। चनःऽहितः। नामानि। यह्वः। अधि। येषु। वर्धते। आ। सूर्यस्य। बृहतः। बृहन्। अधि। रथम्। विष्वञ्चम्। अरुहत्। विऽचक्षणः॥ १॥

भाष्यसारः। चनोहितः—अन्नाय हितः सोमः, प्रियाणि नामानि—उदकानि अभि-पवते। येषु उदकेषु यह्वः—महान् सोमः, अधि—अधिकम्, वर्धते। बृहन्—महान्, विचक्षणः—विश्वद्रष्टा सोमः, बृहतः—महतः, सूर्यस्य, विष्वञ्चम्—सर्वतः गमनशीलम्, रथम् अधि—उपरि, आरुहत्—आरोहति ॥ १ ॥

The Soma, conducive to food, flows towards the pleasant waters where the mighty (Soma) is augmented; the great Soma, the observer of all, ascends the car of the mighty sun, which moves everywhere.—1.

**सा०-भा०।** जगत्यो'ऽभि प्रियाणी'ति मुख्या द्वादश सम्मताः।
आद्यास्तिस्र ऋचो दृष्टाः कविनाम्ना महर्षिणा।
उत्तरा विप्रकीर्णत्वाद्वक्ष्यन्त ऋषयः पृथक् ॥

'चनोहितः'—चन इत्यन्ननाम, चायतेरसुनि चन इत्यौणादिकसूत्रेण निपातितः,—चनसेऽन्नाय हितः। यद्वा, हितान्नः सोमः, 'प्रियाणि' जगतः प्रीणयितॄणि, 'नामानि' नमनशीलानि तान्युदकानि, 'अभि-पवते' अभितः क्षरणं करोति। 'येषु' अन्तरिक्षस्थितेषु उदकेषु, 'यह्वः' महान् अयं सोमः वसति खलु। ततः 'बृहन्' महान् सोमः, 'बृहतः' महतः परिवृढस्य, 'सूर्यस्य' विष्वञ्चं विष्वग्गमनम्, रथम् 'अधि' उपरि, 'विचक्षणः' विश्वस्य द्रष्टा सन्, 'आरुहत्' आरोहति। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' ( मनु० ३, ७६ ) इति ॥ १ ॥

१। ऋ० सं० ९ म० ७५ सू० १ ऋ०। उ० आर्चि० १, १, १६, १।

चनोहितः—fit for food, or a very wholesome beverage, for dr. and etym, *see* the Com. चनः—food, Ngh. 4. 3; Nir. 6. 16.

नामानि—waters, Ngh. 1. 12; *see* our notes on the word नाम, SV. 1. 147, p. 202, dr. fr. rt. नम्, *to descend*; waters are so called as they flow downwards.

यह्वः—mighty, great; *see* notes on SV. 1. 59;—73; Nir. 8. 8.

Sāyaṇa quotes from Manu to show how the Soma-juice offered as libation rises up to the sun.

कविर्ऋषिः ।

२ १ २ २ १ २ ३ २
अचोदसो नो धन्वन्त्विन्दवः प्र
३ १ २ ३ २ ३ २ ३ १ २
स्वानासो बृहद्देवेषु हरयः ।
१ २ ३ २ ३ २ ३ १ २ ३
वि चिदश्नाना इषयो अरातयो-
१ २ ३ १ २ ३ १ २
ऽर्यो नः सन्तु सनिषन्तु नो धियः ॥२॥५५५॥

अचोदसः । नः । धन्वन्तु । इन्दवः । प्र । स्वानासः । बृहत्ऽ-देवेषु । हरयः । वि । चित् । अश्नानाः । इषयः । अरातयः । अर्यः । नः । सन्तु । सनिषन्तु । नः । धियः ॥ २ ॥

भाष्यसारः । अचोदसः—न अन्येन प्रेरिताः स्वतःप्रवृत्ताः, स्वानासः—अभिषुताः, हरयः—हरितवर्णाः, इन्दवः—सोमाः, नः—अस्माकम् , बृहद्देवेषु—देवभूयिष्ठेषु यज्ञेषु, प्र-धन्वन्तु—प्रक्षरन्तु । अरातयः—यज्ञहीना अदानशीलाः, नः—अस्माकम् , अर्यः—अरयः, इषयः—अन्नम् इच्छन्तः, अश्नानाः—अशनेन भोजनेन, वि—वियुक्ताः सन्तु । नः—अस्माकम्, धियः—कर्माणि स्तोत्राणि वा, सनिषन्तु—देवान् सम्भजन्तु ॥ २ ॥

Let the green-coloured, voluntary Soma-juices, being pressed out, flow to us in the sacrifices, where the gods assemble in number ; may our illiberal (i. e., non-sacrificing) enemies, though coveting food, be deprived of it ; may our prayers or ceremonies reach the gods.—2.

सा॰-भा॰ । 'अचोदसः' अचोदनाः अनन्यप्रेरिताः, 'इन्दवः' सोमाः, 'नः' अस्माकम्, 'प्र-धन्वन्तु' प्रगच्छन्तु—धन्वतिर्गतिकर्मा । कुत्र ? 'बृहद्देवेषु' प्रभूतदेवयुक्तेषु यज्ञेषु, यथा वा बृहद्देवकुलजेषु मध्ये, ते इति सम्बन्धः । कीदृशा इन्दवः ? 'स्वानासः' सूयमानाः, 'हरयः' हरितवर्णाः । किञ्च, 'अरातयः' धनादिदान-रहिताः, 'नः' अस्माकम् , 'अर्यः' अरयः, 'इषयः' इषोऽन्नानि इच्छन्तः 'अश्नानाः' अशनेन भोजनेन 'वि'युक्ता एव सन्तु । किञ्च, 'नो'ऽस्माकं 'धियः' कर्माणि देवविषयाणि स्तोत्राणि, 'सनिषन्तु' देवान् सम्भजन्तु ॥ २ ॥

२। ऋ० सं० ६ म० ७६ सू० १ ऋ०। Ṛ.V. has **'दिवेषु'** instead of **'देवेषु'** and in the place of the 2nd hemistich, the Ṛ.V. rdg. is—**'वि च नशन्न इषो अरातयोऽर्यो नशन्त सनिषन्त नो धियः'**।

**अचोदसः**—spontaneous, not urged by any.

**प्र-धन्वन्तु**—rt. धन्व, *to go*, imp.

**बृहद्देवेषु**—Sāyaṇa has taken this as a compd. word to mean—'in the sacrifices attended by numerous gods'; Grfth. treats बृहत् and देवेषु as two separate words and translates—'mightily (बृहत्—*adv.*) flow to the gods.' 'At the brilliant sacrifices'—*Wils.*

---

कविर्ऋषिः ।

३ २उ ३ १ २
**एष प्र कोशे मधुमाँ अचिक्रद-**
१ २ ३ २ ३ १ २ ३ १ २
**दिन्द्रस्य वज्रो वपुषो वपुष्टमः ।**
३ २ १ २ ३ १ २ ३ १ २
**अभ्यृऽतस्य सुदुघा घृतश्चुतो**
३ १ २ ३ १ २ ३ १ २
**वाश्रा अर्षन्ति पयसा च धेनवः ॥ ३ ॥५५६॥**

एषः । प्र । कोशे । मधुऽमान् । अचिक्रदत् । इन्द्रस्य । वज्रः । वपुषः । वपुःऽतमः । अभि । ऋतस्य । सुदुघाः । घृतऽश्चुतः । वाश्राः । अर्षन्ति । पयसा । च । धेनवः ॥ ३ ॥

भाष्यसारः । **एषः मधुमान्—मधुरः स्वादुः, इन्द्रस्य वज्रः—वज्रवत् बलकरः, वपुषः वपुष्टमः—बीजवप्तॄणां श्रेष्ठः सोमः, कोशे—द्रोणकलशे, प्राचिक्रदत्—प्रकर्षेण शब्दायते, सुदुघाः—शोभनफलप्रदात्र्यः, घृतश्चुतः—उदकस्रवणशीलाः, वाश्राः—शब्दायमानाः, ऋतस्य—सोमस्य, धाराः, अभ्यर्षन्ति—अभिगच्छन्ति ॥ ३ ॥**

This sweet Soma, the thunderbolt (as it were) of Indra, the best of all the sowers of seed, roars in the pitcher; the streams of this truth-bearing (Soma) proceed onward yielding blessings, dropping water, lowing like milch cows, rich in milk.—3.

**सा०-भा०।** 'एषः' अयं सोमः, 'मधुमान्' मधुररसः, 'कोशे' द्रोणकलशे, 'प्राचिक्रदत्' प्रकर्षेण शब्दायते। कीदृश एषः? 'इन्द्रस्य' 'वज्रः' वज्रस्थानीयः, बलकरत्वेन वज्रवत् प्रहरणसाधनत्वाद् वज्रत्वोपचारः। 'एषः' एव हि सोमः 'वपुषः' बीजानां वप्तुः, 'वपुष्टमः' अतिशयेन वप्ता, बीजावापस्य सोमकर्त्तृकत्वात्, 'सोमो वै रेतोधा' इति श्रुतेः। 'ऋतस्य' सत्यफलस्य सोमस्य, धारा इति शेषः, ता 'अभ्यर्षन्ति' अभिगच्छन्ति। कीदृश्यः? 'सुदुघाः' सुष्ठु दोग्ध्र्यः फलानाम्, 'घृतश्चुतः' उदकस्य रसस्य वा क्षारयित्र्यः, 'वाश्राः' शब्दयन्त्यः, 'पयसा' युक्ताः वाश्रा धेनवः इव। लुप्तोपममेतत् ॥ ३ ॥

३। ऋ० सं० ९ म० ७७ सू० १ ऋ०। ṚV. reads (1) **'वपुष्टरः'** for **'वपुष्टमः'**, (2) **'अभीमृतस्य'** in the place of **'अभ्यृतस्य'** and (3) **'पयसा न धेनवः'** instead of **'पयसा च धेनवः'**।

अचिक्रदत्—'has clamoured in the vat (*kośe*)'—*Grfth.* 'sounds'—*Wils.*

वज्रः—as mighty in operation as the thunderbolt in Indra's hands; after the drinking of Soma, Indra's strength gets augmented, so also the power of his bolt, so Soma is identified with it.

वपुषो वपुष्टमः—'Most beautiful of the beautiful'—*Wils.* *Grfth.* also adopts this interpretation, as he renders—'most beauteous of the beauteous'. We have adopted Sāy.'s explanation, of which probably, the import is 'Soma is the generator of all, cf. SV. 1. 527.

ऋतस्य—*rfs.* to the Soma, bearing sure fruit.

वाश्राः—fr. rt. वाश्, *to bellow.*

घृतश्चुतः—dropping water; *Grfth.* always takes *Ghṛta* to mean *Ghee* not minding whether it suits the text or not; the word *Ghṛta* is found among the synonyms of water, Ngh. 1. 12; *see* notes on घृतवती, SV. 1. 378.

पयसा—applicable both to the streams of the Soma-juice as well as to the cows, in the former case it means—'mixed with milk', in the latter—'full of, or laden with, or rich in milk.'

---

ऋषिगण ऋषिः।

१ २ ३ २ ३ १ २ ३ २उ
प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं
३ २ ३ १ २र ३ १ २
सखा सख्युर्न प्र मिनाति सङ्गिरम्।

१ २    २ २ ३ १ २   ३
मर्य इव युवतिभिः समर्षति
१ २   ३ १ २ ३ १ २     ३ २
सोमः कलशे शतयामना पथा ॥४॥५५७॥

प्रो। अयासीत्। इन्दुः। इन्द्रस्य। निष्कृतम्। सखा। सख्युः। न। प्र। मिनाति। सङ्गिरम्। मर्यः। इव। युवतिभिः। समर्षति। सोमः। कलशे। शतऽयामना। पथा॥ ४॥

भाष्यसारः। इन्दुः—सोमः, इन्द्रस्य निष्कृतम्—स्थानम् उदरम्, प्रो अयासीत्—प्रकर्षेण गच्छति। सखा—सोमः, सख्युः—इन्द्रस्य, सङ्गिरम्—उदरम्, न प्र-मिनाति—न हिनस्ति। मर्यः—मनुष्यः, युवा युवतिभिः इव, सोमः वसतीवरीभिरद्भिः मिलितः, शतयामना पथा—अनेकच्छिद्रोपेतेन पवित्रस्य मार्गेण, कलशे समर्षति—सम्यक् गच्छति॥ ४॥

Indu proceeds to Indra's place (his stomach), the friend (Soma) does not injure the friend's (Indra's) stomach; like a youth in company with young damsels, the Soma (mingled with *Vasatīvarīs*) flows onward to the pitcher by a path of hundred holes.—4.

**सा०-भा०।** 'इन्दुः' सोमः, 'इन्द्रस्य' 'निष्कृतं' संस्कृतं स्थानमुदरम्, 'प्रो अयासीत्' प्रकर्षेणैव गच्छति। गत्वा च 'सखा' सखिभूतः सोमः, 'सख्युः' इन्द्रस्य, 'सङ्गिरं' सम्यग्गिरणाधारभूतमुदरम्, 'न प्र-मिनाति' न हिनस्ति। किञ्च, सः 'मर्य इव' 'युवतिभिः'—मर्त्यो यथा तरुणीभिः सह सङ्गतो भवति, तद्वत् अयमपि 'सोमो' युवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह, 'समर्षति' सङ्गच्छते, अभिषव-काले। स च सोमः 'शतयामना' शतयाम्ना अनेक-यामन-साधनच्छिद्रोपेतेन 'पथा' मार्गेण दशापवित्रसम्बन्धिना, 'कलशे' द्रोणकलशे, गच्छतीति शेषः। यद्वैकमेव वाक्यम्। यथा मर्यो युवतिभिः सह सङ्गच्छते, सोमः एवं कलशे शतयाम्ना पथा सङ्गच्छतेऽद्भिः॥ ४॥

४। ऋ० सं० ६ म० ८६ सू० १६ ऋ०। ṚV. reads 'शतयाम्ना' (the gram. correct form) instead of 'शतयामना' (the corrupt rdg.)। उ० आर्चि० ४, २, ७, १।

निष्कृतम्—the settled place.—*Grfth.*; 'abode'—*Wils.*; *see* our notes on SV. 1. 510.

सखा . . . सङ्गिरम्—Grfth. translates the second line in a peculiar way, by taking *saṅgiram* in the sense of 'promise', but it is very difficult to make any sense of it. Sāyaṇa derives the word fr. rt. गॄ *to swallow,* 6. p. and means by it—the belly, the stomach.

शतयामना पथा—'by a hundred paths'—*Wils.*; the hundred holes; *rfs.* to the interstices of the strainer allowing the Soma-juice to pass through them, when the juice is in the process of being cleansed or purified.

---

कविर्ऋषिः ।

३ २ ३ १ २ ३ २ ३ २ ३
धर्त्ता दिवः पवते कृत्व्यो रसो
१ २ ३ १ २ ३ २ ३ १ २
दक्षो देवानामनुमाद्यो नृभिः ।
१ २ ३ २उ ३ १ २र ३
हरिः सृजानो अत्यो न सत्वभि-
२ ३ १ २ ३ २
र्वृथा पाजांसि कृणुते नदीष्वा ॥५॥५५८॥

धर्त्ता । दिवः । पवते । कृत्व्यः । रसः । दक्षः । देवानाम् । अनुऽमाद्यः । नृभिः । हरिः । सृजानः । अत्यः । न । सत्वऽभिः । वृथा । पाजांसि । कृणुते । नदीषु । आ ॥ ५ ॥

भाष्यारः । धर्त्ता—सर्वस्य धारकः, कृत्व्यः—शोधनीयः, रसः—रसात्मकः, देवानां दक्षः—बलप्रदः, नृभिः—यज्ञ-नेतृभिः ऋत्विग्भिः, अनुमाद्यः—स्तुत्यः, हरिः—हरितवर्णः, सत्वभिः—प्राणिभिरत्र ऋत्विग्भिः, सृजानः—सृज्यमानः सोमः, अत्यः न—द्रुतगमनशील अश्व इव, दिवः पवते—अन्तरिक्षात् क्षरति । वृथा—अप्रयत्नेन, पाजांसि—बलानि वेगान्, नदीषु—वसतीवरीषु, आ-कृणुते—करोति ॥५॥

(The *Soma*), the supporter (of all), the stimulating beverage of the gods, to be clarified, laudable by the leaders (of the sacrifice), green-coloured, sent forth by the priests, like a swift courser, easily gains his strength in the rivers (waters : Vasatīvarīs).—5.

**सा०-भा०।** 'धर्त्ता' सर्वस्य धारकः सोमः, 'दिवः' अन्तरिक्षात् अन्तरिक्षस्थिताद्दशापवित्रात्, 'पवते' पूयते। कीदृशः सोमः? 'कृत्व्यः' कर्त्तव्यः, शोध्य इत्यर्थः। 'रसः' रसात्मकः। 'देवानां' 'दक्षः' बलप्रदः। यद्वा, दक्षः प्रवर्धनीयो देवानामर्थाय। तथा 'नृभिः' नेतृभिर्ऋत्विग्भिः 'अनुमाद्यः' अनुमादनीयः स्तुत्यो वा। 'हरिः' हरितवर्णः। 'सत्वभिः' प्राणिभिः अस्मदादिभिः, 'सृजानः' सृज्यमानः, 'अत्यो न' अश्व इव,—स यथा अश्नोत्यनायासेन गच्छति तद्वत्। 'वृथा' अप्रयत्नेन, 'पाजांसि' बलानि, स्वीयान् वेगान् 'कृणुते' कुरुते, 'नदीषु' वसतीवरीषु, ताभिः सिक्त इत्यर्थः। अयमभिषवसमयाभिप्रायः॥ ५॥

५। ऋ० सं० ६ म० ७६ सू० १ ऋ०। उ० आर्चि० ५, १, १२, १।

कृत्व्यः—purifiable ; to be cleansed or clarified.

अनुमाद्यः—worthy to be praised.

वृथा—lightly, easily. पाजांसि कृणुते—restores his vigour—*Wils.* पाजः—strength, Ngh. 2. 9.

नदीषु—*rfs. to* Vasatīvarī waters.

अत्यः—a swift horse, fr. rt. अत्, *to move constantly*.

---

कविर्ऋषिः।

१ २ ३ १ २ ३ २उ
वृषा मतीनां पवते विचक्षणः
३ १ २ ३ १ २र ३ २
सोमो अह्नां प्रतरीतोषसां दिवः।
३ १ २र ३ १ २ ३
प्राणा सिन्धूनां कलशाँ अचिक्रद-
१ २ ३ १ २ ३ १ २ ३ १ २
दिन्द्रस्य हार्द्याविशन्मनीषिभिः॥६॥५५६॥

वृषा । मतीनाम् । पवते । विऽचक्षणः । सोमः । अह्नाम् । प्रतरीता । उषसाम् । दिवः । प्राणा । सिन्धूनाम् । कलशान् । अचिक्रदत् । इन्द्रस्य । हार्दि । आ । विशन् । मनीषिऽभिः ॥ ६ ॥

भाष्यसारः । **मतीनाम्—स्तोतॄणाम्, वृषा—कामवर्षकः, विचक्षणः—विश्वद्रष्टा:, अह्नाम्, उषसाम्, दिवः—आदित्यस्य, प्रतरीता—प्रवर्धयिता, सिन्धूनाम्—स्यन्दमानानामुदकानाम्, प्राणा—कर्त्ता,—अथवा सिन्धुभिरद्भिः पूर्णः, सोमः, इन्द्रस्य हार्दि—हृदयम्, आ-विशन् मनीषिभिः—मनोऽभिमताभिः स्तुतिभिः सह, कलशान् प्रति पवते—क्षरति, अचिक्रदत्—शब्दायते च ॥ ६ ॥**

The Soma, the beholder of all, the showerer of blessings to the worshippers, augmenter of days, of the dawns and the sun, the maker of waters (or, fully mixed with waters—Vasatīvarī), desiring to enter Indra's heart, roars within the pitchers with mind-winning praises.—6.

**सा-०भा० ।** अयं 'सोमः' 'पवते' अभिषूयते । कीदृशः सोमः ? 'मतीनां' मतयः स्तोतारस्तेषाम्, 'वृषा' वर्षकः कामानाम् । 'विचक्षणः' विद्रष्टा, 'अह्नाम्' 'उषसां' 'दिवः' द्युलोकस्यादित्यस्य वा, 'प्रतरीता' प्रवर्धयिता । किञ्च, 'सिन्धूनां' स्यन्दमानानामुदकानाम्, 'प्राणा'—प्रकर्षेण अनिति चेष्टते इति प्राणा कर्त्ता, सोमः, 'कलशान्' 'अचिक्रदत्' धारया अध्वनयत् प्रवेष्टुम् । यद्वा, 'सिन्धूनां'—तृतीयार्थे षष्ठी—सिन्धुभिरद्भिः, 'प्राणा', प्रा पूरणे ( अ० प० ), पूर्णः 'सोमः', कलशान् अभिलक्ष्य क्रन्दते । किं कुर्वन् ? इन्द्रस्य 'हार्दि' हृदयम्, 'आ-विशन्' प्रविशन्, 'मनीषिभिः' मनस ईशित्रीभिः स्तुतिभिः, सदेति शेषः । यद्वा, व्यवहितमपि मनीषिभिरित्येतत् पवत इत्यनेन सम्बध्यते ॥ ६ ॥

६ । **ऋ० सं० ६ म० ८६ सू० १६ ऋ० ।** R̥V. has (1) **'क्राणा'** instead of **'प्राणा'** and (2) **'अवीविशत्'** in the place of **'अचिक्रदत्'** । **उ० आर्चि० २,१,१७,१ ।**

मनीषिभिः—Sāyaṇa means, with the praises, winning the mind; heart-alluring eulogies; '(praised) by the wise'—*Wils.* With the help of sages —*Grfth.*

प्रतरीता—promoter; fosterer; furtherer; in this sense *see* प्रतरणः, Nir. 9. 12, अस्मत्सखा प्रतरणः सुवीरः, R̥V. vi. 47. 26.

---

रेणुर्ऋषिः ।

१ २ ३ २ ३ १ २
त्रिरस्मै सप्त धेनवो दुदुह्रिरे
३ २ ३ १ २ ३ १ २
सत्यामाशिरं परमे व्योमनि ।
३ २ ३ १ २र ३ २ ३
चत्वार्यन्या भुवनानि निर्णिजे
१ २ ३ २ ३ १ २र
चारूणि चक्रे यदृतैरवर्धत ॥७॥५६०॥

त्रिः । अस्मै । सप्त । धेनवः । दुदुह्रिरे । सत्याम् । आशिरम् । परमे । व्योमनि । चत्वारि । अन्या । भुवनानि । निर्णिजे । चारूणि । चक्रे । यद् । ऋतैः । अवर्धत ॥ ७ ॥

भाष्यसारः । **अस्मै, परमे व्योमनि—उत्कृष्टे यज्ञे अन्तरिक्षे वा स्थिताय, पवमानाय सोमाय, त्रिः सप्त—एकविंशति-संख्याकाः, धेनवः—गावः, सत्याम्—सत्यस्वरूपम् अनन्यमिश्रितं विशुद्धमित्यर्थः, आशिरम्—दुग्धादिमिश्रणद्रव्यम्, दुदुह्रिरे—दुहन्ति । अयं सोमः, अन्या—अन्यानि, चत्वारि चारूणि भुवनानि—उदकानि, वसतीवरीस्त्रिसंख्याकाश्चैकधना इति चतुःसंख्याकानि, निर्णिजे—परिशोधनाय, चक्रे—करोति, यत्—यदा, अयम् ऋतैः—यज्ञैः, अवर्धत—वर्धते ॥ ७ ॥**

The three times seven milch cows, for him (the Soma), in the supreme sacrifice, yield the pure milk (to be mixed with the Soma), he makes four other charming waters for purification, when he increases with the sacrifices.—7.

**सा०-भा० ।** 'अस्मै' पवमानाय 'परमे' उत्कृष्टे 'व्योमनि', विविधम् ओम अवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय । यद्वा, परमे व्योमन्यन्तरिक्षे वर्त्तमानाय, 'त्रिः सप्त' एकविंशतिसङ्ख्याकाः, 'धेनवः' प्रीणयित्र्यो गावः 'सत्याम् यथार्थभूतम्', 'आशिरम्' आश्रयणसाधनं क्षीरादि, 'दुदुह्रिरे' दुहन्ति । यद्वा, त्रिःसप्त—द्वादशमासाः, पञ्चर्त्तवः, त्रय इमे लोकाः, असावादित्यः—

एकविंश इति। एतैः सर्वैः सह गोषु पय उत्पाद्यते—तद्गावो दुहन्तीति। किञ्च, अयं सोमः 'अन्या' अन्यानि, 'चत्वारि' 'भुवना' उदकानि, वसतीवरीस्तिस्रश्चैकधना इति तानि चतुःसङ्ख्यानि, 'चारूणि' कल्याणानि, 'निर्णिजे' निर्णेजनाय परिशोधनाय परिपोषणाय वा, 'चक्रे' तदा करोति। 'यद्' यदा, अयम् 'ऋतैः' यज्ञैः, 'अवर्धत' वर्धितवान्—तदा करोति ॥ ७ ॥

७। ऋ० सं० ६ म० ७० सू० १ ऋ०। R̥V. reads (1) 'दुदुह्रे' instead of 'दुदुह्रिरे' and (2) 'पूर्व्ये' in the place of 'परमे'। उ० आर्चि० ६, २, १७, १।

दुदुह्रिरे—is more archaic than दुदुह्रे (the R̥V. rdg.), *vide* Pāṇ. vi. 4. 76. ('इरयो रे'); the classical form is दुदुहिरे।

त्रिःसप्त धेनवः—These may be literally meant or may signify, as Sāyaṇa suggests, the 12 months, the 5 seasons, the 3 worlds and the sun. The four waters are the *Vasativarī* waters and the three *Ekadhanā* waters, meant for purifying Soma. Prof. Ludwig says—'the seven celestial rivers multiplied by three to correspond with the three divisions of heaven'—are probably intended.

भुवना—*for* भुवनानि, *vide* Pāṇ. vi. 1. 70 (शेश्छन्दसि बहुलम्),—waters, Ngh. 1.22. Nir. 10. 34. cf. 'इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम्', R̥V. iii. 55. 19; *also* 'भुवनस्य गोपा', SV. I. 529. निर्णिजे—for adorning or purifying; for dr. *see* SV. I. 551.

---

वेनो भार्गव ऋषिः।

३ १   ३ १ २ ३ १ २ ३ १
इन्द्राय सोम सुषुतः परि स्रवा-
२र   २ १ २   ३ २
पामीवा भवतु रक्षसा सह।
२ ३ १ २   ३ २ ३
मा ते रसस्य मत्सत द्वयाविनो
१ २   ३ २ ३ १ २
द्रविणस्वन्त इह सन्त्विन्दवः ॥ ८ ॥५६१॥

इन्द्राय। सोम। सुऽसुतः। परि। स्रव। अप। अमीवा। भवतु। रक्षसा। सह। मा। ते। रसस्य। मत्सत। द्वयाविनः। द्रविणस्वन्तः। इह। सन्तु। इन्दवः ॥ ८ ॥

भाष्यसारः। हे सोम, त्वं सुषुतः—सुष्ठु अभिषुतः सन्, इन्द्राय परि-स्रव—परितः क्षर। अमीवा—रोगः, रक्षसा सह अप-भवतु—अपगतो भवतु दूरीभवत्वित्यर्थः, द्वयाविनः—द्विजिह्वाः प्रवञ्चकाः, ते रसस्य—तव रसं पीत्वा, मा मत्सत—न माद्यन्तु। इन्दवः—क्षरणशीलाः तव रसाः, इह—अस्मिन् यज्ञे, द्रविणस्वन्तः—अस्माकं धनवन्तः, सन्तु—भवन्तु ॥ ८ ॥

Flow on to Indra, O Soma, nicely pressed out; may malady be away with the Rākṣasa, let not the double-mouthed (insincere liars) be delighted by the juice; may the dropping Soma-juices be full of treasures at this ceremony.—8.

**सा०-भा०।** हे 'सोम!' त्वं 'सुषुतः' सन्, 'इन्द्राय' तदर्थम्, 'परि-स्रव' परितो गच्छ—रसं मुञ्च। 'अमीवा' रोगः, 'रक्षसा सह', 'अप भवतु' अपगतो वियुक्तो भवतु, 'ते' तव 'रसस्य' स्वांशं रसं पीत्वा 'मा मत्सत' मा माद्यन्तु। कः? 'द्वयाविनः' द्वयं सत्यानृतं तेन युक्ताः पापिन इत्यर्थः। किञ्च, 'इन्दवः' ते रसाः 'इह' अस्मिन् यज्ञे 'द्रविणस्वन्तः' अस्माकं धनवन्तः 'सन्तु' भवन्तु ॥ ८ ॥

८। ऋ० सं० ६ म० ८५ सू० १ ऋ०।

अमीवा—fr. rt. अम् *to ail*. 10. u; *see* notes on SV. I. 32.

द्वयाविनः—double-dealers; those addicted to duplicity. This word occurs also in ṚV. i. 42. 4; ii. 23. 5.

द्रविणस्वन्तः—possessed of wealth; for द्रविण *see* our notes on द्रविणस्यु, SV. I. 4; Nir. 8. 1.

---

भरद्वाजो वसुर्ऋषिः।

१ २ ३ १ २ ३ २उ ३ १ २
असावि सोमो अरुषो वृषा हरी
१ २ ३ २ ३ ३ १ २र
राजेव दस्मो अभि गा अचिक्रदत्।
३ २उ ३ १ २ ३ १ २ ३ १
पुनानो वारमत्येष्यव्ययं श्येनो
२र ३ १ २ ३ १ २
न योनिं घृतवन्तमा सदत् ॥ ६ ॥५६२॥

असावि । सोमः । अरुषः । वृषा । हरिः । राजाऽइव । दस्मः । अभि । गाः । अचिक्रदत । पुनानः । वारम् । अति । एषि । अव्यम् । श्येनः । न । योनिम् । घृतऽवन्तम् । आ । सदत् ॥ ९ ॥

भाष्यसारः । अरुषः---आरोचमानः, वृषा—कामवर्षकः, हरिः—हरितवर्णः, राजा इव दस्मः—दर्शनीयः, सोमः असावि—अभिषुतोऽभूत् । गाः—उदकानि वसतीवरीः प्रति, क्षरणकाले अचिक्रदत्—भृशं शब्दं करोति। पश्चात् पुनानः—पूयमानः शोध्यमानः, अव्यं वारम्—मेषरोमनिर्मितं पवित्रम्, अत्येषि—अतीत्य क्षरसि । ततः श्येनः न—इव, घृतवन्तम्—उदकयुक्तम्, योनिम्--स्वीयस्थानं कलशे इत्यर्थः, आ-सदत्—आसीदति ॥ ६ ॥

The shining, green-coloured Soma, the showerer of desires, fine-looking like a king, has been pressed out; he roars when proceeding towards the waters; while cleansed, thou flowest through the filter of the sheep's wool, (next) like a hawk, settlest in the seat containing waters.—9.

**सा०-भा० ।** 'सोमः' 'असावि' अभिषुतोऽभूत् । कीदृशः सोमः? 'अरुषः' आरोचमानः, 'वृषा' वर्षकः, 'हरिः' हरितवर्णः । स च 'राजेव', 'दस्मः' दर्शनीयः सन्, 'गाः' उदकानि, 'अभि'लक्ष्य, 'अचिक्रदत्' शब्दङ्करोति, स्वरसनिर्गमसमये । पश्चात् 'पुनानः' पूयमानः, 'अव्यम्' अवि-भवं 'वारं' बालं—पवित्रम्, 'अत्येषि'—हे सोम! अतिक्रम्य गच्छसि । ततः 'श्येनो न' श्येन इव, 'योनिं' स्वीयं स्थानम्, 'घृतवन्तम्' उदकवन्तम्, 'आ-सदत्' वसतीवरीष्वासीदतीत्यर्थः ॥ ६ ॥

६ । ऋ० सं० ६ म० ८२ सू० १ ऋ० । ṚV. reads **'पर्येति'**(3rd pers.) instead of **'अत्येषि'** (2nd pers.) and **'आ सदम्'**, in the place of **'आ सदत्'** । उ० आर्चि० ५,२, १३, १ ।

दस्मः--handsome, beautiful, lovely; *see* our notes on दस्मम, SV. I. 236.

घृतवन्तं योनिम्—*rfs.* to the pitcher, where the Soma-juice settles after being purified through the filter; 'the water moistened seat'—*Wils.*

The Soma flowing to the pitcher is very often compared to a hawk flying to its nest, *see* SV. I. 473; 503 (ṚV. ix. 59. 19).

---

वत्सप्रीः ऋषिः ।

२ ३ २उ ३ १ २ ३ २ ३ १
प्र देवमच्छा मधुमन्त इन्दवो-
२ ३ २ ३ ·उ ३ १ २
ऽसिष्यन्दत गाव आ न धेनवः ।
३ १ २ ३ १ २ २ १ २
बर्हिषदो वचनावन्त ऊधभिः
३ १ २ ३ १ २ ३ १ २
परिस्रुतमुस्रिया निर्णिजं धिरे ॥ १० ॥५६३॥

प्र । देवम् । अच्छ । मधुऽमन्तः । इन्दवः । असिष्यन्दत । गावः । आ । न । धेनवः । बर्हिऽसदः । वचनऽवन्तः । ऊधभिः । परिऽस्रुतम् । उस्रियाः । निर्णिजम् । धिरे ॥ १० ॥

भाष्यसारः । मधुमन्तः—मधुररसोपेताः, इन्दवः—सोमाः, देवम्—इन्द्रम् , अच्छ--प्रति, धेनवो गावः न—पयस्विन्यः गावः इव, प्रासिष्यन्दत--ग्रहादिपात्रेषु प्रक्षरन्ति। बर्हिषदः, वचनवन्तः—शब्दायमानाः, उस्रियाः—गावः, ऊधभिः परिस्रुतम्—स्रवणशीलम् , निर्णिजम्—शुद्धं रूपं पयोभूतम् , धिरे—दधिरे, इन्द्रार्थं धारयन्ति ॥१०॥

The exhilarant Soma-juices flow towards the god (Indra), as milch cows yield milk (for the calves) ; the lowing cows, seated on the *barhis*, hold in their udders the pure shedding milk (with which Soma is robed or mixed).—10.

**सा०-भा० ।** 'मधुमन्तः' मदकररसयुक्ताः, 'इन्दवः' सोमाः, 'देवं' द्योतमानं सोमात्मकम् इन्द्रम् , 'अच्छ' प्रति, 'प्रासिष्यन्दत' परिस्यन्दन्ते—ग्रहादिषु प्रक्षरन्ति । स्यन्दतेर्ण्यन्तस्य लुङि चङि रूपम् । तत्र दृष्टान्तः—'गाव आ न धेनवः' पयस्विन्यः प्रीणयित्र्यः गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति तद्वत् । किञ्च, 'बर्हिषदः' बर्हिषि सीदन्त्यः, 'वचनवन्तः' हम्भारवादिशब्दवत्यः, 'उस्रिये'ति गोनाम—तादृश्यो गावः,'ऊधभिः' पयआधारकैः स्वैः स्वैरूधोभिः. तेभ्यः 'परि-स्रुतम्' परितः स्रवणशीलम्, 'निर्णिजं' शुद्धं पयोभूतं सोमरसम् , 'धिरे' दधिरे, इन्द्रार्थं धारयन्ति ॥ १० ॥

१०। ऋ० सं० ६ म० ६८ सू०१ ऋ०।

उस्रिया:—cows, Ngh. 2. 11; 'उस्रियेति गोनाम, उस्राविणोऽस्यां भोगाः', cow is so called, because all enjoyable things issue from it, Nir. 4. 19; cf. 'वीतं पातं पयस उस्रियायाः'—drink the milk of the cow, ṚV. i. 153. 4.

निर्णिजम्—*see* notes on the word, SV. 1. 530.

धिरे—*for* दधिरे; occurs also in ṚV. i. 166. 10; viii. 28. 5; only in this verse in SV.

——

अत्रिर्ऋषिः।

३ २ ३क २र ३ १ २ ३
अञ्जते व्यञ्जते समञ्जते
१ २ ३ २ २क २र
क्रतुं रिहन्ति मध्वाभ्यञ्जते।
१ २ ३ २ ३ १ २ ३ १ २
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं
३ २ ३ २ ३ १ २
हिरण्यपावाः पशुमप्सु गृभ्णते ॥११॥५६४॥

अञ्जते। विऽअञ्जते। सम्ऽअञ्जते। क्रतुम्। रिहन्ति। मध्वा। अभिऽअञ्जते। सिन्धोः। उत्ऽश्वासे। पतयन्तम्। उक्षणम्। हिरण्यऽपावाः। पशुम्। अप्सु। गृभ्णते॥ ११॥

भाष्यसारः। ऋत्विजः सोमम् अञ्जते—दुग्धेन सह मिश्रयन्ति, व्यञ्जते—विविधं मिश्रयन्ति, समञ्जते—सम्यङ्मिश्रयति। देवाः क्रतुम्—बलकरं सोमरसम्, रिहन्ति—लिहन्ति पिबन्तीत्यर्थः, मध्वा—मधुना मधुरेण दुग्धेन, अभ्यञ्जते—सर्वतः मिश्रयन्ति, सिन्धोः—उदकस्य, उच्छ्वासे—उच्छ्रिते देशे, पतयन्तम्—गच्छन्तम्, उक्षणम्—

सेक्तारम्, पशुम्—सर्वतः पश्यन्तं विश्व-द्रष्टारम्, तं सोमम्, हिरण्यपावाः—'हिरण्यपाणिरभिषुणोती'ति श्रुतेः—हिरण्ययुक्तकरेण पुनन्तः ऋत्विजः, अप्सु—वसतीवरीषु, गृभ्णते—गृह्णन्ति, संरक्षन्ति ॥ ११ ॥

(The priests) anoint or mingle, fully mingle the Soma with milk ; (the gods) sip the stimulating juice ; they mix it thoroughly with sweet milk, consecrating it with gold, they place, into the waters, the all-observant Soma, the sprinkler (of benefits), repairing to an elevated place, the receptacle of the juice.—11.

**सा०-भा० ।** सोमम् ऋत्विजः 'अञ्जते' गोभिः, तथा 'व्यञ्जते' विविधमञ्जति, 'समञ्जते' सम्यक् अञ्जति । स्तुत्यर्थत्वादपुनरुक्तिः । तथा 'क्रतुं' बलकर्त्तारं 'रिहन्ति' लिहन्ति—आस्वादयन्ति देवाः । तथा पुनः 'मध्वा' मधुना गव्येन अभ्यञ्जते । तमेव सोमम्, 'सिन्धोः' उदकस्य रसस्याधारभूते, 'उच्छ्वासे' उच्छ्रिते देशे, 'पतयन्तं' गच्छन्तम्,—पतॢ गतावित्यस्मात् स्वार्थिके णिचि वृद्ध्यभावश्छान्दसः । 'उक्षणं' सेक्तारम्, 'हिरण्यपावाः' हिरण्येन पुनन्तः, 'पशुं' द्रष्टारम्—पशुः पश्यतेरिति निरुक्तम् । 'अप्सु' वसतीवरीषु, 'गृभ्णते' गृह्णन्ति ॥ ११ ॥

११ । ऋ० सं० ६ म० ८६ सू० ४३ ऋ० । उ० आर्चि० ७, ३, २१, १ ।
Ṛ V. reads **'मधुना'** *(regular form modified)* in the place of **'मध्वा'** (*archaic*) and **'आप्सु'** instead of **'अप्सु'** ।

सिन्धोः उच्छ्वासे—means literally 'in the breathing of the river'. Ludwig translates "An des stromes auf brausen".

The words *añjate*, *vyañjate* and *samañjate* mean the same thing ; the repetition of the same word is avoided because it is considered more complimentary to use different words (*stutyarthatvād apunaruktiḥ*).

अञ्जते—cf. 'एता उ त्या उषसः···पूर्वे अर्धे रजसो भानुमञ्जते, these dawns anoint the sun in the eastern half of the sky, Ṛ V. i. 92. 1.

हिरण्यपावाः—the mention of the Soma being cleansed by the gold-adorned hand of the priest is found in SV. 1. 526 ( cf. 'अश्व नै वा हेमना पूयमानः' ).

पवित्र ऋषिः ।

३ १ २ ३ १ २
पवित्रं ते विततं ब्रह्मणस्पते
३ १ २र ३ १ २ ३ १ २
प्रभुर्गात्राणि पर्येषि विश्वतः ।
१ २ ३ २उ ३ १ २
अतप्ततनूर्न तदामो अश्नुते
३ २ ३ १ २र ३ १ २र
शृतास इद्वहन्तः सं तदाशत ॥ १२ ॥५६५॥

पवित्रम् । ते । विततम् । ब्रह्मणःऽपते । प्रभुः । गात्राणि । परि । एषि । विश्वतः । अतप्तऽतनूः । न । तत् । आमः । अश्नुते । शृतासः । इत् । वहन्तः । सम् । तत् । आशत ॥ १२ ॥

भाष्यसारः । हे ब्रह्मणस्पते—मन्त्रस्याधिपते सोम, ते पवित्रम्—शोधनयन्त्रम्, विततम्—सर्वतो विस्तृतम् । प्रभुस्त्वम्, गात्राणि—अङ्गानि, पर्येषि—परितो गच्छसि, विश्वतः—सर्वतः, अतप्ततनूः—असन्तप्तगात्रः, आमः—अपरिपक्वः, न अश्नुते—न व्याप्नोति, शृतासः—परिपक्वाः, वहन्तः—यागं निर्वहन्तः, तत्—पवित्रम्, समाशत—व्याप्नुवन्ति ॥ १२ ॥

O lord of prayer, thy purifying strainer is spread, as the lord, thou enterest into all its parts from all sides, the raw (juice), which is not heated, does not attain this (filter), being boiled, they, the bearers of the sacrifice, attain it.—12.

**सा०-भा० ।** हे 'ब्रह्मणस्पते' मन्त्रस्य स्वामिन्, सोम ! 'ते' 'पवित्रं' शोभनमङ्गम्, 'विततं' सर्वत्र विस्तृतम् । स 'प्रभुः' प्रभविता त्वम्, 'गात्राणि' पातुरङ्गानि 'पर्येषि' परिगच्छसि । 'विश्वतः' सर्वतः तव तत्पवित्रम् 'अतप्ततनूः' पयोव्रतादिना असन्तप्तगात्रः, 'आमः' अपरिपक्वः, 'नाश्नुते' न व्याप्नोति । 'शृतासः इत्' शृता एव परिपक्वा एव, 'वहन्तः' यागं निर्वहन्तः, तत् पवित्रं 'समाशत' व्याप्नुवन्ति ॥ १२ ॥

इति सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्य नवमः खण्डः । षष्ठप्रपाठकस्य च द्वितीयार्धे द्वितीया दशतिः ॥

१२। ऋ० सं० ६ म० ८३ सू० १ ऋ०। उ० आर्चि० २, २, १६, १।
Ṛ V. reads '**तत् समागत**' instead of '**सं तदाशत**'।

ब्रह्मणस्पते—*rfs.* to the Soma.

शृतासः—*for* शृताः, cooked, boiled (*opp.* to आम raw) ; fr. rt. श्रा or श्री *to cook.*

---

अथ पञ्चमाध्यायस्य दशमः खण्डः। षष्ठप्रपाठकस्य च द्वितीयार्धे तृतीया दशतिः।

अग्निश्चाक्षुष ऋषिः। उष्णिक् छन्दः*।

२ ३ १ २ ३ २ ३१ २र ३ १२
इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः।
३ २ ३ २ ३ १ २ ३ १ २
श्रुष्टे जातास इन्दवः स्वर्विदः॥ १ ॥५६६॥

इन्द्रम्। अच्छ। सुताः। इमे। वृषणम्। यन्तु। हरयः। श्रुष्टे। जातासः। इन्दवः। स्वःऽविदः॥ १ ॥

भाष्यसारः। श्रुष्टे—क्षिप्रम्, हरयः—हरितवर्णाः, स्वर्विदः—सर्वज्ञाः, इमे इन्दवः—सोमाः, वृषणम्—कामवर्षकम् इन्द्रम्, अच्छ—अभिमुखम्, यन्तु—गच्छन्तु॥ १ ॥

To Indra, the showerer of blessings, may these extracted, green-hued, quickly generated, omniscient *Indus* proceed.—1.

सा०-भा०। 'इन्द्रमच्छे'ति खण्डेऽस्मिन् ऋचो द्वादश संस्थिताः।
सकला उष्णिहस्तत्र वक्ष्यन्ते ऋषयः पृथक्॥

'श्रुष्टे' श्रुष्टी—क्षिप्रम्, 'जातासः' जाताः, 'इन्दवः' पात्रेषु क्षरन्तः, 'स्वर्विदः' सर्वज्ञाः, 'हरयः' हरितवर्णाः, 'सुताः' अभिषुताः, 'इमे' सोमाः 'वृषणं' कामानां सेक्तारमिन्द्रम् 'अच्छ' 'यन्तु' अभिगच्छन्तु॥ १ ॥

१। ऋ० सं० ६ म० १०६ सू० १ ऋ०। Ṛ V. has '**श्रुष्टी**' (*the modified rdg.*) instead of '**श्रुष्टे**' (*archaic*, being found nowhere else). उ० आर्चि० १,१,१७,१।

श्रुष्टे—*for* श्रुष्टी, *see* our notes on the latter (last two lines), SV. I. 106 ; Nir. 6. 12, 13.

---

* All the verses of this decade are in Uṣṇik metre (8 + 8 + 12).

चक्षुर्मानव ऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २
प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव ।
३ २ ३ २ ३ १ २ ३ १ २
द्युमन्तं शुष्ममा भर स्वर्विदम् ॥ २ ॥५६७॥

प्र । धन्व । सोम । जागृविः । इन्द्राय । इन्दो । परि । स्रव । द्युऽमन्तम् । शुष्मम् । आ । भर । स्वःऽविदम् ॥ २ ॥

भाष्यसारः । जागृविः—जागरणशीलः, प्रधन्व—प्रक्षर, द्युमन्तम्—दीप्यमानम्, शुष्मम्—बलम्, स्वर्विदम्—सर्वस्य प्रापकम् । शिष्टं सुगमम् ॥ २ ॥

Go on Soma, thou who art wakeful, Indu, flow on for Indra; bring (us) splendid, all-acquiring strength.—2.

**सा०-भा० ।** हे 'सोम !' 'जागृविः' जागरणशीलस्त्वं 'प्रधन्व' प्रक्षर । हे 'इन्दो' सोम ! 'इन्द्राय' 'परि स्रव' परितः पात्रेषु क्षर । किञ्च, 'द्युमन्तं' दीप्तियुक्तम्, 'स्वर्विदं' सर्वस्य लम्भकम्, 'शुष्मं' शत्रूणां शोषकं बलम्, 'आ-भर' आहर ॥ २ ॥

२ । ऋ॰ सं॰ ६ म॰ १०६ सू॰ ४ ऋ॰ ।

धन्वा—*for* धन्व, flow on ; the final vowel of the vb. (imp. 2. sg.) is long in the Saṃhitā text, Pāṇ. vi. 3. 135.

जागृविः—for dr. and mg. *see* notes on the word, SV. I. 258, Nir. 9. 8.

शुष्मम्—overpowering strength, fr. rt. शुष् *to dry up, here* to destroy the enemy.—*Sāy.*; fr. rt. śvas. *to blow, snort—Mcdnll.*; cf. 'यस्य शुष्माद्रोदसी अभ्यसेताम्', ṚV. ii. 12. 1 ; 'शुष्माच्चिदस्य पर्वता भयन्ते' *ib.*—13 ; 'शुष्मेण तस्थावभिवीर्येण', iv. 50. 9.

पर्वतनारदावृषी ।

१ २ ३ १ २र ३ २ ३ १ २
सखाय आ नि षीदत पुनानाय प्र गायत ।
२ ३ २ ३१ २र ३ २
शिशुं न यज्ञैः परि भूषत श्रिये ॥ ३ ॥५६८॥

सखायः । आ । नि । सीदत । पुनानाय । प्र । गायत । शिशुम् । न । यज्ञैः । परि । भूषत । श्रिये ॥ ३ ॥

भाष्यसारः । हे सखायः—ऋत्विजः, पुनानाय—पूयमानाय दशापवित्रेण शोध्यमानाय सोमाय, यज्ञैः—हविर्भिः । शिष्टं सुगमम् ॥ ३ ॥

Friends, sit down, sing praises to the purified Soma, adorn him for beauty, like a child, with holy offerings.—3.

**सा०-भा० ।** हे 'सखायः' सखिभूताः स्तोतारः, ऋत्विजः ! 'आ नि षीदत' स्तोतुमुपविशत । अथ 'पुनानाय' पूयमानाय सोमाय, 'प्रगायत' प्रकर्षेण गायत—तमभिष्टुत, ततः अभिषुतं सोमं 'यज्ञैः' यजनीयैः हविर्भिः मिश्रितैः, 'श्रिये' शोभार्थम्, 'परिभूषत' परितोऽलङ्कुरुत । तत्र दृष्टान्तः—'शिशुं न'—यथा शिशुं बालं पुत्रं पितरः आभरणैरलङ्कुर्वन्ति तद्वत् ॥ ३ ॥

३ । ऋ० सं० ९ म० १०४ सू० १ ऋ० । उ० आर्चि० ४, २, ६, १ ।

शिशुं न···श्रिये—decorate the Soma with offerings to beautify him as parents decorate a child.

---

पर्वतनारदावृषी ।

१ २ ३ १ २ ३ २ ३ १ २
तं वः सखायो मदाय पुनानमभि गायत ।
२ ३ २ ३ १ २ ३ १ २
शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥ ४ ॥५६९॥

तम् । वः । सखायः । मदाय । पुनानम् । अभि । गायत । शिशुम् । न । हव्यैः । स्वदयन्त । गूर्तिऽभिः ॥ ४ ॥

भाष्यसारः । **हे सखायः—ऋत्विजः, पुनानम्—पूयमानं सोमम्, गूर्तिभिः—स्तुतिभिः, स्वदयन्त—प्रीणयत । शिशुं सुगमम् ॥ ४ ॥**

Sing to him, the purified Soma, O friends, for the delight of the gods ; gratify him, like a child, with sacred offerings and praises.—4.

**सा० भा० ।** हे 'सखायः' ऋत्विजः ! 'वः' यूयं 'मदाय' देवानां मदार्थं 'पुनानं' पूयमानं 'तं' सोमम् 'अभिगायत' अभिष्टुत । 'तमि'मं सोमं 'शिशुं न' शिशुमिवालङ्कारैः क्षीरादिभिश्चालङ्कुर्वन्ति, तद्वत् 'हव्यैः' हविर्भिमिश्रयणैः, 'गूर्त्तिभिः' स्तुतिभिश्च 'स्वदयन्त' स्वादूकुरुत ॥ ४ ॥

४ । ऋ० सं० ६ म० १०५ सू० १ ऋ० । उ० आर्चि० ४, १, १६,१ । Ṛ̣V. reads **'यज्ञैः'** instead of **'हव्यैः'**.

गूर्त्तिभिः—with praises ; occurs only in this verse in the SV ; Ṛ̣V. i. 56. 2. etc. For dr. *vide* Pāṇ. viii. 2. 61 ; fr. rt. गुर् or गूर्.

---

त्रित ऋषिः ।

३ १ २र ३ १ २ ३ २ ३ २ ३ १ २
**प्राणा शिशुर्महीनां हिन्वन्नृतस्य दीधितिम् ।**
२ ३ १ २ ३ १ २ ३ १ २ ३ २
**विश्वा परि प्रिया भुवदध द्विता ॥ ५ ॥५७०॥**

प्राणा । शिशुः । महीनाम् । हिन्वन् । ऋतस्य । दीधितिम् । विश्वा । परि । प्रिया । भुवत् । अध । द्विता ॥ ५ ॥

भाष्यसारः । **प्राणा—यज्ञं कुर्वाणः, महीनाम्—महतीनाम् अपाम्, शिशुः—पुत्रस्थानीयः सोमः, ऋतस्य—यज्ञस्य, दीधितिम्—दीप्तिमन्तं स्वीयं रसम्, हिन्वन्—प्रेरयन्, विश्वा—विश्वानि सर्वाणि, प्रिया—प्रियाणि हवींषि, परिभुवत्—परिभवति, द्विता—द्विधा, भवति ॥ ५ ॥**

(The Soma) the accomplisher of holy ceremonies, the child of the great (waters), sending forth (the brilliant juice), the light of the sacrifice, excels all other dear offerings and becomes two-fold (in heaven and earth).—5.

**सा० भा० ।** 'प्राणा' यज्ञं कुर्वाण इत्यर्थः। 'महीनां' महतीनां महनीयानां वा अपां 'शिशुः' शिशुस्थानीयः सोमः, 'ऋतस्य' यज्ञस्य, 'दीधितिं' दीप्तिमन्तं प्रकाशकं वा स्वीयं रसम्, 'हिन्वन्' प्रेरयन्, 'विश्वा' सर्वाणि, 'प्रिया' प्रियाणि हवींषि, 'परि भुवत्' परिभवति—व्याप्नोति। अपि च, 'द्विता' द्विधा भवति—दिवि पृथिव्यां च वर्त्तत इत्यर्थः ॥ ५ ॥

५। ऋ० सं० ६ म० १०२ सू० १ ऋ०। उ० आर्चि० ३, २, १८,१। Ṛ̣V. reads 'क्राणा' instead of 'प्राणा'.

प्राणा—कर्त्ता ( यज्ञस्य कर्त्ता ); cf. 'प्राणा सिन्धूनाम्', SV. 1. 559.

Sāy. gives the etym. in his com. there as—प्रकर्षेण अनिति चेष्टते इति प्राणा—कर्त्ता.

दीधितिम्—the lustre; Sāy. in his com. on ix. 102. 8, derives the word fr. rt. धृ, mg.—the supporter of the rite ( ऋत ).

———

मनुऋषिः ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पवस्व देववीतय इन्दो धाराभिरोजसा ।
२ ३ २ ३ १ २
आ कलशं मधुमांत्सोम नः सदः ॥ ६ ॥५७१॥

पवस्व । देवऽवीतये । इन्दो । धाराभिः । ओजसा । आ । कलशम् । मधुऽमान् । सोम । नः । सदः ॥ ६ ॥

भाष्यसारः । देववीतये—देवानां भक्षणाय, कलशम्—द्रोणकलशम्, आसदः—अधितिष्ठ । शिष्टं सुगमम् ॥ ६ ॥

Flow on, Indu, for the feast of the gods, with force, in streams; sweet Soma, take thy seat in the pitcher.—6.

**सा०-भा० ।** हे 'इन्दो' सोम ! 'देववीतये' देवानां भक्षणाय 'ओजसा' बलेन 'धाराभिः' आत्मीयाभिः 'पवस्व' क्षर । हे 'सोम' ! 'मधुमान्' मदकर-रसवांस्त्वं 'नः' अस्मदीयं 'कलशं' द्रोणाख्यम् 'आसदः' आसीद—सदेर्लङि रूपम् ॥ ६ ॥

६ । ऋ० सं० ६ म० १०६ सू० ७ ऋ० । उ० आर्चि० ५, २, १७, १ ।

देववीतये—*see* SV. I. 514 ; for वीतये *vide* SV. I. 1.

---

अग्निर्ऋषिः ।

१ २ ३ २ ३ २उ ३ २ ३ १ २
**सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।**
१ २ ३ १ २र ३ १ २
**अग्रे वाचः पवमानः कनिक्रदत् ॥ ७ ॥५७२॥**

सोमः । पुनानः । ऊर्मिणा । अव्यम् । वारम् । वि । धावति । अग्रे । वाचः । पवमानः । कनिक्रदत् ॥ ७ ॥

भाष्यसारः । **पुनानः—पूयमानः, ऊर्मिणा—धारया, अव्यं वारम्—मेषरोमनिर्मित-पवित्रम्, विधावति, वाचः अग्रे—स्तोत्रस्य पुरतः, कनिक्रदत्—अक्रन्दीत् शब्दं करोति, क्रन्दतेर्लुङि 'दाधर्त्ति-दर्धर्त्ति' ( पा० ७, ४, ६५ ) इति निपात्यते ॥ ७ ॥**

The Soma, being cleansed, flows in a stream through the sheep's hair (*the strainer*), roars when filtered, before the voice of praise.—7.

**सा०-भा० ।** 'पुनानः' पूयमानः 'सोमः' 'ऊर्मिणा' स्वीयया धारया 'अव्यम्' अवि-भवं 'वारं' वालं पवित्रम्, 'विधावति' विविधं गच्छति । कीदृशः ? 'पवमानः' पूतः 'वाचः' स्तोत्रस्य 'अग्रे' 'कनिक्रदत्' पुनः पुनः शब्दं कुर्वन्, विधावति ॥ ७ ॥

७ । ऋ० सं० ६ म० १०६ सू० १० ऋ० । उ० आर्चि० ३, १, १८, १ । Ṛ.V. reads **'अव्यः'** for **'अव्यम्'**.

कनिक्रदत्—for dr. *see* our भाष्यसार, above.

---

द्वितोनाम ऋषिः ।

१ २३ १ २ ३२३ १ २ ३ १ २
**प्र पुनानाय वेधसे सोमाय वच उच्यते ।**
३ १ २र ३ १ २ ३ १ २
**भृतिं न भरा मतिभिर्जुजोषते ॥ ८ ॥५७३॥**

प्र । पुनानाय । वेधसे । सोमाय । वचः । उच्यते । भृतिम् । न । भर । मतिभिः । जुजोषते ॥ ८ ॥

भाष्यसारः । **वेधसे—कर्मणो विधात्रे, जुजोषते—प्रीयमाणाय, सोमाय, वचः—स्तोत्रम्, मतिभिः—स्तुतिभिः, भृतिं न – भृत्याय भृतिमिव, स्तुतिं प्र-भर ॥ ८ ॥**

The song of praise is uttered to the purified Soma, the institutor of holy rites; offer hymns to him to be propitiated with praises, as men pay wages to a servant.—8.

**सा॰ भा॰ ।** 'पुनानाय' पवित्रेण पूयमानाय, 'वेधसे' कर्मणो विधात्रे, 'सोमाय' 'वचः' स्तोत्रलक्षणम्, 'प्रोच्यते' त्वया प्रोच्यताम् । किञ्च, 'मतिभिः' स्तुतिभिः, 'जुजोषते' प्रीयमाणाय, स्तुतिं 'प्रभर' प्रकर्षेण धारय । तत्र दृष्टान्तः—'भृतिं न'—यथा भृतकाय भृतिं सम्पादयति तद्वत् ॥ ८ ॥

८ । ऋ॰ सं॰ ६ म॰ १०३ सू॰ १ ऋ॰ । R̥V. has **'वच उद्यतम्'** for **'वच उच्यते'** ।

---

पर्वतनारदावृषी ।

१ २ ३ १ २ ३१ २
**गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।**
१ २ ३ २३२ ३ १ २
**शुचिं च वर्णमधि गोषु धारय ॥ ९ ॥५७४॥**

गोऽमत् । नः । इन्दो । अश्वऽवत् । सुतः । सुऽदक्ष । धनिव ।
शुचिम् । च । वर्णम् । अधि । गोषु । धारय ॥ ९ ॥

भाष्यसारः । हे सुदक्ष—शोभनबल, गोमत्—गोयुक्तम्, अश्ववत्—अश्वयुक्तं धनम्, धनिव—धन्व प्रयच्छ, वर्णम्—आवरकं रसम्, गोषु—मिश्रणद्रव्येषु गव्येषु, अधिधारय—मिश्रयामि ॥ ९ ॥

O mighty Indu, thou art pressed out, confer upon us riches consisting of cows and horses; I mix the purified juice with the products of the cows (curds and milk).—9.

**सा०-भा०।** हे 'सुदक्ष' सुबल! हे 'इन्दो' सोम! 'सुतः' अभिषुतस्त्वं 'नः' अस्माकम्, 'गोमत्' यज्ञसाधनगोयुक्तं धनम्, 'धनिव' धन्व—वर्णविकारः, गमय—धन्वतिर्गत्यर्थः। ततोऽहं 'शुचिं' पूतन्दीप्यमानम्, 'वर्णं' रसञ्च 'गोषु' क्षीरादिषु, 'अधिधारय' अधिकं प्रापयामि ॥ ९ ॥

९। ऋ० सं० ९ म० १०५ सू० ४ ऋ०। उ० आर्चि० ७, ३, २०। ṚV. reads **'दीधरम्'** instead of **'धारय'** and **'धन्व'** (the regular correct form) for **'धनिव'** (irregular, corrupt).

अधि गोषु धारय—'make thy pure bright colour prevail over curds and milk'—seems to be the right rendering of the SV. text. We have, however, adopted Sāyaṇa's explanation which is apparently fashioned after ṚV. rdg. with 'दीधरम्' (in 1. pers.); 'do thou lay above the milk, thy radiant hue'—*Grfth.*

---

पर्वतनारदावृषी।

३ १ २ ३ १ २ ३ १ २र
**अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत।**
१ २३ १ २ ३ १ २
**गोभिष्टे वर्णमभि वासयामसि ॥ १० ॥५७५॥**

अस्मभ्यम् । त्वा । वसुऽविदम् । अभि । वाणीः । अनूषत ।
गोभिः । ते । वर्णम् । अभि । वासयामसि ॥ १० ॥

भाष्यसारः। वसुविदम्—धनस्य लम्भकं प्रापकम्, वाणीः—वाचः स्तोत्राणि, अभ्यनूषत—अभिष्टुवन्ति, वर्णं—रसम्, गोभिः—गोरसादिभिः, अभिवासयामसि—अभितः आच्छादयामः ॥ १० ॥

(O Soma), the songs of praise glorify thee, the procurer of wealth ; we mix thy juice with the curds and milk.—10.

**सा०-भा०।** हे सोम ! 'वसुविदं' धनस्य दातारम्, 'त्वा' त्वाम् 'अस्मभ्यं' धनादिदानार्थम्, 'वाणीः' अस्मदीया वाचः, 'अभ्यनूषत' अभिष्टुवन्ति। नु स्तवने (अदा० प०)। वयं 'ते' तव, 'वर्णम्' आवरकं रसम्, 'गोभिः' गोविकारैः क्षीरादिभिः, 'अभिवासयामसि' अभिवासयामः—अभित आच्छादयामः ॥ १० ॥

१०। ऋ० सं० ६ म० १०४ सू० ४ ऋ०।

ते वर्णम्—'We clothe thy form with the products of the kine.'—*Wils.* Sāy. derives 'वर्णम्' fr. rt. वृ *to cover* ; mg. prob. the juice having the colour prevailing over that of the milk and curds to be mixed with it.

'We clothe the hue thou wearest with a robe of milk.'—*Grfth.*

अनूषत—fr. rt. नु *to praise, see* notes on SV. 1. 198.

---

अग्निश्चाक्षुष ऋषिः।

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
पवते हर्यतो हरिरति ह्वरांसि रंह्या।
३क २र ३ १ २ ३ २ ३ १ २
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ ११ ॥५७६॥

पवते। हर्यतः। हरिः। अति। ह्वरांसि। रंह्या। अभि। अर्ष। स्तोतृभ्यः। वीरऽवत्। यशः ॥ ११ ॥

भाष्यसारः। हर्यतः—स्पृहणीयः, हरिः—हरितवर्णः सोमः, रंह्या—वेगेन, ह्वरांसि—कुटिलानि पवित्राणि। अति पवते—अतिक्रम्य क्षरति, स्तोतृभ्यः वीरवत्—वीरपुत्रयुक्तम्, यशः—अन्नं कीर्तिं वा, अभ्यर्ष—गमय, प्रापय, प्रयच्छ ॥ ११ ॥

The beloved green-coloured (Soma-juice) flows, with a speed through the crooked (filter); pour upon, Soma, the worshippers glory (or food) and heroic sons.—11.

**सा॰-भा॰ ।** 'हर्यतः' स्पृहणीयः, 'हरिः' हरितवर्णः सोमः, 'रंह्या' तृतीयाया आकारः—साधुवेगेन, 'ह्वरांसि' कुटिलानि अनृजूनि पवित्राणि, 'अति पवते' अतीत्य गच्छति । अथ प्रत्यक्षस्तुतिः—हे सोम ! त्वं 'स्तोतृभ्यः', 'वीरवत्' पुत्रयुक्तम्, 'यशः' 'अभ्यर्ष' अभिगमय, प्रयच्छेत्यर्थः ॥ ११ ॥

११ । ऋ॰ सं॰ ९ म॰ १०६ सू॰ १३ ऋ॰ । उ॰ आर्चि॰ १, २, २२, २ ।
ṚV. reads **'अभ्यर्षन्'** ( pres. PT. with शतृ ) instead of **'अभ्यर्ष'** (imp. 2. sg).
हर्यतः—desirable ; dr. rt. हर्य to desire + *aff.* अतच्, uṇ. iii. 109.

———

द्वित ऋषिः ।

२ ३ १ २   ३ २ ३ १ २   ३ १ २
**परि कोशं मधुश्चुतं सोमः पुनानो अर्षति ।**
३ २उ   ३ १ २   ३ १ २
**अभि वाणीर्ऋषीणां सप्तानूषत ॥ १२ ॥५७७॥**

परि । कोशम् । मधुऽश्चुतम् । सोमः । पुनानः । अर्षति । अभि । वाणीः । ऋषीणाम् । सप्त । अनूषत ॥ १२ ॥

भाष्यसारः । **मधुश्चुतम्—मधुर-रसक्षरणशीलम्, कोशम्—द्रोणकलशं प्रति परि अर्षति—परि-गच्छति, स्वकीयं रसं परि-गमयति । सप्तवाणीः—सप्तच्छन्दांसि, गायत्र्यादीनि अभ्यनूषत—अभिष्टुवन्ति ॥ १२ ॥**

The Soma, being filtered, flows into the mead-dripping pitcher; the seven metres of the *Ṛṣis* glorify him (Soma).—12.

**सा॰-भा॰ ।** सः 'पुनानः' पूयमानः सोमः 'मधुश्चुतं' मधुररसस्य च्यावयितारं द्रोणकलशं प्रति आत्मीयं रसं 'पर्यर्षति' परिगमयति । तमिमं सोमम्

'ऋषीणां' 'सप्तवाणीः' सप्तच्छन्दांसि 'अभ्यनूषत' अभिष्टुवन्ति। नू स्तवने कुटादिः (प०) ॥ १२ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
पञ्चमाध्यायस्य दशमः खण्डः। षष्ठप्रपाठकस्य च द्वितीयार्धे तृतीया दशतिः ॥

इत्यौष्णिहम्

१२। ऋ० सं० ६ म० १०३ सू० ३ ऋ०। R̥V. has 'अव्यये वारे अर्षति' instead of 'सोमः पुनानो अर्षति'।

---

पञ्चमाध्यायस्य एकादशः खण्डः। षष्ठप्रपाठकस्य च द्वितीयार्धे चतुर्थी दशतिः।

गौरिवीतिः ऋषिः।

१ २ ३ १ २ २ १ २ १ १ २ ०
पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो
१ २३ १ २ ३ १ २ ३ ३ १
मदः। महि द्युक्षतमो मदः ॥ १ ॥ ५७८ ॥

पवस्व। मधुऽमत्तमः। इन्द्राय। सोम। क्रतुऽवित्तमः। मदः। महि। द्युक्षऽतमः। मदः ॥ १ ॥

भाष्यसारः। मधुमत्तमः—अत्यन्तमधुरः, क्रतुवित्तमः—अतिशयेन प्रज्ञायाः कर्मणो वा प्रापकः, महि—महान्, द्युक्षतमः—दीप्ततमः। शिष्टं सुगमम् ॥ १ ॥

O Soma, most sweet, flow on for Indra; thou art the great source of wisdom, the exhilarant, the brightest, hilarious drink.—1.

सा०-भा०। स्युः 'पवस्वे'ति खण्डेऽस्मिन्नृचोऽष्टौ ककुभोऽत्र तु
'स सुन्वे' इति गायत्री यवमध्येति केचन।
अक्षरव्यूहनादेषा ककुब्वेति केचन।
'एष स्य धारया सुतः' प्रगाथः, काकुभोऽन्तिमः।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे ॥

हे 'सोम !' 'मधुमत्तमः' अतिशयेन माधुर्योपेतस्त्वम्, 'इन्द्राय' इन्द्रार्थं 'मदः' मदकरः सन् 'पवस्व' त्तर। कीदृशः ? 'क्रतुवित्तमः' अत्यन्तं प्रज्ञायाः कर्मणो वा लम्भकः, 'महि' महान् मंहनीयो वा, 'द्युत्ततमः' अत्यन्तदीप्तः, 'मदः' हृष्टः ॥ १ ॥

१। ऋ० सं० ६ म० १०८ सू० १ ऋ०। उ० आर्चि० १, १, १६, १।

द्युत्ततमः—most celestial—*Grfth.* *See* our notes on द्युत्तम्, SV. 1. 192.

क्रतुवित्तमः—for क्रतु *see* our notes on सुक्रतुम् , SV. 1. 3 ; and on शतक्रतो, 1. 116.

---

ऊर्ध्वसद्मा ऋषिः।

३ २ ३ २ ३ २उ ३ १ २ ३ १ २
अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव
३ २ १ २र ३ १ २
देवयुम्। वि कोशं मध्यमं युव ॥ २ ॥ ५७९ ॥

अभि। द्युम्नम्। बृहत्। यशः। इषःऽपते। दिदीहि। देव। देवयुम्। वि। कोशम्। मध्यमम्। युव ॥ २ ॥

भाष्यसारः। हे इषस्पते—अन्नपते सोम, देवयुम्—देवकामम्, द्युम्नं यशः—द्योतमानम् अन्नम्, दिदीहि—प्रयच्छ, मध्यमं कोशम्—अन्तरीक्षस्थितं मेघम्, वियुव—विश्लेषय ॥ २ ॥

Divine Soma, lord of food, we glorify thee friendly to gods ; bestow abundantly on us brilliant food ; rend asunder the mid-air vessel (the cloud).—2.

**सा०-भा०।** हे 'इषस्पते' अन्नस्य पते ! हे 'देव' स्तोतव्य सोम ! 'देवयुं' देवकामं त्वां वयमभिष्टुम इति शेषः। किञ्च, त्वं 'द्युम्नं' द्योतमानम्, 'बृहत्' प्रभूतम्, 'यशः' अन्नम्, अस्मभ्यम् 'अभि दिदीहि' आभिमुख्येन प्रकाशय, प्रयच्छेत्यर्थः।

आमन्त्रितस्याविद्यमानत्वेन पादादित्वान्न निघातः। किञ्च, 'मध्यमम्' अन्तरिक्षस्थितम्, 'कोशं' मेघम्, 'वि युव' वृष्ट्यर्थं गमय, विश्लेषय ॥ २ ॥

२। ऋ० सं० ९ म० १०८ सू० ९ ऋ०। उ० आर्चि० ३, २, १७, १। ṚV. reads 'देवयुः' for 'देवयुम्'.

इषस्पते—इषः—food, *see* SV. 1. 338.

देवयुम्—*see* notes on the word, SV. 1. 506.

मध्यमं कोशम्—'the mid-aerial receptacle'—*Wils.*; 'the cask of the middle air'—*Grfth.*; *rfs.* to the cloud.

---

ऋजिश्वा ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २र ३ १ २
आ सोता परि षिञ्चताश्वं न स्तोममप्तुरं
३ १ २ ३ १ २ ३ १ २
रजस्तुरम्। वनप्रक्षमुदप्रुतम् ॥ ३ ॥ ५८० ॥

आ। सोत। परि। सिञ्चत। अश्वम्। न। स्तोमम्। अप्तुरम्। रजःऽतुरम्। वनऽप्रक्षम्। उदप्रुतम् ॥ ३ ॥

भाष्यसारः। अश्वं न—इव वेगवन्तम्, स्तोमम्—स्तोतव्यम्, अप्तुरम्—सत्वरम् उदकानां प्रेरकम्, रजस्तुरम्—ज्योतिषां प्रेरकम्, वनप्रक्षम्—उदकैः सम्पृक्तं काष्ठ-पात्रेषु प्रकीर्णं वा, उदप्रुतम्—उदकेषु वसतीवरीनामकेषु जलेषु प्लवमानं सोमम्, आसोत—अभिषुणुत, सोता इत्यत्र तस्य तबादेशे पित्त्वाद् गुणः, अतङि तु दीर्घत्वं चिन्त्यम् ( पा० ६, ३, १३३ ),—'द्व्यचोऽतस्तिङः' ( ६, ३, १३५ ) इति 'अन्येषामपि दृश्यते' ( ६, ३, १३७ ) इति वा संहितायां दीर्घत्वं समाधेयम्। हे ऋत्विज इति शेषः। शिष्टं सुगमम् ॥ ३ ॥

O priests, press out and sprinkle the Soma, around, like a horse, worthy of adoration, the sender of waters, the sender of light, resting in waters (or in wooden casks), floating in waters (the *Vasatīvarīs*).—3.

**सा०-भा०।** हे ऋत्विजः! 'आ सोत' सोममभिषुत,—षुञ् अभिषवे (स्वा० उ०) लोटि छान्दसो विकरणस्य लुक्, 'तप्तनप्तनथनाश्च' (पा० ७,१,४५) इति तस्य तबादेशः। किञ्च, 'परि षिञ्चत' परितः वसतीवर्यादिभिः सिञ्चत। कीदृशम्? अश्वं न अश्वमिव वेगिनम्, 'स्तोमम्' स्तोतव्यम्, 'अप्तुरम्' अन्तरिक्षस्थितानामुदकानां प्रेरकम्, 'रजस्तुरं' तेजसां वा प्रेरकम्। 'वनप्रक्षम्' उदकैः सम्पृक्तम्, यद्वा काष्ठेषु पात्रेषु क्षारकं प्रकीर्णम्, 'उदप्रुतम्' उदकं गच्छन्तं प्लवमानं सोममभिषुत, अभिषिञ्चत ॥ ३ ॥

३। ऋ० सं० ६ म० १०८ सू० ७ ऋ०। उ० आर्चि० ६, २, ६, १। ṚV. has **'वनक्रक्षम्'** for **'वनप्रक्षम्'.**

स्तोमम्—laud, praise ; *here* worthy of praise.

अप्तुरम्—dispenser of waters (rain) ; *see* our notes on the word, SV. 1. 487.

रजस्तुरम्—penetrating the sky, hastening through the air—Mon. Wil. S. E. Dict. P. 863. col. 2.

वनप्रक्षम्—mingled with waters (Vasatīvarīs) ; fr. rt. पृच् *to unite*, 7. p. ; or resting in the wooden vessels.

उदप्रुतम्—swimming in water.

---

कृतयशा ऋषिः।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २
एतमु त्यं मदच्युतं सहस्रधारं वृषभं दिवोदुहम्।
२ ३ १ २ ३ १ २
विश्वा वसूनि बिभ्रतम् ॥ ४ ॥ ५८१ ॥

एतम्। उ। त्यम्। मदऽच्युतम्। सहस्रऽधारम्। वृषभम्। दिवः। दुहम्। विश्वा। वसूनि। बिभ्रतम् ॥ ४ ॥

भाष्यसारः। दिवः—ऋत्विजः। एतं त्यं मदच्युतम्—मादक-रसस्राविणम्, सहस्रधारम्—बहुधाराभिः क्षरन्तम्, विश्वा—विश्वानि, वसूनि बिभ्रतम्—सर्वधन-प्रदम्, सोमम्, दुहम्—अदुहन्,—'बहुलं छन्दस्यमाङ्योगेऽपी'ति च लङि अडभावः ॥ ४ ॥

Him, the priests milked out, the sprinkler of hilarious juice, the fulfiller of desires, flowing in thousand streams, bearing all riches.—4.

**सा०-भा०।** 'दिवः' देवान् कामयमाना ऋत्विजः। 'एतं त्यमु' सोममेव, 'दुहम्' अदुहन्—दुहेर्लङि रूपम्, दुहन्ति स्म, छान्दसो नकारस्य मकारः। 'ग्रावाणो वत्सा ऋत्विजो दुहन्ती'ति तैत्तिरीयक-ब्राह्मणम्। कीदृशं सोमम्? 'मदच्युतं' मदस्य प्रेरकम्, 'सहस्रधारं' बहुधारम्, 'वृषभं' कामानां वर्षकम्, 'विश्वा' सर्वाणि, 'वसूनि' धनानि, 'बिभ्रतं' धारयन्तम्॥ ४॥

४। ऋ० सं० ६ म० १०८ सू० ११ ऋ०। RV. reads **'दिवं दुदुः'** (they milked from heaven) instead of **'दिवो दुहम्'** (the SV. rdg.).

---

ऋणव ऋषिः। गायत्री छन्दः।

१ २ ३ १ २र ३ २ ३ १ २ ३ १ २र
स सुन्वे यो वसूनां यो रायामानेता य इडानाम्।
२ ३ १ २ ३ २
सोमो यः सुक्षितीनाम्॥ ५॥ ५८२॥

स। सुन्वे। यः। वसूनाम्। यः। रायाम्। आनेता। यः। इडानाम्। सोमः। यः। सुऽक्षितीनाम्॥ ५॥

भाष्यसारः। यः सोमः वसूनाम् आनेता आहर्त्ता, यश्च रायाम्—गवाम्, यश्च इडानाम्—अन्नानाम्, सुक्षितीनाम्—शोभनमनुष्याणाम् आनेता, सर्वसम्पदाहर्त्ता स सोमः, सुन्वे—ऋत्विग्भिः अभिषुषुवे, अभिषुतः॥ ५॥

That Soma has been pressed out, who brings us riches supplies us cattle, provides us with food and good men.—5.

**सा०-भा०।** 'यः' 'सः' सोमः' 'सुन्वे' अभिषुषुवे ऋत्विग्भिः। य सोमः 'वसूनां' धनानाम् 'आनेता', यश्च 'रायाम्'—रान्ति प्रयच्छन्ति क्षीरादिकमि

रायो गावस्तेषामानेता विद्यते, यश्च सोमः 'सुक्षितीनां' शोभन-मनुष्याणाम् आनेता, सोऽभिषुतोऽभूदिति ॥ ५ ॥

५। ऋ० सं० ६ म० १०८ सू० १३ ऋ०। उ० आर्च्चि० ४, १, १८, १।

रायाम्—Sāyaṇa explains the term as—*Gavām* (of the cows); he derives it from rt. 'रा' *to give*, the derivative sense being, according to him, the cows who give milk; 'of riches'—*Wils.*

सुक्षितीनाम्—'of fair homes'—*Wils.* The word 'क्षिति' is found among the synonyms of man, Ngh. 2. 3; Nir. 4. 24; cf. 'अनुक्रोशन्ति क्षितयो भरेषु', in battles the men shout, ṚV. iv, 38. 5.

---

शक्तिः ऋषिः। ककुप् छन्दः।

२ १ २ ३ १ २ ३ १ २ ३ १ २

त्वं ह्या३ङ्ग दैव्यं पवमान जनिमानि द्युमत्तमः।

३ १ २ ३ १ २

अमृतत्वाय घोषयन् ॥ ६ ॥ ५८३ ॥

त्वम्। हि। अङ्ग। दैव्यम्। पवमान। जनिमानि। द्युमत्ऽतमः। अमृतऽत्वाय। घोषयन् ॥ ६ ॥

भाष्यसारः। पवमान—हे पूयमान सोम, द्युमत्तमः—अतिशयेन द्योतमानः त्वम्, दैव्यम्—दैव्यानि, जनिमानि—देवानां जन्मानि, जानासि इति शेषः। अन्यत् सुगमम् ॥ ६ ॥

O purified Soma, thou, who art most bright, knowest the births of the gods, thou proclaimest their immortality.—6.

**सा०-भा०।** हे 'पवमान' पूयमान सोम! 'द्युमत्तमः' अतिशयेन दीप्तिमान्, 'त्वं हि' त्वमेव 'दैव्यं' देवसम्बन्धीनि 'जनिमानि' जन्मानि देवानित्यर्थः। जानासीति शेषः। तानभिलक्ष्य 'अमृतत्वाय' तेषाम् अमरणाय, 'अङ्ग' क्षिप्रम्, 'घोषयन्' ऋत्विजो ग्रावाणीव शब्दमुद्पादयन्, उत्पादयन्ति। हि-योगादनिघातः ॥ ६ ॥

६। ऋ० सं० ६ म० १०८ सू० ३ ऋ०। उ० आर्चि० ३, १, १७, १। ṚV. has 'घोषयः' for 'घोषयन्'.

---

उरुर्ऋषिः।

३ १ २र ३ २ ३ १ २ ३ १ २
एष स्य धारया सुतोऽव्या वारेभिः पवते मदिन्तमः।
१ २ ३ २ ३ १ २
क्रीडन्नूर्मिरपामिव ॥ ७ ॥ ५८४ ॥

एषः। स्यः। धारया। सुतः। अव्याः। वारेभिः। पवते। मदिन्ऽतमः। क्रीडन्। ऊर्मिः। अपाम्। इव ॥ ७ ॥

भाष्यसारः। स्यः—सः, सुतः—अभिषुतः, मदिन्तमः—अतिशयेन मादकः, सोमः अव्या वारेभिः—अवेर्बालैः तन्निर्मित-पवित्रेण, अपाम्—जलानाम्, ऊर्मिस्तरङ्ग इव क्रीडन्, पवते—क्षरति ॥ ७ ॥

This Soma, most hilarious, being pressed out, flows in a stream, through the hairs of the sheep (i. e., the woollen strainer), sporting like the waters' wave.—7.

**सा०भा०।** 'स्यः' सः 'एषः' 'सुतः' अभिषुतः सोमः, 'अव्या वारेभिः' अवेर्बालैः कृते पवित्रे, 'धारया' आत्मीयया 'पवते' कलशमभिलक्ष्य क्षरति। कीदृशः? 'मदिन्तमः' मादयितृतमः। 'अपामिव' उदकानाम् 'ऊर्मिः' सङ्घात इव, 'क्रीडन्' इतस्ततः सङ्क्रीडमानः, पवते ॥ ७ ॥

७। ऋ० सं० ६ म० १०८ सू० ४ ऋ०। ṚV. reads 'अव्यो वारेभिः' for 'अव्या वारेभिः'.

---

ऋजिश्वा ऋषिः

२ ३ २ ३ २ ३ २ ३ १
य उस्त्रिया अपिया अन्तर-
२र ३ १ २र ३ १ २
श्मनि निर्गा अकृन्तदोजसा ।
३ २ ३१ २ ३ २ ३
अभि व्रजं तत्निषे गव्य-
१ २ ३ १ २ ३ १ २
मश्व्यं वर्मीव धृष्णवा रुज ।
१ ३ १ २ ३ १ २
ओ३म् वर्मीव धृष्णवा रुज ॥ ८ ॥ ५८५ ॥

यः । उस्त्रियाः । अपियाः । अन्तः । अश्मनि । निः । गाः । अकृन्तत् । ओजसा । अभि । व्रजम् । तत्निषे । गव्यम् । अश्व्यम् । वर्मीऽइव । धृष्णो । आ । रुज । ओम् । वर्मीऽइव । धृष्णो । आ । रुज ॥ ८ ॥

भाष्यसारः । यः सोमः उस्त्रियाः—उत्सरणशीलाः, अपियाः—अप्याः अन्तरिक्ष-स्थिताः, अश्मनि मेघे, अन्तः—मध्ये स्थिताः, गाः—आपः, ओजसा—बलेन, निरकृन्तत्—निरगमयत्, आकाशाद् वृष्टिमुत्पादितवान् इत्यर्थः । स त्वं हे धृष्णो—शत्रुधर्षणशील सोम, गव्यम्—गोसम्बन्धि, अश्व्यम्—अश्वसम्बन्धि, व्रजम्—समूहम् असुर-कवलितम्, अभि तत्निषे—विस्तीर्णं प्रमुक्तमित्यर्थः, कृतवान् असि । वर्मीव—कवचधारीव, आरुज—असुरान् निपीडय ॥ ८ ॥

Thou, who, by thy might, liberated the quick-moving waters of the firmament from the midst of the cloud, thou didst set free the herd of cows and horses (carried away by the Asuras); like an armoured hero, O brave Soma, oppress the Asuras.—8.

**सा०-भा० ।** 'यः' सोमः 'उस्त्रियाः' उत्सरणशीलाः, 'अपिया' अप्याः,—आपः इत्यन्तरिक्षनाम ( निघ० १,३,८ ), अस्माद् 'भवे छन्दसि' ( पा० ४,४,११० ) इति

यत्, अन्तरिक्षस्थाः। अहिप्रभृतिभिरसुरैः अपहृत्य निहिता 'गाः' आपः 'अश्मनि' मेघे 'अन्तः' मध्ये स्थिता इत्यर्थः। 'ओजसा' बलेन 'निरकृन्तत्' निरच्छिनत् निरगमयत्, अन्तरिक्षाद्वृष्टिमकार्षीदित्यर्थः। स त्वम् असुरैः अपहृतं 'गव्यम्' गोसम्बन्धि, 'अश्व्यम्' अश्वेषु भवम्, 'व्रजं' समूहम्, 'अभि तत्निषे' अभितो व्याप्नोति,—तनु विस्तारे, छन्दसि लिटि 'तनिपत्योश्छन्दसि' ( पा० ६,४,९९ ) इत्युपधालोपः। किञ्च, हे 'धृष्णो' शत्रुधर्षणशील सोम ! स त्वं 'वर्मीव' कवचीव 'आरुज' असुरान् जहि ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्यैकादशः खण्डः। षष्ठप्रपाठकस्य च द्वितीयार्धे चतुर्थी दशतिः ॥

काकुभं समाप्तम्

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ४ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपालसाम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमोऽध्यायः समाप्तः ॥

## सौम्यं पावमानं वा पर्व काण्डं वा समाप्तम्

इति तृतीयं पर्व ॥

८। ऋ० सं० ९ म० १०८ सू० ६ ऋ०। R̥V. has 'अप्या अन्तरश्मनः' instead of 'अपिया अन्तरश्मनि'.

अप्याः—seems to be the *modified rdg.* in the R̥V. for अपिया (*irregular*) of the SV. text.

अभिव्रजं तत्निषे गव्यमश्व्यम्—It is Indra who released the cows (mythically referring to the release of waters) from the enclosure of Vala (the demon of drought, otherwise named Vr̥tra), who arrested them (R̥V. ii. 12. 3;—14. 2. etc.); the Soma being the stimulator of Indra, the achievement of the latter is attributed to the former.

तत्निषे—thou didst spread out, i. e., set free or liberate; for dr. *see* the com. above.

वेदानां जगति सर्वत्र प्रथनकामेन विद्याभूषण-भट्टाचार्य-श्रीभवविभूति-शर्मणा सरलश्लक्ष्णगिरा विरचिते भाष्यसारे आकुलभाषया सानुवाद-पदव्याख्याने च सामवेदीयच्छन्द-आर्चिकं समाप्तम्।

---

# सामवेद-संहिता

## षष्ठोऽध्यायः*

### आरण्य-पर्व वा आरण्य-काण्डम्

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
कृपालुः सायणाचार्यो वेदार्थं वक्तुमुद्यतः ।
आरण्यकाभिधः षष्ठोऽध्यायो व्याक्रियतेऽधुना ॥ ३ ॥
तत्रेन्द्रेत्यादिकानान्तु पञ्चपञ्चाशतां क्रमात् ।
ऋषिच्छन्दोदैवतञ्च तत्र तत्राभिदध्महे ॥ ४ ॥
तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्त्तितः ।
द्वितीयस्य वसिष्ठः स्यात् तृतीयाया ऋचः स्मृतः ॥ ५ ॥
वामदेवस्ततश्छन्दो बृहतीत्रिष्टुबेव च ।
गायत्रीति क्रमादिन्द्रो भवेत् तिसृषु देवता ॥ ६ ॥

---

* The sixth adhyāya is designated as the 'Āraṇyakāṇḍa' or 'Āraṇya-saṃhitā'. The arrangement according to *prapāṭhaka* and *daśati* is not found in this adhyāya as in the foregoing ones. Mr. Griffith has not given the translation of this adhyāya in his Sāma-Veda. Mr. Bloomfield in his 'Vedic Concordance' has dealt the stanzas of this adhyāya separately and made separate references to them as belonging to Āraṇyasaṃhitā. Again some publishers (e. g., J. Vidyāsāgara of Calcutta) have not included this adhyāya in their editions of the Sāma-Veda, but published it as a separate treatise under the name of 'Āraṇyasaṃhitā'. This has been so treated, perhaps for its independent individual importance apart from its being a part of the Sāma-Veda. We, however, following Sāyaṇa, add this in our present volume, but make references to the stanzas contained here, after

भरद्वाज ऋषिः। बृहतीच्छन्दः। इन्द्रो देवता।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
**इन्द्र ज्येष्ठन्न आभर ओजिष्ठम्पुपुरि श्रवः।**
१२ ३२ २ १ २ ३ १ २ ३२
**यद्दिधृत्तेम वज्रहस्त रोदसी उभे सुशिप्र प्राः॥ १॥**

इन्द्र। ज्येष्ठम्। नः। आ। भर। ओजिष्ठम्। पुपुरि। श्रवः। यत्। दिधृक्षेम। वज्रऽहस्त। रोदसी इति। उभे इति। सुऽशिप्र। प्राः॥ १॥

भाष्यसारः। **हे वज्रहस्त, सुशिप्र—शोभनहनुक, इन्द्र, यत् अन्नम् दिधृत्तेम—वयं धारयितुम् इच्छेम, यच्च अन्नम् उभे रोदसी—द्यावापृथिव्यौ, आप्राः—आपूरयति, तत् ज्येष्ठम्—सुप्रशस्तम्, ओजिष्ठम्—विशेषेण बलकरम्, पुपुरि—पूरकम्, श्रवः—अन्नम्, अस्मभ्यम् आ-भर—प्रयच्छ॥ १॥**

O thunder-armed, fair-cheeked, Indra, bestow upon us that most excellent, most invigorating and nutritious food, which supports both heaven and earth and which we desire to possess.—1.

**सा०-भा०।** हे 'इन्द्र'! 'ज्येष्ठं' प्रशस्यतमम् 'ओजिष्ठम्' अतिशयेन बलकरम् 'पुपुरि' पूरकं 'श्रवः' अन्नं 'नः' अस्मभ्यम् 'आ भर' आहर, प्रयच्छ। हे 'वज्रहस्त' वज्रबाहो! हे 'सुशिप्र' शोभनहनुक! एवम्भूत हे इन्द्र! 'यत्' अन्नं 'दिधृत्तेम' धारयितुमिच्छेम, यच्चान्नम् इमे परिदृश्यमाने 'उभे रोदसी' द्यावापृथिव्यौ 'आ प्राः' आ पूरयति, तदन्नमाहरेत्यन्वयः॥ १॥

१। ऋ० सं० ६ म० ४६ सू० ५ ऋ०। Ṛ.V. reads **'येनेमे चित्र'** (हे चित्र चायनीय, येन अन्नेन इमे उभे द्यावापृथिव्यौ आप्राः—आपूरयसि तदन्नमाभर) instead of **'यद्दिधृत्तेम'**।

---

Mr. Bloomfield. This adhyāya, though comparatively smaller in size, containing as it does only 55 verses, (as contrasted with the number of the preceding adhyāyas varying from 114 to 119), is of no meaner importance, as it contains some of the stanzas, with certain variations, of the celebrated and most popular hymn known as Puruṣa Sūkta (*see* Khaṇḍa iv. veses 3—7) and some other mystical stanzas dealing with the Supreme Soul.

वसिष्ठ ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।

२ ३ २ ३ १ २ ३ १र २र ३ २ ३ १ २ ३ १ २
इन्द्रो राजा जगतश्चर्षणीनामधिक्षमा विश्वरूपं यदस्य ।
१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २
ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतं चिदर्वाक् ॥ २ ॥

इन्द्रः । राजा । जगतः । चर्षणीनाम् । अधि । क्षमा । विश्वऽरूपम् । यत् । अस्य । ततः । ददाति । दाशुषे । वसूनि । चोदत् । राधः । उपऽस्तुतम् । चित् । अर्वाक् ॥ २ ॥

भाष्यसारः । य इन्द्रः, जगतः—जङ्गमस्य भूतजातस्य, तथा चर्षणीनाम्—मनुष्याणाम्, तथा च अधिक्षमा—भूतले, विश्वरूपम्—विविधं नानारूपम्, यत् धनम् अस्ति तस्य राजा भवति । ततः, दाशुषे—हविर्दत्तवते यजमानाय, वसूनि ददाति, स इन्द्र उपस्तुतम्—सुप्रशस्तम्, राधः—धनम्, अर्वाक्—अस्मदभिमुखम्, चोदत्—प्रेरयतु ॥ २ ॥

Indra is the lord of the living world, of men, of various wealth that exists upon the earth; hence he gives riches to the offerer of oblations; may he send forth to us excellent wealth.—2.

**सा०-भा० ।** यः 'इन्द्रः' 'जगतो' जङ्गमस्य पश्वादेः यतो 'राजा' ईश्वरो भवति, 'चर्षणीनां' मनुष्याणां च राजा भवति । किञ्च, अधिक्षमा—सप्तम्येकवचनस्य लुक्,—क्षमायाम्, 'विश्वरूपं' 'यत्' धनमस्ति तस्यापि राजा भवति । 'ततो ददाति दाशुषे वसूनि' यजमानाय वसूनि धनानि ददाति । स इन्द्रोऽस्माभिः 'उपस्तुतं' सम्यक् स्तुतं 'राधः' धनम् 'अर्वाक्' अस्मदभिमुखं 'चोदत्' प्रेरयतु ॥ २ ॥

२ । ऋ० सं० ७ म० २७ सू० ३ ऋ० । R̥V. has **'विषुरूपम्'** instead of **'विश्वरूपम्'** and **'उपस्तुतः'** (*referring to* Indra) in the place of **'उपस्तुतम्'** (*referring to* **राधः**) ।

---

वामदेव ऋषिः। गायत्रीच्छन्दः। इन्द्रो देवता।

२ ३ २ ३ २ ३ १ २ ३ २उ ३ २ क २र
यस्येदमा रजोयुजस्तुजे जने वनं स्वः।
१ २ ३ १ २ ३ २
इन्द्रस्य रन्त्यं बृहत्॥ ३॥

यस्य। इदम्। आ। रजःऽयुजः। तुजे। जने। वनम्। स्वः। इन्द्रस्य। रन्त्यम्। बृहत्॥ ३॥

भाष्यसारः। रजोयुजः—अतिशय-तेजस्विनः, यस्य इन्द्रस्य, इदम्—दानम्, स्वः—सर्वत्र, तुजे जने—दानशीले यजमाने, वनम्—वननीयं सम्भजनीयम्, रन्त्यम्—अतिशयरमणीयम्, बृहत्—प्रभूतञ्च, भवति॥ ३॥

This gift of mighty Indra is ever welcome to the presenter of oblations. Indra's gift is ever pleasant and profuse.—3.

**सा० भा०।** 'रजोयुजः' ज्योतिर्भिर्युक्तस्य,—ज्योती रज उच्यत इति यास्कः,—अत्यन्ततेजस्विनो 'यस्य' इन्द्रस्य 'इदं' पुरोवर्ति स्तोत्रयुक्तं हविरस्ति, तद्धविः 'स्वः' स्वर्गे सर्वत्र वा, 'तुजे' दातरि जने यजमानविषये 'वनं' यतो वननीयं सम्भजनीयं खलु, अतः 'इन्द्रस्य' दानं 'रन्त्यम्' अत्यन्तरमणीयम्, 'बृहत्' प्रभूतं भवति॥ ३॥

३। इयम् ऋक् ऋग्वेदे नास्ति। अथर्ववेद० ६, ३३, १।

In the AV. (where it occurs) Grfth. remarks—the phraseology is obscure and the construction loose and the correctness of the text is not free from suspicion. His translation is very peculiar and it is difficult to make any sense of his rendering.

तुजे—the giver (of oblation); fr. rt. तुज् *to give*, Nir. 6. 17; the word occurs only here in SV. and thrice in ṚV. iv. 1. 3; v. 41. 9; viii. 4. 15. The derivatives of this root e. g., तुञ्ज: (gift), तुञ्जान: are occasionally met with.

रन्त्यम्—enjoyable, agreeable; dr. fr. rt. रम् to *enjoy*; occurs also thrice in Ār. S. 4. 2 and only once in the ṚV. in x. 29. 3.

शुनःशेप ऋषिः । चतुष्पाज्जगतीच्छन्दः । वरुणो देवता ।

१ २ ३ १ २ ३ १ २ ३ १र २र ३ १र २र ३ १ २
**उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।**
१ २ ३ २ ३ १र २र ३ २ ३ १ २
**अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥ ४ ॥**

उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मध्यमम् । श्रथय । अथ । आदित्य । व्रते । वयम् । तव । अनागसः । अदितये । स्याम ॥ ४ ॥

भाष्यसारः । हे वरुण, अस्मत्—अस्मत्तः, उत्तमम्—शिरोगतम्, पाशम्, उत्श्रथय—उत्कृष्य मोचय । अधमम्—पादबद्धं पाशम्, अवश्रथय—अधस्तात् अवकृष्य मोचय । मध्यमम्—उदरगतं पाशम्, विश्रथय—वियुज्य मोचय । अथ—अनन्तरम्, हे आदित्य—अदितिपुत्र वरुण, वयम् तव व्रते—त्वदीयकर्मणि, अदितये—खण्डनराहित्याय, अनागसः—निरपराधाः, स्याम—भवेम । श्रथाय इत्यत्र दीर्घश्छान्दसः ॥ ४ ॥

Varuṇa, loosen, for me, the upper, lower and middle bond. So son of Aditi, being free from transgression of thy service, may we be sinless.—4.

**सा०-भा० ।** आद्ये ऋचौ चतुष्पादे ह्येकपादयुतान्तिमा ।
शौनःशेपी गार्त्समदी वामदेवीति ताः क्रमात् ।
वारुणी पावमानी च वैश्वदेवीति संस्मृताः ॥

हे 'वरुण' ! 'उत्तमम्' उत्कृष्टं शिरसि बद्धं 'पाशम्' 'उच्छ्रथय' उत्कृष्य शिथिलं कुरु । 'अधमं' निकृष्टं पादेऽवस्थितं पाशम्, 'अवश्रथय' अव अधस्तात् शिथिलीकुरु । 'मध्यमं' नाभिदेशगतं पाशं 'विश्रथय' वियुज्य शिथिलीकुरु । 'अथ' अनन्तरम्, हे 'आदित्य' अदितेः पुत्र वरुण ! 'वयं' शुनःशेपाः 'तव व्रते' त्वदीये कर्मणि, 'अदितये' खण्डनराहित्याय, 'अनागसः' अपराधरहिताः, 'स्याम' भवेम ॥ ४ ॥

४। ऋ० सं० १ म० २४ सू० १५ ऋ०। R̥V. reads **'अथा वयमादित्य व्रते'** instead of **'अथादित्य व्रते वयम्.'**

An identical prayer is met with in R̥v. 1. 25. 21, cf. 'उदुत्तमं मुमुग्धि नो विपाशं मध्यमं चृत अवाधमानि जीवसे।

अधमम्—rt. अव्—uṇ. aff. अमच्, uṇ. v. 54.

श्रथाय—rt. श्रथ्, दौर्बल्ये *to slacken.* 'संहितायां छान्दसो दीर्घः'—श्रथाय for श्रथय of the Saṃhitā text—Sāy. in his com. on R̥V. verse.

Actual bonds fastened to the head, the feet and the waist, are not, of course, here meant but reference is evidently to the bonds of sin.

---

गृत्समद ऋषिः। पवमानो देवता। छन्दः पूर्ववत्।

१ २ ३ १र २र ३ १ २ ३ १र २र ३ १ २
**त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत्।**
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
**तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥५॥**

त्वया। वयम्। पवमानेन। सोम। भरे। कृतम्। वि। चिनुयाम। शश्वत्। तत्। नः। मित्रः। वरुणः। मा। महन्ताम्। अदितिः। सिन्धुः। पृथिवी। उत। द्यौः ॥ ५ ॥

भाष्यसारः। **हे सोम, पवमानेन—पूयमानेन त्वया, भरे—संग्रामे, शश्वत्—बहु, कृतम्—कर्म, विचिनुयाम—विशेषेण कुर्याम कर्म, इत्यर्थः। तत्—अतः, नः—अस्मान् मित्रादयो देवताः, उत—तथा च, द्यौः, मा—माम्, महन्ताम्—धनादिदानेन पूजयन्तु, संवर्धयन्तु ॥ ५ ॥**

May we, Soma, with thee being purified (as our ally), achieve great success in battle; so may Mitra, Varuṇa, Aditi, Sindhu, Heaven and Earth gratify (or exalt) us with riches.—5.

**सा०-भा०।** हे 'सोम'! 'पवमानेन' पवित्रेण पूयमानेन 'त्वया' सहायेन 'भरे' (सङ्ग्राम-नाम) सङ्ग्रामे 'शश्वद्' बहु 'कृतं' कर्त्तव्यं 'वयं' 'विचिनुयाम' विशेषेण

कुर्याम। यस्मात्तव साहाय्येन कर्माणि कुर्मः, 'तत्' तस्मात् अस्मान् 'मित्रो वरुणः अदितिः' एतन्नामकाः, 'सिन्धुः' एतदभिधाना, तथा 'पृथिवी', 'उत' अपिच 'द्यौः'—एते मित्रादयः 'मा महन्ताम्' नः पूजयन्तु, धनादि-दानेन ॥ ५ ॥

५। ऋ० सं० १ म० ९७ सू० ५८ ऋ०।

अरे—in battle, Ngh. 2. 17. महन्ताम्—rt. मह् to *adore*, to *exalt*, to *magnify*; or मामहन्ताम् may be taken as one word, intensive (यङ्लुक्) of rt. मह्, तन्नो मित्रो वरुण:...द्यौः—this forms the concluding line of almost all the hymns from 94 to 115 of the mandala I of Ṛ̣V.

---

वामदेव ऋषिः। एकपाज्जगतीच्छन्दः। विश्वेदेवाः देवताः।

३ १र २र ३ २उ३ २
इमं वृषणं कृणुतैकमिमाम् ॥ ६ ॥

इमम्। वृषणम्। कृणुत। एकम्। इमाम् ॥ ६ ॥

भाष्यसारः। हे मित्रादयः विश्वेदेवाः यूयम् एकम्—अद्वितीयम्, इमं सोमं वृषणम्—कामाभिवर्षकम्, कृणुत—कुरुत, इमाम्—यागक्रियाञ्च सफलां कुरुत ॥ ६ ॥

(O gods), may you make, verily, this (Soma) unique of its kind, showerer of benefits, so also make this ceremony fruitful.—6.

**सा०-भा०।** पूर्वस्यामृचि प्रवृत्ता हे मित्राद्यो देवाः! यूयम् 'एकम्' अद्वितीयं दानकर्मणि 'इमं' सोमं 'वृषणं' कामानामभिवर्षकं 'कृणुत' कुरुत। तथा 'इमां' क्रियां फलाभिवर्षिकां कुरुत ॥ ६ ॥

६। इयम् ऋक् ऋग्वेदे नास्ति।

---

अमहीयुर्ऋषिः । गायत्रीच्छन्दः । पवमानो देवता ।

३ २ १ २ ३ १ २३ १२ ३ १ २
स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।
३ १२ २१
वरिवोवित्परिस्रव ॥ ७ ॥

सः । नः । इन्द्राय । यज्यवे । वरुणाय । मरुद्भ्यः । वरिवःऽवित् । परि । स्रव ॥ ७ ॥

भाष्यसारः । हे सोम, सः नः—अस्माकम्, वरिवोवित्—धनस्य प्रापकः, त्वम् यज्यवे—यष्टव्याय, इन्द्राय, वरुणाय, मरुद्भ्यः—एतेषां देवानाम् कृते, परिस्रव—धारया क्षर ॥ ७ ॥

Such as thou art, Soma, dispenser of wealth, flow in a stream for Indra worthy of sacrifice, for Varuṇa and for the Maruts.—7.

सा०-भा० । गायत्र्यौ पावमान्यौ तु 'स न' इत्यादिके ऋचौ ।
अमहीयुस्तयोरेवं छन्दोदैवत-निर्णयः ॥

हे सोम ! 'सः' 'वरिवोवित्' धनस्य लम्भकस्त्वं 'नः' अस्माकं 'यज्यवे' यष्टव्या'येन्द्राय' 'वरुणाय' 'मरुद्भ्यः' च 'परिस्रव' धारया क्षर ॥ ७ ॥

७। ऋ० सं० ६ म० ६१ सू० १२ ऋ०। उ० आर्चि० १, १, ८, २। यजुः० २६, २१।

वरिवोवित्—the possessor of wealth—*Wils.* वरिवस् is a syn. of धन (wealth), Ngh. 2. 10.

यज्यवे—adorable. This word occurs also in SV. I. 462. Prof. Max Müller takes the word in a different sense, e. g., 'to the chasing Indra'—*Vedic Hymns*, I. 328.

अमहीयुर्ऋषिः। गायत्रीच्छन्दः। पवमानो देवता।

३ १र २र ३ २उ ३ २ ३ १ २
एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम्।
१ २
सिषासन्तो वनामहे ॥ ८ ॥

एना विश्वानि। अर्यः। आ। द्युम्नानि। मानुषाणाम्। सिषासन्तः। वनामहे ॥ ८ ॥

भाष्यसारः। एना—एनेन सोमरूपेण अन्नेन। द्युम्नानि—अन्नानि, अर्यः—शत्रोः, सिषासन्तः—लब्धुमिच्छन्तः, वयं वनामहे—भजामहे, लभामहे ॥ ८ ॥

By this (Soma), desiring to gain all treasures (food or glory) of the enemy, may we win them.—8.

**सा०-भा०।** 'एना' एनेनान्नेन सोमेन 'मानुषाणां' मनुष्याणां 'विश्वानि' 'द्युम्नानि' अन्नानि 'अर्यः' अभिगच्छन्तः 'सिषासन्तः' सम्भोक्तुमिच्छन्तश्च वयं 'वनामहे' भजामहे ॥ ८ ॥

८। ऋ० सं० ९ म० ६१ सू० ११ ऋ०। उ० आर्चि० १, १, ८, ३। यजुः० २६, १८।

एना—*for* एनेन, *see* our notes on the word, SV. I. 45 and also on यथा, SV. I. 52. Mahīdhara takes *enā* as *enāni* (all these good things) and *aryaḥ* as *Somaḥ*. *See* our notes on द्युम्नम्, SV. I. 81; Nir. 5. 5; occurs also in SV. I. 113; 262, 366; द्युम्नवत्तमः, 351.

सिषासन्तः—longing to obtain; des. ( सन् ) of rt. सन् to gain, pres. PT.; सिषासति occurs in SV. I. 238, 280.

---

आत्मा ऋषिः। त्रिष्टुप् छन्दः। अन्नं देवता।

३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम।
२ ३ १ २ ३ २उ ३ १ २ ३ २उ ३ १ २ ३ १ २
यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि ॥ ९ ॥

अहम् । अस्मि । प्रथमऽजा । ऋतस्य । पूर्वम् । देवेभ्यः । अमृतस्य । नाम । यः । मा । ददाति । सः । इत् । एवम् । आवत् । अहम् । अन्नम् । अन्नम् । अदन्तम् । अद्मि ॥ ९ ॥

भाष्यसारः । **अहम्—अन्नं देवता, सर्वेभ्यो देवेभ्यः पूर्वम् अमृतस्य ऋतस्य—सत्यस्वरूपस्य परमात्मनः, प्रथमजा—प्रथमोत्पन्ना अस्मि । यः मा—माम् अन्नम्, ददाति—अतिथिभ्यः वितरति, स इत्—एव, एवम्—इत्थंप्रकारेण, आवत्—सर्वान् जीवान् रक्षति । अन्नम् अदन्तम्—अपरस्मै अदत्त्वा स्वयं भक्षयन्तं जनम्, अहम्—अन्नं नाम देवता, अद्मि—भक्षयामि, नाशयामि इत्यर्थः ॥ ९ ॥**

I (the presiding deity of food), am, of all gods, the first born of the Ever-true, Eternal Being; one, who gives me (to the guests or the needy), saves thereby all creatures; I, the food-god, devour him who does not distribute food.—9.

**सा०-भा० ।** 'देवेभ्यः पूर्वम्' अग्नि-वरुणादि-देवेभ्यः पुरा, 'अहम्' अन्नदेवता, 'अमृतस्य' विनाश-रहितस्य, 'ऋतस्य' सत्यस्य परब्रह्मणः सम्बन्धिनी 'प्रथमजा अस्मि नाम' प्रथमत एवोत्पन्ना भवामि खलु । 'यः' पुमान् 'मां ददाति' अन्नरूपां माम् अतिथ्यादिभ्यो ददाति 'स इत्' स एव 'एवं' परिदृश्यमान-प्रकारेण 'आवत्' अवति, सर्वान् प्राणिनो रक्षति । यस्तु लोभ-युक्तः सन् प्राणिभ्योऽन्नमदत्त्वा स्वयमेव तदन्नमत्ति, 'अन्नम् अदन्तं' नानाविधान्नभक्षकं तं लोभिनम् 'अहमन्नम्' अन्न-देवता 'अद्मि' भक्षयामि, विनाशयामीत्यर्थः ॥ ९ ॥

इति षष्ठाध्यायस्य प्रथमः खण्डः ।

९ । इयम् ऋक् ऋग्वेदे नास्ति । TB. 2. 8. 8. 1; TA. 9. 10. 6; TU. 3. 10. 6; Nṛp. U. 2. 4; Nir. 14. 2.

The parallel idea is contained is the Gītā, chap. iii, 12-14 stanzas,' cf. 'तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः' 'भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्'। 'अन्नाद्भवन्ति भूतानि'.

अथ षष्ठाध्यायस्य द्वितीयः खण्डः ।

सुकक्ष ऋषिः । गायत्रीच्छन्दः । इन्द्रो देवता ।

२ ३ १ २ ३ २ ३ १ २
**त्वमेतदधारयः कृष्णासु रोहिणीषु च ।**
१ २ ३ २ ३ १ २
**परुष्णीषु रुशत्पयः ॥ १ ॥**

त्वम् । एतत् । अधारयः । कृष्णासु । रोहिणीषु । च । परुष्णीषु । रुशत् । पयः ॥ १ ॥

भाष्यसारः । **हे इन्द्र, कृष्णासु—कृष्णवर्णासु, रोहिणीषु—लोहितवर्णासु, परुष्णीषु—नानावर्णासु गोषु, रुशत्—दीप्यमानं शुभ्रम्, एतत् पयः—दुग्धम्, त्वम् अधारयः—विदधासि ॥ १ ॥**

Thou dost provide this bright white milk in the black, red and variegated cows.—1.

**सा०-भा० ।** अस्य सामर्थ्यमेवोपपादयति । हे इन्द्र ! 'कृष्णासु' कृष्णवर्णासु गोषु, तथा 'रोहिणीषु च'—'वर्णादनुदात्तात्तोपधात् तो नः' ( पा० ४, १, ३९ ) इति ङीष्,—रोहितवर्णासु, 'परुष्णीषु'—परुष्णी पर्ववतीति यास्कः, पर्वशः पर्वशो नानावर्णासु च गोषु, 'रुशत्'—रोचतेर्दीप्ति-कर्मणः,—दीप्यमानं श्वेतम्, 'एतत्' परिदृश्यमानम्, 'पयः' क्षीरं त्वम् 'अधारयः' धारयसि । तस्मात् तद्बलं पूजयाम इति समन्वयः ॥ १ ॥

१ । ऋ० सं० ८ म० ९३ सू० १३ ऋ० ।

परुष्णीषु—for mg. *see* com. above ; occurs only here in SV. ; in Ṛ.V. iv. 22. 2 ; v. 52. 9 ; vii. 18. 8-9.

रुशत्—Pres. PT., gleaming ; cf. अनन्तमन्यद् रुशदस्य पाजः···संभरन्ति, Ṛ.V. I. 115. 5 ; 'गृहन्तीरभ्वमसितं रुशद्भिः शुक्रास्तनूभिः शुचयो रुचानाः', iv. 51. 9.

———

पवित्र ऋषिः। जगतीच्छन्दः। पवमानो देवता।

१ २   ३ २ ३   १ २   ३ २
**अरूरुचदुषसः पृश्निरग्रिय**
३ १   २   ३ १ २   ३ २
**उक्षा मिमेति भुवनेषु वाजयुः।**
३   १ २   ३ १ २
**मायाविनो ममिरे अस्य मायया**
३ १ २   ३ २ ३ २ ३ १ २
**नृचक्षसः पितरो गर्भमादधुः॥ २॥**

अरूरुचत्। उषसः। पृश्निः। अग्रियः। उक्षा। मिमेति। भुवनेषु। वाजयुः। मायाऽविनः। ममिरे। अस्य। मायया। नृऽचक्षसः। पितरः। गर्भम्। आ। दधुः॥ २॥

भाष्यसारः। अत्र सोमः सूर्यरूपेण स्तूयते। उषसो नेता, पृश्निः—आदित्यः सूर्यरूपः, अग्रियः—मुख्यः सोमः, अरूरुचत्—रोचयति, प्रकाशते। स उक्षा—जलस्य सेक्ता मेघरूपेण, भुवनेषु—सर्वेषु प्राणिषु, वाजयुः—तेषामन्नम् इच्छन्, मिमेति—भृशं शब्दायते। मायाविनः—प्रज्ञावन्तो देवाः, अस्य—सोमस्य, मायया—प्रज्ञया, ममिरे—जगत् सृजन्ति, तथा नृचक्षसः—नरान् अनुग्रहदृष्ट्या पश्यन्तः, पितरः—पालका देवाः, अङ्गिरसः पितरो वा, जगद्-रक्षकाः रश्मयो वा, गर्भम् आदधुः—ओषधीषु गर्भं दधति, रश्मिपक्षे—वृष्ट्यर्थम् अम्मयं गर्भं धारयन्ति॥ २॥

(The Soma), the sun, the leader of the dawn, shines forth; the sprinkler (of water) (in the form of cloud), desiring sustenance of all beings, roars, through his wisdom and power; the wise (gods) create; the *Pitṛs* with eyes favourably turned to men, foster the embryo.—2.

**सा०-भा०।** 'उषसः' सम्बन्धी 'पृश्निः' आदित्यः—पृश्निरादित्यो भवति, प्राश्नुत एनं वर्ण इति नैरुक्ताः (निरु० २, १४)। 'अग्रियः' अग्रचः मुख्यः सोमः 'अरूरुचत्' रोचयति। स 'उक्षा' जलस्य सेक्ता पर्जन्यः सन्, 'मिमेति' भृशं शब्दायते। 'भुवनेषु' भूतजातेषु 'वाजयुः' तेषामन्नमिच्छन्, 'मायाविनः'—माया प्रज्ञा, तद्वन्तो

**देवाः, 'अस्य' सोमस्य 'मायया' प्रज्ञया 'ममिरे' निर्मितवन्तः। सोमस्य एकैकांश-पान-वशात् अग्न्यादयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः। तस्य 'अस्य' मायया, 'नृचक्षसः' नृणां द्रष्टारः, 'पितरः' पालकाः देवा अङ्गिरसः पितरो वा, 'गर्भम्' 'आदधुः' धारयन्ति ओषधीषु। स चात्र सूर्यात्मा सोमः स्तूयते, सूर्य-रश्म्यनुगमाधीनवर्धनाच्च चन्द्रस्य। यद्वा, अयमुषसः पृश्निः सविता अरूरुचत्, रोचयति, रोचते वा। सर्वं शिष्टं समानम्। तत्सम्बन्धिनो नृणां द्रष्टारः पितरो जगद्रक्षकाः रश्मयो गर्भमादधुर्वृष्ट्यर्थम् ॥ २ ॥**

**२। ऋ० सं० ६ म० ८३ सू० ३ ऋ०। उ० आर्चि० २, २, १६, ३।** Ṛ̣V. reads **'बिभर्त्ति भुवनानि'** instead of **'मिमेति भुवनेषु'.**

पृश्निः—the sun ; 'पृश्निरादित्यो भवति, प्राश्नुत एनं वर्ण इति नैरुक्ताः' ; it means the sun, as bright colour pervades it, Nir. 2. 14.

अरूरुचत् उषसः—has made the mornings shine,—( उषसः being the obj.), Sāy. proposes this as an alternative mg. Griffith adopts it in his translation.

नृचक्षसः पितरो गर्भमादधुः—the *pitṛs*, the beholders of men, support the germ (of vegetation).—*Wils.*

पितरः—Say. gives several explanations, e. g. (1) the paternal gods (*vide* Ṛv. x. 64. 14) ; (2) the rays of the sun protecting the world (in this case गर्भ means the watery fœtus, referring to the formation of cloud through the agency of the sun's rays ; (3) the manes or spirits of the departed to whom is ascribed the fruitfulness of heaven and earth which give birth to gods and men.

वाजयुः—dr. वाज—क्यच् and उ, Pāṇ. iii. 2. 170 ; 'छन्दसि परेच्छायाम्०'—*Vārt.* वाज—food, Ngh. 2. 7 ; strength, 2. 7.

———

**वैश्वामित्रः मधुच्छन्दा ऋषिः। गायत्रीच्छन्दः। इन्द्रो देवता।**

२ ३ २उ ३ २ ३ १ २ ३ १ २ ३ १ २
**इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा।**
१ २ ३ १ २ ३ १ २
**इन्द्रो वज्री हिरण्ययः ॥ ३ ॥**

इन्द्रः। इत्। हर्योः। सचा। सम्ऽमिश्लः। आ। वचःऽयुजा। इन्द्रः। वज्री। हिरण्ययः ॥ ३ ॥

भाष्यसारः। इन्द्रः इत्—एव, वचोयुजा—वचनमात्रेण रथे युज्यमानयोः, हर्योः—अश्वयोः, सचा—सह, आ संमिश्लः—सर्वतः संमिश्रयिता। शिष्टमवदातम् ॥ ३ ॥

Indra, uniting all, comes, verily, with his horses that are harnessed (to his car) at his word,—Indra, the thunderer, adorned with gold.—3.

**सा०-भा०।** 'इन्द्र इत्' इन्द्र एव, 'हर्योः' हरि-नामकयोरश्वयोः, 'सचा' सह युगपत्, 'आ सम्मिश्लः' सर्वतः सम्यङ्मिश्रयिता। कीदृशयोर्हर्योः? 'वचोयुजा' इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयम् 'इन्द्रः' 'वज्री' वज्र-युक्तः, 'हिरण्ययः' हिरण्मयसर्वाभरणैरुपेत इत्यर्थः ॥ ३ ॥

३। ऋ० सं० १ म० ७ सू० २ ऋ०।

हरी—Indra's horses are two, they are called *Hari*, from their bay colour. *See* Ngh. 1. 15; SV. 1. 156.

सचा—सह, *see* our notes on SV. 1. 115; 148; Nir. 5. 5.

Sāy.'s addl. gram. notes in his com. on the Ṛ̣V. verse:—संमिश्लः—मिश्रणं मिश्रः,—मिश्रयतेर्घञ्, पा० ३, ३, १८, सम्यक् मिश्रो यस्य असौ संमिश्रः, लत्वं छान्दसम्; सम्यङ्-मिश्रयितेत्यर्थः। वचोयुजा—वचसा युज्यते इति वचोयुजौ, तयोः; षष्ठीद्विवचनस्य 'सुपां सुलुगि'त्याकारादेशः। हिरण्ययः—हिरण्मयशब्दस्य मकारलोपो निपात्यते।

संमिश्लः—the blender of all things.—*Wils.*

---

ऋषिच्छन्दोदैवतानि पूर्ववत्।

१ ३ १ २ ३ १ २
इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च।
३ २ ३ १ २ ३ १ २
उग्र उग्राभिरूतिभिः ॥ ४ ॥

इन्द्र। वाजेषु। नः। अव। सहस्रऽप्रधनेषु। च। उग्रः। उग्राभिः। ऊतिऽभिः ॥ ४ ॥

भाष्यसारः। वाजेषु—युद्धेषु, सहस्रप्रधनेषु—बहुश्वादिलाभ-करेषु महायुद्धेषु, उग्रः—अप्रधृष्यः त्वम्, उग्राभिः ऊतिभिः—महतीभिः रक्षाभिः, अव—रक्ष ॥ ४ ॥

Irresistible Indra, defend us, in battles winning thousand-fold booties, with mighty protections.—4.

**सा०-भा० ।** हे इन्द्र ! 'उग्रः' शत्रुभिरप्रधृष्यस्त्वम् 'उग्राभिः' अप्रधृष्याभिः ऊतिभिः अस्मद्विषय-रक्षाभिः 'वाजेषु' युद्धेषु 'नः' अस्मान् 'अव' रक्ष। तथा 'सहस्रप्रधनेषु च' सहस्र-सङ्ख्याकगजाश्वादि-लाभ-युक्तेषु महायुद्धेष्वपि, रक्ष ॥ ४ ॥

४। ऋ० सं १ म० ७ सू० ४ ऋ० ।

---

वासिष्ठ-प्रथ ऋषिः। त्रिष्टुप् छन्दः। विश्वेदेवाः देवताः।

१ २ ३ १ २ ३ १ २ ३ १
**प्रथश्च यस्य सप्रथश्च नामा-**
२र ३ १ २ ३ २
**नुष्टुभस्य हविषो हविर्यत् ।**
३ १ २र ३ २ ३ १ २
**धातुर्द्युतानात्सवितुश्च विष्णो**
३ १ २र ३ १ २
**रथन्तरमा जभारा वसिष्ठः ॥ ५ ॥**

प्रथः। च। यस्य। सऽप्रथः। च। नाम। आनुऽस्तुभस्य। हविषः। हविः। यत्। धातुः। द्युतानात्। सवितुः। च। विष्णोः। रथम्ऽतरम्। आ। जभार। वसिष्ठः ॥ ५ ॥

भाष्यसारः। **यस्य—वसिष्ठस्य प्रथः नाम पुत्रः, यस्य सप्रथश्च नाम पुत्रः, स मम पिता वसिष्ठः आनुष्टुभस्य--अनुष्टुपछन्दोबद्ध-स्तुत्या युक्तस्य, हविषो यत् हविः—हविःश्रेष्ठमित्यर्थः, रथन्तरं नाम साम, धातुः—तन्नामकात् देवात्, द्युतानात्—द्योतमानात्, सवितुः—जगत्प्रसवितुः, विष्णोश्च, आजभार—आहृतवान् ॥ ५ ॥**

Vasiṣṭha, whose (son) is *Pratha* by name, and also whose (son) is *Sapratha*, has (with them) borne away from Dhātṛ, from the radiant Savitṛ and from Viṣṇu, the *rathantara* portion of the oblation which is offered with the *Anuṣṭubh* verse.—5.

**सा०-भा० ।** अपश्यत् प्रथ इत्येतां त्रिष्टुभं प्रथनामकः।
वैश्वदेवीं भवेदेवं छन्दोदैवत-निर्णयः ॥ १ ॥

'यस्य' वसिष्ठस्य, 'प्रथो नाम' पुत्रः, यस्य भरद्वाजस्य 'सप्रथः' नाम पुत्रः—तयोर्मध्ये 'वसिष्ठः' मम पिता, 'आनुष्टुभस्य' अनुष्टुप्छन्दसा युक्तस्य, 'हविषः' घर्माख्यस्य 'यत्' 'हविः' हविष्पादकं 'रथन्तरं' साम तद्रथन्तरम्, 'धातुः' धातृसंज्ञाद् देवात्, 'द्युतानात्' द्योतमानात्, 'सवितुश्च' 'विष्णोश्च' 'आ जभार' आजहार, आहृतवान्—हृग्रहोर्भ इति भत्वम्। रथशब्दोपपदात्तरतेः संज्ञायाम्—भृतॄवृजीति खच्। अरुर्द्विषदजन्तस्येति मुमागमः॥ ५॥

५। ऋ० सं० १० म० १८१ सू० १ ऋ०।

रथन्तरम्—रथ—तॄ—खच्,—Say. The usual sense of रथन्तरम् is the Sāma-Veda, or certain hymns belonging to it. What is here exactly meant is not very clear and has not been explained by Sayaṇa.

---

गृत्समद ऋषिः। गायत्रीच्छन्दः। वायुर्देवता।

३ १ २र १ २ ३ २ ३ १ २
नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते।
१ २ ३ २ ३ २
गन्तासि सुन्वतो गृहम्॥ ६॥

नियुत्वान्। वायो इति। आ। गहि। अयम्। शुक्रः। अयामि। ते। गन्ता। असि। सुन्वतः। गृहम्॥ ६॥

भाष्यसारः। हे वायो, नियुत्वान्—नियुन्नामकवाहनैः सह, आगहि—आगच्छ। अयम् शुक्रः—दीप्यमानः सोमः, ते—त्वदर्थम्, अयामि—गृहीतः, अस्ति। सुन्वतः—सोमाभिषवं कुर्वतः यजमानस्य, गृहं गन्तासि—गच्छसि॥ ६॥

Come, Vāyu, on the *Nijut* steeds: this sparkling (Soma-juice) has been held for thee, for thou goest to the house of the extractor (of the Soma-juice).—6.

**सा०-भा० ।** हे 'वायो!' 'नियुत्वान्' नियुतो वाहनानि,—'नियुतो वायो'रिति निघण्टुः ( १, १५, १० ), तैर्युक्तस्त्वम् 'आगहि' आगच्छ। 'अयं' 'शुक्रः' दीप्यमानः सोमः 'ते' तुभ्यम् 'अयामि'—यामेः कर्मणि लुङि रूपम्,—नियतो गृहीत आसीत्। यतः 'सुन्वतः' सोमाभिषवं कुर्वतो यजमानस्य 'गृहं' 'गन्तासि' यातोऽसि ॥ ६ ॥

६। ऋ० सं० २ म० ४१ सू० २ ऋ०। यजुः २७, २६।

अयामि—नियतः गृहीतः, has been preserved (for thee); rt. यम्, aor. pass. 3. sg.

सुन्वतो गृहम्—the dwelling of the offerer of the libation—*Wils.*

---

नृमेधपुरुमेधौ ऋषी। अनुष्टुप् छन्दः। इन्द्रो देवता।

१ २र ३ १ २ ३ १ २
**यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय।**
१ २ ३ १ २ ३ १ २ ३ १ २र
**तत् पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम्॥ ७॥**

यत्। जायथाः। अपूर्व्य। मघऽवन्। वृत्रऽहत्याय। तत्। पृथिवीम्। अप्रथयः। तत्। अस्तभ्नाः। उत। ऊमिति। दिवम्॥ ७॥

भाष्यसारः। हे अपूर्व्य, मघवन्, वृत्रहत्याय—वृत्रासुरवधाय, यत्—यदा, त्वम् जायथाः—प्रादुर्भूतोऽभवः, तत्—तदा, पृथिवीम्—विशालामिमां धरित्रीम्, अप्रथयः—प्रथितां कृतवान्, उत—अपि च, दिवम्—द्युलोकम्, अस्तभ्नाः—स्तब्धवान्, निरुद्धाम् अकरोः॥ ७॥

When thou, Maghavan, unprecedented, wast born for slaying Vṛtra, then thou didst establish the earth and didst support the heaven.—7.

**सा०-भा० ।** हे 'अपूर्व्य'—त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित! हे 'मघवन्' मंहनीयतम, धनवन्निन्द्र! 'वृत्रहत्याय' वृत्रासुरहननाय, 'यद्' यदा, त्वं

'जायथाः' उत्पन्नः प्रादुर्भूतोऽसि, 'तत्' तदानीमेव, 'पृथिवीं' प्रथमानाम् 'अप्रथयः' प्रसिद्धां दृढामकरोः। 'उत' अपिच, 'दिवं' द्यां द्युलोकम् अन्तरिक्षेण 'अस्तभ्नाः' निरुद्धामकार्षीः। ईदृशं वीर्यं त्वदन्यस्य न भवतीत्यर्थं द्योतयितुम् 'अपूर्व्ये'ति पदम् ॥७॥

इति षष्ठाध्यायस्य द्वितीयः खण्डः।

७। ऋ० सं० ८ म० ८९ सू० ५ ऋ०। उ० आर्चि० ६, २, १६, १। ṚV. reads **'द्याम्'** instead of **'दिवम्'.**

अपूर्व्य—who has none before; first-born. It may mean 'unequalled, unparalleled'.

---

अथ षष्ठाध्यायस्य तृतीयः खण्डः।

वामदेव ऋषिः। प्रजापतिर्देवता। अनुष्टुप् छन्दः।

२ ३ २ ३ २ ३ १ २र ३ २ ३ १ २र
**मयि वर्चो अथो यशोथो यज्ञस्य यत्पयः।**
३ २ ३ १ २ ३ १ २र
**परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहतु ॥ १ ॥**

मयि। वर्चः। अथः। यशः। अथः। यज्ञस्य। यत्। पयः। परमेष्ठी। प्रजाऽपतिः। दिवि। द्याम्ऽइव। दृंहतु ॥ १ ॥

भाष्यसारः। परमेष्ठी—उत्कृष्टब्रह्मलोकस्थितः प्रजापतिः, दिवि—स्वर्गे, द्यामिव—समुज्ज्वलाम् श्रियमिव, मयि, वर्चः—ब्रह्मतेजः, अथः—अपि च, यशः, तथा च यज्ञस्य पयः—हवीरूपम् अन्नम्, दृंहतु—वर्धयतु ॥ १ ॥

May Prajāpati, seated in supreme abode, make permanent in me, (Brahmanic) brilliance or splendour, glory or fame and sacrificial food, like radiance in heaven.—1.

**सा०-भा०।** वामदेव ऋषिः प्रोक्तो मयीत्यस्याः प्रजापतिः।
देवताऽस्यास्ततश्छन्दोऽनुष्टुप् सद्य इतीरितम् ॥

'परमेष्ठी'—परमे लोके तिष्ठतीति परमेष्ठी—प्रजापतिः, 'दिवि' द्योतमाने स्वर्गे, 'द्यामिव' द्योतमानां कान्तिमिव, 'मयि' अस्मदीये शरीरे, 'वर्चः' तेजः ब्रह्माख्यम्,

'द्रंहतु' वर्धयतु। 'अथो' अपिच, 'यशश्च' द्रंहतु। 'अथो' किञ्च, 'यज्ञस्य' यागस्य सम्बन्धि अत एव उत्तमं 'पयः' हविर्लक्षणमन्नं च द्रंहतु ॥ १ ॥

१। इयम् ऋक् ऋग्वेदे नास्ति। अथर्ववेद० ६, ६९, ३। It is a priest's prayer for power and glory.

वर्चः—brilliance, lustre. पयः—अन्नम्, food.—Ngh. 2. 7.

द्रंहतु—rt. दृह् ( दृंह् ) *to make firm, to strengthen,* 1. p. imp. 3. sg.

---

गौतम ऋषिः। पवमानो देवता। त्रिष्टुप् छन्दः।

२ ३ १ २ ३ २ ३ २ ३ १ २ २र ३ १ २
**सन्ते पयांसि समु यन्तु वाजाः सं वृष्णान्यभिमातिषाहः।**
३ १ २ ३ १ २ ३ १र १ २र ३ १ १ २
**आप्यायमानो अमृताय सोम दिवि श्रवांस्यूत्तमानि धिष्व ॥२॥**

सम्। ते। पयांसि। सम्। ऊँ इति। यन्तु। वाजाः। सम्। वृष्णानि। अभिमातिऽसहः। आऽप्यायमानः। अमृताय। सोम। दिवि। श्रवांसि। उत्ऽतमानि। धिष्व ॥ २ ॥

भाष्यसारः। हे सोम, अभिमातिषाहः—शत्रुहन्तुः शत्रुहन्तारम्, ते—तव, तुभ्यम्, त्वाम्। पयांसि—मिश्रणसाधनानि दुग्धानि, संयन्तु—सङ्गता भवन्तु, एवं वाजाः—हवीरूपाणि अन्नानि, तथा वृष्णानि—वीर्याणि, सम्—त्वां सङ्गच्छन्ताम्। हे सोम, अमृताय—आत्मनः अमरत्वाय, आ—सर्वतः, प्यायमानः—वर्धमानः, दिवि—स्वर्गे, उत्तमानि श्रवांसि—अन्नानि, धिष्व—धारय ॥ २ ॥

(O Soma), may the milk be mingled with thee, may sacrificial viands and strength meet thee, the over-thrower of enemies; being fully augmented, do thou, Soma, hold excellent food in heaven for immortality.—2.

**सा०-भा०।** हे 'सोम!' 'अभिमातिषाहः' अभिमातीनां शत्रूणां हन्तुः 'ते' तव एवंभूतं त्वां 'पयांसि' श्रपणार्थानि क्षीराणि 'संयन्तु' सङ्गच्छन्ताम्। तथा 'वाजाः' हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ताम्, 'वृष्णानि' वीर्याणि च सङ्गच्छन्ताम्।

हे सोम ! त्वम् 'अमृताय' आत्मनः अमृतत्वाय अमरत्वाय, 'आ' समन्तात् वर्धमानः सन्, 'दिवि' नभसि स्वर्गे, 'उत्तमानि' उद्गततमानि उत्कृष्टानि 'श्रवांसि' अन्नानि, अस्माभिः भोक्तव्यानि हविर्लक्षणानि, 'धिष्व' धारय। ते—'क्रिया-ग्रहणं कर्त्तव्यमि'ति (पा० २, ३, १३) कर्मणः संप्रदानत्वात् चतुर्थ्यर्थे षष्ठी ॥ २ ॥

२। ऋ० सं० १ म० ९१ सू० १८ ऋ०।

अभिमाति-षाहः—*gen. sg.* foe-subduing; conquering enemies. अभिमाति means an enemy; this compd. occurs also in R̥V. v. 23. 4; साह् is derived from rt. सह् (अभिभवे, *to subdue*)—with aff. ण्वि, by 'छन्दसि सहः',—सुषामादित्वात् षत्वम्—Sāy. The word अभिमाति seems to be drvd. fr. rt. मन् *orig. mg.* अभिमन्यमान, arrogant, unyielding; occurs also in SV. II. 6. 2. 16. 2 (R̥V. viii. 3. 2).

आ-प्यायमानः—having been increased, 'being fully nourished'—*Wils.* rt. प्याय् *to swell, to increase.* pres. PT.

धिष्व—rt. धा *to hold.* 3. u. imp. 2. sg. (Macdnll: Students' Ved. gram. App. I. list of verbs; P. 393). 'सुधित-वसुधित-नेमधित-धिष्व-धिषीय च' (Pāṇ. vii. 4. 45) इति धिभावो निपातितः—धा changed anomalously to धि. Or it may be derived from rt. धि *to hold,* 6. p. (Ātmanepada by Vedic anomaly).

---

२ ३ २र ३ २ ३ २ ३ १ २ ३ २
त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः।
१ २ ३ २ १ २ ३ १ २र ३ १र २र
त्वमातनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ३ ॥

त्वम्। इमाः। ओषधीः। सोम। विश्वाः। त्वम्। अपः। अजनयः। त्वम्। गाः। त्वम्। आ। तनोः। उरु। अन्तरिक्षम्। त्वम्। ज्योतिषा। वि। तमः। ववर्थ ॥ ३ ॥

भाष्यसारः। हे सोम, त्वम् इमाः—पृथिव्याम् उत्पन्नाः सर्वाः, ओषधीः, अपः—वृष्ट्युदकानि, गाः—उपलक्षणेन सर्वान् पशून्, अजनयः—उत्पादितवान्, उरु—विशालम्, अन्तरिक्षम्—आकाशम्, आतनोः—विस्तारितवान्। तमः—अन्धकारम्, ज्योतिषा—दीप्त्या, वि-ववर्थ—विनाशितवान् ॥ ३ ॥

Thou hast generated, Soma, these herbs, the waters and the cattle; thou hast stretched out the vast firmament; thou hast dispersed darkness with lustre.—3.

**सा०-भा० ।** हे 'सोम'! 'त्वम्' 'इमाः' भूम्यां वर्त्तमानाः 'विश्वाः' सर्वाः 'ओषधीः' 'अजनयः' उत्पादितवानसि। तथा 'त्वम्' 'अपः' तासामोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः। तथा 'त्वं' 'गाः' सर्वान् पशुन् उदपादयः। 'उरु' विस्तीर्णम् 'अन्तरिक्षं' 'त्वम्' 'आतनोः' विस्तारितवानसि। तस्मिन्नन्तरिक्षे यत् 'तमः' अस्मद्दृष्टि-निरोधकम् अन्धकारं तदपि 'त्वं' 'ज्योतिषा' आत्मीयेन प्रकाशेन 'वि ववर्थ' विश्लिष्टं कृतवानसि। ववर्थ वृञ वरणे लिटस्थलि,—'बभूथा-ततन्थ-जगृम्भ-ववर्थेति' निपात्यते ॥ ३ ॥

३। ऋ० सं० १ म० ६१ सू० २२ ऋ०। ṚV. has 'आ ततन्थ' ( लिट् or perf. ) instead of 'आ तनोः' ( imperf. लङ् ).

आतनोः—thou hast spread, fr. rt. तन् *to spread*, 8. u.

ववर्थ—rt. वृ *to cover* 9. u. लिट् (perf). 2. sg. *here*, vanquished, prevailed over. This peculiar form in लिट् थल् (perf. 2. sg.) is anomalously formed by 'बभूथाततन्थजगृम्भ···ववर्थेति निगमे', Pāṇ. vii. 2. 64. Sāy. explains 'विवृतं विश्लिष्टं विनष्टं कृतवान्'—thou hast scattered, destroyed.

---

वैश्वामित्रः मधुच्छन्दा ऋषिः। अग्निर्देवता। गायत्रीच्छन्दः।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
**अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्।**
१ २ ३ १ २
**होतारं रत्नधातमम् ॥ ४ ॥**

अग्निम्। ईडे। पुरःऽहितम्। यज्ञस्य। देवम्। ऋत्विजम्। होतारम्। रत्नऽधातमम् ॥ ४ ॥

भाष्यसारः। **यज्ञस्य पुरोहितम्—पूर्वभागे आहवनीयरूपेणावस्थितम्, होतारम्—प्रधानमृत्विजं होतृसंज्ञम्, रत्नधातमम्—अतिशयेन यागरूपरत्नानाम् पोषयितारं यद्वा, यजमानेभ्यः प्रभूतधनदातारम्, अग्निम्, ईडे—स्तौमि ॥ ४ ॥**

I adore radiant Agni, the priest of the sacrifice, the *Hotṛ* (the invoker of the gods or offerer of oblations), the best dispenser of riches.—4.

सा०-भा० । 'अग्नि'-नामकं 'देवम्' 'ईडे' स्तौमि—ईड स्तुताविति धातुः, मन्त्रस्यास्य होत्रा प्रयुज्यमानत्वात् अहं होता स्तौमीति लभ्यते। कीदृशम् अग्निम्? 'यज्ञस्य पुरोहितं'—यथा राज्ञः पुरोहितः तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा, यज्ञस्य सम्बन्धि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? 'होतारमृत्विजम्'—देवानां यज्ञेषु होतृनामकऋत्विगग्निरेव। तथाच श्रूयते—'अग्निर्वै देवानां होते'ति। पुनरपि कीदृशम्? 'रत्नधातमम्' यागरूपाणां रत्नानाम् अतिशयेन धारयितारं पोषयितारम्।

अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति—"अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मात् अग्रणीर्भवति? अग्रं यज्ञेषु प्रणीयतेऽगं नयति सन्नममानः, अक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्,—स खल्वेतेरकारमादत्ते, गकारमनक्तेर्वा दहतेर्वा, नीः परस्तस्यैषा भवति" (नि० ७, १४) इति ॥ ४ ॥

४। ऋ० सं० १ म० १ सू० १ ऋ०।

पुरोहितम्—Agni is so termed, because in it oblations are first *(puras)* offered *(hita)*, or acts like the priest who superintends family ceremonies.

देवम्—this word, in the Vedas, is ordinarily explained as the bright, shining, radiant; being drvd. fr. rt. दिव् *to shine*; or it is also explained as—one who abides in the sky or heaven *(dyusthāna)*; it is, here, also optionally rendered,—liberal, donor; the sense of giving being ascribed to the same root.

ऋत्विजम्—a ministering priest; होतारम्—*Hotṛ* is the priest who actually presents the oblation, or who invokes or summons the deities to the ceremony, accordingly as the word is derived from rt. *hu*, to sacrifice, or *hve*, to call—*Wils*.

रत्नधातमम्—*lit.* holder of jewels; *fig.* the awarder of the reward of religious rites.

———

वामदेव ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः।

१ २ ३ २उ ३ २ ३ २ ३ १ २ ३ १र २
ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जानन्।
१ २ ३ २ ३क २र ३ २ ३ १ २ ३ १र २र ३ १ २
ता जानतीरभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः ॥५॥

ते। अमन्वत। प्रथमम्। नाम। गोनाम्। त्रिः। सप्त। परमम्। नाम। जानन्। ताः। जानतीः। अभि। अनूषत। क्षाः। आविः। भुवन्। अरुणीः। यशसा। गावः॥ ५॥

भाष्यसारः। हे अग्ने, ते—अङ्गिरसः, गोनाम्—वाचाम्, नाम—स्तुतिसाधकं शब्दम्, प्रथमम् अमन्वत—अजानत, ततः त्रिःसप्त परमम्—एकविंशतिसंख्याकानि उत्कृष्टानि छन्दांसि गायत्र्यादीनि, जानन्—अजानन् अधिगतवन्तः, ताः, जानतीः—सर्वज्ञानमय्यः, क्षाः—उषाकालं क्षियन्ति गच्छन्तीति उषसि क्रियमाणाः, वाचः, अभ्यनूषत—अस्तुवन्, ततः उदीयमानस्य सूर्यस्य यशसा—तेजसा, अरुणीः—अरुणवर्णाः, गावः, आविर्भुवन्—आविरभुवन्॥ ५॥

They (the *Aṅgirasas*) first knew the sound of speech, the means of praise, then they comprehended the thrice-seven forms of rhythm (the twenty-one Vedic metres), next they praised the all-knowing dawns, and the radiant cows (dawns) appeared with the light of the rising sun.—5.

**सा०-भा०।** हे 'अग्ने!' 'ते' स्तोत्रं कुर्वाणा अङ्गिरसः 'गोनां' गवां वाचां सम्बन्धि नाम स्तुति-साधकं शब्द-मात्रं 'प्रथमं' पूर्वम्, 'अमन्वत' अजानत। पश्चात्तस्या वाचः सम्बन्धीनि 'त्रिःसप्त' एकविंशतिसंख्याकानि 'परमं' परमाण्युत्कृष्टानि 'नाम' नामानि स्तुतिसाधकानि स्तोत्राणि—जातावेकवचनम्—छन्दांसि वा, तानि च गायत्र्यादीनि जगत्यन्तानि सप्त, अतिजगत्यादीनि अतिधृत्यन्तानि सप्त, कृतिप्रभृतीन्युत्कृतिपर्यन्तानि सप्त, 'जानन्' अजानन् अलभन्त—एवंविधच्छन्दोयुक्तैर्मन्त्रैरग्निमस्तुवन्नित्यर्थः। 'ताः' वाचः 'जानतीः' सर्वं जानत्यः 'क्षाः'—क्षियन्ति गच्छन्त्युषःकालं प्रापयन्ति ताः, 'अभ्यनूषत' अस्तुवन्। ततः सूर्यस्य 'यशसा' तेजसा सह 'अरुणीः' अरुणवर्णाः 'गावः' 'आविर्भुवन्' प्रादुरभुवन्। यद्वा, 'ते' अङ्गिरसः 'प्रथमं' पुरातनं 'नाम'—एहि-सुरभि-गुग्गुलु-गन्धिनीति धेनु-नामधेयम् 'अमन्वत' उच्चारयामासुः। पश्चात् स्व-भूतानि पणिभिरपहृतानि त्रिःसप्त-रत्नान्यविन्दन्। तत उच्चारितं जानत्यः 'गावः' 'अभ्यनूषत' हम्भारव-लक्षणं शब्दमकुर्वत। तदानीमुषाः प्रादुरभूदिति॥ ५॥

५। ऋ० सं० ४ म० १ सू० १६ ऋ०। R̥V. reads (1) **'नाम धेनोः'** instead of **'नाम गोनाम्'**; (2) **'त्रिः सप्त मातुः परमाणि विन्दन्'** instead of **'त्रिः सप्त परमं नाम**

**जानन्** ; (3) '**तज्जानतीः**' for '**ता जानतीः**' ; (4) '**व्राः**' ( N. of **उषाः** ) for '**व्राः**' ; (5) '**आविर्भुवत्**' instead of '**आविर्भुवन्**' ; (6) '**गोः**' for '**गावः**'.

**अनूषत**—**अस्तुवन्**, eulogised, praised ; rt. **नू** ( स्तुतौ, *to praise* ), aor. ( **लुङ्** )—**कुटादित्वान्न गुणः**, Sāy. in his com. on ṚV. iv. 1. 16.

**अरुणीः**—purple, radiant, resplendent, referring to the dawns.

The stanza may have its ordinary sense, as suggested by Sāyaṇa, referring to the ancient nomenclature of cattle, as uttered by the Aṅgirasas as *Ehi*, *Surabhi*, *Guggulu*, *Gandhini* ; in that case **अभ्यनूषत** means—bellowed.

———

गृत्समद ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः ।

२ ३ १र २र ३ १ २ ३ २ ३ २ ३क २र
**समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति ।**
२ ३ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २
**तमू शुचिं शुचयो दीदिवांसम् अपान्नपातमुप यन्त्यापः ॥६॥**

**सम् । अन्याः । यन्ति । उप । यन्ति । अन्याः । समानम् । ऊर्वम् । नद्यः । पृणन्ति । तम् । ऊँ इति । शुचिम् । शुचयः । दीदिऽवांसम् । अपाम् । नपातम् । उप । यन्ति । आपः ॥ ६ ॥**

भाष्यसारः । **अन्याः आपः—वृष्ट्युदकानि, संयन्ति—संभूय भूमौ निपतन्ति, अन्याः—भूमिस्थिता आपः, उप यन्ति—स्रवन्ति । सर्वाः ता आपः समानम्—सम्मिलिताः सत्यः, नद्यः—नदीरूपेण परिणताः, ऊर्वम्—समुद्रमध्यवर्त्तिनं वडवानलम्, पृणन्ति—प्रीणयन्ति । तम् उ—तमेव, शुचिम्—निर्मलम्, दीदिवांसम्—दीप्यमानम्, अपान्नपातम्, शुचयः—निर्मलाः आपः, उपयन्ति—समीपे गच्छन्ति ॥ ६ ॥**

Some waters fall together (as rain), others (on earth) get united with them ; as rivers they flow together to satiate the submarine fire ; the pure waters flow towards the pure brilliant son of the waters.—6.

**सा०-भा० ।** 'अन्याः' वर्षाणाम् 'आपः' 'संयन्ति' भूम्यां सङ्गच्छन्ते 'अन्याः' च 'पूर्वं' तत्रावस्थिताः 'उपयन्ति' उपगच्छन्ति । ताः सर्वा आपः 'समानं' सह 'नद्यः' नदीभूत्वा 'ऊर्वं' समुद्रमध्ये वर्त्तमानं वडवानलं 'पृणन्ति' प्रीणयन्ति

—पृण प्रीणने तौदादिकः। 'तमु' तमेव 'अपान्नपातम्' 'शुचिं' निर्मलं 'दीदिवांसं' दीप्यमानं—दीदिवेति छान्दसो दीप्तिकर्मा लिटः क्वसुः, वस्वेकाजाद्घसामिति नियमादडभावः, छन्दसि वेति वक्तव्यमिति वचनाद् द्विवचनाभावः—एवंभूतम्, 'शुचयः' शुद्धाः 'आपः' 'उपयन्ति' समीपे गच्छन्ति।

एष हि वैद्युताग्निरूपेण मेघे वर्त्तमानोऽस्मान् अजीजनदिति बुद्ध्या वडवानल-रूपेण वर्त्तमानं तं पर्युपासत इत्यर्थः। यद्वा, अन्या एकधनाख्या आपः संयन्ति। चात्वालोत्करयोर्मध्ये वसतीवरीभिः सङ्गच्छन्ते। अन्या वसतीवर्याख्या आपश्च उपयन्ति उपगच्छन्ति ऐकमत्यं प्राप्ता भवन्ति। एताश्च मिलित्वा यज्ञं साधयन्त्यः तत्साध्य-वृष्टि-द्वारा नद्यो भूत्वा ऊर्वं पृणन्तीत्यादि समानम्। एवं हि आपो वा अस्पर्द्धन्त वयं पूर्वं यज्ञं वक्ष्याम इत्यादिको बह्वृच-ब्राह्मणविनियोगश्चानुगृह्यते (ऐ० ब्रा० २, २०)॥ २२॥

६। ऋ० सं० २ म० ३५ सू० ३ ऋ०। ṚV. reads 'परि तस्थुरापः' instead of 'उपयन्त्यापः'।

ऊर्वम्—The submarine fire ; cf. 'ऊर्वं इव पप्रथे कामो अस्मे' our desire spread like the submarine fire, ṚV. iii. 30. 19 ; Nir. 6. 7.

पृणन्ति—fr. rt. पृण् (प्रीणने, *to please*. 6). Or, fr. rt. पॄ *to fill*, 9. p ; in this sense cf. 'इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति' like Indra, like Vāyu the gods fill thee with strength, ṚV. vi. 4. 7 ; तमूदरं न पृणता यवेन, ii. 14. 11 ; Nir. 3. 20.

दीदिवांसम्—rt. दीदि *to shine*,—aff. क्वसु p.p. ; Sāy.'s notes are—'दीदेतिश्छान्दसो दीप्तिकर्मा। लिटः क्वसुः। वस्वेकाजादघसामिति नियमादिडभावः। छन्दसि वेति वक्तव्यमिति वचनाद् द्विर्वचनाभावः।' Sāyaṇa suggests also a different explanation of the stanza, in which the two sorts of waters refer to *Ekadhanā* and *Vasatīvarī* ; these two kinds of waters, required in the Soma sacrifice, are to be mixed together for the completion of the ceremony, in consequence of which rain comes down and is formed into rivers which propitiate or gratify the ocean-fire ; Mahīdhara also explains, in a similar manner, the verse occurring in Yajus. vi. 23. For particular details, in this respect, *see* Kātyāyana-Śrauta-Sūtras, vii. 10 ; viii. 9.

---

वामदेव ऋषिः। रात्रिर्देवता। अनुष्टुप् छन्दः।

१र २र ३ १ ३ २ १र २र ३ १र २र
आ प्रागाद्भद्रा युवतिरह्नः केतूं त्समीर्त्सति।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अभूद्भद्रा निवेशनी विश्वस्य जगतो रात्री॥ ७॥

आ । प्र । अगात् । भद्रा । युवतिः । अह्वः । केतून् । सम्ऽ ईर्त्सति । अभूत् । भद्रा । निवेशनी । विश्वस्य । जगतः । रात्री ॥ ७ ॥

भाष्यसारः । **भद्रा—कल्याणी सुखकरी, युवतिः—तमसः मिश्रयित्री रात्रिः, आ प्रागात्—अभिमुखम् आगच्छति, अह्वः—चन्द्रमसः, केतून्—किरणानि, समीर्त्सति—सम्यक् संबन्धयितुमिच्छति, रात्री—रात्रिर्देवता, विश्वस्य जगतः—प्राणिजातस्य, निवेशनी—विश्रामहेतुभूता, अभूत्—भवति ॥ ७ ॥**

The pleasant night providing rest to the whole world, mingled with darkness comes desiring to be united with the lunar beams.—7.

**सा०-भा० । 'भद्रा' सूर्यप्रकाशसन्तापं निवारयन्ती सुखकरी 'युवतिः' तमसो मिश्रयित्री 'रात्रिः' 'आ प्रागाद्' आभिमुख्येन प्रगच्छति, 'अह्वः' चन्द्रमसः, 'केतून्' रश्मीन्, 'समीर्त्सति' सम्यग् बन्धयितुमिच्छति च । अत एव 'भद्रा' कल्याणी 'रात्री' 'विश्वस्य' सर्वस्य 'जगतः' 'निवेशनी' निवेशकारिणी 'अभूत्' भवति । अहनि स्वस्वव्यापारात् खिन्नान् सर्वप्राणिनः स्वाश्रयेषु स्वापयतीत्यर्थः ॥ ७ ॥**

**७ । इयम् ऋक् ऋग्वेदे नास्ति ।**

अह्वः—this word, in the sense of the moon, occurs only here.

समीर्त्सति—occurs only here in SV. ; nowhere in ṚV.

निवेशनी—providing rest…cf. 'ह्वयामि रात्रीं जगतो निवेशनीम्'—I call on night that brings the world to rest, ṚV. i. 35. 1 ; *also* 'स्योना पृथिवि, भवानृक्षरा निवेशनी'—be pleasant, O Earth, thornless and our resting place, ṚV. i. 22. 15.

रात्री—with ई is peculiar in the Vedas by 'रात्रेश्चाजसौ', Pāṇ. iv. 1. 31.

---

बार्हस्पत्य भरद्वाज ऋषिः । वैश्वानरो देवता । जगतीच्छन्दः ।

३ २ ३ १ २ ३ २ ३ २३ ३ २ ३ १ ३ १ २ ३ १ २
**प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे ।**
३ १ २ ३ १र २र ३ २ ३ १ २ ३ १ २ ३ १ २
**वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥ ८ ॥**

प्रक्षस्य । वृष्णः । अरुषस्य । नु । महः । प्र । नः । वचः । विदथा । जातऽवेदसे । वैश्वानराय । मतिः । नव्यसे । शुचिः । सोमःऽइव । पवते । चारुः । अग्नये ॥ ८ ॥

भाष्यसारः। प्रत्तस्य—व्याप्तस्य हविर्युक्तस्य वा, वृष्णः—कामानां वर्षयितुः, अरुषस्य—दीप्यमानस्य, वैश्वानरस्य अग्नेः, महः—तेजः, नु—क्षिप्रम्, स्तौमि। जातवेदसे—जातवेदसं तमुद्दिश्य, नः—अस्माकम्, वचः—स्तोत्रम्, विदथा—विदथे यज्ञे, प्र—प्रकृष्टम्, स्तौति। नव्यसे—नवतराय, वैश्वानराय—विश्वजनहिताय अग्नये, शुचिः—शुद्धा, चारुः—रमणीया, मतिः—स्तुतिः, सोम इव पवते—स्रवति, अग्निसकाशं गच्छति ॥ ८ ॥

I adore promptly at the sacrifice the might of the all-pervading *Jātavedas*, (the knower of all born beings), the showerer (of benefits), the brilliant; pure, excellent praise proceeds, like the Soma-juice, to Agni *Vaiśvānara* (benevolent to all men).—8.

**सा०-भा०।** 'प्रत्तस्य' संपृक्तस्य व्याप्तस्य, यद्वा, पृक्तं हविर्लक्षणमन्नं तद्वतः, 'वृष्णः' सेक्तुः, 'अरुषस्य' आरोचमानस्य, 'वैश्वानराय', 'महः' पूजायुक्तं बलं तेजो वा 'नु' क्षिप्रं स्तौमि। अत एव 'नः' अस्मदीयं 'वचः' वचनं 'विदथे' यागे 'प्रयच्छति' स्तौतीत्यर्थः। 'जातवेदसे' जातप्रज्ञाय जातधनाय वा तमुद्दिश्येत्यर्थः। उक्तमेव प्रकारान्तरेणादरादाह—'नव्यसे' नवतराय 'वैश्वानराय' अग्नये 'शुचिः' निर्मला, स्तोतॄणां शोधयित्री वा। 'चारुः' कल्याणी, 'मतिः' मननीया स्तुतिश्च, 'पवते' मत्सकाशात् प्रभवति, स्वयमेव गच्छतीत्यर्थः। 'सोम इव' यथा सोमो दशापवित्रात् स्रवति तद्वदित्यर्थः ॥ ८ ॥

८। ऋ० सं० ६ म० ८ सू० १ ऋ०। ṚV. reads (1) **'पृक्षस्य'** instead of **'प्रत्तस्य'** (mg. the same); (2) **'सहः'** for **'महः'**; (3) **'प्र नु वोचम्'** for **'प्र नो वोचः'**; (4) **'जातवेदसः'** for **'जातवेदसे'**; (5) **'नव्यसी'** for **'नव्यसे'**.

विदथा—*for* विदथे, *see* notes on विदथानि, SV. I. 459.

वैश्वानराय—*See* notes on वैश्वानरम्, SV. I. 67; 484.

———

भरद्वाज ऋषिः। त्रिष्टुप् छन्दः। विश्वेदेवा देवताः।

१ २ ३ १ २र ३ २ ३ १र २र ३ १र २र ३ १ २
विश्वे देवा मम शृण्वन्तु यज्ञमुभे रोदसी अपां नपाच्च मन्म।
२ ३ १ २ ३ १ २ ३ २उ ३ १ २
मा वो वचांसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो अन्तमा मदेम ॥९॥

विश्वे । देवाः । मम । शृण्वन्तु । यज्ञम् । उभे इति । रोदसी इति । अपाम् । नपात् । च । मन्म । मा । वः । वचांसि । परिऽचक्ष्याणि । वोचम् । सुम्नेषु । इत् । वः । अन्तमाः । मदेम ॥ ९ ॥

भाष्यसारः । विश्वेदेवाः, उभे रोदसी, अपान्नपात्, मम मन्म—मननीयं यज्ञं गृह्णन्तु, स्तोत्रञ्च शृण्वन्तु । हे देवाः, वः—युष्माकम्, परिचक्ष्याणि—परिवर्जनीयानि, वचांसि—स्तोत्राणि, मा वोचम्—न ब्रवीमि । वः—युष्माकम्, अन्तमा—अन्तिके वर्त्तमानाः, वयं सुम्नेषु इत्—युष्मत्प्रदत्तेषु सुखेषु एव, मदेम—मोदेमहि ॥ ६ ॥

May all the gods, both heaven and earth and the son of the waters, accept our oblations and listen to our prayers; let me not pronounce objectionable words; let us, being near unto you, be delighted with your happiness.—9.

**सा०-भा० ।** 'विश्वे' सर्वे 'देवाः' 'मम' मदीयं 'मन्म' मननीयं 'यज्ञं' यजनीयं पूजां हवींषि वा, 'शृण्वन्तु' गृह्णन्त्वित्यर्थः । 'अपान्नपात्' मध्यस्थानोऽग्निश्च 'उभे रोदसी' द्यावा-पृथिव्यौ अस्मदीयं स्तोत्रं शृण्वन्तु, चित्ते अवधारयन्तु ।

अथ प्रत्यक्ष-कृताः हे 'देवाः'! 'वः' युष्माकं 'परिचक्ष्याणि' परिवर्जनीयानि यानि 'वचांसि' स्तोत्राणि 'मा वोचं' न ब्रवीमि, अपितु समीचीनानीति । अतः, 'वो' युष्माकम् 'अन्तमाः' अन्तिकतमाः सन्तो वयं 'सुम्नेष्वित्' युष्माभिर्दत्तेषु सुखेष्वेव वर्तमानाः 'मदेम' मोदेम ॥ ६ ॥

६ । ऋ० सं० ६ म० ५२ सू० १४ ऋ० । ṚV. reads 'शृण्वन्तु यज्ञियाः' (epithet of विश्वेदेवाः ) instead of 'शृण्वन्तु यज्ञम्'.

परिचक्ष्याणि—blamable ; this word occurs only here in SV. and twice in ṚV. ; cf. 'किमित्ते विष्णो परिचक्ष्यं भूत्', vii. 100. 6.

सुम्नम्—happiness, Ngh. 3. 6 ; अन्तमाः—near, 2. 16.

---

वामदेव ऋषिः । महापंक्तिश्छन्दः । लिङ्गोक्तदेवताः ।

१ २ ३ १ २ ३ १र २र ३ २
यशो मा द्यावापृथिवी यशो मेन्द्रबृहस्पती ।
३ १ २ ३ १ २ ३ १र
यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम् ।
३ २ २ ३ २ ३ १ २ ३ १ २
यशसा३स्याः संसदोऽहं प्रवदिता स्याम् ॥ १० ॥

यशः । मा । द्यावाऽपृथिवी इति । यशः । मा । इन्द्रऽबृहस्पती इति । यशः । भगस्य । विन्दतु । यशः । मा । प्रति । मुच्यताम् । यशसा । अस्याः । सम्ऽसदः । अहम् । प्रऽवदिता । स्याम् ॥ १० ॥

भाष्यसारः । **द्यावापृथिव्योः, इन्द्राबृहस्पत्योः—उभयत्र व्यत्ययेन षष्ठीस्थाने प्रथमा, भगस्य—आदित्यस्य, यशः मा—माम्, विन्दतु । अस्याः संसदः—एतेषां देवानां समूहस्य यशः, मा प्रतिमुच्यताम्—न मां त्यजतु । अस्याः संसदो यशसा हेतुभूतेन अहं प्रवदिता—प्रवक्ता, स्याम्—भवेयम् ॥ १० ॥**

May the glory of heaven and earth, the glory of Indra and Bṛhaspati, the glory of Bhaga come to me ; may not the glory of the band leave me ; through their glory may I be the eloquent speaker ( of their praises ).—10.

**सा०-भा० ।** **'द्यावापृथिवी' द्यावापृथिव्योः, 'यशः' 'मा' स्तोतारं मां 'विन्दतु' लभताम्, प्राप्नोत्वित्यर्थः । किञ्च, 'इन्द्रबृहस्पती' इन्द्राबृहस्पत्योः 'यशः' 'मा' मां विन्दतु । किञ्च, 'भगस्य' आदित्यस्य 'यशः' 'मा' मां विन्दतु । बहुलेन यशसा यशो मया 'मा प्रतिमुच्यतां' न प्रमुच्यताम् । 'यशसाऽस्याः' अस्याः मम 'संसदः' समूहस्य 'यशः' न प्रमुच्यताम् । 'अहं' 'प्रवदिता' सर्वत्र प्रवक्ता 'स्याम्' भूयासम् ॥ १० ॥**

**१० । इयम् ऋक् ऋग्वेदे नास्ति । सामविधान० २, ६, १५-१६ ।**

भगः—*See* Nir. 3. 16 ; 12. 14.

———

**हिरण्यस्तूप ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ।**

१ २ ३ २ ३क २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
**इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री ।**
२ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
**अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ ११ ॥**

इन्द्रस्य । नु । वीर्याणि । प्र । वोचम् । यानि । चकार । प्रथमानि । वज्री । अहन् । अहिम् । अनु । अपः । ततर्द । प्र । वक्षणाः । अभिनत् । पर्वतानाम् ॥ ११ ॥

भाष्यसारः। इन्द्रस्य प्रथमानि—मुख्यानि, वीर्याणि—वीरत्वमण्डितानि कर्माणि, नु—क्षिप्रम्, प्रवोचम्—कथयामि। अहिम्—मेघम्, अहन्—हतवान्, अनु—ततः, अपः—वृष्ट्युदकानि, ततर्द—हिंसितवान् भूमौ विसृष्टवान्, पर्वतानाम्, वक्षणाः—वहनशीलाः नदीः, प्र अभिनत्—प्रवाहितवान्॥ ११ ॥

I proclaim the first valorous exploits of Indra, which the wielder of the thunderbolt achieved; he slew *Ahi*; he sent down the waters (on earth); he caused the torrents of the mountains to flow.—11.

**सा०-भा०।** 'वज्री' वज्रयुक्त इन्द्रः, 'प्रथमानि' पूर्वसिद्धानि मुख्यानि वा 'यानि' 'वीर्याणि' पराक्रमयुक्तानि 'कर्माणि' चकार। तस्य 'इन्द्रस्य' तानि वीर्याणि 'नु' क्षिप्रं 'प्रवोचं' प्रब्रवीमि। कानि वीर्याणीति? तदुच्यते—'अहिं' मेघम् 'अहन्' हतवान्। तदेतदेकं वीर्यम् 'अनु' पश्चात् 'अपो' जलानि 'ततर्द' हिंसितवान्, भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। 'पर्वतानां' सम्बन्धिनीः 'वक्षणाः' प्रवहणशीला नदीः 'प्राभिनत्' कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम्॥ ११ ॥

११। ऋ० सं० १ म० ३२ सू० १ ऋ०।

Sāy. derives the following words in his com. on the Ṛ V.—

वीर्याणि—वीर विक्रान्तौ, *to show valour*,—णि—यत्, णिच्-लोपः by 'णेरनिटि'.

प्र-वोचम्—Aor. form, अस्यति-वक्ति-ख्यातिभ्योऽङ्, aug. अ is not prefixed to the root in लुङ् by 'छन्दस्यमाङ्योगेऽपि, Pāṇ. vi. 4. 75.

अहन्—rt. हन्, *to kill*, imperf. ( लङ् ).

अहिम्—आ + rt. हन् *to strike* + इ by श्रि-हनिभ्यां ह्रस्वश्च, uṇ. iv. 137, आङो ह्रस्वश्च (prefix आ anomalously shortened to अ).

ततर्द—perf. of rt. तृद ( उतृदिर् हिंसानादरयोः ); cf. 'ऋतस्य श्लोको बधिरा ततर्द कर्णा' ( ततर्द—pierced or opened ), Ṛ V. iv. 23. 8; Nir. 10. 41.

वक्षणाः—rt. वक्ष् ( रोषे, *to be angry* )—*aff.* युच् ( अन ) by क्रुधमंडार्थेभ्यश्च, Pāṇ. iii. 2. 151, cf. Ngh. 1. 13, the syn. of नदी.

प्राभिनत्—broke away.

अहिः—*See* SV. I. 410; a demon of drought who, as the derivation given above suggests, obstructs rain to descend; *Ahi* and *Vṛtra*, both, are given as syns. of *megha* (a cloud) in Ngh. 'अहन् अहिम्'—has been rendered by Prof. Wilson as—'he clove the cloud'.

विश्वामित्र ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता ।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
३ १ २ ३ १र २र ३ १र २र ३ १ २ ३ १ २ ३ १ २
त्रिधातुरर्को रजसो विमानोऽजस्रं ज्योतिर्हविरस्मि सर्वम् ॥१२॥

अग्निः । अस्मि । जन्मना । जातऽवेदाः । घृतम् । मे । चक्षुः । अमृतम् । मे । आसन् । त्रिऽधातुः । अर्कः । रजसः । विऽमानः । अजस्रम् । ज्योतिः । हविः । अस्मि । सर्वम् ॥ १२ ॥

भाष्यसारः । अहम् अग्निरस्मि, जन्मना—जातमात्रमेव, जातवेदाः—सर्वज्ञः सर्वात्मको वा, घृतं मे चक्षुः—चक्षुरिव भासकम्, अग्नौ प्रक्षिप्तं घृतं हि अग्निं समुद्दीपयतीति । अमृतम्—प्रभात्मकं ज्योतिः, मे—मम, आसन्—आस्ये, वर्त्तते । त्रिधातुरर्कः—जीवशरीरेषु प्राणापान-व्यानरूपेण त्रिधा स्थितः प्राणोऽस्मि । रजसः—अन्तरिक्षस्य, विमानः—परिच्छेत्ता वायुश्चास्मि । अजस्रं ज्योतिः—अनुपक्षीण-निरन्तर-ज्योतिःस्वरूपः सूर्यश्चास्मि । हविः—आज्यादि, तदुपलक्षितं सर्वमस्मि । अनेनाग्नेः सर्वात्मकत्वमुच्यते । एवमात्मपक्षेऽप्यात्मनः सर्वज्ञत्वं सर्वव्यापकत्वञ्चानेन प्रतिपादयितुं शक्यते ।

I, Agni, am, by birth, possessed of the knowledge of all beings that are born; ghee is my eye; nectar is my mouth; I am three-fold vital air, the measure of the firmament, the eternal light; I am also the oblation.—12.

सा०-भा० । विश्वामित्र ऋषिस्त्रिष्टुप् छन्दस्त्वग्निरिति द्वयोः ।
उत्तराग्नेः स्तुतिः पूर्वा स्तुतिः सर्वात्मनात्मनः ॥

साक्षात्कृत-परतत्त्व-स्वरूपोऽग्निः स्वात्मनः सर्वात्मनः सर्वात्मकत्वानुभवम् अस्यामृचि आविष्करोति—

हे कुशिकाः ! भोक्तृ-भोग्य-भावेन द्विविधम् इदं सर्वं जगत् । 'एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः' इति श्रुतेः । तत्र सकल-भोक्तृ-वर्ग-रूपेणान्नादोऽग्निः । स च अग्निवाय्वादित्य-भेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्षद्युलोकानधितिष्ठति । तदुक्तं वाजसनेयके—'स त्रेधात्मानं व्यकुरुतादित्यं द्वितीयं वायुं तृतीयम्' इति ।

तत्र सो'ऽग्निः' अहं 'जन्मना' एव 'जातवेदाः' 'अस्मि' श्रवणमननादि-साधन-नैरपेक्ष्येण स्वभावत एव साक्षात्कृतपर-तत्त्वस्वरूपोऽस्मि । 'घृतं मे चक्षुः'

यदेतद्विश्वस्यावभासकं मम स्वभावभूतम्प्रकाशात्मकं चक्षुः तद् घृतम् इदानीमत्यन्त-दीप्तम्। यदेतद् अमृतं कर्मफलं दिव्यादि-विविधविषयोपभोगात्मकं तन्मे मम आसन्नास्ये वर्तते, सकलभोक्तृ-वर्गात्मना स्वयमेवावस्थानात्। एवं स्वात्मनः पृथिव्यधिष्ठातृ-रूपतामभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृतामाह—अर्को जगतः स्रष्टा प्राणः। 'सोऽर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चतेव मे कमभूदिति तदेवार्कस्यार्कत्व-मि'ति श्रुतेः। स प्राणः अहं 'त्रिधातुः' त्रिधाऽऽत्मानं विभज्य तत्र वाय्वात्मना 'रजसः'-ऽन्तरिक्षस्य 'विमानः' विमाता, अधिष्ठातास्मि। तथा आदित्यरूपेण द्युलोकाधि-ष्ठातृतामाह—'अजस्रं ज्योतिः' अनुपक्षीणं नित्यं तेजः प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽप्यहमस्मि। एवं भोक्तृ-रूपतामात्मनोऽनुसन्धाय भोग्य-रूपतामप्यनु-सन्धत्ते। यत् हविर्भोग्यं प्रसिद्धमस्ति तत्सर्वमप्यहमेवास्मि।

यद्वा, अहम् 'अग्निरस्मि देवानां' हविः-प्रापणात् अङ्गनादिगुण-युक्तोऽस्मि। किञ्च, 'जन्मना' उत्पत्त्या 'जातवेदाः' जातज्ञानोऽस्मि। उत्पत्ति-क्षण एव सर्वज्ञोऽह-मस्मि। अथवा जातं सर्वं स्वात्मतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः। तत् कथम्? इत्युच्यते—'घृतं' मे चक्षुः यदेतद् घृतं प्रसिद्धमस्ति तन्मे चक्षुः-स्थानीयम्, यथा लोके चक्षुर्भासकम् एवं घृतमपि प्रक्षिप्तं ज्वालामुत्पादयत मम भासकम्। 'अमृतं' प्रभारूपम्, यदमृतमविनाशि ज्योतिः 'मे' मम 'आसन्' आस्ये वर्त्तते। 'त्रिधातुः' प्राणापानव्यानात्मकस्त्रिधा वर्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यह-मेवास्मि। तथा 'रजसः' अन्तरिक्षस्य 'विमानः' विशेषेण माता, परिच्छेत्ता वायुश्चाह-मस्मि। किञ्च, 'अजस्रं ज्योतिः' नैरन्तर्येण तापकः सूर्यश्चाहमस्मि। किं बहुना—आज्य-पुरोडाशादि-रूपं यदेतद्धविरस्ति तदुपलक्षितं तत्सर्वमप्यहमस्मि—'सर्वं खल्विदं ब्रह्मे'ति श्रुतेः। तमनेकधा अग्नेः सर्वात्मकत्व-प्रतिपादनेन परब्रह्मत्वमुक्तं भवति॥ १२॥

१२। ऋ० सं० ३ म० २६ सू० ७ ऋ०। ऋ० वि० २, १, १७। RV. reads **'अजस्रो घर्मः'** instead of **'अजस्रं ज्योतिः'**.

आसन्—mouth ; आस्य-शब्दस्य आसन् आदेशः, by 'पद्दन्नो०' Pāṇ. vi. 1. 63, सुपां सुलुगिति सप्तम्या लुक् ; *vide* : our notes on the word, SV. I. 67.

This stanza mystically describes the universality of Agni in the double capacity of the enjoyer and enjoyed, the food and the feeder and in the three forms of fire, air and the sun, presiding over earth, mid-heaven and heaven ; the eye of Agni is the light of all, which light is fed by oblations of ghee , ambrosia is the reward of pious acts, e. g., enjoyment of heaven and

the like, which is procurable through the oblations to fire, as if through his mouth ; *arka* is explained as world-creating vital air, which, becoming threefold, is *Vāyu*, in the firmament, *Agni*, on earth and *Āditya* as the source of eternal warmth and life. Sāyaṇa furnishes another and more simple illustration of some of the phraseology,—as the eye lights up the world, so *ghee* thrown upon the fire causes it to burn brighter and dispense more light ; he explains *amṛta* also by *prabhā* (light), light is in my countenance ; by *tridhātu* he refers to three vital airs termed *prāṇa*, *apāna* and *vyāna*. This verse occurs in the Yajus. xviii. 66, where Mahīdhara explains—'here Yajamāna identifies himself with Agni, saying,—I am by birth, *Agni*, or of the form of *Agni* ( अग्निरूप ), the lord of all that is born, the sacrifice ( अर्कः ), the three Vedas ( त्रिधातुः ), the measure of the water ( रजसः ), the eternal sun ; ghee is the eye, that is, I behold the offerer of ghee on the *fire* ; I convert the oblation, poured into my mouth, into ambrosia ; thus there is no duality between Agni and the Yajamāna ; *see* Wilson's notes.

---

ऋषिच्छन्दोदैवतानि पूर्ववत् ।

२ ३ २ ३ १र २र ३ १र २र ३ १र २र ३ १ २
पात्यग्निर्विपो अग्रं पदं वेः पाति यह्वश्चरणं सूर्यस्य ।
२ ३ १ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ २
पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥१३॥

पाति । अग्निः । विपः । अग्रम् । पदम् । वेः । पाति । यह्वः । चरणम् । सूर्यस्य । पाति । नाभा । सप्तऽशीर्षाणम् । अग्निः । पाति । देवानाम् । उपऽमादम् । ऋष्वः ॥ १३ ॥

भाष्यसारः । अग्निः, वेः—गमनशीलायाः सर्वत्र व्याप्तायाः, विपः—भूम्याः, अग्रं पदम्—मुख्यं स्थानम्, पाति—रक्षति । यह्वः—महान् अग्निः, सूर्यस्य चरणम्—अन्तरिक्षम्, पाति । नाभा (सप्तमीस्थाने डा)—अन्तरिक्षे स्थितम्, सप्तशीर्षाणम्—सप्तसप्तं मरुद्गणम्, पाति । ऋष्वः—दर्शनीयः अग्निः, उपमादम्—देवानां मदकरं यज्ञम्, पाति ॥ १३ ॥

Agni protects the fore-foot of the all-pervading earth ; great Agni protects the foot of the sun (the firmament), protects the Maruts, the multiple of seven in number ; Agni, lovely to look at, protects the sacrifice, the delight of the gods.—13.

**सा०-भा०।** 'अग्निः' 'वेः' गन्त्याः सर्वत्र व्याप्तायाः 'विपः' भूम्याः 'अग्रं' मुख्यं 'पदं' स्थानं 'पाति' रक्षति। 'यह्वः' महान् अग्निः 'सूर्यस्य' 'चरणं' चरत्यनेनेति चरणमन्तरिक्षं 'पाति'। 'नाभा' नाभौ अन्तरिक्षस्य मध्ये 'सप्तशीर्षाणं' सप्तगणं मरुद्गणं 'पाति'। 'ऋष्वः' दर्शनीयोऽयम् 'अग्निः' 'देवानाम्' 'उपमादम्' उपमादकं यज्ञं 'पाति' रक्षति ॥ १३ ॥

इति षष्ठाध्यायस्य तृतीयः खण्डः।

१३। इयम् ऋक् ऋग्वेदे नास्ति।

वेः—*ordi.* this word means a bird, fr. rt. वी *to go*; Nir. 2. 6, *here* taken in etym. sense. विपः in the sense of earth is rarely met with. यह्वः—*See* notes on SV. I. 59; 73.

ऋष्वः—great, Ngh. 3. 3, occurs also in SV. I. 423.

---

अथ षष्ठाध्यायस्य चतुर्थः खण्डः।

वामदेव ऋषिः। पंक्तिश्छन्दः। अग्निर्देवता।

१ २ ३ १ २ ३ २ ३ १ २
भ्राजंत्यग्ने समिधान दीदिवो जिह्वा चरत्यंतरासनि।
१र २र ३ १ २ ३ २ ३ १र २र ३ १ २
स त्वं नो अग्ने पयसा वसुविद्रयिं वर्चो दृशेऽदाः ॥ १ ॥

भ्राजन्ती। अग्ने। सम्ऽइधान। दीदिवः। जिह्वा। चरति। अन्तः। आसनि। सः। त्वम्। नः। अग्ने। पयसा। वसुऽवित्। रयिम्। वर्चः। दृशे। अदाः ॥ १ ॥

भाष्यसारः। **समिधान—समिध्यमान, दीदिवः—प्रदीप्त हे अग्ने, भ्राजन्ती—प्रकाशमाना, तव जिह्वा, आसनि—आस्ये मुखविवरे, चरति—हवींषि भक्षयति। वसुवित्—धनप्रापकस्त्वम्, पयसा—अन्नेन सह, दृशे—दर्शनाय, वर्चः—तेजः, नः अदाः—अस्मभ्यं देहि ॥ १ ॥**

Thy shining tongue, exceedingly brilliant Agni, kindled (by the priests), moves within the mouth; such as thou art, Agni, dispenser of treasures, bestow on us, riches, splendour to look at, together with food.—1.

**सा०-भा०।** वामदेव ऋषिः पंक्तिर्भ्राजंत्यग्न इति द्वयोः।
आग्नेयी प्रथमर्त्तव्या द्वितीया दृश्यते तयोः॥

'समिधान' ऋत्विग्भिः समिध्यमान दीप्त हे 'अग्ने'! 'भ्राजन्ती' प्रकाशमाना 'आसनि' आस्ये 'अन्तर्' मध्ये स्थिता त्वदीया 'जिह्वा' हवींषि 'चरति' भक्षयति। हे 'अग्ने', 'वसुवित्' धनलम्भक! त्वं 'नः' अस्मभ्यं 'पयसा' अन्नेन सह 'रयिं' रमणीयं धनम्, 'दृशे' दर्शनाय 'वर्चः' तेजश्च, तेजस्वी त्वं वा 'अदाः' देहि॥ १॥

१। इयम् ऋक् ऋग्वेदे नास्ति।

पयसा—with food, Ngh. 2. 7; this word occurs also in Ār.S. 3. 1; 3. 2.

दीदिवः—*voc.* of दीदिवस्; for dr. *see* notes on दीदिवांसम्, Ār.S. 3. 6.

जिह्वा चरति—*lit.* the tongue moves, i. e., the flame of fire consumes the oblations offered in it.

वसुवित्—procurer of wealth; अदाः—Aor. for imp., Pāṇ. iii. 4. 6.

---

ऋषिच्छन्दोदैवतानि पूर्ववत्।

३ १र २र ३ १र २र
**वसंत इन्नु रंत्यो ग्रीष्म इन्नु रंत्यः।**
३ १र २र ३ १ २ ३ १र २र ३ १र २र
**वर्षाण्यनु शरदो हेमंतः शिशिर इन्नु रंत्यः॥ २॥**

वसन्तः। इत्। नु। रन्त्यः। ग्रीष्मः। इत्। नु। रन्त्यः। वर्षाणि। अनु। शरदः। हेमन्तः। शिशिरः। इत्। नु। रन्त्यः॥२॥

भाष्यसारः। वसन्तादयः सर्वे प्रसिद्धा ऋतवः क्रमेण प्रवर्त्तमाना एव रमणीया भवन्तु॥२॥

May the spring be truly agreeable; the summer be verily enjoyable, so also the rainy season; following in order, may the autumn and the winter be, indeed, pleasant.—2.

**सा०-भा०।** 'वसन्तः इन्नु' वसन्त एव चैत्र-वैशाख-रूप-वसन्त ऋतुरेव 'रन्त्यः' रमणीयः भवति। 'ग्रीष्म इन्नु' ज्येष्ठाषाढ-रूपो ग्रीष्म ऋतुरेव 'रन्त्यः' रमणीयः। 'वर्षाणि' वर्षाः श्रावण-भाद्रपद-रूपेणावयवीभूतः प्रावृट् ऋतुरेव 'रन्त्यः' रमणीयः। ता'न्यनु' 'शरदः' आश्विन-कार्त्तिक-रूपेणावयवीभूत ऋतुः 'रन्त्यः'

रमणीयः। 'हेमन्तः' मार्गशीर्ष-पौष-रूप एव 'रन्त्यः' रमणीयः। 'शिशिर इन्नु' माघ-फाल्गुन-रूप एव 'रन्त्यः' रमणीयः ॥ २ ॥

२। इयम् ऋक् ऋग्वेदे नास्ति।

रन्त्यः—रमणीयः, congenial, pleasant or agreeable; occurs thrice in this verse and once more in Ār.S. 1. 3. fr. rt. रम् *to enjoy.*

---

३ १ २ ३ १ २ ३ २ ३ १ २

**सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।**

१र २र ३ १ २ ३ १ २ ३ २

**स भूमिं सर्वतो वृत्वात्यतिष्ठद्दशांगुलम् ॥ ३ ॥**

सहस्रऽशीर्षाः। पुरुषः। सहस्रऽअक्षः। सहस्रऽपात। सः। भूमिम्। सर्वतः। वृत्वा। अति। अतिष्ठत्। दशऽअङ्गुलम् ॥ ३ ॥

भाष्यसारः। पुरुषः सहस्रशीर्षाः—सर्वप्राणिसमष्टितया सर्वप्राणिनाञ्च तदन्तर्वर्त्तितया अभेदोपचारादनन्तैः शिरोभिः युक्तः, एवम् अनन्त-चक्षुः, अनन्तपादः, भूमिम्—उपलक्षणात् निखिलब्रह्माण्डम्, सर्वतः—परितः, वृत्वा—परिवेष्ट्य परिवृत्य व्याप्य वा, दशाङ्गुलम् अत्यतिष्ठत्—अतिक्रम्य अवस्थितः। विश्वब्रह्माण्डं तस्य पुरुषस्य शरीरे लीनं भवति, स च पुरुषः सर्वस्मादतिरिच्यत इत्यर्थः ॥ ३ ॥

*Puruṣa* is thousand-headed, thousand-eyed, thousand-footed. He, having covered the earth on all sides, exceeds it by ten fingers.—3.

**सा०-भा०।** सर्व-प्राणि-समष्टि-रूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं 'सहस्रशीर्षाः' सहस्र-शब्दस्योपलक्षणत्वात् अनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्व-प्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्। एवं सहस्राक्षः सहस्रपात् त्वं च। 'स' पुरुषः 'भूमिं' ब्रह्माण्ड-गोलक-रूपां 'सर्वतः' आ समन्तात् 'वृत्वा' परिवेष्ट्य 'दशाङ्गुल'-परिमितं देशम् 'अत्यतिष्ठत्' अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्. ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्याव-स्थित इत्यर्थः ॥ ३ ॥

३। ऋ० सं० १० म० ६० सू० १ ऋ०। यजु० ३१, १। अथर्व० १६, ६, १।
ṚV. reads **'विश्वतः'** instead of **'सर्वतः'**। In some texts of the Sāma-veda **'पृत्वा'** is read instead of **'वृत्वा'** (*see* Ch. M.Bh.).

Puruṣa or the Supreme Being, having comprised within himself all the created beings, is represented, here, as possessed of a thousand or an infinite number of heads, eyes and feet, alluding, evidently, to those of all the living creatures of whom he is the aggregate,—a truth taught in the Upaniṣads or in the Vedānta philosophy.

दशाङ्गुलम्—ten fingers are not here literally meant; all that seems to be intended is that the whole universe is included in Him who exceeds all in dimension or in every way; cf. 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (Gītā, x. 42). Mahīdhara suggests that it may also mean that the human soul, extending from the naval, takes up its abode in the heart—a doctrine to be found in the Upaniṣads. Colebrooke following this interpretation renders it—'stands in the human breast.' Burnouf's version is—'il occupe dans le corps de l homme une cavité haute de dix doigts qn'il dépasse encore.'

---

३ २ ३ २उ ३ १ २ ३ २ १ ३ २ १ ३ २ १
**त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।**
२ ३ २ ३क २र ३ २ ३ २
**तथा विष्वङ् व्यक्रामदशनानशने अभि ॥ ४ ॥**

त्रिऽपात्। ऊर्ध्वः। उत्। ऐत्। पुरुषः। पादः। अस्य। इह। अभवत्। पुनरिति। तथा। विष्वङ्। वि। अक्रामत्। अशनानशने इति। अभि ॥ ४ ॥

भाष्यसारः। सोऽयं पुरुषः त्रिपात्—त्रिचतुर्भागतः, ऊर्ध्वः उदैत्—अज्ञानात्मक-संसारात् बहिः उपरि तिष्ठति। अस्य पादः—चतुर्थः अंशः, इह संसारे माया-रूपेण पुनः अभवत्—पुनः पुनः आविर्भवति, सृष्टिसंहारद्वारेण। तथा विश्वतः—सर्वतः अशनानशने—चेतनाचेतन-निर्विशेषं सर्वं जगत्, व्यक्रामत्—मायया व्याप्नोति ॥ ४ ॥

By three-fourths *Puruṣa* rises above (this mortal world). One-fourth of him comes into being here again and again. Then he pervades wholly those who eat or those who do not (i. e., all the animate and inanimate beings).—4.

**सा०-भा०** । योऽयं 'त्रिपात् पुरुषः' संसार-स्पर्श-रहितः बहुल-स्वरूपः सोऽयम् 'ऊर्ध्व उदैत्' अस्मादज्ञानकार्यात् संसाराद् बहिर्भूतः सन् तत्रत्यैर्गुणदोषैरस्पृष्टः उत्कर्षेण स्थितवान्। 'अस्य' योऽयं 'पादः' लेशः सोऽयमिह मायायां पुनरभवत्। सृष्टि-संहाराभ्यां पुनः पुनरागच्छदिति। अस्य सर्वस्य जगतः परमात्म-लेशत्वं भगवताऽप्युक्तम्—'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदि'ति। तथा मायाया-मागत्यानन्तरं 'विष्वङ्' देव-तिर्यगादि-रूपेण विविधः सन् 'व्यक्रामत्' व्याप्तवान्। किं कृत्वा ? 'अशनानशने' 'अभि'लक्ष्य अशनं भोजनादि-व्यवहारोपेतं चेतनं प्राणि-जातम्, अनशनं तद्रहितमचेतनं गिरिनद्यादिकम्। तदुभयथा यथा स्यात्तथा अयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥

४। ऋ० सं० १० म० ९० सू० ४ ऋ०।

उदैत्—rise upwards, i. e., to the world of immortals ; ऐत् is the imperf. ( लङ् ) of rt. इ *to go* ; for pres.

इह पुनरिति—proceeds repeatedly in this world ; either in individuals by death or birth, or in the world by its temporary dissolution or renovation.

अशनानशने—*lit.* those who eat and those who do not, i. e., the two classes of created things: those capable of enjoyment, e. g., gods, men, animals and those incapable thereof, as mountains, rivers, stones etc.—conscious and unconscious creation.

विष्वङ्—diversified in various forms.—*Wils.*

व्यक्रामत् अभि—distributed himself to, developed into—*Macdnll* ; went to—*Wils.*

---

१ २ ३ २उ ३ २ ३ २उ ३ १ २
पुरुष एवेदं सर्वं यद् भूतं यच्च भाव्यम्।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ५ ॥

पुरुषः । एव । इदम् । सर्वम् । यत् । भूतम् । यत् । च । भाव्यम् । पादः । अस्य । सर्वा । भूतानि । त्रिऽपात् । अस्य । अमृतम् । दिवि ॥ ५ ॥

भाष्यसारः । इदम्—परिदृश्यमानं वर्त्तमानं वा, यत् भूतम्—उत्पन्नम् अतीतकालीनं वा, यच्च भाव्यम्—उत्पत्स्यमानं भविष्यत् वा सर्वं जगत्, सर्वात्मकः कालत्रयात्मको वा पुरुष एव—तदीयावयवभूत एव । सर्वा—सर्वाणि भूतानि, अस्य—पुरुषस्य, पादः—चतुर्थोंशः, अस्य त्रिपात्—पादत्रयम् अधिकांशः, अमृतम्—मरणरहितं सत्, दिवि तिष्ठति । एतदेव पूर्वतनमन्त्रे 'त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः' इत्यनेनैवाम्नातम् ॥ ५ ॥

*Puruṣa* is this all, that has been and that will be. A quarter part of him is all creatures, three quarters of him being immortal (rest) in heaven.—5.

**सा०-भा० ।** यत् 'इदं' वर्त्तमानं जगत् तत् 'सर्वं' 'पुरुष एव'। 'यद् भूतम्' उत्पन्नं जगद्, 'यच्च भाव्यं' भविष्यज्जगत्, तदपि पुरुष एव। यथाऽस्मिन् काले वर्त्तमानाः प्राणिनः सर्वेऽपि चराचरात्मकपुरुषस्यावयवाः, तथैव गतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। एतदेवोभयं स्पष्टीक्रियते—'अस्य' पुरुषस्य 'सर्वाणि भूतानि' कालत्रयवर्तीनि प्राणि-जातानि 'पादः' चतुर्थोऽंशः। 'अस्य' पुरुषस्याव-शिष्टं 'त्रिपात्' स्वरूपम् 'अमृतं' 'विनाश-रहितं' सत् 'दिवि' द्योतनात्मके स्व-प्रकाश-स्वरूपे व्यवतिष्ठत इति शेषः। यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यनन्तस्य परब्रह्मणो हि-इयदन्तत्वाभावात् पादचतुष्टयं निरूपयितुमशक्यम्, तथाऽपि जगदिदं ब्रह्मस्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वोपचारः ॥ ५ ॥

५ । ऋ० सं० १० म० ९० सू०—the first hemistich is taken from verse 2 and the second hemistich from verse 3 of the 'Puruṣa-Sūkta.'

१ २ ३ २उ ३ १ २ ३ १ २

**तावानस्य महिमा ततो ज्यायांश्च पूरुषः ।**

३ १ २ ३ १ २र ३ १र २र ३ १ २

**उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ६ ॥**

तावान् । अस्य । महिमा । ततः । ज्यायान् । च । पूरुषः । उत । अमृतऽत्वस्य । ईशानः । यत् । अन्नेन । अतिऽरोहति ॥ ६ ॥

भाष्यसारः । **अस्य पुरुषस्य, तावान्—पूर्वपूर्वमन्त्रेषु प्रतिपादितः, महिमा भवति, पूरुषः पुनः ततो महिम्नो ज्यायान्—अधिकः भवति, अथवा महिम्नो हेतोः सर्वेषां श्रेष्ठो भवति । उत—अपि च, अमृतत्वस्य—देवत्वस्य मोक्षस्य वा, ईशानः—प्रभुः, यत् जङ्गमरूपम्, अन्नेन—अन्न-मयाहारेण, अतिरोहति—जन्म लभते, तदपि सर्वं पुरुष एव ( गुण० ) ॥ ६ ॥**

Such is his greatness, *Puruṣa* is greater still. And he is the lord of immortality ; all that grows by food is (also) *Puruṣa.*—6.

**सा०-भा० । अतीतानागतवर्त्तमान-रूप-जगद्याधारो योऽस्ति 'तावान्' सर्वोऽपि 'अस्य' पुरुषस्य 'महिमा' स्वकीय-सामर्थ्यविशेषः, न तु तस्य वास्तवं स्वरूपम् । वास्तवस्तु 'पूरुषः' 'ततो' महिम्नोऽपि 'ज्यायान्' अतिशयेनाधिक इत्यर्थः । 'उत' अपि च 'अमृतत्वस्य' देवत्वस्य 'अयम् ईशानः' स्व-मायया 'यत्' यस्मात् कारणात् 'अन्नेन' प्राणिनां भोग्येन अन्नेन निमित्त-भूतेन 'अतिरोहति' स्वकीयां कारणावस्थामतिक्रम्य परिदृश्यमान-जगद्वस्थां प्राप्नोति । तस्मात् प्राणिनां कर्म-फल-भोगाय जगद्वस्था-स्वीकारात् नेदं तस्य वस्तुतत्त्वमित्यर्थः ॥ ६ ॥**

६ । **ऋ० सं १० म० ६० सू०**—The first half of this verse here with a slight variation belongs to verse 3 and the second half to the verse 2 of the 'Puruṣa-Sūkta'.

यदन्नेनातिरोहति—the simplest possible sense has been given in our translation after Guṇa-viṣṇu, the author of *Chāndogya-Mantra-Bhāṣya.* 'And is whatever is nourished, or increased by food'—*Peterson* ; '(he is the lord of immortality since) he stretches far above what exists by food'—*Ludwig* ; 'he is also the lord of that which grows by food'—Coms. on Vāj. S. and Śvet. Upaniṣad. Atharva-Veda (xix. 6. 4) has the rdg. '**यदन्येनाभवत् सह**'—(he is also the lord of immortality, since he became united with another)—

*Muir.* Sāyaṇa has mystified the sense by explaining अन्न as the fruit of actions and giving the purport of the passage as—the Supreme Soul, which is, potentially inactive and invisible, manifests itself in the form, the visible world, that living beings may reap the fruit of their acts ; by अमृतत्वस्य ईशानः—Sāyaṇa means—'inasmuch as the living beings may acquire मोक्ष or final emancipation, the Supreme Soul ( पुरुष ) is the lord or distributer of immortality.

———

१ २ ३ १ २ ३ २ ३ २ ३ १ २
**ततो विराडजायत विराजो अधि पूरुषः ।**
२ ३ १र २र ३ २उ ३ १ २ ३ २
**स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ७ ॥**

ततः । विऽराट् । अजायत । विऽराजः । अधि । पूरुषः । सः । जातः । अति । अरिच्यत । पश्चात् । भूमिम् । अथो इति । पुरः ॥ ७ ॥

भाष्यसारः । ततः—पुरुषात् हिरण्यगर्भात्, विराट्—ब्रह्मा (गुण०), ब्रह्माण्डदेहः ( सा० ), अजायत—उत्पन्नः । विराजः—ब्रह्मणः, पूरुषः—कश्चित् पुमान्, मनुर्वा ( गुण० ), अधि—अध्यजायत, स जातः विराट् पुरुषः मनुर्वा (गुण०), अत्यरिच्यत—सर्वेषां श्रेष्ठोऽभूत्, स विराट् पश्चात् भूमिं ससर्ज, अथो—अनन्तरम्, पुरः—जीव-शरीराणि, ससर्ज । गुणविष्णुमते—स मनुः पुत्रपौत्रादिसमृद्ध्या सर्वत्र जगति पूर्वान् परांश्च अतिचक्राम । तन्नये पश्चात्-पुरः-शब्दौ भूतभविष्यत्कालोपलक्षकौ, भूमिशब्दो देशोपलक्षकः ॥ ७ ॥

From him, *Virāj* was born ; from *Virāj—Puruṣa.* He, on being born, became extended beyond earth, next (created) the earth, then the bodies (of all beings).—7.

**सा० भा० ।** 'मन्ये वामि'ति पञ्चर्चा वामदेवेन वीक्षिताः ।
अत्राद्यैकान्तिमे च द्वे त्रिष्टुभस्तासु चाऽऽदिमा ॥
उपरिष्टाज्ज्योतिरिति बह्वृचैव विधीयते ।
अन्ये अनुष्टुभौ द्यावा-पृथिव्योः प्रथमा तथा ॥

द्वितीयैन्द्री चतुर्थी च तृतीयाशीर्निजात्मनः ।
स्तुतिर्गवामन्तिमेति छन्दोदैवतनिर्णयः ॥

'विष्वङ् व्यक्रामत्' इति यदुक्तं तदेवात्र प्रपञ्च्यते। 'ततः' तस्मादादिपुरुषात् 'विराट्' ब्रह्माण्ड-देहः 'अजायत' उत्पन्नः। विविधानि राजन्ते वस्तून्यत्रेति—विराट्। 'विराजो अधि' विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा 'पूरुषः' तद्देहाभि-मानी कश्चित् पुमानजायत। योऽयं सर्व-वेदान्त-वेद्यः परमात्मा स एव स्वकीयया मायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीव-रूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। एतच्चाथर्वणिकोत्तरतापनीये विस्पष्टमामनन्ति—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य मूढो मूढ इव व्यवहरन्नास्ते माययैवेति'। 'स जातः' विराट् पुरुषः 'अत्यरिच्यत' अतिरिक्तोऽभूत्, विराड्व्यतिरिक्तो देव-तिर्यङ्मनुष्यादि-रूपोऽभवत्। पश्चाद्देवादि-जीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। 'अथो' भूमि-सृष्टेरनन्तरं तेषां जीवानां 'पुरः' ससर्ज। पूर्यन्ते सप्तभिर्धातुभिरिति 'पुरः'—शरीराणि ॥ ७ ॥

७। ऋ० सं १० म० ६० सू० ५ ऋ०।

*Guṇa-viṣṇu,* the author of Ch. M.bh. differs from Sāyaṇa widely in his explanation of this verse, which we have shown in our भाष्यसार above. By 'पूरुष' he means Manu and explains the second half of the stanza as—'he (Manu) excelled all,—that were and would be,—on earth.'

ततः—तस्मात् (Ṛ.V. rdg.)—'from that one-fourth'—*Wils.*; 'from the Ādi-puruṣa'—*Sāy.* Cf. 'अदितेर्दक्षो अजायत, दक्षाद्द्व अदितिः परि'—from Aditi Dakṣa was born and from Dakṣa, Aditi, x. 72. 4.

---

वामदेव ऋषिः। त्रिष्टुप् छन्दः। द्यावापृथिव्यौ देवते।

१ २ २ १ २ ३ १र २र ३ १ २ ३ १र २र
मन्ये वां द्यावापृथिवी सुभोजसौ ये अप्रथेथाममितमभि योजनम्।
१ २ ३ १ २ ३ १र २र ३ १ २
द्यावापृथिवी भवतं स्योने ते नो मुञ्चतमंहसः ॥ ८ ॥

मन्ये । वाम् । द्यावापृथिवी इति । सुऽभोजसौ । ये इति । अप्रथेथाम् । अमितम् । अभि । योजनम् । द्यावापृथिवी इति । भवतम् । स्योने इति । ते इति । नः । मुञ्चतम् । अंहसः ॥ ८ ॥

भाष्यसारः । हे द्यावापृथिव्यौ, वाम्—युवाम्, सुभोजसौ—शोभनपालनवत्यौ—अवनार्थभुजधातुनिष्पन्नत्वात्, मन्ये । अमितम्, योजनम्—धनादि, अभ्यप्रथेथाम्—सर्वतः विस्तारयतम् । युवाम् अस्माकं स्योने—सुखकर्यौ, भवतम् । नः—अस्मान्, अंहसः—पापात्, मुञ्चतम्—विमुक्तान् कुरुतम् ॥ ८ ॥

O heaven and earth, I know you to be (our) best sustainers, extend (for us) the immensurable wealth; become, to us, the sources of bliss and release us from sin.—8.

**सा०-भा० ।** हे 'द्यावापृथिवी' द्यावापृथिव्यौ, 'वां' युवां 'सुभोजसौ' शोभनपालयित्र्याविति 'मन्ये' अहं जानामि । हे द्यावापृथिव्यौ, 'अमितम्' अपरिमितं 'योजनं'—युज्यते पुरुषोऽनेनेति योजनं धनादि, तत् 'अभ्यप्रथेथाम्' अभिविस्तारयतम् । हे 'द्यावापृथिवी' द्यावापृथिव्यौ ! युवाम् अस्माकं 'स्योने' सुरूपे स्वसुखकार्ये 'भवतम्', 'ते' द्यावापृथिव्यौ 'नः' अस्मान् 'अंहसः' पापात् 'मुञ्चतं' मोचयतम् ॥ ८ ॥

८ । इयम् ऋक् ऋग्वेदे नास्ति । अथर्व० ४, २६, १, with the rdg. '**मन्वे**' instead of '**मन्ये.**'

स्योने—pleasant, agreeable ( सुखा )—Yāska, Nir. 9—32. Sāyaṇa has the following notes on the word in his com. on R̥V. i. 22. 15, where it occurs ( स्योना पृथिवि भव ) :—स्योनशब्दो विस्तीर्णवाची । तथा च वाजसनेयब्राह्मणे स्योनशब्दोपेतं कञ्चित् मन्त्रमुदाहृत्य व्याख्यातम् इन्द्रस्योरुमाविश स्योन-स्योनमिति विस्तीर्ण-विस्तीर्णमिति । यद्वा, स्योनशब्दः सुखवाची । dr. is given there : षिवु तन्तुसन्ताने 'सिवेष्टेर्यो च', (uṇ. iii. 9.) इति न प्रत्ययः । टेश्च 'यो' इत्यादेशः ।

सुभोजसौ—occurs only here in SV., and in R̥V. vii. 92. 3 ( cf. 'नि नो रयिं सुभोजसं युवस्व', where Sāy. has the note 'सुभोजसं शोभनान्नयुक्तम्' dr. in the above text fr. rt. भुज् *to protect*, in R̥V. text fr. the same rt. mg. *to eat*.

———

वामदेव ऋषिः । अनुष्टुप् छन्दः । इन्द्रो देवता ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
हरी त इन्द्र श्मश्रूण्युतो ते हरितौ हरी ।
१ २ ३ १ २ ३ १ २ ३ १ २
त त्वा स्तुवन्ति कवयः पुरुषासो वनर्गवः ॥ ९ ॥

हरी । ते । इन्द्र । श्मश्रूणि । उत । ऊँ इति । ते । हरितौ । हरी इति । तम् । त्वा । स्तुवन्ति । कवयः । पुरुषासः । वनःऽगवः ॥ ९ ॥

भाष्यसारः । **तव श्मश्रूणि हरी—हरीणि, हरितवर्णानि । हरी हरितौ—इन्द्रस्य अश्वौ हरिद्वर्णौ । वनर्गवः—वननीया गावः स्तुतयः येषाम् । शिष्टं सुगमम् ॥ ६ ॥**

Tawny is thy beard, Indra, tawny are thy horses; the wise men with agreeable praises glorify thee.—9.

**सा०-भा० ।** **हे 'इन्द्र'! 'ते' तव 'श्मश्रूणि' 'हरी' सोम-पानेन हरितवर्णानि । तथाच श्रूयते—'इन्द्रः श्मश्रूणि हरितानि प्रष्णुत' इति । 'शेश्छन्दसि बहुलम्' इति हरि-शब्दात् परस्य शेर्लुक् । 'उतो' अपि च । 'ते' 'हरी' अश्वौ 'हरितौ' हरिद्वर्णौ । 'कवयः' मेधाविनः, 'पुरुषासः' पुरुषाः, 'वनर्गवः'—वननीयाः सम्भजनीयाः सेवनीया गावो येषां ते वनर्गवः—मध्यरेफश्छान्दसः, गोस्त्रियोरिति ह्रस्वत्वम्—तादृशः कवयः 'तं' 'त्वा' त्वां स्तुवन्ति ॥ ६ ॥**

**१ । इयम् ऋक् ऋग्वेदे नास्ति ।**

वनर्गवः—In the above sense, the word is nowhere found in ṚV.; 'वनर्गुः' and 'वनर्गू' occur *resp.* in ṚV. i. 145. 5 and x. 4. 6, where Sāyaṇa has the note 'वनर्गुः—वनगामी' (going to a wood). Yāska also has the similar note on the latter text. Nir. 3. 14.

———

**वामदेव ऋषिः । अनुष्टुप् छन्दः ।**

२उ ३ १२ १ २ ३ २ ३ १ २ ३ २

**यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत ।**

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २

**सत्यस्य ब्रह्मणो वर्चस्तेन मा संसृजामसि ॥ १० ॥**

यत् । वर्चः । हिरण्यस्य । यत् । वा । वर्चः । गवाम् । उत । सत्यस्य । ब्रह्मणः । वर्चः । तेन । मा । सम् । सृजामसि ॥ १० ॥

भाष्यसारः । **हिरण्यादीनां वर्चोभिः—तेजोभिः, संसृजामसि—यथा संयुक्ता भवेम तथा प्रार्थयामः ॥ १० ॥**

That which is the splendour of gold, that which is the splendour of cattle, the splendour of the true Brāhman, may we be united with it.—10.

**सा०-भा० ।** 'हिरण्यस्य' हित-रमणीयस्य एतन्नामकस्य 'यद्वर्चः' तेजोऽस्ति। 'यद्वा' अपि च, 'गवाम्' एतन्नामकानां 'यद् वर्चः' तेजोऽस्ति, 'उत' अपि च 'सत्यस्य' सर्वैः सम्मतस्य 'ब्रह्मणः' 'यद्वर्चो'ऽस्ति, 'तेन' तैः 'मा' 'संसृजामसि' सम्पादयामः । धनवन्तः पशुमन्तः श्रोत्रिया भवेमेति तात्पर्यार्थः ॥ १० ॥

१०। इयम् ऋक् ऋग्वेदे नास्ति। साम-वि०—३, ७, ७।

---

वामदेव ऋषिः। त्रिष्टुप् छन्दः। इन्द्रो देवता।

२ ३ १ २ ३ २ ३ २ ३क २ ३ १ २
**सहस्तन्न इन्द्र दद्ध्योज ईशे ह्यस्य महतो विरप्शिन्।**
२ ३ १ ३ १र २र ३ १ २ ३ २ ३ १ २ ३ १ २
**क्रतुं न नृम्णं स्थविरं च वाजं वृत्रेषु शत्रून् सहना कृधी नः ॥११॥**

सहः। तत्। नः। इन्द्र। दद्धि। ओजः। ईशे। हि। अस्य। महतः। विऽरप्शिन्। क्रतुम्। न। नृम्णम्। स्थविरम्। च। वाजम्। वृत्रेषु। शत्रून्। सहना। कृधि। नः॥ ११ ॥

भाष्यसारः। हे विरप्शिन्—सत्यवचन, इन्द्र, सहः—बलम्, नः—अस्मभ्यम्, दद्धि—देहि। हि—यस्मात्, त्वम् अस्य महतः बलस्य ईशे—ईश्वरो भवसि, अतः नः—अस्माकम्, क्रतुं न—यज्ञमिव, नृम्णम्—धनम्, स्थविरम्—प्रवृद्धम्, वाजम्—बलम्, कृधि—कुरु। तथा शत्रून्, वृत्रेषु—बाधकेषु कारणेषु सत्सु, सहना—अभिभूतान्, कुरु ॥ ११ ॥

O Indra, pronouncing the truth, grant us overpowering strength as thou art the lord of the great might, make our wealth as well as strength abundant like our sacrifice; in obstructions, overcome our enemies.—11.

**सा०-भा० ।** हे 'विरप्शिन्'—विशेषेण रपणं सत्यवचनं तदस्यास्तीति विरप्शी,—तस्य सम्बोधनम्, हे विरप्शिन् विशेषेण स्तोत्रविषये सत्यवाक्य!

'इन्द्र' ! 'ते' तव 'सहः' शत्रूणामभिभवनरूपम् 'ओजः' बलं 'नः' अस्मभ्यं 'दद्धि'—ददातेश्छान्दसं रूपं लोटि हेर्धिभावादिना, यस्मात् त्वं तस्य 'अस्य' 'महतः' बलस्य 'ईशे' ईश्वरो भवसि। अतो हे इन्द्र ! 'नः' अस्माकं 'क्रतुं न' यज्ञमिव धनं 'नृम्णं' 'स्थविरम्' अतिशयेन प्रवृद्धं 'वाजं' बलं च 'कृधि' कुरु। किञ्च, नोऽस्माकं 'शत्रून्' 'वृत्रेषु' आवरकेषु उपायेषु 'कृधि' कुरु ॥ ११ ॥

११। इयम् ऋक् ऋग्वेदे नास्ति।

विरप्शिन्—cf. 'महाँ अमतो वृजिने विरप्शी', ṚV. iii. 36. 4; it is a frequent epithet of Indra. cf. 'विरप्शिने वज्रिणे शन्तमानि' SV. 1. 322; *see* our notes thereon and the dr. given there; in Ngh. the word is found among the syns. of महत् (great). Ngh. 3. 3.

---

वामदेव ऋषिः। त्रिष्टुप् छन्दः। गावो देवताः।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
**सहर्षभाः सहवत्सा उदेत विश्वारूपाणि बिभ्रतीर्द्व्यूध्नीः।**
३ २ ३ २ ३ १ २ ३ २ ३ १र २र ३ २ ३ १ २
**उरुः पृथुरयं वो अस्तु लोक इमा आपः सुप्रपाणा इह स्त ॥१२॥**

सहऽऋषभाः। सहऽवत्साः। उत्। आ। इत। विश्वा। रूपाणि। बिभ्रतीः। द्विऽऊध्नीः। उरुः। पृथुः। अयम्। वः। अस्तु। लोकः। इमाः। आपः। सुऽप्रपाणाः। इह। स्त ॥ १२ ॥

भाष्यसारः। हे सहर्षभाः—सवृषभाः, सवत्साः, द्व्यूध्नीः,—द्व्यूध्न्यः दुग्धभारेण द्वित्वमितानि सम्यक् प्रवृद्धानि ऊधांसि यासां ता गावः, विश्वानि रूपाणि बिभ्रत्यः—दधत्यः, यूयम् उदेत—आगच्छत। उरुः पृथुः—सर्वथा विशालः, अयं लोकः—पृथ्वीयम्, युष्माकं स्वच्छन्दचरणाय अस्तु। इमाः आपः इह भूतले स्थिताः, सुप्रपाणाः—सुखपानयोग्याः भवन्तु। अतो यूयमिह बहुलीभूताः स्त—भवत ॥ १२ ॥

Ye double-uddered cows, assuming variegated forms, come on with the bulls and calves; may this wide world be yours (for free movement); may these waters here (on earth) be your good drink; may you be (multiplied in number).—12.

**सा०-भा० ।** हे 'सहर्षभाः' वृषभैः सहिताः 'सहवत्साः' वत्सैः सहिताः ! गावः ! 'द्वयघ्नीः' सायं-प्रातः-काले द्विविधान्यूधांसि यासां ता द्वयघ्नीः, द्वयघ्न्यः । 'विश्वा' सर्वाणि नानारूपाणि 'बिभ्रतीः' बिभ्रत्यः यूयम् 'उदेत' उद्गच्छत समृद्धाः सत्यः आगच्छत । किञ्च, 'उरुः' बहुः 'पृथुः' विस्तीर्णः । उरुः पृथुरिति शब्दाभ्याम् आयाम-विस्तारौ उच्येते । 'अयं लोकः' 'वः' युष्माकम् 'अस्तु' भवतु । 'इमा आपः' 'इह' लोके भूतले अस्मिन् स्थाने 'सुप्रपाणाः' सुखेन प्रकर्षेण पातुं योग्याः सन्तु, तस्मादिह बद्धीभूताः 'स्त' भवत, उपविशतेति पूर्वेण सम्बन्धः ॥ १२ ॥

इति षष्ठाध्यायस्य चतुर्थः खण्डः ।

१२ । इयम् ऋक् ऋग्वेदे नास्ति । लाट्या० श्रौ० ३, ६, ४ ।

द्वयघ्नीः—having udders double in size, being heavy with the contents of milk.

उरुः पृथुः—these two words together give the notion of the extensity both in length and breadth.

सुप्रपाणाः—cf. 'घृतेन द्यावापृथिवी व्युन्धि सुप्रपाणं भवत्वघ्न्याभ्यः'—sprinkle heaven and earth with water, let there be abundant drinking for the cows. Ṛ V. v. 83. 8.

---

अथ षष्ठाध्यायस्य पञ्चमः खण्डः ।

चतुर्दशा'ग्न आयूंषी'त्याद्यास्तत्र जगत्यसौ ।
'विभ्राट्', त्रिष्टुप्—'चित्रमि'ति गायत्र्यो द्वादशेतराः ॥
आद्याग्नेः पवमानस्य स्तुतिः सौर्यस्त्रयोदशः ।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे ॥
शतं वैखानसा एवं दृष्टवन्तो महर्षयः ।

गायत्रीच्छन्दः । पवमानोऽग्निर्देवता ।

२ ३ १ २ ३ २ ३ २ ३ १ २
अग्न आयूंषि पवस आसुवोर्जमिषं च नः ।
३ १ २ ३ १ २
आरे बाधस्व दुच्छुनाम् ॥ १ ॥

अग्ने । आयूंषि । पवसे । आ । सुव । ऊर्जम् । इषम् । च । नः । आरे । बाधस्व । दुच्छुनाम् ॥ १ ॥

भाष्यसारः । हे पवमान अग्ने, अस्माकम् आयूंषि—अन्नानि प्राणान् वा, पवसे—क्षरसि, ऊर्जम्—अन्नरसं बलं वा, इषम्—अन्नं च, आसुव—अस्मान् प्रति प्रेरय । दुच्छुनाम्—राक्षसान्, आरे—दूरे अपसार्य, तान् बाधस्व—पीड़य ॥ १ ॥

Agni, pour on us lives (or sustenance), send us strength and food, oppress the demons, (driving them) far away.—1.

**सा०-भा० ।** हे 'अग्ने' पवमान-रूप ! अस्माकमायूंषि अन्नान्येतन्नामकानि वा 'पवसे' क्षरसि, 'नः' अस्माकम् 'ऊर्जम्' अन्नरसम् 'इषम्' अन्नं च 'आसुव' आभिमुख्येन प्रेरय । किञ्च, 'दुच्छुनां'—रक्षोनामैतत्—रक्षांसि, 'आरे' अस्मत्तो दूर एव 'बाधस्व' सम्पीडय ॥ १ ॥

१ । ऋ० सं० ९ म० ६६ सू० १९ ऋ० । उ० आर्चि० ६, ३, १०, ३ ; ७, १, १२, १ ।

ऊर्जम्, इषम्—for different mgs. of these two words, *see* our notes on SV. I. 173 ; also notes on ऊर्ज्, SV. I. 45 ; ऊर्जाम्पते, I. 36.

आरे—दूरे, far, Ngh. 3. 26., *see* our notes on the word, SV. I. 284.

दुच्छुनाम्—This word mg. Rākṣasas occurs only in this verse in the SV., occurs in different forms several times in Ṛ̣V. i. 116. 21 ;—189. 5 ; ii. 32. 2 ;—23. 6 ; v. 45. 5 ; vi. 12. 6 ; viii. 20. 4 ; ix. 66. 19 ; x. 175. 2 ; misfortune, calamity, harm—Mon. Wilms.

---

सूर्यपुत्रो विभ्राट् ऋषिः । जगतीच्छन्दः । सूर्यो देवता ।

१ २ ३ १ २ १ २उ
विभ्राड् बृहत्पिबतु सोम्यं
३ १ २ ३ १ २ ३ १ २
मध्वायुर्दधद्यज्ञपतावविहृतम् ।
१ २र ३ १ २ ३ १ २ ३ १ २ ३ १
वातजूतो यो अभिरक्षति त्मना प्रजाः
२ ३ २र
पिपर्ति बहुधा वि राजति ॥ २ ॥

विऽभ्राट् । बृहत् । पिबतु । सोम्यम् । मधु । आयुः । दधत् । यज्ञऽपतौ । अविऽह्रुतम् । वातऽजूतः । यः । अभिऽरक्षति । त्मना । प्रऽजाः । पिपर्ति । बहुऽधा । वि । राजति ॥ २ ॥

भाष्यसारः । **विभ्राट्—विशेषेण भ्राजमानो दीप्यमानः सूर्यः, बृहत्—प्रभूतम्, सोम्यं मधु—मदकरं सोमरसम्, पिबतु । यज्ञपतौ—यजमाने, अविह्रुतम्—निरवच्छिन्नम्, आयुः दधत्—विदधत्, वातजूतः—वायुप्रेरितः यः सूर्यः, त्मना—आत्मना स्वयम्, सर्वं जगत् अभिरक्षति—पालयति, यश्च प्रजाः पिपर्त्ति—पालयति, बहुधा विराजति—शोभते च ॥ २ ॥**

Let resplendent Sūrya drink a good deal of sweet Soma-juice holding out uninterrupted life to the leader of the sacrifice ; (Sūrya) who, urged by the wind, protects, of his own accord, the whole world, maintains the people and shines in various places.—2.

**सा०-भा० ।** 'विभ्राट्' विभ्राजमानः विशेषेण दीप्यमानः सूर्यः 'बृहत्' परिवृढं 'सोम्यं' सोममयं 'मधु' पिबतु । किं कुर्वन्? 'यज्ञपतौ' यजमाने 'अविह्रुतम्' अकुटिलम् अकण्टकम् आयुर्दधत्, अन्नं वा कुर्वन् । 'यः' सूर्यः 'वातजूतः' वातेन वायुना प्रेर्यमाणः सन्, 'त्मना' आत्मना स्वयमेव, अभिरक्षति सर्वं जगदभिमृशन् पालयति,—राशि-चक्रस्य वायुप्रेर्यत्वात् सूर्यस्यापि तत्प्रेर्यत्वम् । स सूर्यः 'प्रजाः' 'पिपर्ति' वृष्ट्यादि-प्रदानेन पूरयति पालयति वा, 'बहुधा' 'विराजति' विशेषेण दीप्यते च ॥ २ ॥

**२ । ऋ० सं० १० म० १७० सू० १ ऋ० । उ० आर्चि०—६,३,५,१ ।** ṚV. has **'पुपोष'** instead of **'पिपर्त्ति'** and **'पुरुधा'** in the place of **'बहुधा'**.

अविह्रुतम्—अविच्छिन्नम्, unbroken ; विह्रुतम् occurs in SV. I. 244 ; *see* our notes thereon.

वातजूतम्—Sāyaṇa explains—it is the circle of the Zodiac and acc. to Mahīdhara, it is the solar orb which is driven along by the wind, *see* Yajurveda, 33. 30.

त्मना—*for* आत्मना, mark the elision of the initial आ ; *see* notes on SV. I. 58 ; 316.

———

कुत्स ऋषिः । त्रिष्टुप् छन्दः । सूर्यो देवता । अग्निष्टोमे सूर्योपस्थाने विनियोगः ।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
**चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।**
२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
**आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥३॥**

चित्रम् । देवानाम् । उत् । अगात् । अनीकम् । चक्षुः । मित्रस्य । वरुणस्य । अग्नेः । आ । अप्राः । द्यावापृथिवी इति । अन्तरिक्षम् । सूर्यः । आत्मा । जगतः । तस्थुषः । च ॥ ३ ॥

भाष्यसारः । **देवानाम्—द्योतमानानां रश्मीनां देवानामेव वा, अनीकम्—तेजःसमष्टिभूतम्, चित्रम्—विचित्रम्, मित्राद्युपलक्षित-निखिलजगतां चक्षुःस्वरूपं प्रकाशकं वा सूर्यमण्डलम्, उदगात्—उद्गच्छति, दिवं पृथिवीम्, अन्तरिक्षम्—आकाशञ्च, आप्राः—स्वतेजसा सर्वतः पूरयति । एवम्भूतः सूर्यः जगतस्तस्थुषश्च—चराचरात्मकस्य विश्वस्य भूतजातस्य, आत्मा—स्वरूप एव ॥ ३ ॥**

The wonderful (sun), the assemblage of the splendour of the gods (or of rays), the eye of Mitra, of Varuṇa, of Agni, rises (in the sky) and fills up fully (with light) heaven, earth and the firmament, the sun, the soul of the moving and the stationary world.—3.

**सा०-भा० ।** 'देवानां' दीव्यतीति देवा रश्मयः, तेषां देवानामेव वा प्रसिद्धानाम् 'अनीकं' तेजःसमूहरूपं 'चित्रम्' आश्चर्य-करं सूर्यमण्डलम् 'उदगात्' उदयाचलं प्रयासीत् । कीदृशम्? 'मित्रस्य वरुणस्याग्नेश्च' चक्षुः । उपलक्षणमेतत् । एतदुपलक्षितानां जगतां 'चक्षुः' प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा । उदयं प्राप्यैव 'द्यावापृथिवी' दिवं च पृथिवीं च, अन्तरिक्षं च, 'आप्राः' स्वकीयेन तेजसा 'आ' समन्तात् अपूरयत् । ईदृग्भूत-मण्डलान्तर्वर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा 'जगतः' जङ्गमस्य 'तस्थुषश्च' स्थावरस्य च 'आत्मा' स्वरूपभूतः, स हि सर्वस्य स्थावर-जङ्गमात्मकस्य कार्य-वर्गस्य कारणम्,—कारणाच्च कार्यं नातिरिच्यते । तथा च पारमर्षसूत्रं—'तदनन्यत्वमारम्भणशब्दादिभ्यः' ( ब्र० सू० ) इति । यद्वा, स्थावर-जङ्गमात्मकस्य सर्वप्राणिजातस्य जीवात्मा । उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सत् उपलभ्यते । तथाच श्रूयते—'योऽसौ तपन्नुदेति सर्वेषां भूतानां प्राणानादायोदेती'ति ॥ ३ ॥

३। ऋ० सं० १म० ११ सू० १ ऋ०।

अनीकम्—host of splendour ; *see* our notes on the word, SV. I. 13.

मित्रस्य वरुणस्य अग्नेः चक्षुः—The eye or the enlightener of the whole universe. *Mitra*, *Varuṇa* and *Agni* are used here, by metonymy, for all.

जगतस्तस्थुषश्च—of all that is movable and immovable.

---

'आयङ्गौः पृश्निरि'त्यस्य सार्पराज्ञी समैक्षत।
ऋचस्तिस्रो भवेदासां विकल्पेनात्मदेवता॥

सार्पराज्ञी ऋषिः। गायत्रीच्छन्दः। सूर्य आत्मा वा देवता।

१र २र ३ १ २ ३ १ २ ३ २
आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः
३ १ २ ३ १ २
पितरं च प्रयन्त्स्वः॥ ४॥

आ। अयम्। गौः। पृश्निः। अक्रमीत्। असदत्। मातरम्। पुरः। पितरम्। च। प्रऽयन्। स्वरिति स्वः॥ ४॥

भाष्यसारः। गौः—गमनशीलः, पृश्निः—प्राप्ततेजाः, अयं सूर्यः, आक्रमीत्—उदयति ; उदीय च, पुरः—पूर्वस्यां दिशि, मातरम्—पृथिवीम्, असदत्—आसीदति, प्राप्नोति। ततः पितरं स्वः—स्वर्लोकम्, प्रयन्—शीघ्रं गच्छन्, प्रवर्त्तते॥ ४॥

This moving Sūrya (of manifold colours) rises, he meets the mother (earth) in the east and proceeds to the father heaven.—4.

**सा०-भा०।** 'गौः' गमनशीलः 'पृश्निः' प्राष्ठवर्णः व्याप्ततेजाः 'अयं' सूर्यः 'आक्रमीत्' आक्रान्तवान्, उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च 'पुरः' पुरस्तात् पूर्वस्यां दिशि 'मातरं' सर्वस्य भूतजातस्य निर्मात्रीं 'भूमिम्' 'असदत्' आसीदति, प्राप्नोति—सदेश्छान्दसो लुङ्, लृदित्वात् च्लेरङादेशः। ततः 'पितरं' पालकं द्युलोकं 'च'-शब्दादन्तरिक्षं 'प्रयन्' प्रकर्षेण शीघ्रं गच्छन् 'स्वः' सु अरणः (सुष्ठु गन्ता निरु० २, १४), शोभन-गमनो भवति। यद्वा, पितरं स्वर्द्युलोकं प्रवर्त्तते॥ ४॥

. ४। ऋ० सं० १० म० १८९ सू० १ ऋ०। उ० आर्चि० ६, १, ११, १। यजुः०
३, ६।

पृश्निः—*See* our notes on Ār. S. 2. 2. (६ष० २ ख० २ ऋ०) ; Nir. 2. 14. The sun is so called because of the seven colours of his rays,—a fact proved by modern science.

असदत्—सद + लुङ् (aor.)—च्लेरङादेशः—Sāy.

सार्पराज्ञी—refers to *Kadru,* the mother of the snakes, to whom some hymns are ascribed.

Mahīdhara agrees with Sāyaṇa in rendering गौः by 'moving' ( गमनशीलः ). He applies the first half of the stanza to Agni, the last to Sūrya, or Agni in that character.

---

ऋषिच्छन्दोदैवतानि पूर्ववत्।

३ १ २ ३ २उ ३ १ २ ३ २

**अन्तश्चरति रोचनास्य प्राणादपानती।**

२उ ३ १र २र

**व्यख्यन्महिषो दिवम्॥ ५॥**

अन्तरिति। चरति। रोचना। अस्य। प्राणात्। अपऽअनती।
वि। अख्यत्। महिषः। दिवम्॥ ५॥

भाष्यसारः। **अस्य—सूर्यस्य आत्मनो वा, रोचना—दीप्तिः, अन्तः—सूर्यपक्षे द्यावापृथिव्योर्मध्ये, आत्मपक्षे जीवशरीरमध्ये, चरति। 'अन्तश्चरसि भूतेषु गुहायां विश्वतोमुख' इति मन्त्रभागोऽत्रानुसन्धेयः। कीदृशी सा दीप्तिरिति विशिष्यते, प्राणादपानती—सूर्यपक्षे प्राणनादुदयादनन्तरम् अपानती—सायमस्तं गच्छन्ती, आत्मपक्षे—शरीरोर्ध्वभागवर्त्तिप्राणाख्यवायोरधोवर्त्तिनश्चाऽपानवायोर्यथावस्थितं विनयनं कुर्वती। 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासत' इति (२,२,३) काठकश्रुतिरत्रानुसन्धातव्या। महिषः—महान् सूर्य आत्मा वा, दिवम्—अन्तरिक्षम्, व्यख्यत्—विशेषेण प्रकाशयति॥ ५॥**

( *In the case of soul* ) His splendour moves within (the body) regulating the vital airs *Prāṇa* and *Apāna.* ( *In the case of the sun* ) His light pervades everywhere between the rising and setting; the mighty one illumines the sky.—5.

**सा०-भा०।** 'अस्य' सूर्यस्य 'रोचना' रोचमाना दीप्ति'रन्तः' शरीर-मध्ये मुख्य-प्राणात्मना 'चरति' वर्त्तते। किं कुर्वती? 'प्राणादपानती'—मुख्य-प्राणस्य प्राणाद्याः पञ्च वृत्तयः। तत्र प्राणनं नाडीभिरूर्ध्वं वायोर्निर्गमनम्। तथाविधात् प्राणात् प्राणनादनन्तरम् अपानती—अपाननं नाडीभिरवाङ्मुखं वायोर्नयनम्—तत् कुर्वती। अपपूर्वादनितेर्लटः शतृ, अदादित्वाच्छपो लुक्। उगितश्चेति ङीप्। शतुरनुम इति नद्या उदात्तत्वम्।

यद्वा, 'अन्तः' द्यावापृथिव्योर्मध्ये 'अस्य' सूर्यस्य 'रोचना' रोचमाना दीप्तिः 'चरति' गच्छति—रुच दीप्तौ। 'अनुदात्तेतश्च हलादेरि'ति (पा० ३, २, १४९) युच्। किं कुर्वती? 'प्राणात्' प्राणनादुदयादनन्तरम् 'अपानती' सायाह्न-समये अस्तङ्गच्छन्ती। ईदृश्या दीप्त्या युक्तः, अत एव 'महिषः' महान् सूर्यः 'दिवम्' अन्तरिक्षम् उदयास्तमययोर्मध्ये 'व्यख्यत्' विचष्टे, प्रकाशयति। महेष्टिषजिति औणादिकष्टिषच्प्रत्ययः। चक्षिङः ख्याञ् छान्दसे लुङि अस्यतिवक्तिख्यातीत्यादिना च्लेरङादेशः॥ ५॥

५। ऋ० सं० १० म० १८९ सू० २ ऋ०। उ० आर्चि० ६,१,११,२। यजुः० ३, ७।

The soul lying in heart conducts the vital airs (cf. ऊर्द्ध्वं प्राणं वायुं गमयति अपानं प्रत्यक्—अधः, क्षिपति,—Śaṅkara, in his com. on Kaṭh. Up. II. 2. 3, cited in our भाष्यसार.

महिषः—great, Ngh. 3. 3; *see* our notes on SV. I. 71; occurs also in I. 457; 542; cf. अयासुपस्थे महिषा अगृभ्णत, ṚV. vi. 8. 4.

---

ऋषिच्छन्दोदैवतानि पूर्ववत्।

३ २उ ३ १ २ ३ १ २ ३ १ २
त्रिंशद्धाम वि राजति वाक्पतंगाय धीयते।
२ ३ २ ३ २ ३ १ २
प्रति वस्तोरह द्युभिः॥ ६॥

त्रिंशत्। धाम। वि। राजति। वाक्। पतंगाय। धीयते। प्रति। वस्तोः। अह। द्युऽभिः॥ ६॥

भाष्यसारः। वस्तोः—अहोरात्रस्य, त्रिंशत् धाम—त्रिंशत्संख्यकानि मुहूर्त्तानि, चतुर्विंशतिघटिका वा व्याप्य, अह—एव, सूर्यः, द्युभिः—स्वकिरणैः, विराजति—

विशेषतो दीप्यते। तस्मै पतंगाय—सूर्याय, वाक्—स्तुतिः, त्रयीमयी वा,—'ऋग्भिः पूर्वाह्णे दिवि देव ईयत' इत्यादिश्रुतेः, प्रति धीयते—क्रियते, स्तोतृभिरिति शेषः ॥ ६ ॥

He (the sun) shines for thirty divisions of time with his rays; the song of praise is sung to the sun.—6.

**सा०-भा०।** 'त्रिंशद्धाम' धामानि स्थानानि—वचनव्यत्ययः। 'वस्तोः' वासरस्य अहोरात्रस्यावयवभूतानि। 'अह'-शब्दोऽवधारणे। 'द्युभिः' सूर्यस्य दीप्तिभिरेव 'विराजति' विराजते, विशेषेण दीप्यते। व्यत्ययेनैकवचनम्। मुहूर्त्तान्यत्र धामान्युच्यन्ते; पञ्चदश रात्रेः, पञ्चदशाह्नः। 'पतङ्गाय'—पतति गच्छतीति पतङ्गः सूर्यः, तस्मै सूर्याय स्तुति-रूपा 'वाक्' 'प्रतिधीयते' प्रतिमुखं स्तोतृभिर्विधीयते, क्रियते। यद्वा, 'वस्तोः' अह्नः 'त्रिंशत्' 'धाम' धामानि—घटिकाभिप्रायमेतत्। त्रिंशद्घटिकाः। अत्यन्तसंयोगे द्वितीया। एतावत्कालं 'द्युभिः' दीप्तिभिरसौ सूर्यः 'विराजति' विशेषेण दीप्यते। तस्मिंश्च समये 'वाक्' त्रयीरूपा तस्मै 'पतङ्गाय' 'प्रतिधीयते' प्रतिमुखं धार्यते। तं पूर्वं सेवत इत्यर्थः। श्रूयते हि—'ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते, वेदैरशून्यस्त्रिभिरेति सूर्यः' इति। यदा त्विह सूक्ते सार्पराज्ञ्या आत्मस्तुतिस्तदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ६ ॥

६। ऋ० सं० १० म० १८९ सू० ३ ऋ०। उ० आर्चि० ६, १, ११, ३। यजुः० ३, ८।

अह—एव, *indeed*, *certainly*, *surely*; emphasizes the preceding word, whether it be a verb, noun, pronoun, adjective, adverb or so; cf. 'क्वाह' *where indeed?* RV. x. 51. 2; 'नाह' *not surely*, i. 147. 3; 'यस्याह शक्रः सवनेषु रण्यति', x. 43. 6.

त्रिंशत् धाम—धाम *sg.* for धामानि *pl.* by व्यत्यय, Pāṇ. iii. 1. 85; *rfs. to* thirty *muhūrtas* (one *muhūrta* being equal to 24 minutes) which make up the whole day and night equivalent to 24 hours; *see* our notes on त्रिंशत्पदा, SV. I. 281. The first two pādas have been rendered by Prof. Wilson as—'the thirty stations of the day and night shine with the sun's rays.' This is, of course, after the alternative explanation suggested by Sāyaṇa, *see* his com. above. Mahīdhara takes *pataṅga* as Agni and makes *vāk*, nominative to *virājati* and *dhāma*, accusative of duration (as we have done in our translation), explaining it either as the *thirty muhūrtas*, or as thirty days of the month during every one of which the Yajamāna sacrifices.

---

प्रस्कण्व ऋषिः। गायत्रीच्छन्दः। सूर्यो देवता।

२ ३ २ ३ १ २ २ १ २ २ १ २
**अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः।**
१ २ ३ १ २
**सूराय विश्वचक्षसे ॥ ७ ॥**

अप। त्ये। तायवः। यथा। नक्षत्रा। यन्ति। अक्तुभिः। सूराय। विश्वऽचक्षसे ॥ ७ ॥

भाष्यसारः। **विश्वचक्षसे—सर्वस्य प्रकाशकाय, सूराय—सूर्याय, तस्य उदयादित्यर्थः, त्ये—ते प्रसिद्धाः, तायवो यथा—तस्करा इव, नक्षत्रा—नक्षत्राणि, अक्तुभिः—रात्रिभिः सह, अपयन्ति—अपसरन्ति ॥ ७ ॥**

At the rise of the all-illumining sun, the stars flee away, with the nights, like thieves.—7.

**सा०-भा०।** 'त्ये' 'तायवः' 'यथा' प्रसिद्धास्तस्करा इव 'नक्षत्राणि' देवगेहरूपाणि, 'देवगृहा वै नक्षत्राणि' इति श्रुत्यन्तरात्। यद्वा, इह लोके मानुषा ये स्वर्गमाप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते। तथाच श्रूयते—'यो वा इह यजते, अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्' इति। यद्वा, तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते, 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इत्याम्नायात्। यास्कस्त्वाह—'नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि नक्षत्राणीति च ब्राह्मणम्' इति। यथाविधानि नक्षत्राणि 'अक्तुभिः' रात्रिभिः सह 'अपयन्ति' अपगच्छन्ति। 'विश्वचक्षसे' विश्वस्य सर्वस्य प्रकाशकस्य 'सूराय' सूर्यस्य आगमनं द्रष्टुमिति शेषः। तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीत्याकुलायन्त इत्यर्थः। तायुरिति स्तेननाम, तायुस्तस्कर इति तन्नामसु पाठात्। अक्तुरिति रात्रिनाम, शर्वरी अक्तुरिति तन्नामसु पाठात् ॥ ७ ॥

**७। ऋ० सं० १ म० ५० सू० २ ऋ०। अथर्व० १३, २, १७; २०, ४७, १४।**

नक्षत्रा—*for* नक्षत्राणि, the stars, which, according to different texts (cited in the com. above), are considered to be the dwellings or abodes of the gods, or the visible forms of pious men after death. Sāyaṇa says—'those who, by performing pious deeds in this world, attain heaven, become visible in the form of stars in the sky.

The etym. of the word नक्षत्र (in the com.) is taken from Nir. 3. 20; 'नेमानि...' is taken from Tait. Br. II. 7. 18. 3, where the full text is—'न वा इमानि क्षत्राण्यभूवन्निति । तन्नक्षत्राणां नक्षत्रत्वम्'; acc. to Durga, न = like, क्षत्र = wealth, gold; the stars are so called because they glitter like gold.

———

१ २     ३ २ ३   २ ३ २ ३ २ ३   १ २
**अदृश्रन्नस्य केतवो वि रश्मयो जनाँ अनु ।**
१ २    ३ १ २
**भ्राजन्तो अग्नयो यथा ॥ ८ ॥**

अदृश्रन् । अस्य । केतवः । वि । रश्मयः । जनान् । अनु । भ्राजन्तः । अग्नयः । यथा ॥ ८ ॥

भाष्यसारः । **अस्य सूर्यस्य, केतवः रश्मयः—प्रज्ञापकाः किरणाः, जनान् अनु व्यदृश्रन्—विशेषेण पश्यन्ति, सर्वं जगत् प्रकाशयन्तीति भावः । भ्राजन्तः—दीप्यमानाः, अग्नय इव ॥ ८ ॥**

The rays, his harbingers, illumine all (people) like shining fires.—8.

**सा०-भा० ।** 'अस्य' सूर्यस्य 'केतवः' प्रज्ञापका 'रश्मयः' दीप्तयः 'जनान् अनुव्यदृश्रन्' जनान् सर्वान् अनुक्रमेण प्रेक्षन्ते, सर्वं जगत् प्रकाशयन्तीत्यर्थः । तत्र दृष्टान्तः—'भ्राजन्तः' दीप्यमानाः 'अग्नय' इव ॥ ८ ॥

८ । ऋ० सं० १ म० ५० सू० ३ ऋ० । अथर्व० १३, २, १८; २०, ४७, १५ । Ṛ V. and AV. have '**अदृश्रम्**' instead of '**अदृश्रन्**' ।

———

३ १ २ ३ १ २     ३ १ २
**तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।**
२ ३ १ २    ३ २
**विश्वमाभासि रोचनम् ॥ ९ ॥**

तरणिः । विश्वऽदर्शतः । ज्योतिःऽकृत् । असि । सूर्य । विश्वम् । आ । भासि । रोचनम् ॥ ९ ॥

भाष्यसारः । हे सूर्य, तरणिः—क्षिप्रगन्ता, विश्वदर्शतः—सर्वप्राणिभिः दर्शनीयः, ज्योतिष्कृत्—चन्द्रादि-ज्योतिष्काणां प्रकाशयिता, त्वम्, रोचनम्—दीप्यमान-मन्तरिक्षम्, आ भासि—समुद्भासयसि। आत्मपक्षे—तरणिः—संसार-सागर-समुत्तारकः, विश्वदर्शतः—सर्वैर्मुक्तपुरुषैर्दर्शनीयः, ज्योतिष्कृत्—'यतश्चोदेति सूर्यः अस्तं यत्र च गच्छति' इत्यादि-श्रुतेः सूर्यादीनां कर्त्ता भासकश्च, विश्वम्—सर्वम्, रोचनम्—दीप्यमानं यथा स्यात् तथा, आभासि—'अस्य भासा सर्वमिदं विभाती'ति [ कठ० २, २, १५ ] श्रुत्यन्तराधिगमात्॥ ९ ॥

Thou, Sūrya, art swift-moving, visible to all, the source of light, thou dost illumine the whole firmament. (In the case of Supreme Soul, *see* the transl. in our notes ).—9.

**सा०-भा० ।** हे 'सूर्य,' त्वं 'तरणिः' प्रगन्ता अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्तासि। तथाच स्मर्यते—'योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्धेन क्रममाणं नमोऽस्तु ते' इति। यद्वा, उपासकानां रोगात्तारयितासि—'आरोग्यं भास्करादिच्छेत्' इति स्मरणात्। तथा 'विश्वदर्शतः' विश्वैः सर्वैः प्राणिभिर्दर्शनीयः, आदित्य-दर्शनस्य चण्डालादि-दर्शनजनित-पाप-निबर्हण-हेतुत्वात्। तथा चापस्तम्बः—'दर्शने ज्योतिषां दर्शनम्' इति। यद्वा, 'विश्वं' सर्वं भूतजातं 'दर्शतं' द्रष्टव्यं प्रकाश्यं येन स तथोक्तः। तथा 'ज्योतिष्कृत्' ज्योतिषः प्रकाशस्य कर्त्ता। सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः। यद्वा, चन्द्रादीनाम्। रात्रौ हि अस्तमये चन्द्रादिषु सूर्य-किरणाः प्रतिफलिताः अतोऽन्धकारं निवारयन्ति। यथा द्वारस्थ दर्पणोपरि निपतिताः सूर्य-रश्मयो गृहान्तर्वर्त्ति तमो निवारयन्ति तद्वदित्यर्थः, यस्मादेवं तस्मात् 'विश्वं' व्याप्तं 'रोचनं' रोचमानम् अन्तरिक्षम् 'आ' समन्तात् 'भासि' प्रकाशयसि।

यद्वा, हे 'सूर्य' अन्तर्यामितया सर्वस्य प्रेरक परमात्मन्! 'तरणिः' संसाराब्धेस्तारकोऽसि, यस्मात् त्वं 'विश्वदर्शतः' विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः। अधिष्ठान-साक्षात्कारे हि आरोपितं निवर्त्तते। ज्योतिषः सूर्यादेः कर्त्ता। तच्चाम्नायते—"चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत" ( पुरुष-सू०, ऋग्वे० १०, ९०, १३ ) इति। ईदृशस्त्वं चिद्रूपतया विश्वं सर्वं दृश्यजातं रोचमानं दीप्यमानं यथा भवति तथा आभासि प्रकाशयसि। नैवं न्यक्करणे हि सर्वं जगत् दृश्यते। तथा चाम्नायते—'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति॥ ९ ॥

६। ऋ० सं० १ म० ५० सू० ४ ऋ०। अथर्व० १३, २, १९ ; २०, ४७, १६।

तरणिः—*see* our notes on the word, SV. I. 204, 238.

विश्वदर्शतः—for dr. of दर्शतः *see* SV. I. 497.

ज्योतिष्कृत्—One (the soul) that gives light to all things, even to the moon, the planets and the stars, by night. cf. Kaṭh. Up. ii. 1. 9. (verse 80) quoted in our भाष्यसार above, also 'भयादस्याग्निस्तपति भयात् तपति सूर्यः', ib. ii. 3. 3. (112); 'यदादित्यगतं तेजो जगद् भासयतेऽखिलं यच्चन्द्रमसि यच्चाग्नौ, तत्तेजो विद्धि मामकम्'—Gītā. xv. 12. On the other hand, the astronomical truth that the moon shines through the solar rays, is found in SV. I. 147.

Sāyaṇa also explains the verse metaphysically, taking the sun for the Supreme Soul, who redeems all, liberating them from the cycle of existence (तरणिः—तारकः), who is seen by all desiring mokṣa (emancipation), who is the source of spiritual light and who illuminates all through the light of the mind.

---

३ २ ३ २ ३ १ २ ३ १र २र ३ १ २

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान्।

३ २उ ३क २ ३ २

प्रत्यङ्विश्वं स्वर्दृशे ॥ १० ॥

प्रत्यङ्। देवानाम्। विशः। प्रत्यङ्। उत्। एषि। मानुषान्। प्रत्यङ्। विश्वम्। स्वःऽदृशे ॥ १० ॥

भाष्यसारः। हे सूर्य, त्वं देवानां विशः—मरुद्गणान्, तथा मानुषान्, विश्वम्, प्रत्यङ्—अभिमुखम्, स्वर्दृशे—स्वर्गलोकं सर्वं वा द्रष्टुम्, उदेषि ॥ १० ॥

Thou risest facing the gods, facing men, facing all, to behold heaven i. e., facing heaven.—10.

**सा०-भा०।** हे सूर्य! त्वं 'देवानां विशः' मरुन्नामकान् देवान्,—'मरुतो वै देवानां विशः' इति श्रुत्यन्तरात्; तान्मरुत्संज्ञकान् देवान् 'प्रत्यङ् उदेषि' प्रतिगच्छन्नुदयं प्राप्नोषि, तेषामभिमुखं यथा भवति तथेत्यर्थः। तथा 'मानुषान्' मनुष्यान् प्रत्यङ् उदेषि। तेऽपि यथास्मदभिमुख एव सूर्य उदेतीति मन्यन्ते. तथा 'विश्वं' प्राप्तं 'स्वः' द्यां लोकं 'दृशे' द्रष्टुं प्रत्यङ् उदेषि। यथा स्वर्लोकवासिनो जनाः स्व-स्वाऽऽभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः। एतदुक्तं भवति. ये लोकाः पश्यन्ति ते जनाः सर्वेऽपि स्व-स्वाभिमुख्येन सूर्यं पश्यन्तीति। तथा चाम्नायते—'तस्मात् सर्व एव मन्यन्ते मां प्रत्युदगात्' इति ॥ १० ॥

१०। ऋ० सं० १ म० ५० सू० ५ ऋ०। अथर्व० १३, २, २० ; २०, ४७, १७।

Yāska connects its context with the following stanza—येना पावक et , (i. 50. 6.) and supplies 'तेन चक्षसा' (with that light, thou risest etc).—Nir. 12. 24.

प्रत्यङ्—before, facing, in the presence of. Nir.—12. 24.

---

१ २ २ १ २ ३ २ ३ २ ३ १ २
**येना पावक चक्षसा भुरण्यंतं जनाँ अनु ।**
१ २ ३ १ २
**त्वं वरुण पश्यसि ॥ ११ ॥**

येन । पावक । चक्षसा । भुरण्यन्तम् । जनान् । अनु । त्वम् । वरुण । पश्यसि ॥ ११ ॥

भाष्यसारः । हे पावक—शोधक, वरुण—अनिष्ट-निवारक सूर्य, त्वम् जनान्—जातान् जीवान्, भुरण्यन्तम्—धारयन्तम्, इमं लोकम्, येन चक्षसा—प्रकाशेन, अनुपश्यसि—प्रकाशयसि, तं प्रकाशं स्तुमः ॥ ११ ॥

(We praise) thy light with which, O sanctifying sun warding off evils, thou dost illuminate (this world), the upholder of all born beings.—11.

**सा०-भा० ।** हे 'पावक' सर्वस्य शोधक 'वरुण' अनिष्ट-वारक सूर्य ! त्वं 'जनान्' प्राणिनः 'भुरण्यन्तं' धारयन्तं पोषयन्तं वा इमं लोकं येन 'चक्षसा' प्रकाशेन 'अनुपश्यसि'—अनुक्रमेण प्रकाशयसि, तं प्रकाशं स्तुम इति शेषः । यद्वा, उत्तरस्यामृचि सम्बन्धः तेन चक्षसा उदेतीति, तथा च यास्केनोक्तम्—'तत्ते वयं स्तुम इति वाक्यशेषः । अपि वोत्तरस्यामन्वयस्तेन व्याख्याती'ति ॥ ११ ॥

११। ऋ० सं० १ म० ५० सू० ६ ऋ०। अथर्व० १३, २, २१ ; २०, ४७, १८।

This verse is explained by Yāska in a different way, e. g., 'The eye with which, O pure Varuṇa, thou seest the active sacrificer (भुरण्यन्तम्) among men, (we praise that). He gives the etymology of the word 'भुरण्यन्तम्'—भुरण्युरिति क्षिप्रनाम । भुरण्युः शकुनिः । भुरिमध्वानं नयति । स्वर्गस्य लोकस्यापि वोढा । तत्संपाती भुरण्युः,—the word *Bhuraṇyu* is a synonym of 'quick'. *Bhuraṇyu* means a 'bird'. It flies to a long distance. He (the sacrificer) is the up-

holder or maintainer of the heavenly world. Flying up like a (bird) to heaven, the sacrificer is called *Bhuraṇyu* also.

भुरण्यन्तं जनाँ अनु—The sacrificer among men, Nir. 12. 22. Yāska connects the context of this stanza with the next one—उद्द्याम् etc., (i. 50. 7) or with the preceding stanza—प्रत्यङ् देवानाम् etc. (i. 50. 5.), or completes the sense of the stanza by supplying तेन (नो जनान् अभिविपश्यसि)—with the same eye thou beholdest us men also, Nir. 12. 24, 25.

---

१ २र ३ १२ ३ २ ३ १ २ ३ १ २
उद्द्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः ।
२ ३ १ २
पश्यन् जन्मानि सूर्य ॥ १२ ॥

उत् । द्याम् । एषि । रजः । पृथु । अहा । मिमानः । अक्तुभिः । पश्यन् । जन्मानि । सूर्य ॥ १२ ॥

भाष्यसारः । हे सूर्य, पृथु—सुप्रथितं विशालम्, रजः—लोकम्, द्याम्—द्युलोकम्, उदेषि—उद्गच्छसि । अहा—अहानि, अक्तुभिः—रात्रिभिः सह, मिमानः—निर्माता सन् स्वकीयोदयनास्तगमनाभ्यां दिवारात्रि-प्रविभाग-कर्त्ता, तथा च श्रूयते ( ऋग्वे० १ म० ११५ सू० ५ ऋ० ) 'अनन्तमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः संभरन्ती'ति, जन्मानि—जातानि भूतजातानि, पश्यन्—प्रकाशयन् ।

Thou risest up to heaven, measuring the wide world, days with nights and surveying all the born beings, O sun.—12.

**सा०-भा० ।** हे 'सूर्य' ! त्वं 'पृथु' सुविस्तीर्णं 'रजः' लोकं—लोका रजांस्युच्यन्ते' इति—यास्कवचनात् । 'द्याम्' द्युलोकम् अन्तरिक्षलोकम् 'उदेषि' उद्गच्छसि । किं कुर्वन् ? 'अहा' अहानि 'अक्तुभिः' रात्रिभिः सह 'मिमानः' उन्मानयन्—आदित्यगत्यधीनत्वादहोरात्रविभागस्य । तथा 'जन्मानि' जननवन्ति भूतजातानि 'पश्यन्' प्रकाशयन् ॥ १२ ॥

१२ । ऋ० सं० १ म० ५० सू० ७ ऋ० । अथर्व० १३, २, २२ ; २०, ४७, १९ । Ṛ̣V. and AV. read 'वि द्याम्' instead of 'उद् द्याम्'.

